श्रीस्वामिनारायणो विजयतेतराम् ।

# ब्रह्ममीमांसा

मुक्तानन्दमहामुनिविरचितेन भाष्येण,

गोपालानन्दमहामुनिविरचितेन प्रदीपेन च

समलङ्कृता ।

वृत्तालयपाठशालाप्रधानपण्डितेन

प्र. भ. अणणङ्गराचार्येण संशोधिता ।

सनातनधर्मधुरंधराचार्यश्री-

आनन्दप्रसादमहाराजैः

निर्णयसागराख्यमुद्रणालये मुद्राप्य प्राकाश्यं नीता ।

सं. २००९ सन १९५२

सर्वाविर्भावहेतुः परमखनिलयो योऽवतीर्येह लोके
संसारव्यालदंशप्रसरदुरुविषोदग्रवेगापहर्तृ ।



धर्मात्मज्ञानभक्तिप्रकटपरतरस्वस्वरूपोपदेशं
प्रादाद्वाक्यामृतं स्वं स जयति भगवान्स्वामिनारायणोऽयम् ॥१॥

नि. सा. प्रेस

व्याचख्यौ व्याससूत्रं व्यतनुत भगवत्स्वामिनारायणस्य
स्तोत्रं छन्दोमयं यो ह्यकुरुत भगवद्वाक्सुधासङ्ग्रहं च ।



आत्मज्ञानादिपूर्णं गुरुरिति भगवान् मन्यते यं मुनीन्द्रं
तं मुक्तानन्दमीडे शमदमनिलयं साधुगोष्ठीगरिष्ठम् ॥१॥

नि. सा. प्रेस

योऽसावष्टाङ्गयोगे जनिसमसमयं पूर्वसंस्कारभूम्ना
सिद्धिं प्राप्तो भवाब्धि प्रभवति मनुजो यस्य ततुं प्रसादात् ।



यस्त्वत्यन्तप्रसिद्धं भजति हि सहजानन्दपादारविन्दं
गोपालानन्दनामा स जयतु सततं योगिवर्याग्रगण्यः ॥१॥

नि. सा. प्रेस

श्रीस्वामिनारायणो विजयतेतराम् ॥

# निवेदनम् ।

वेदान्तेषु मितं मतं च मनसि न्यायैरनिन्द्यैः सदा
ध्यातं स्वान्तसरोरुहे सुकृतिनः पश्यन्ति यं योगिनः ।
तं निर्दोषसमस्तसद्गुणनिधिं दिव्यातिरम्याकृतिं
वन्देऽनन्तविभूतिमक्षरपतिं श्रीस्वामिनारायणम् ॥ १ ॥
जगदुद्भवभवविलयक्रीडो भवबन्धमोचको भजताम् ।
भगवान् हरिकृष्णो मे श्रुत्यन्तमितो गतिः परं ब्रह्म ॥ २ ॥

विदितमेव हि सर्वेषां श्रीमदौद्धवसम्प्रदायनिष्ठानां यद्भगवता साक्षात् प्रकटपुरुषोत्तमेन श्रीहरिणा स्वाभिमते सच्छास्त्राष्टके पर्यगण्यन्त व्याससूत्राणि स्वतःप्रमाणभूतवेदपरिगणनानन्तरमेवेति । एषां च परब्रह्मभूतपुरुषोत्तमस्वरूपदिव्यगुणसाकारत्वमहैश्वर्यादितत्त्वविनिर्णायकानामन्वर्थैव संज्ञा 'ब्रह्ममीमांसा' इति । अस्याश्च व्यरच्यत भाष्यं परमसद्गुरुभिर्मुक्तानन्दस्वामिभिः श्रीहरिचरणसेवापरायणैः तदीयमेव संप्रदायपरिपोषकसद्ग्रन्थसङ्ग्रथननिदेशं शिरसा दधानैः। योगिराजैः परमसद्गुरुभिर्गोपालानन्दस्वामिभिश्च श्रीहरिचरणारविन्दराजहंसायितान्तरङ्गैर्वृत्तिर्ब्रह्मसूत्रार्थप्रदीपिकेति । प्रस्थानत्रये श्रीभगवद्गीताया उपनिषदां च भाष्यं गोपालानन्दस्वामिप्रणीतं मुद्रितं पूर्वमेवैतत्संस्थानतः प्रथितं सर्वत्र । ब्रह्ममीमांसायास्तु भाष्यं नैतावताऽपि मुद्रितमित इति चिराभिकाङ्क्षितमासीदेतत्प्रकाशनम् ।

विषयाद्यङ्गपञ्चकोपेताधिकरणस्वरूपविज्ञानं सारल्येन भाष्यतः, सूत्रार्थानायासबोधश्च मितम्पचमतीनामपि प्रदीपतः सेत्स्यतीति सहैव भाष्यप्रदीपाभ्यां मुद्रणमस्याः साधीय इति विचारयन्नहं विद्वद्भिः

सद्गुरुभिश्चानुमोदितो वृत्तालये मुख्यामात्यपदे यदा स्थितः तदानीमेव भाष्यप्रदीपसमलङ्कृताया ब्रह्ममीमांसाया अस्या मुद्रापणे धर्मधुरन्धराचार्यपादश्रीमदानन्दप्रसादमहाराजानामाज्ञामलभे । समुपक्रमे चानन्तरमेवैतन्मुद्रापणं प्रशस्ततरे मोहमयीस्थनिर्णयसागरमुद्रणालये । अन्येषामिव माननीयानां सम्प्रदायप्रबन्धानां शिक्षापत्रीभाष्यादीनां एतयोर्ब्रह्मसूत्रभाष्यप्रदीपयोरपि परिष्करणादिना मुद्रणार्हता संपादिता भूतपूर्ववृत्तालयसंस्कृतपाठशालाप्रधानपण्डितैरस्मद्विद्यागुरुभिर्विद्वद्वरिष्ठैः एम्बार् कृष्णमाचार्यैः ( श्रीरंगम् ) सादरमिति तत्कृतोपकृतिर्महती नैव विस्मरणार्हा कदापि । एतन्मुद्रापणे प्रवृत्तस्य च मम महत्साहाय्यमारचितं शोधनटिप्पणीभूमिकारचनशुद्धिपत्रसम्पादनेनैतन्मुद्रणावसरे वृत्तालयसंस्कृतपाठशालायाः प्रधानपण्डितैर्विद्वद्वर्यैः प्र. भ. अण्णङ्गराचार्यैरिति कृतज्ञतामेतेषु प्रकाशयाम्यवसरेऽस्मिन् । एतन्मुद्रापणे शुभां पावनीं चाज्ञां दत्तवद्भ्य आचार्यचरणेभ्यश्च भूयांसो धन्यवादाः । कृतेऽपि संशोधने प्रमादादिप्रसक्ता अत्रत्या अशुद्धयः क्षमया विशोध्या इति चाभ्यर्थये विद्वद्वरान् । ब्रह्ममीमांसाभाष्यरत्नं चेदं प्रदीपोज्ज्वलं चिरं विज्ञानालोकं प्रसारयतु मुमुक्षुलोकेष्विति चाऽऽशासेतराम् ।

शास्त्री हरिजीवनदासः
वडताल.

वि. सं. २००९

# प्रस्तावना ।

श्रीमच्छ्रीभाष्यकारस्य चरणाम्भोरुहद्वयम् ।
अन्वयानुगतं जीयादस्मन्मस्तकभूषणम् ॥ १ ॥
श्रीमत्पराङ्कुशमुनीन्द्रमुखारविन्द-
सौरभ्यसम्भृतमहोपनिषत्प्रसिद्धम् ।
तत्त्वं परं किमपि वेदशिरःसु गूढं
श्रीभाष्यकारसमुदाहृतमाश्रयामः ॥ २ ॥

अनादिनिधनमपौरुषेयं वेदमलौकिकेऽर्थे प्रमाणयतां जैमिनिबादरायणप्रभृतीनां महर्षीणां मतमनुसरन्तो नः पूर्वाचार्या हिताय लोकस्याभ्युदयनिःश्रेयससाधनानि तत्तन्निबन्धमुखेन प्राचीकशन्। तेषां चैष विभागः—**धर्मविचारो ब्रह्मविचारश्चेति।** तत्राभ्युदयसाधनात् निःश्रेयससाधनं हिततमं मनुष्याणाम्। तत एव तापत्रयनिवृत्तेः। तच्चोपदिश्यते वेदान्तेषु । वेदितव्यं येन वेद्यते स वेदः । वेदितव्यं वेदयतां वेदानामन्ते ये वर्तन्ते ते वेदान्ताः। ब्रह्मणि विदिते वेदितव्यं नावशिष्यते। अतस्तदवबोधका भागा वेदानामन्ते वर्तन्ते, यतो न वेदकान्तरापेक्षा । त एवोपनिषद उच्यन्ते । उपनिपूर्वकात् विशरणावसादनगत्यर्थात् षद्लृ धातोः क्विपि निष्पन्नोऽयमुपनिषच्छब्दो विद्याविशेषं गमयति। येन हृदयग्रन्थिर्विशीर्यते, क्षीयते च कर्मबन्धः, गम्यते च परं ब्रह्म, तथाविधविद्यावबोधकः शब्दराशिर्वेदान्ताख्यश्चोपचारादुपनिषदुच्यते। उपनिषदि निगूढं तत्त्वं विचारयन् भगवान् बादरायणः शारीरकमीमांसां **'अथातो ब्रह्मजिज्ञासा'** इत्यादिना **'अनावृत्तिः शब्दादनावृत्तिः शब्दा'**दित्यन्तेन सूत्रजातेन व्यतनोत्।

यस्येदमखिलं चेतनाचेतनजातं शरीरं स शारीरः, तत्त्वतः शारीरमजानतां भवति गतागतमात्रपर्यवसायिषु वेदानां फलवादेष्वभिरुचिः, ततश्च तत्तत्साधनविधिषु भवति श्रद्धा, तया श्रद्धया समाकृष्टचेतसः कामात्मानः स्वर्गपराः क्रियाविशेषबहुलां भोगैश्वर्यगतिमभिधावन्ति। परीक्ष्य लोकान् कर्मचितान् यो निर्विण्णः स तु शारीरं सर्वान्तरमात्मानमौपनिषदं परमपुरुषं निर्णिनीषुस्तमधिकृत्य प्रवृत्तेऽस्मिन् शारीरकशास्त्रे प्रवर्तते। उपनिषदां हार्दं हि दुरधिगमम्। यतः क्वचित् **'सदेवेदमग्र आसी'**दिति, क्वचित् **'असदेवेदमग्र आसी'**दिति, क्वचित् **'आत्मैवेदमग्र आसी'**दिति, क्वचित् **'आकाशाद्ध्येव खल्विमानि सर्वाणि जायन्ते'** इति, क्वचित् **'ब्रह्मैवेदमग्र आसी'**दिति च विविध इव कारणवादः श्रूयते। तथा निर्गुणवादः सगुणवादः निर्विशेषोपदेशः सविशेषोपदेशश्च । तत् अप्रतिपत्तेरन्यथाप्रतिपत्तेश्च निरसनाय सेयं शारीरकमीमांसाऽवश्यमादरणीया।

इदमत्र प्रथममावेदयामः । जगतोऽस्य विविधस्य नैकमुपादानमिति बहवः।

एकमेवेति वदन्तोऽपि कापिलाः प्रधानं त्रिगुणात्मकं जडं तदाहुः। उपनिषदस्त्वजडम्। तथाहि श्रूयते—'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी'ति। अयं चात्मा 'ब्रह्मविदाप्नोति पर'-मित्युपक्रम्य 'तस्माद्वा एतस्मादात्मन' इति निर्देशात् ब्रह्मेति भवति प्रतिपत्तिः। 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति च ब्रह्मणः स्वरूपमुक्तम्। 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद् ब्रह्म' इति ब्रह्म लक्षयति च श्रुतिः। अयमेव विशेषः काणादाभिमतपरमात्मकारणतावादादौपनिषदे। ते हि परमात्मानं जगतो निमित्तमात्रमाहुः। तस्य परस्य ब्रह्मण उपादानकारणता च निदर्शनमुखेन तत्र तत्रोपनिषदि श्रूयते। 'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति। यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् संभवतीह विश्वम्।' 'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाऽक्षराद् विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति।' 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः।' एवं सद्विद्यायां एकस्यैव बहुधा भवनं स चैक आत्मेति श्रूयते। तथाहि—'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं' 'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' 'तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृजत' 'ता आप ऐक्षन्त बह्वयः स्याम प्रजायेमहीति ता अन्नमसृजन्त' 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति' 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' इति। एवं तत्रैव सच्छब्दवाच्यस्य परस्य ब्रह्मणः अन्नादिलक्षणस्यास्य प्रपञ्चस्य चोपादानोपादेयभावो युक्तिपुरःसरं श्राव्यते—'तत्रैतच्छुङ्गमुत्पतितं सोम्य विजानीहि नेदममूलं भविष्यति। तस्य क्व मूलं स्यात् अन्यत्रान्नात् एवमेव खलु सोम्यान्नेन शुङ्गेनापो मूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इति।

भगवान् बादरायणस्तदिदमौपनिषदं मतं प्रतिष्ठापयन् जिज्ञास्यतया प्रतिज्ञातस्य ब्रह्मणो लक्षणमाह—'जन्माद्यस्य यतः' इति। अत एव प्रथमं प्रधानोपादानत्ववादस्योपनिषदनभिमतत्वं द्रढयति 'ईक्षतेर्नाशब्द'मित्यादिना। यदि ब्रह्मणो जगदुपादानत्वं लक्षणतया न विवक्षितं स्यात् कः प्रसङ्गः प्रधानोपादानत्ववादस्योपनिषदनभिमतत्वस्थापनस्य। अपि च सच्छब्दस्य प्रधानपरत्वं प्रतिक्षिपता 'स्वाप्यया'दिति यो हेतुरुक्तः स ब्रह्मण उपादानकारणतां गमयति, केवलनिमित्तत्वे हि स्वाप्ययो नोपपद्येत। कार्यकारणयोरनन्यतायां तु स्वाप्ययः सम्पद्यते। अनन्यता चोपादानोपादेयभाव एव। श्रूयते च सतो 'बहु स्या'मिति स्वस्यैव बहुभवनसङ्कल्पः। सङ्कल्पपूर्वकं स्वयमेव बहुधाभवननिरूपणात् 'सदेव सोम्येदमग्र आसी' दित्यत्राद्वितीयपदेन विवक्षित-

मधिष्ठात्रन्तरशून्यत्वं समर्थितं भवति । समर्थयिष्यति च 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' 'अभिध्योपदेशाच्च' 'साक्षाच्चोभयाम्नानात्' 'आत्मकृतेः' 'परिणामात्' 'योनिश्च हि गीयते' इत्येतैः सूत्रैर्ब्रह्मण उपादानत्वं निमित्तत्वं च । इमानि च सूत्राणि क्रमात् 'उत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं' 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्' 'सोऽकामयत बहु स्यां प्रजायेय' 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति' 'ब्रह्मवनं ब्रह्म सवृक्ष आसीत् ब्रह्माध्यतिष्ठत् भुवनानि धारयत्' 'तदात्मानं स्वयमकुरुत' 'सच्च त्यच्चाभवत्' 'यद्भूतयोनिं परिपश्यन्ति धीराः' इत्येतान्यौपनिषदानि वाक्यान्यवलम्ब्य प्रवृत्तानि । यश्चायमसत्कार्यवादः उपादानोपादेययोरत्यन्तभेदाभिमानमूलकः स च नौपनिषदः पक्षः । समर्थितश्च कार्यकारणयोरभेदः । 'तदनन्यत्वमारम्भणशब्दादिभ्यः' 'भावे चोपलब्धेः' 'सत्त्वाच्चापरस्य' 'असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात्' 'युक्तेः शब्दान्तराच्च' 'पटवच्च' इत्येतैः सूत्रैः । अत एव—'सर्वं खल्विदं ब्रह्म तज्जलानि'ति सहेतुकं श्राव्यमाणं सर्वस्य ब्रह्मात्मत्वं सुस्थितं भवति । तथा च सिद्धमेकमेवानेकात्मना विभक्तमिति हार्दमुपनिषदाम् । कार्यकारणयोरत्यन्तभेदं कारणतां च नैकगतां पश्यतां दृष्टौ हि सर्वथा वस्तुनानात्वमेव पतेत् । नैकता कथमपि । तानेतानुपमृद्य कापिला गुणमयस्यास्य कार्यप्रपञ्चस्य गुणमयानुमानिकप्रधानमूलतां पश्यन्तः पश्यन्तश्च कार्यकारणयोरभेदं तत्त्वदृष्टावस्य कार्यप्रपञ्चस्यैकात्मतां समर्थयन्ति । उपनिषदस्तु चिदचिन्मिश्रस्य सर्वस्यास्य प्रपञ्चस्य ब्रह्मैकोपादानतामवगमयन्त्यः तत्त्वतः समर्थयन्त्यैकात्मताम् ।

भगवान् बादरायण औपनिषदं तत्त्वं विचारयन् सत्कार्यवादैकोपादानकतावादयोराश्रयणेन सन्निकृष्टान्, जडस्य गुणमयस्योपादानतावादेन तु विरोधिनः कापिलान् पश्यंस्तत्पक्षस्य साक्षात्प्रतिपक्षतामवधार्य शास्त्रारम्भे ब्रह्मलक्षणविचारे प्रथमं तन्निरासे दृष्टिमादधाति — 'ईक्षतेर्नाशब्द' मित्यादिना । उत्तरत्र प्रतिपक्षनिरासे (द्वितीयाध्याये द्वितीयपादे) प्रथमं कापिलः पक्षः 'रचनानुपपत्तेश्च नानुमान'मित्यादिना प्रतिक्षिप्यते । तथा परस्मृतिभिः परप्रयुक्ततर्कैश्च स्वमतविरोधप्रशमनावसरे (द्वितीयाध्याये प्रथमपादे) प्रथमं कापिलस्मृतिनिरासः तदापादिततर्कनिरासश्च 'स्मृत्यनवकाशदोषप्रसङ्गादिति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गा'दित्यादिना कृतः ।

केचिदाचार्याः परस्य ब्रह्मणो जगदुपादानत्वे विकारादिप्रसङ्गान् बहून् दोषान् पश्यन्तो जगन्निमित्ततामात्रमभिप्रयन्ति । नयन्ति च तदनुगुणमेवोपनिषदः सूत्राणि च । उपनिषदां सूत्राणां च स्वरसवाहिनी गतिः कुण्ठितेव भवत्यस्मिन् पक्षे ।

अपरे पुनराचार्या औपनिषदानि कारणवाक्यानि स्वरसतो नयन्तः; अद्वैतं चौपनिषदं शुद्धं व्याख्यास्यन्तः कनकस्य कटकमुकुटाद्यात्मनेव ब्रह्मण एव जडाजडप्रपञ्चात्मना

स्वरूपपरिणामवादमाश्रयन्ते। व्याचक्षते चैवं—ब्रह्म सच्चिदानन्दघनं स्वेच्छया चराचरात्मना बहुधा भूत्वा विहरति। श्रुतिश्च—"स नैव रेमे तस्मादेकाकी नैव रमते स द्वितीयमैच्छत् स हैतावानास" इति। ब्रह्मैवेदमखिलमित्यौपनिषदं मतं निर्वहन्तः परे 'ब्रह्मैवैकं नेदमखिल'मिति बाधे तात्पर्यमाहुः। नैतत्साधु। 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते'त्यादिकं हि ब्रह्मवादे स्वरसगतिकम्। आविद्यकजगद्वादस्तु न ब्रह्मवादः, स त्वविद्यावादः। ब्रह्मैव विविधविशेषात्मना भवतीत्येष तु ब्रह्मवादः। श्रूयते च—'यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाऽक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति' 'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति। यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वम्'। 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्। नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' इति। ननु श्रुतिरियं प्रधानवादं कापिलमनुसरन्तीव। प्रधानं यत्रिगुणात्मकं तदेव त्वक्षरम्, तदेव तु महदादिविशेषात्मना प्रादुर्भवति। दृश्यत्वादयो विशेषधर्माः प्रधाने कारणावस्थे नेति अदृश्यमित्यादिविशेषणानां सङ्गतिश्च। महदादि प्रधानस्य परिणतिविशेषः। प्रधानं तु न कस्यापीति अक्षरमुच्यते इति। नैतत्। उपक्रमे हि 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवती'ति श्रूयते प्रश्नः, उत्तरेण चैतदनुगुणेन भाव्यम्, भूतयोनित्वेन श्रूयमाणं [illegible] चेत् प्रधानं कथं तदवबोधेन सर्वावबोधः। पुरुषतत्त्वं हि ततोऽत्यन्तविलक्षणम्। न तस्य परिणतिः। उत्तरत्र श्राव्यते—'दिव्यो ह्यमूर्तः पुरुषः स बाह्योऽभ्यन्तरो ह्यजः। अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः' इति पुरुषविशेषं प्रस्तुत्य 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इत्यादिना पुरुषात् पृथिव्याद्युद्भवः। रूपं चास्य 'अग्निर्मूर्धे'त्यादिना। तस्मात् न कापिलाभिमतप्रधानवादस्येह प्रसङ्गः। ननु विप्रतिषिद्धं श्रूयते-अक्षरं भूतयोनिः पुरुषो भूतयोनिरिति च। श्रुतेर्हार्दमजानतामेषा शङ्का। नाक्षरस्य पुरुषस्य च भेदः। अत्रैव 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्या'मिति अक्षरपुरुषशब्दयोः सामानाधिकरण्यं च श्रूयते। सत्यप्यभेदेऽक्षरात्परस्तु पुरुषोत्तमः। 'अक्षरात्परतः पर' इति हि श्रूयते। इदमिह बोध्यम्—सच्चिदानन्दलक्षणं ब्रह्म जडजीवाक्षरपुरुषोत्तमभेदात् भवति चतुर्धा। तिरोहितचिदानन्दांशं प्रकटसत्तामात्रं भूत्वा जडमिति भवति व्यवहारपदम्। तिरोहितानन्दांशं प्रकटसत्ताचैतन्यमात्रं जीव उच्यते। ईषत्तिरोहितानन्दमक्षरमुच्यते। प्रकटपरिपूर्णानन्दं पुरुषोत्तम उच्यते। तस्माद् ब्रह्मैवेदमखिलम्। इदमेवाद्वैतं श्रुतिहृदयङ्गमम्। तत्र जडजीवांशौ भोग्यभोक्तृभूतौ। अक्षरपुरुषोत्तमौ तु नियन्तृभूतौ।

१ व्यक्तमेतदणुभाष्ये.

तयोः प्रकटपरिपूर्णानन्दः आनन्दमयः पुरुषोत्तमो मुक्तोपसेव्यः । यत्सङ्कल्पैकदेशेन विश्वमेतद् व्यवस्थितम् । यदेतदीषत्तिरोहितानन्दांशमक्षरशब्दवाच्यं ब्रह्म तस्मादेतस्माद् व्युच्चरन्ति जीवा विस्फुलिङ्गा इवाग्नेः । न च व्युच्चरणमात्राज्जीवानामुत्पत्तिः । नामरूपसम्बन्धाभावात् । यद्यप्याकाशादिजडजातमपि तत एव व्युच्चरति । अथाप्यस्ति तेषां नामरूपान्वयः । श्रूयते हि—'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चे'त्यादिना जनियोगः । स च नामरूपान्वयलक्षणः । न च तथा जीवानाम् । तथा च—'अक्षरात्सम्भवतीह विश्वम्' इति । अक्षराद् ब्रह्मणः श्रूयमाणो विश्वसम्भवः पुरुषोत्तमादनन्यस्मादिति जगदुपादानता पुरुषोत्तमे परब्रह्मणि युज्यत एव । अक्षरं ब्रह्म पुरुषोत्तमं वाऽवलम्ब्य या विद्या प्रवर्तते सा ब्रह्मविद्यैव । तत्राक्षरब्रह्मावलम्ब्य प्रवर्तमाना ज्ञानलक्षणाऽपरब्रह्मविद्या, पुरुषोत्तममवलम्ब्य प्रवर्तमाना भक्तिलक्षणा परब्रह्मविद्या । तत्राक्षरब्रह्मविद्या अविद्यानिवर्तनद्वारा ब्रह्मप्राप्तियोग्यतां जीवस्यादधाति, फलत्वं तु आनन्दमयस्य पुरुषोत्तमस्यैव । ननु ब्रह्मणश्चेत्स्वरूपतः परिणतिर्हन्त विकृतत्वं दोषः । न । सुवर्णं कटकमुकुटाद्यवस्थाभेदप्राप्तिमात्रेण न विकृतं भवति । न हि भवति सुवर्णत्वोपमर्दः । तथैव जडजीवात्मना भवदपि ब्रह्म, नोपमृदितब्रह्मभावम् । येन रूपेणोपादानता तद्रूपोपमर्दे तु विकृतं भवेत् । ननु देहात्मभ्रमादनर्थ इति व्याहतं स्याद्वचः, देहस्यापि ब्रह्मणोऽनन्यत्वात् । न । ब्रह्मदर्शिनां सर्वं ब्रह्मभावेन पश्यतां देहात्मदृष्टिर्न दोषाय । ये पुनर्भेदवासनावासितचेतसः तेषामेव तु देहात्मधीरनर्थायेत्युच्यते, यत एते पशुसधर्माणो भूत्वाऽधोगतिमाप्नुयुः । इति ॥

अत्रेदं प्रष्टव्यम्—प्रधानपरिणामवादात् कापिलाद् औपनिषदं पक्षमनुप्रविशतां किं श्रेयो ब्रह्मस्वरूपपरिणामवादाश्रयणे । ब्रह्मैव स्वयं जडजीवात्मना भूत्वा विहरतीति वदद्भिः–यच्चेह गर्भवासादिदुःखं यच्च निरययातनादि सर्वं तद् ब्रह्मणः साक्षात् स्वीकृतं भवति । सर्वभवनसमर्थस्य परस्य ब्रह्मणः सर्वधर्माश्रयत्वं गुण एवेति चेत्, एष वादो न रोचते तत्त्वदर्शिभ्यः । अत एवेमं पक्षमसहमाना निर्विशेषचिन्मात्राद्वितीयतत्त्वदर्शिनो व्याचक्षते–'अविचारिततत्त्वानां वस्तुनानात्ववादिनाम् । नानापथपरिभ्रान्तिर्नैव जात्वपि शाम्यति ॥ परिणामयतां ब्रह्म निष्कलं चाप्यविक्रियम् । अजडे जडताधानं कापिलेभ्यो विशिष्यते ॥' इति । श्रूयते च नानात्वप्रतिषेधः–"नेह नानास्ति किञ्चन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ।" इति । तथा विकारनिषेधश्च–"नेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसङ्गो नहि सज्जतेऽसितो न व्यथते न रिष्यति" इति ॥ ननु दृश्यते नाना । दृश्यतां, किं तेन ? ननु अबाधितं हि तत्, अबाधितप्रत्यक्षसिद्धस्य कथं प्रतिषेधः ? नास्माभिः प्रतिषिध्यते । श्रुतिस्तु प्रतिषेधति । यथा–रज्जुं सर्पं पश्यतो भ्रमापनयनाय नायं सर्प इत्याप्तोपदेशः, तथाऽयं 'नेह नानास्ति किञ्चने'ति श्रौत उपदेशः । अथ किमिदमखिलमध्यस्तम् ? सत्यमध्यस्तमद्वितीये ब्रह्मण्यखिलमिदमविद्यया । अविद्यैव तु दोषः । ननु

सद्वितीयमविद्यया ब्रह्म । न, माया हि सा । श्रूयते च—'इन्द्रो मायाभिः पुरुरूप ईयते' इति । माया चानृतम् । सा हि न सती । बाध्यते ह्यद्वितीयात्मविज्ञानेन । तद्विलासः सर्वोऽयम् । श्रूयते च—'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् केन कं विजानीयात्'' इति । नाप्यसती । ख्यायते हि तत्कृतोऽयं भेदः । अतः सदसद्विलक्षणत्वादनृतमुच्यते । 'अनृतेन हि प्रत्यूढा' इति च श्रुतिः । अत एव च मायाशब्दः स्वरसप्रवृत्तिकः । अस्याश्च मायायाः द्वे शक्ती आच्छादिका विक्षेपिका चेति । तत्र प्रथमया आच्छाद्यते ब्रह्म, द्वितीयया तस्मिन्नधिष्ठाने विविधा वियदादिविशेषा विक्षिप्यन्ते–अध्यस्यन्ते । तस्मादावरणशक्त्या भवत्यविद्येति व्यपदेशः । विक्षेपशक्त्या भवति मायेति व्यपदेशः । सेयमविद्या भावरूपमज्ञानमुच्यते । अज्ञानं हि ज्ञानेन निवर्तेत । तस्मादिदमखिलं दृश्यं मिथ्या, निर्विशेषचिन्मात्रं ब्रह्मैव तु सत्यम् ।

ननु किमनेन वाचः प्रपञ्चेन, ब्रह्मणः स्वरूपं विचार्यं, विचार्यं च वियदादिविशेषे मूलम् । विचारश्च वेदान्तवाक्यान्यवलम्ब्यैव विधेयः । तानि च मिथोऽविरोधेनैवोन्नेयानि । तत्र 'सत्यं ज्ञानमनन्तं ब्रह्म, आनन्दो ब्रह्म' इति ब्रह्मस्वरूपं प्रतिपाद्यते । तच्च 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ती'ति जगज्जन्मादिकारणत्वेन लक्ष्यते । तत्र सत्यमित्यादिभिस्त्रिभिः पदैस्त्रयो विशेषा बोध्यन्ते । अन्यथा त्रयाणां नार्थवत्ता । सत्यं विशेषा बोध्यन्ते । ते चानृतादिव्यावृत्तिरूपा एवेति अधिष्ठानान्नातिरिच्यन्ते । तस्माद् ब्रह्मान्ततो निर्विशेषम् । हन्त केयं वो मैत्री शाक्यैः सह । अपोहवादो ह्येषः । तैः सर्वेष्वेव पदेष्वयमाश्रितः । युष्माभिस्तु तैरादृतः पन्था ब्रह्मस्वरूपावबोधकवेदेष्विति विशेषः । सर्वेष्वेव स किमिति नाश्रीयते ? दृश्येषु दृश्यते विशेष इति चेत्, श्रूयमाणे श्रूयते विशेष इति किमित्यत्र प्रद्वेषः । श्रूयन्ते च 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'त्यादिषु बहवो विशेषाः । ननु श्रूयते विशेषाणां निषेधः—'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्' इति । नन्वनुपदमेव गुणविशेषाः श्रूयन्ते-'नित्यं विभुं सर्वगतं सुसूक्ष्मं यद्भूतयोनिं परिपश्यन्ति धीरा' इति । अन्ये निषिध्यन्ते, अन्ये तु विधीयन्ते । निर्गुणमिति सामान्यश्रुतिस्तु हेयधर्मरूपविशेषनिषेधपरैव । उभयानुगुण्यात् ॥

अपि च—अभावानां भावान्तररूपतया सत्यादिपदैः प्रत्याय्यमाना अपि अनृतादिव्यावृत्तयो भावविशेषा एव भवन्ति । तद्यथा—अनृताद् व्यावृत्तिः कालत्रयेऽपि सत्तालक्षणा । जडाद् व्यावृत्तिः स्वयंप्रकाशतालक्षणा । परिच्छिन्नतो व्यावृत्तिः सर्वदेशानुस्यूतत्वलक्षणा । वस्तुपरिच्छेदराहित्यं च सर्ववस्तुष्वन्वयलक्षणा । (यथा कनकस्य कटकमुकुटादिसकलकार्यान्वयः) तस्मात् सिद्धं स्वरूपावबोधकं वाक्यं सविशेषमेव गमयतीति ।

यदपि 'यतो वे'त्यादि लक्षणवाक्यं, तदपि कारणत्वं तदौपयिकान् गुणविशेषांश्च प्रतिपादयतीति सविशेषमेव ब्रह्मावबोधयति । कारणत्वोपपादकवाक्येषु विचार्यमाणेषु

एकस्यैव बहुधा भवनसिद्धेरेकत्वबहुत्वयोर्ब्रह्मण्येकासिकेति न प्रपञ्चमिथ्यात्ववादावकाशः। तथा च श्रूयते—'एकोऽहं बहु स्याम्' 'सोऽकामयत बहु स्यां प्रजायेय' 'तदैक्षत बहु स्यां प्रजायेय' इति। ब्रह्मणो लक्षणतया श्रूयमाणा जगदुपादानता चात एवोपपद्यते। अनन्यता ह्युपादानोपादेययोरुपपादनीया। न च सत्यानृतयोरनन्यता घटेत। यदीदं वियदादि आभासः, 'बहु स्यां'मिति श्रुतिः व्याहन्येत। बह्वाभासेय इति हि श्रुत्या भाव्यम्। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा च व्याहन्येत।

ननु अनपगतभेदवासनानामियमाशङ्का, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमुपपादयन्ती श्रुतिरेव कारणस्यैव सत्यतां कार्यस्यासत्यतां च गमयति, 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य'मिति। ननु रज्जुसर्पवदसत्यता चेत्कार्यमात्रस्येहाभिप्रेता कारणविज्ञानेन कार्यस्य ज्ञातता नाम का। रज्जुस्वरूपे विज्ञाते सर्पाध्यासो निवर्तते केवलम्। नायं सर्प इत्यवधृतं भवति। न चेयं रज्जुस्वरूपविज्ञानेन सर्पस्य ज्ञातता। तस्मादेकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनानुगुण्यमध्यासवादे नोपपद्येत। परिणामपक्षाश्रयणमेव तु न्याय्यम्।

अथ विकारमात्रस्यासत्यत्वं श्रूयमाणं विकारपारमार्थ्यं व्याहन्येत। ननु न विकारस्य सर्वथाऽसत्यत्वमुच्यते। कारणान्यत्वं तु प्रतिषिध्यते। मृत्तिकेत्येव सत्यमिति हि श्रूयते नतु मृत्तिकैव सत्यमिति। अयमर्थः—यदिदमसत्कार्यवादिनो मन्यन्ते-घटशरावादिरपूर्वः कश्चिदुत्पद्यते, स चोपादानाद् भिन्न इति। तत् प्रत्यक्षोपहतम्। घटशरावादिर्विकारोऽपि मृत्तिकेत्येव सर्वैः प्रत्यक्षतो गम्यते। न तु ततोऽन्यदिति। परिणामवाद एव च प्रतिज्ञानिदर्शनवाक्ययोरानुरूप्यम्। अध्यासवादे तु 'येन विज्ञातेन सर्वं निवर्तते' इति प्रतिज्ञावाक्येन भाव्यम्। निदर्शनवाक्येनापि 'यथा सोम्य रज्जौ विज्ञाते सर्पादि निवर्तते' इति भाव्यम्।

हन्ताविराणय्यैव ब्रह्मस्वरूप एव प्रसजतः सर्वशास्त्रविरुद्धान् विकारादिदोषान् कारणवाक्यानां स्वरसगतिरियमेवेति परिणामवादाश्रयणं स्वगोष्ठ्यामेव शोभते। ननु कार्यमात्रस्य मिथ्यात्वकल्पनं महासाहसम्। ननु नास्माभिः प्रपञ्चमिथ्यात्वं स्वोत्प्रेक्षया कल्प्यते, अपि तु अद्वैतश्रुत्यनुरोधात्। ब्रह्माद्वैतमुपपादयन्ती श्रुतिरेव कण्ठरवेणाह—'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति। यत्र तु अस्य सर्वमात्मैवाभूत् तत् केन कं पश्ये'दित्यात्मदर्शनेन बाध्यतां द्वैतस्य। आत्मसाक्षात्कारबाध्यतया द्वैतस्य मिथ्यात्वं सिद्धं रज्जुसाक्षात्कारबाध्यतया सर्पादेरिव। नहि सत्यस्य ज्ञानबाध्यता घटेत। नन्वसत्यस्यावभासमात्रं युक्तम्। शुक्तिरेव हि रजतात्मनाऽवभासते। नह्याभास्यं जायते नश्यति वा। जगत्तु जायते नश्यति च। श्रूयते च जगज्जन्मादिहेतुता ब्रह्मणः। कथमिदमुपपद्येत द्वैतस्यासत्यत्वे। कुतो नोपपद्येत। उत्पादविनाशौ सत्यतामेव द्रढयतीत्येतदौपनिषदमाशयमजानतो वचनम्। आम्नायते हि स्वाप्नार्थानां सृष्टिः—'न तत्र रथा न रथयोगा न पन्थानो भवन्ति। अथ रथान् रथयोगान् पथः

सृजते' इति। अत एव स्वप्नोत्थितस्य 'स्वप्ने रथमहमद्राक्ष'मिति प्रत्यय उपपद्यते। प्रत्यक्षं हि सन्निकृष्टस्यैव, तत् अविद्यया भवति कार्योत्पत्तिः। यावत्प्रतिभासमवतिष्ठते, ततो नश्यति च। ब्रह्मैव तु कालत्रयाबाध्यं पारमार्थिकसत्यम्। उत्पादविनाशशालिषु व्यावहारिकसत्यं प्रातिभासिकसत्यं चेति विभागः। एतेनार्थक्रियाकारिणां दृश्यमानानां घटादीनां कथमसत्यतेत्यपि प्रत्युक्तम्। व्यावहारिकसत्यं ह्येतत्। अस्य चोपादानं भवति मायाविशिष्टं ब्रह्म। मायाशब्दाभिलप्या त्वविद्या। सा च भावरूपमज्ञानम्। इदं च गुणत्रयात्मकम्। सदृशकार्योत्पादकत्वान्माया परिणाम्युपादानं ब्रह्म तु विसदृशकार्यजनकत्वाद्विवर्तोपादानमिति। ब्रह्मणो लक्षणतया श्रूयमाणं जगदुपादानत्वं परिणाम्युपादानभूतमायाधिष्ठानत्वम्। यदधिष्ठिता सती माया जगदात्मना परिणमति तद्विवर्तोपादानमित्येतत्। सा च माया नासती नापि सती, ख्यातिबाधयोरयोगात्। 'नासदासीन्नो सदासीत् तदानीं तम आसीत्' इति श्रुत्या सदसद्विलक्षणत्वं मायायाः श्राव्यते, इदमेवानिर्वचनीयत्वम्। तम इति चावरणशक्तिप्राधान्यादविद्यैवोच्यते। आव्रियते ह्यविद्यया ब्रह्मस्वरूपम्। आवृते च तस्मिन् विक्षेपशक्तिविशिष्टया तयैव विक्षिप्यते सर्वोऽयं भेदाध्यासः। तदेवं श्रुत्यन्तसिद्धमनिर्वचनीयत्वं मायायां तत्परिणामे च जगति वदतामस्माकं न काप्यनुपपत्तिः। "अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमैकात्म्यप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते। स आत्मा स विज्ञेयः" इत्यादिनिर्विशेषचिन्मात्रलक्षणाद्वितीयब्रह्मावबोधकश्रुतयोऽपि स्वरसगतयः समुन्नीता भवन्ति। यश्चायं जीवः स च ब्रह्मस्वरूपान्न भिद्यते। 'तत्त्वमसि श्वेतकेतो' इत्यसकृदुपदिश्यते हि। यस्तु तत्र तत्र श्रूयते जीवेश्वरभेदः स चोपाधिनिबन्धनः। उपाधिश्च माया, तत्परिणतिभूतमन्तःकरणं च। तत्र मायावच्छिन्नचैतन्यमीश्वरः, अन्तःकरणावच्छिन्नचैतन्यं जीव इति विवेक इति। नयन्ति च सूत्राण्येतदनुरोधेन॥

प्रपञ्चस्यास्य मिथ्यात्ववादमसहमाना भास्कराचार्यास्तु जगद्ब्रह्मणोर्भेदमभेदं च स्वाभाविकं निर्वहन्त इदमाहुः—कार्यकारणयोर्मृद्घटयोः कारणात्मना (मृदात्मना) अभेदः कार्यात्मना (घटाद्यात्मना) भेदश्च यथा दृष्टः तथैव जगतोऽस्य कार्यात्मना (आकाशाद्यात्मना) भेदः कारणीभूतसदात्मना चाभेदः। श्रूयते च 'सदेव सोम्येदमग्र आसीदेकमेवे'ति ब्रह्मणः सद्रूपता। ब्रह्म च न निर्विशेषम्। सर्वशक्तियुक्तं हि तत्। श्रूयते च-'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'ति। अत एव विचित्रशक्तियोगात् विचित्रजगदात्मना परिणतिः सङ्कल्पमात्रेण युज्यते। भगवान् बादरायणः प्रकृत्यधिकरणे सूत्रयति परिणामपक्षम् 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्, अभिध्योपदेशात्, साक्षाच्चोभयाम्नानात्, आत्मकृतेः परिणामात्, योनिश्च हि गीयते' इति। अयमर्थः—[१]प्रकृतिरुपादानकारणं, चशब्दान्निमित्तकारणं च, कुतः प्रतिज्ञादृष्टान्तयोरनुपरोधात् अबाधनात्।

१ भास्कराचार्यवचनमेव स्ववाक्ये ग्रथितं तन्मतमेतदिति दृढयितुम्।

यदि ब्रह्मैवोपादानकारणं ततस्तदुक्तमुपपद्यते । इतश्चोपादानम्—**'तदैक्षत बहु स्यां प्रजायेये'**ति बहु भवामीति सङ्कल्पपूर्विका प्रवृत्तिरभिध्यानम् । इतश्च—**'तदात्मानं स्वयमकुरुते'** त्यात्मनः कृतिः करणं, कर्तृत्वेन कार्यत्वेन चात्मा निर्दिश्यते । कथं पुनरात्मनः करणं संभवतीत्यत आह–**परिणामादिति** । परमात्मा स्वयमात्मानं कार्यत्वेन परिणमयामासेत्यर्थः । शक्तिविक्षेपं कृतवान् । अनन्ता हि तस्य शक्तयोऽचिन्त्याश्च, तासां विक्षेपं करोति सृष्टिकाले, यथा सूर्यो रश्मीनाम्, तद्वदेव संहरति । ननु **'न जायते' 'अजो नित्यः'** इत्यजत्वं श्रूयते । न दोषः । परतो जन्मप्रतिषेधाच्चतुर्मुखादिवत् । तदुक्तं **'न चास्य कश्चिज्जनिता न चाश्रयः'** इति । तस्मात् स्वतन्त्रस्य शक्तिविक्षेपोपसंहारौ न विरुद्धौ । सूत्रकारः श्रुत्यनुकारी परिणामपक्षं सूत्रयांबभूव । अयमेव पक्षो वाक्यकारवृत्तिकाराभ्यां संप्रदायतः समाश्रितः । तथा च वाक्यम्—**'परिणामस्तु स्याद्दध्यादिवत्'** इति । विगीतं विच्छिन्नमूलं माहायानिकबौद्धगाथितं मायावादं व्यावर्णयन्तो लोकान् व्यामोहयन्ति । परिणामवैचित्र्यं च विचित्रानन्ताश्रयशक्तेः परस्य ब्रह्मण उपपद्यते, यथा तावदचेतनानामेव परस्परं परिणामवैचित्र्यं क्षीरस्यैकः परिणामो दध्यवस्था, अन्नस्यानेकः केशनखदन्तपिशितादिलक्षणः, तथोर्णनाभेरूर्णापरिणामः प्राण्यन्तरेष्वत्यन्तमसंभाव्यमानो दृश्यते । न हि भावानां शक्तयः केनचित् प्राकृतबुद्धिना परिच्छेत्तुं शक्यन्ते । किमुत चेतनस्य सर्वज्ञस्य सर्वशक्तेः स्वतन्त्रस्य शास्त्रैकसमधिगम्यस्य जगत्कारणस्य परिणामो व्यवस्थाप्येत । स हि स्वेच्छया स्वात्मानं लोकहितार्थं परिणामयन् स्वशक्त्यनुसारेण परिणामयति । अप्रच्युतस्वरूपस्य शक्तिविक्षेपलक्षणः परिणामो यथा तन्तुनाभस्य पटतन्तुलक्षणः । तदेवमाकाशाद्यात्मना ब्रह्मण एव परिणामात् आकाशादिप्रपञ्चस्य परस्य ब्रह्मणश्च भेदोऽभेदश्च स्वाभाविकः, अत एव भेदश्रुतीनामभेदश्रुतीनां च समन्वयः ।

ननु भेदाभेदयोर्विरोधः । अनिरूपितप्रमाणप्रमेयस्येदं चोद्यम् । एकस्यैकत्वमस्तीति प्रमाणादेव गम्यते । नानात्वं तस्य तत्पूर्वं कस्माद्भेदोऽपि नेष्यते ॥ यत् प्रमाणैः परिच्छिन्नमविरुद्धं हि तद्यथा । वस्तुजातं गवाश्वादि भिन्नाभिन्नं प्रतीयते ॥ न ह्यभिन्नं भिन्नमेव वा क्वचित् केनचित् दर्शयितुं शक्यते । सत्ताज्ञेयत्वद्रव्यत्वादिसामान्यात्मना सर्वमभिन्नं व्यक्त्यात्मना तु परस्परं वैलक्षण्याद्भिन्नम् ।

तथाहि–प्रतीयते तदुभयं विरोधः कोऽयमुच्यते । विरोधे चाविरोधे च प्रमाणं कारणं मतम् ॥ एकरूपं प्रतीतत्वात् द्विरूपं तत्तथेष्यताम् । एकरूपं भवेदेकमिति नेश्वरभाषितम् ॥

अयमत्र सङ्ग्रहः—कार्यरूपेण नानात्वमभेदः कारणात्मना । हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ॥ जीवब्रह्मणोस्तु भेद औपाधिकः अभेदः स्वाभाविक इति विशेषः । जीवस्य नाकाशादिवदुत्पत्तिः श्रूयते, किंतु तन्निषेध एव । **'न जायते म्रियते वा विपश्चिन्नायं भूत्वा भविता वा न भूयः । अजो नित्यः शाश्वतोऽयं पुराणो**

न हन्यते हन्यमाने शरीरे ॥' 'यद्वाव किलेदं म्रियते न जीवो म्रियते' इति । श्रूयते चाभेदः-'तत्त्वमसी'त्यादि श्रुतिवाक्यैः । अतश्चाभेदः स्वाभाविकस्तयोः । भेदस्त्वग्निविस्फुलिङ्गयोरिवौपाधिकः । उपाधिश्चान्तःकरणम् । यावदयमात्मा केवलेन द्वैतदर्शनेन संसरति तावत्कालभावी बुद्ध्याद्युपाधियोगः । कर्तृत्वभोक्तृत्वादि नास्य नैसर्गिकम्, किन्त्वौपाधिकम् । उपाधिश्च परमार्थ एव, एतदपगमस्तु परमात्मोपासनया । तदपगमेन ब्रह्मभावसंपत्तिरेव मोक्षः । स च कर्मसमुच्चितात् ज्ञानात् । वेदान्तवाक्यैरेव ज्ञानसहकारित्वं कर्मणामुपादिश्यते 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती'ति । तत एव चात्मज्ञानाधिकृतस्य कर्मभिर्विनाऽपवर्गानुपपत्तेः ज्ञानेन कर्म समुच्चीयते । सूत्रकारश्चाह-सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदिति । ननु न यज्ञादीनां कर्मणां क्षयिफलानामपवर्गसाधनज्ञानसहकारिता । मैवम् । ज्ञानरसविद्धतयाऽक्षयिफलत्वोपपत्तेः सहकारितायोगात् । कामनाकलङ्कयोगात्तु कर्म भवत्यस्थिरफलम् । अत एव केन कर्मणा समुच्चयः केन नेत्येतत् ज्ञातव्यं भवति मुमुक्षुणा । अतश्च कर्मविचारस्य ब्रह्मविचारे पूर्ववृत्तत्वमुपपद्यते । ज्ञानं चापवर्गसाधनं न केवलं वाक्यार्थज्ञानमात्रम्, 'एकमेवाद्वितीयम् अहं ब्रह्मास्मी'ति चाभेदज्ञानं पुनः पुनरभ्यस्यमानमेव भेदवासनां निरसितुं समर्थमिति प्रत्ययावृत्तिलक्षणमुपासनात्मकम् । इदमेव च 'निदिध्यासितव्य' इति विधीयते इति । सूत्राणि च स्वमतानुसारेण योजयन्ति ।

विज्ञानभिक्षुरर्वाचीनो जीवब्रह्मणोः स्वरूपैक्यमसहमानः असहमानश्च प्रपञ्चमिथ्यात्वं भूयोंऽशेन साङ्ख्ययोगावनुसरन् औपनिषदपक्षेण तौ संस्कुर्वन् व्याचष्टे शारीरकमीमांसाम् । तत्र 'जन्माद्यस्य यत' इति सूत्रोक्तं जन्मादिकारणत्वं सङ्गमयन्नाह-प्रकृतिपुरुषादयो ब्रह्मणः शक्तयः । स च क्लेशकर्मविपाकाशयैरपरामृष्टश्चेतनविशेषः । प्रलये जले पृथिवी यथा तन्मात्रलक्षणसूक्ष्मभावमापन्ना विलीना भवति तथा प्रकृतिपुरुषौ सूक्ष्मीभूय ब्रह्मणि विलीनौ भवतः । सूक्ष्मता च प्रकृतेः गुणत्रयसाम्यावस्था, पुरुषस्य सौक्ष्म्यं च तदुपाधिभोक्तृतादिराहित्यम् । विलीनता च दुग्धजलयोरिवात्यन्तसंमिश्रणरूपः स्वरूपसंबन्धविशेषः । अन्तर्निलीनप्रकृतिपुरुषाद्यखिलशक्तिकात् विशुद्धसत्वाख्यमायोपाधिकात् तस्मात्परब्रह्मणः अस्य जन्मादि भवति । तस्माद् ब्रह्म जगज्जन्मादिकारणं भवति । तच्च कारणत्वमधिष्ठानकारणतालक्षणम्, यस्मिन्नविभक्तं येनोपष्टब्धं च सदुपादानकारणं कार्याकारेण परिणमते, तदधिष्ठानकारणम् । स्मर्यते चेदमधिष्ठानकारणत्वम्—'यस्य यत्कारणं प्रोक्तं तस्य साक्षान्महेश्वरः । अधिष्ठानतया स्थित्वा सदैवोपकरोति हि ॥' इति ॥ इदमेव च मूलकारणम् । ब्रह्मणः स्वाविभक्तप्रकृत्याद्युपष्टम्भकता च साक्षितामात्रेण । अत एव कारणत्वेऽपि तस्य न विकारित्वप्रसङ्गः । ननु तर्हि परिणाम्येवोपादानम्, न ब्रह्म । नैवम् । परिणामिन इव तदधिष्ठानस्याप्युपादानत्वात् । तथा व्यवहारात् । विविधौषधिबीजाधिष्ठानभूतायाः पृथिव्या अपि औषध्युपादानता लोके दृष्टा । श्रूयते च 'यथा पृथिव्या ओषधयः संभवन्ती'ति । परिणाम्युपादानस्याधिष्ठानोपादानस्य च साधारणमुपादानत्वं तु कार्याविभागाश्रयत्वम् । अविभागश्चा-

धारतावत् स्वरूपसंबन्धविशेषः अत्यन्तसंमिश्रणरूपः एकताप्रत्ययनियामकः । यथा दुग्धजलयोः । तत्र च समवायसंबन्धेन यत्राविभागः तद्विकार्युपादानम् । यत्र कार्यस्य कारणाविभागेनाविभागः तदधिष्ठानोपादानम् । उपादानद्वैविध्यं च विवर्तवादिभिरपीष्यत एव—परिणाम्युपादानं विवर्तोपादानमिति । एवं ब्रह्मैव जगतो निमित्तमपि भवति । यद्यपि ब्रह्म चैतन्यमात्रलक्षणम् 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति श्रुतेः । अथाप्युपादानाद्यपरोक्षज्ञानचिकीर्षादियोगो मायोपाधिके तस्मिन् उपाधियोगात् घटते । नित्यविशुद्धसत्त्वलक्षणा माया ईश्वरोपाधिः, क्लेशादिवासनामलिनसत्त्वं जीवोपाधिः, इति चौपाधौ भेदः । अत एव ब्रह्मणः क्लेशकर्मविपाकाशयैरसंस्पृष्टता सर्वेश्वरता च । किञ्च—परिणाम्युपादानत्वं चास्येष्यत एव । प्रकृतिः पुरुषश्चास्यैव हि शक्तिविशेषाः । तथा च स्मर्यते—'सर्वशक्तिमयो ह्यात्मा शक्तिमण्डलताण्डवैः । संसारं तन्निवृत्तिं च करोत्यविरतोदयम् ॥ प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः । क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्ययौ ।' इति । पुरुषोऽत्र जीवः । इत्थं च जगतः सर्वप्रकारकारणत्वमपि ब्रह्मण्युपपद्यते । ननु प्रकृतिः पुरुषश्च विभू इष्येते, विभौ च न क्रिया घटते, तत् क्षोभः कस्तयोः । सत्यं । प्रकृतेर्गुणत्रयात्मतया परिच्छिन्नगुणांशेन क्षोभः संभवत्येव । पुरुषस्य च तदौपाधिकः क्षोभः । संयोगोन्मुखत्वेन वा पुरुषे क्षोभोपचारः ।

अयमेव विशेषः औपनिषदपक्षे प्रकृतिस्वातन्त्र्यवादिभ्यां साङ्ख्ययोगाभ्याम्—यदयं प्रकृतिपुरुषसंयोग ईश्वरेण कार्यत इति । अभिन्ननिमित्तोपादानता च जगतः । अत एव च ब्रह्मशब्दप्रवृत्तिनिमित्तयोगोऽपि । निरतिशयबृहत्त्वं हि सकलजगत्कारण एवोपपद्येत । एतेनापोहवादाश्रयणेन ब्रह्मशब्दस्य निर्विशेषवस्तुनि प्रवृत्त्युपपादनं निरस्तम् । सर्गात् प्रागेकत्वावधारणश्रुतिः सर्वविकाराणां कारणात्मना ब्रह्मणि गतेस्थमृतसर्पवद्विलीनतामभिप्रेत्य प्रवर्तते । अभेदश्रुतयस्त्वविभागपराः । अविभागश्च संयोगविशेषो नीरक्षीरयोरिव । प्रधानपुरुषपरमात्मनामन्योन्याभावलक्षणो भेदस्तु श्रुतिस्मृतिशतसिद्धः । भेदश्रुतीनामभेदश्रुत्यनुरोधेनाविद्यकभेदपरत्वकल्पनातो वरमभेदश्रुतीनामविभागपरत्वम् । स्मर्यते च—'अन्यश्च राजन् स परस्तथाऽन्यः पञ्चविंशकः । तत्स्थत्वाच्चानुपश्यन्ति एक एवेति साधवः ॥' 'सर्वगत्वादनन्तस्य स एवाहमवस्थितः । व्यतिरिक्तं न यस्यास्ति व्यतिरिक्तोऽखिलस्य यः ॥' इति । श्रूयते च—'वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च' इति । अविभागमेवेयमपि श्रुतिरुपपादयति । 'तत्त्वमसी'त्यादिषु यदात्मैक्यं श्रूयते, न तत् जीवात्मपरमात्मनोर्भेदं श्रुतिस्मृतिसूत्रसिद्धं बाधते । किन्तु तादधीन्यमेवाभिप्रैति । अयमाशयः—आत्मा मुख्यामुख्यभेदात् द्विविधः । स्मर्यते च—'आत्मानं द्विविधं प्राहुः परापरविभेदतः । परस्तु निर्गुणः प्रोक्तो ह्यहंकारयुतोऽ-

परः । तत्त्वैः संपादितं भुङ्क्ते पुरुषः पञ्चविंशकः । ईश्वरेच्छावशात्सोऽपि जडात्मा कथ्यते बुधैः ॥' 'तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित् । अन्यश्च राजन् स परस्तथाऽन्यः पञ्चविंशकः । तत्स्थत्वाच्चानुपश्यन्ति ह्येक एवेति साधवः ॥ ते चैनं नाभिनन्दन्ति पञ्चविंशकमच्युत । षड्विंशमनुपश्यन्तः शुचयस्तत्परायणाः' इति । श्रूयते च–'चेतनश्चेतनानाम्' इति । सर्वेषामेव जीवानां चैतन्यफलाधायकोऽयमेव । अतः सर्वेषामेवाध्यक्षोऽयमेव परमात्मा मुख्यात्मा । अतः सर्वेषां पुरुषाणां यः स्वतन्त्रोऽहमिति भ्रमस्तमपनुदन्ती श्रुतिराह–'तत्त्वमसी'ति । एवं परमात्मपारतन्त्र्यमवबुध्यन्तस्तत्त्वदर्शिनः अहमभिमानं स्वस्मिन्नवधूय स्वस्याप्यात्मभूते परमात्मन्येव स्वाध्यक्षे स्वात्मदृष्ट्या 'योऽसावसौ पुरुषः सोऽहमस्मी'ति पश्यन्ति तत्त्वदृष्ट्या । इदमेवाभिप्रेत्य 'आत्मेति तूपगच्छन्ति ग्राहयन्ति चे'त्याचार्यः सूत्रयति । इदमेव ब्रह्मात्मज्ञानं विविक्तजीवज्ञानात् सांख्योक्तादपि श्रेष्ठं नातोऽधिकं ज्ञानमस्ति । यथा देहेन्द्रियादीनां बुद्धिपर्यन्तानामुत्पत्तिप्रलयाधारतया तत्साक्षित्वेनाधिष्ठातृतया जीवस्तेषामात्मा, तत्स्वरूपज्ञानाच्च[1] तेष्वहमित्यभिमानो निवर्तते, तथा जीवानां चिन्मात्रस्वरूपाणामप्युत्पत्तिलयाधारतया तत्साक्षित्वेन तदधिष्ठातृतया चेश्वरस्तेषामप्यात्मा तत्स्वरूपज्ञानादेव जीवेष्वहमित्यभिमानो निवर्तते । परमात्मन्येव तु मुख्यात्मताग्रहेण भवत्यात्मदृष्टिरत एवाहंग्रहश्च । ननु–'ममैवांशो जीवलोके जीवभूतः सनातनः' इति जीवेषु ईश्वरांशत्वं स्मर्यते । स्मर्यतां किं तेन । नन्वद्वैतम् । न । नह्यंशत्वमनन्यतायां नियतं लिङ्गम् । पुत्रोऽपि पितुरंश उच्यते । अमात्यादयश्च महीपालस्य । प्रभा च प्रभावतः । प्रकृते च पितापुत्रन्यायेनांशांशिभावोपपत्तिः । इदमेव चांशत्वं सजातीयत्वे सति अविभागप्रतियोगित्वम् । तदनुयोगित्वमेव चांशित्वम् । तथा च सिद्धं जीवात्मपरमात्मभेद इति । नयति च सूत्राणि स्वेनोन्नीतेनानेन पथा । तत्र श्रुतिस्मृतिन्यायैर्जीवात्मपरमात्मनोरभेदनिरसनपूर्वकं भेदः समर्थ्यते । औपनिषदमद्वैतवादमविभागपरतया नयन् सेश्वरसाङ्ख्यपक्षमेवौपनिषदतया मनुते । इदं च मतं शिष्यप्रशिष्यपरम्परया न विततं लोके । अर्वाचीनं च । जीवपरमात्मभेदसमर्थने प्रवृत्तोऽयमितीदमद्य प्रस्तुतम् । द्वैतसिद्धान्त इवाभेदश्रुतिसङ्गमनप्रकारोऽप्यस्मिन् पक्षे गौणः ।

> एवं नानाविधा व्याख्या ब्रह्मसूत्रस्य जाग्रति ।
> वेदान्तसूत्रस्वारस्यं तासु केति न चिन्त्यते ॥
> आचार्याणां प्रवृत्तिस्तु श्रेयो गमयितुं ननु ।
> तत्र तत्र गुणांशो यः स ग्राह्यः सारदर्शिभिः ॥

अथ वयमस्मत्पूर्वाचार्यप्रदर्शिते पथि सञ्चरामः–भगवद्रामानुजाचार्यास्तु–औपनिष-

---

१. उत्पत्तिरत्र देहयोगोपाधिका ।

दानि भेदाभेदवाक्यानि सगुणनिर्गुणवाक्यानि मिथोऽनुपमर्देन सङ्गमयदौपनिषदमेव
वाक्यं समवलम्ब्य तत्त्वहितपुरुषार्थावबोधने प्रवृत्तानां भगवद्बोधायनविरचितवृत्ति-
मनुसृत्य ब्रह्मसूत्राशयं यथावद्व्याचक्षाणानां पूर्वाचार्याणां मतेन शारीरकमीमांसां
व्याचख्युः । तेषामाशयः सङ्गृह्यात्र निरूप्यते—'अथातो धर्मजिज्ञासे' त्यारभ्य
'अनावृत्तिः शब्दादनावृत्तिः शब्दा'दित्येतदन्तमेकं शास्त्रं वेदार्थविचारात्मकम् ।
तत्रावान्तरभेदो धर्मविचारो ब्रह्मविचारश्चेति । कर्तृभेदस्तु न शास्त्रैक्यविरोधी ।
अध्ययनविधिवशगः साङ्गवेदाध्ययने प्रवर्तते । अध्ययनाच्चाऽऽपातप्रतिपन्नवेदार्थ-
विचारे प्रवृत्तः कर्मकाण्डं अध्ययनक्रमात्प्रथमतो विचार्य कर्मणामल्पास्थिरफलत्वं
विज्ञाय निर्विण्णः आपातप्रतिपन्नार्थब्रह्मकाण्डविचारे प्रवर्तते । अतश्च धर्मब्रह्म-
मीमांसयोः पौर्वापर्यनियमश्च । मीमांसाशास्त्रं व्याचक्षाणेनोपवर्षेण पूर्वमीमांसायाः
प्रथमे पादे इदमुच्यते—आत्मवादं तु शारीरके वक्ष्याम इति । अनेन गम्यते द्वयो-
र्मीमांसयोरैकशास्त्र्यम् । समग्रस्यैकस्य निबन्धस्य व्याख्यां चिकीर्षोर्भवत्येकैव चिकीर्षा,
तया चिकीर्षया व्याख्याने प्रवृत्तः 'उत्तरत्र वक्ष्याम' इति ब्रूयात्, उत्तरत्रेति स्थाने
अयं विशेषनिर्देशो भवति 'शारीरके वक्ष्यामः' इति । कैश्चित् मीमांसकैः कर्मस्वधि-
कृतस्य पुरुषस्य कर्तुरात्मनः स्वरूपावबोधनमात्रपरतया वेदान्तानां कर्मविधिशेष-
तया आत्मज्ञानस्योपयोगात् धर्ममीमांसाशेषतया शारीरकमीमांसाया उपयोग
उच्यते । तन्मतेन त्वैकशास्त्र्यं प्रकारान्तरेणापतति । कर्मणः सर्वदेवतान्तरात्मभू-
तपरमात्मसमाराधनरूपतां वदतामाचार्याणां तु आराध्यस्वरूपस्य प्राधान्यात्
तदाराधनरूपधर्ममीमांसाया आराध्यब्रह्ममीमांसार्थत्वेन तच्छेषतयैवोपयोगः । अवि-
जानतां तु कामकामानां धर्ममीमांसायाः प्राधान्यम् । धर्मब्रह्ममीमांसयोरनयोरैक-
शास्त्र्यं परैरप्यभ्युपगतप्रायम्, तथाहि शाङ्करभाष्ये—'एक आत्मनः शरीरे
भावा'दित्यतत्सूत्रविवरणावसरे 'देहातिरिक्तात्मास्तित्वस्य पूर्वतन्त्रप्रथमपादे व्यव-
स्थापनात् अत्र तद्व्यवस्थापनं पुनरुक्त'मित्याशङ्क्य 'शबरस्वामिना तत्र तत् कृतं न
तत् सूत्रारूढ'मिति पौनरुक्त्यपरिहारो दृश्यते । तथा भामत्यां धर्मजिज्ञासासूत्र-
स्थधर्मपदस्य वेदार्थमात्रोपलक्षकत्वं चाभिहितम् । तदेवं पूर्वोत्तरमीमांसयोरैकशास्त्र्ये
वेदार्थविचारकत्वलक्षणे स्थिते प्रवृत्ते च धर्मकाण्डलक्षणपूर्वभागविचारे ब्रह्मकाण्ड-
लक्षणोत्तरभागविचारोपक्रमे 'अथातो ब्रह्मजिज्ञासे'त्यनेन वृत्तवर्तिष्यमाणसङ्गति-
प्रदर्शनपूर्वकं शास्त्रमवतार्यते । वृत्तं चात्र कर्मविचारः, वर्तिष्यमाणं ब्रह्मविचारः ।
अध्ययनक्रमतः आदौ आपातप्रतिपन्नकर्मस्वरूपे विचारिते कर्मणामल्पास्थिरफल-
त्वादिदोषावगतेः आपातप्रतिपन्नानन्तस्थिरफलब्रह्मविचारे भवति कार्यताप्रतिपत्तिः ।
अथातःशब्दाभ्यां चायमर्थो गम्यते । तदेवमवसरसङ्गतिः प्रदर्शिता भवति ।

जिज्ञास्यतया निर्दिष्टस्य ब्रह्मणो लक्षणमुच्यते—'जन्माद्यस्य यत' इति । अस्या-
धिकरणस्य मूलवाक्यम् 'यतो वा इमानि भूतानि जायन्ते येन जातानि
जीवन्ति यत् प्रयन्त्यभिसंविशन्ती'ति । 'यत्प्रयन्ति अभिसंविशन्ती'त्यतश्चोपा-

दानकारणत्वं स्पष्टमवगम्यते। लक्ष्यलक्षणनिर्देशरूपेण चास्य वाक्यस्य प्रवृत्तिः। निमित्तकारणता च वाक्यान्तरतो व्यक्तं गम्यमाना इहापि यत इति पञ्चम्या गम्यते। लक्ष्यलक्षणनिर्देशाच्च लक्ष्यतावच्छेदकरूपस्य लक्षणेनेतरेभ्यो व्यावर्त्यमानस्य लक्षणादन्यस्य धर्मस्य सिद्धिः, स च निरतिशयबृहत्त्वम्। इदमेव हि ब्रह्मशब्दस्य प्रवृत्तौ निमित्तम्। **'यतो वा इमानि भूतानि जायन्ते तद् ब्रह्मे'**ति निर्देशात् लक्षणेन लक्ष्यं रूपं बृहत्त्वमिति सिद्धम्। एतेन निर्विशेषं किञ्चिल्लक्ष्यमित्यपास्तम्। लक्षणवाक्येन धर्मद्वयस्यैवावगमात्। अत्रेदं विचार्यं—लक्षणतयाऽभिमतं कारणत्वं किं केवलनिमित्तत्वं किमुपादानतारूपमपि, उपादानत्वे तत् किमध्यासाधिष्ठानतारूपं ततो विलक्षणं परिणामितारूपमिति। **'तदैक्षत बहु स्यां प्रजायेये'**त्यौपनिषदवाक्यमवलम्ब्य प्रवृत्तात् **'ईक्षतेर्नाशब्द'**मिति सूत्रात् निमित्तत्वमुपादानत्वमुभयं हि गम्यते। अनेन च कापिलाभिमतो जडोपादानकजगद्वादः प्रतिक्षिप्यते। सदेवेत्यनेन प्रस्तुतस्य बहुभवनसङ्कल्पो ह्यनेन बोध्यते। ईक्षतेर्गौणार्थकता च निरस्ता। प्रकृत्यधिकरणे च **'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' 'अभिध्योपदेशात्' 'साक्षाच्चोभयाम्नानात्' 'आत्मकृतेः' 'परिणामात्' 'योनिश्च हि गीयते'** इत्येतैः सूत्रैः कण्ठरवेणोपादानकारणता प्रतिपाद्यते। सा च परिणामितारूपेति च। ब्रह्मणो जगदुपादानत्वे स्मृतिविरोधाशङ्का च **'स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गा'**दित्यनेन परिहृता। भिन्ननिमित्तोपादानकजगद्वादः पातञ्जलोऽपि **'एतेन योगः प्रत्युक्त'** इत्यनेन निरस्तः। औपनिषदे ब्रह्मणो जगदुपादानत्वे तर्कतः प्रत्यवतिष्ठमानानामाशङ्का **'न विलक्षणत्वादस्य तथात्वं च शब्दात्' 'अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्'** इत्यनूद्य **'दृश्यते तु' 'न तु दृष्टान्तभावादि'**ति च परिहृता। **'भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्'** इति च। तत्र ईक्षत्यधिकरणे विषयीभूतेनौपनिषदेन **"तदैक्षत बहु स्यां प्रजायेये"**-ति वाक्येन प्रतिपाद्यमानं बहुभवनं परिणामपक्ष एव घटते। तथा-प्रकृत्यधिकरणे उपादानकारणत्वगमकतया विवक्षितं **'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं'** इति प्रतिज्ञावाक्यं **'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्या'**दिति दृष्टान्तवाक्यं च परिणामपक्ष एव घटते। तथा **'आत्मकृतेः'** इति सूत्रे विवक्षितं **'तदात्मानं स्वयमकुरुते'**त्यनेन प्रतिपाद्यमानं स्वस्य बहुधा करणमपि। **'परिणामात्'** इति च व्यक्तं परिणाम एवोच्यते। अध्यासवादिनां नेदं सूत्रं स्वरसगति। परिणाम्युपादानं भावरूपाज्ञानलक्षणं माया ब्रह्म तु विवर्तोपादानमिति उपादाने द्वैविध्यं वदतां पक्षे 'विवर्तात्' इति सूत्रेण भाव्यम्। न तु 'परिणामात्' इति। न च परिणामो विवर्त आभास इत्यनर्थान्तरम्, येनाध्यासवादे औपनिषदत्वं समर्थ्येत। भ्रमप्रमाव्यवस्थानुपपत्तेः। आभासलक्षणं रज्जुसर्पज्ञानमेव हि भ्रमः। कनकमयकटकमुकुटावलम्बनं तु ज्ञानं प्रमैव, तथा, दुग्धपरिणतिविशेषलक्षणदध्यवलम्बनविज्ञानं च प्रमैव। ननु तत्त्वमविचारयतां लोकानामेष व्यवहारभेदः। विचार्यमाणे

तु कनकविकृतिः कटकमुकुटादिः दुग्धविकृतिभूतं दधि च आभास एव रज्जुसर्पवत्। आभासता विकृतिमात्रस्य 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति श्रुत्यैव गम्यते। क्षणिकविज्ञानवादान्नित्यविज्ञानवादमवलम्बमानानां श्रुतिनयनकौशलं केवलम्। श्रुतिस्तु न तन्मतमनुसरति। सा हि नामभेदात् प्रयोजनभेदात् कारकभेदात् गवाश्वादिवत् विकृतिभूतेन घटशरावादिना कारणभूतात् मृत्पिण्डादर्थान्तरेणैव भाव्यमितीममसत्कार्यवादं प्रतिक्षिपन्ती कार्यकारणयोरनर्थान्तरत्वेऽपि घटशरावाद्यवस्थाभेदस्य कारणे कारकव्यापारेण सञ्जातस्य तन्मूलकनामभेदस्य च भिन्नव्यवहारालम्बनत्वं 'वाचारम्भणं विकारो नामधेयं चे'त्यनेनोपपाद्य कार्यस्य कारणान्यत्वं प्रत्यक्षप्रमाणबाधितमिति वदति मृत्तिकेत्येव सत्यमिति। घटशरावादिरपि मृत्तिकेत्येव प्रत्यक्षेण गम्यते, न तु ततोऽर्थान्तरमिति। अत एव एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा सूपपादिता भवति। अन्यथा तु 'येन श्रुतेन येन मतेन येन विज्ञातेन सर्वमिदं निवर्तते' इति श्रुत्या भाव्यम्। ननु—अश्रुतसदुपदेशं दर्शनान्तरश्रवणजनितभेदवासनाव्याक्षिप्तहृदयं पुत्रं तत्त्वमवबोधयतः पितुराप्ततमस्य तदीयभेदवासनामुपशमयितुमेष आरम्भः। यद्येवमध्यासवादं बोधयति पिता तर्हि परिणामवाद एव स्वरसतः प्रवर्तमानानि वाक्यानि प्रयुज्य किमिति व्यामोहयति। स्पष्टार्थैर्हि वाक्यैरुपदेष्टव्यम्। निदर्शनानि च तथाभूतान्येव दर्शयितव्यानि। सर्वस्यैकोपादानकर्ता उपादानैक्येऽपि उपादेयानामर्थान्तरतां च विविधदर्शनश्रवणतः शङ्कमानस्य शङ्कामपनुदत आचार्यस्येदं वचनमित्येव तु स्वरसतो वाक्यगतिः। वाचारम्भणश्रुतेरयमेवार्थः पूर्वापरवाक्यानुगुणः। उपक्रान्तमभिन्ननिमित्तोपादानकत्वं जगत उपपादयत् "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय"मित्युत्तरवाक्यं च परमते न स्वरसगति। इदमिति नामरूपविभागापन्नं विविधं वर्तमानं निर्दिश्य तत् अग्रे एकमेव सदासीत्—नामरूपविभागरहितं सन्मात्रमासीदिति, इदमिदानीं परिदृश्यमानं घटशरावादि पूर्वं मृण्मात्रमासीदिति घटशरावादीनां मृत्तादात्म्यमिव प्रपञ्चस्य ब्रह्मतादात्म्यं हि प्रतिपाद्यते। तच्च सच्छब्दवाच्यस्य परिणतिविशेषः प्रपञ्चोऽयमित्यस्मिन् पक्ष एवान्वेति। न ह्यध्यस्तस्याधिष्ठानतादात्म्यम्। नाप्यध्यस्तसत्ता अधिष्ठानसत्तातोऽनतिरिक्ता। सा हि प्रातिभासिकी व्यावहारिकी वा, न पारमार्थिकी, अनिर्वचनीयं हि जायते परमार्थसत्याधिष्ठाने। तथा—कार्यकारणयोस्तादात्म्यं प्रतिपिपादयिषितं 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्या'दित्यनेन निदर्शनपूर्वकं सामान्यतो निरूपितं व्यष्टिसृष्टौ स्पष्टं प्रदर्शयितुं प्रवृत्तेषूत्तरखण्डेषु—'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यत् शुक्लं तदपां यत्कृष्णं तदन्नस्य अपागादग्नेरग्नित्वम्' इत्यादिष्विदं प्रतिपाद्यते। अग्निरिति निर्दिश्यमानोऽर्थविशेषः तेजोबन्नानां त्रयाणां संहतिलक्षणः/परिणतिविशेष एव, तस्यामवस्थायां यदेतत् रोहितादिरूपं तत् क्रमात्तेजोबन्नानामेव, तस्मात् अग्निरिति कोऽप्यपूर्वोऽर्थविशेषः, तस्येदमग्नित्वं धर्मविशेष इति पामरदृष्ट्या धर्मिधर्मविवेकः, विचार्यमाणे तु अपागादग्नेरग्नित्वम्। अग्नित्वमिति योऽयमवस्थाविशेषः स

नाग्नेरर्थान्तरस्य, किन्तु कारणानां तेजोबन्नानामेव, रूपत्रयं हि दृश्यमानं तदात्मतामभेद-
ढयति। अग्नित्वं नात्यन्ततोऽपागात्, परं त्रिष्वेव तेजोबन्नेषु तद्व्यवस्थितम्, अग्ने-
धर्म्यन्तरात्परैरिष्यमाणात्तु अपागात्। इति। किंच—एकस्यैव स्थौल्यसौक्ष्म्यावस्थाभ्यां
परिणामवैचित्र्येण कार्यकारणभावं निदर्शनपूर्वकं तत्रैवोत्तरत्र प्रतिपाद्यते—'न्यग्रोध-
फलमत आहरेति इदं भगव इति, भिन्द्धीति, भिन्नं भगव इति, किमत्र
पश्यसीति, अण्व्यो वेमा धाना भगव इति, आसामेकैकां भिन्द्धीति,
भिन्ना भगव इति, किमत्र पश्यसीति, न किञ्चन भगव इति, तं होवाच
यं वै सोम्य एतमणिमानं न निभालयसे एतस्य वै सोम्य एषोऽणिम्नः एवं
महान् न्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येति' इति। अतिसूक्ष्मस्य महान् न्यग्रोध
इति अविजानतो महदाश्चर्यं प्रतिभाति। उक्तप्रकारेण प्रत्यक्षत एव विचार्यमाणे
विनिश्चीयते अणोरेवायं महान् न्यग्रोधः परिणतिविशेष इति। अनेन च निदर्शनेन
परिणामपक्ष एव दृढीक्रियते। नाध्यासवादः। आरम्भणश्रुतिसिद्धोऽयमध्यासवाद इति
वदता एकस्यैव स्वकारणापेक्षया असत्यता स्वकार्यापेक्षया च सत्यतेति सत्यत्वानृतत्व-
योरेकत्र समावेशः स्यात्। ननु भोः कारणपरंपरायां विचार्यमाणायां परमकारणस्य
सत्यता कार्यमात्रस्य चासत्यता हि गम्यते। नायमर्थः श्रुतेरिति पूर्वमेवोक्तम्। तया
श्रुत्या कार्ये कारणस्यान्वय एव गम्यते। प्रत्यक्षप्रमाणसिद्धतैव च तस्य निरूप्यते।

विवर्तोपादनं ब्रह्म परिणाम्युपादनं मायेति उपादानभेदाश्रयणमप्यसङ्गतम्। नहि
परिणाम एव तु विवर्त इत्युच्यते। किन्तु कारणावस्थायां विद्यमानानां विशेषाणां
बहूनां यदा कार्यावस्थायां विपर्ययः, तदा विवर्त इति भवति व्यवहारः विशेषविप-
र्ययदृष्ट्या। यदा दुग्धं दध्यवस्थायां रसगन्धादिवैपरीत्यमभ्येति, तदा तद्दृष्ट्या दुग्धं
दध्यात्मना विवृत्तमिति व्यवह्रियते। यत्र कनकादेः कटकमुकुटात्मना परिणतिः तत्र
आकारमात्रान्तरापत्त्या कनकपिण्डः कटकाद्यात्मना परिणत इत्युच्यते। उपादानोपादेय-
भावस्तु न सर्वथा सारूप्ये, अंशतो वैरूप्यप्राप्तावेव। तत् परिणतिविशेष एव विवर्त-
व्यवहार इति नोपादानवैविध्यकल्पनावसरः। बहु स्यामिति च सङ्कल्पः स्रष्टुः, न ह्यहं
बह्वाभासेयेति। "सच्च त्यच्चाभवत्" इति च सदसदात्मना बहु भवनं श्रूयते, न तु
बहुधा भानम्। जनिं भवनं वा अध्यासेनैकार्थतया समर्थयतां पक्षः सौगतसमयपरिचय-
भूयस्तायामेव ह्यारोहेत। ननु सर्वोऽयं प्रपञ्चभेदः सौगतैरिव नापलप्यते। व्याव-
हारिकसत्तया स्वीक्रियते। उत्पादविनाशावप्यस्य प्रपञ्चस्याभिमतौ। न विज्ञानमात्र-
मर्थात्मनाऽवभासते इति। केन पुनरस्योत्पादः? अविद्याबलात्, रज्जुस्वरूपाज्ञानादिव
प्रातिभासिकरजताद्युत्पादः। ननु कस्य स्वरूपमज्ञातम्? ब्रह्मण एव, कुतः, अविद्यया,
तया हि ब्रह्मस्वरूपं तिरोहितम्। प्रकाशैकरसमपि ब्रह्म तिरोहितमित्यनुपपन्नम्। कस्या
चेयमविद्या, अधिष्ठानादन्यो हि अज्ञानाश्रयो दृष्टः। ब्रह्मैव सर्वाध्यासाधिष्ठानं तदेवा-
चाविद्याश्रयभूतमपि, अविद्यया तिरोहितस्वरूपमपीत्यादि न्यायविरुद्धमिति न्याय-

विरुद्धस्य श्रुत्यर्थता न विमर्शका आद्रियेरन् । निरस्तश्चायं पक्षः पूर्वैर्दर्शनकारैः, तद्व्याख्यातृभिश्च । पूर्वाचार्यैश्च विशेषत इति नेह तन्निरसनविस्तारस्यावसरः ।

ननु–कनकस्य कटकमुकुटाद्यात्मनेव ब्रह्मणश्चेत् प्रपञ्चात्मना परिणतिः ब्रह्मस्वरूपस्यैव विकारादिसर्वदोषास्पदत्वमापतेत् । ब्रह्मस्वरूपमविजानतामियमाशङ्का । तथाहि— "यतो वा इमानि भूतानि जायन्ते" इत्यनेन जगत्कारणत्वेन लक्ष्यमाणस्य ब्रह्मणः स्वरूपमानन्दवल्ल्यां निरूप्यते । उपक्रमे 'ब्रह्मविदाप्नोति पर'मिति ब्रह्मविदां प्राप्यत्वेन ब्रह्म प्रस्तुत्य तस्य स्वरूपं 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति सर्वदेशसर्वकालसर्ववस्तुव्यापितया त्रिविधपरिच्छेदरहितं स्वयंज्योतिष्ट्वेन ज्ञानात्मकं, सत्यानां–कालत्रयेऽप्येकरूपाणां जीवात्मनामपि सत्यताधायकतया निरूपाधिकसत्यम् इति प्रदर्श्यते । ईदृशं ब्रह्म यो वेत्ति 'सोऽश्नुते सर्वान् सह ब्रह्मणा विपश्चिता' इति च प्रथमं प्रस्तुता परप्राप्तिर्व्याख्याता । ज्ञानात्मनस्तस्य विपश्चित्त्वं (सर्वज्ञत्वं) चोक्तम् । एतेन निर्विशेषता दूरतो निरस्ता । तस्यास्य सर्ववस्तुव्यापितानिर्वाहकं सर्वस्यात्मतयाऽन्तरवस्थानमभिप्रेत्य तज्ज्ञापनाय 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यात्मशब्देन निर्दिश्य तस्याकाशादिकारणत्वमुक्तम् । अथात्मशब्देन विवक्षितं सर्वान्तरात्मत्वमस्यावगमयितुं शरीरप्राणादिषु विपरिवर्तमानामात्मदृष्टिं 'अन्योऽन्तर आत्मा प्राणमयः, अन्योऽन्तर आत्मा मनोमयः, अन्योन्तर आत्मा विज्ञानमयः, अन्योऽन्तर आत्मानन्दमयः' इति क्रमशो व्यावर्त्य अन्नमयादीनां विज्ञानमयजीवात्मपर्यन्तानामप्यान्तरे आनन्दमये अन्तरात्मता व्यवस्थापिता । अनेन सर्वेषां प्राणिनामात्मभूत एक आत्मा आनन्दमयः, सोऽयं सर्वेषामाकाशादीनां कारणभूतः, अत एव जगत्कारणत्वेन लक्षितः सः सत्यज्ञानस्वरूपः सर्वदेशसर्वकालसर्ववस्तुव्यापी ब्रह्मशब्दवाच्यः, तद्विदां तत्प्राप्तिः तदनुभवजनितानन्दविशेषसमृद्धेत्युक्तं भवति । उत्तरत्र तस्यानन्दमयस्यात्मनः निमित्तान्तरनिरपेक्षमुपादानत्वं 'सोऽकामयत बहु स्यां प्रजायेय' इत्यादिना प्रतिपाद्य 'रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवती'ति आनन्दमयस्य तस्य रसता तल्लाभादानन्दविशेषलाभश्च तद्विद उच्यते । अनेन उपास्योपासकभेदः प्राप्यप्राप्तृभेदश्च स्पष्टमवगम्यते । तदनन्तरं च तस्यानन्दमयस्य सर्वप्रशासितृत्वरूपमैश्वर्यमुच्यते 'भीषाऽस्माद्वातः पवते भीषोदेति सूर्य' इत्यादिना । आनन्दवल्ल्यामस्यां सर्वप्राणिनामन्तरात्मतया उक्तस्य परस्य ब्रह्मणः सकलचेतनाचेतनान्तरात्मत्वं सकलचेतनाचेतनजातस्य तच्छरीरत्वं च बृहदारण्यके अन्तर्यामिब्राह्मणे 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति एष ते आत्मा अन्तर्याम्यमृतः' 'यो विज्ञाने तिष्ठन् यो विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरं यो विज्ञानमन्तरो यमयति एष ते आत्मा अन्तर्याम्यमृतः' इत्यादिना शरीरलक्षणसूचनपूर्वकं प्रतिपादितम् । एवं च सति सकलचेतनाचेतनशरीरकः परमात्मा एक एव परमं तत्त्वमिति सिद्धम् । ननु भोगायतनं शरीरम्, भोगश्च कर्म-

फलानुभवः, न च परमात्मनः कर्मसंबन्धः, तत् कथमस्येदं शरीरं भवितुमर्हति। नैतत्। 'यस्य चेतनस्य यद् द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यम्, तत्तस्य शरीर'मिति तु शरीरलक्षणम्। लोकवेदप्रयोगसाधारण्येनेदमेव शरीरलक्षणम्। 'तत् सर्वं वै हरेस्तनुः' 'सोऽभिध्याय शरीरात् स्वात् सिसृक्षुः सकलाः प्रजाः' इति च स्मृतिः। नच श्रुतिस्मृतिशतप्रसिद्धोऽयं प्रयोगो गौणो भवितुमर्हति। द्रव्यस्य जातिगुणवत् आत्मनः शरीरमपृथक्सिद्धं विशेषणम्। तथाच स्वेतरसमस्तचेतनाचेतनविशिष्टं परमात्मतत्त्वमेकमेव। तथा चोक्तं भट्टपराशरैः—देहो देहिनि कारणे विकृतयो जातिर्गुणाः कर्म च द्रव्ये निष्ठितरूपबुद्धिवचसः तात्स्थ्यात् तथेदं जगत्। विश्वं त्वय्यभिमन्यसे जगदिषे तेनाद्वितीयस्तथा मायोपाधिविकारसङ्करकथा का नाम रङ्गेश्वर ॥' इति। उक्तं चान्यत्र—'वियद्वायुस्तेजः सलिलमवनिश्चेति यदिदं विकाराणां या च प्रकृतिरपि यश्चेतनगणः। न तेषामेकं वा यदगुणतया स्यात् तनुतया प्रकारीभूयास्ते निखिलमपि यद्ब्रह्मण इदम् ॥ तथा च स्वैकान्तैरखिलचिदचिद्वस्तुनिचयैर्विशिष्टं ब्रह्मैकं भवति नच तत्त्वं तदधिकम्। अतो नाना नेति श्रुतिशिरसि जोघुष्यत इदं विशिष्टाद्वैतं तन्नहि गुणविभागं न सहते ॥' इति।

कापिलानां मतेन निदर्शनमात्रमिह ब्रूमः—सत्त्वरजस्तमसां नित्यमिलितानां समुदायलक्षणं प्रधानमेकं तत्त्वमिष्यते। एवमेव चिदचिदीश्वराणां नित्यमिलितानां समुदायलक्षणं परंब्रह्मैकमेव तत्त्वम्। इयानत्र विशेषः-समुदायेऽस्मिन् चिदचिती शरीरतया विशेषणतैकस्वभावे, ईश्वरस्तु आत्मतया (शरीरितया) विशेष्यतैकस्वभावः। अत एव विशिष्टमेकमेव तत्त्वं नेतरदिति श्रुतिस्मृतिसंप्रतिपन्नोऽयं तत्त्वनिश्चयः। अत्रेमे श्लोकाः
स्वशरीरस्थौल्यसौक्ष्म्यावस्थाभेदद्वयान्वयात्। बहुधा परिणामोऽस्य युज्यते परमात्मनः॥
स्थूलयन् सूक्ष्मयंश्चापि स्वां तनुं विहरन्नयम्। अलिप्तो दोषलेशेन भ्राजते परमेश्वरः॥
इदं दृश्यमदृश्यं च यस्य सर्वं विशेषणम्। तं निर्विशेषं मन्यन्ते केऽपि वेदान्तपारगाः॥
विचार्योपनिषद्भावं भगवान् बादरायणः। परिणामात् स्वात्मकृतेः प्रतिज्ञाद्यनुरोधतः॥
जगत्प्रकृतितामाह ब्रह्मणः परमात्मनः। अध्यासवादमाश्रित्य तस्यैवाशयवर्णनम्॥
श्रुतिसूत्राननुगुणं तत्त्वविद्भ्यो न रोचते। तदनन्यत्वसूत्रं च मायावादे न युज्यते॥

अस्मिंश्च विशिष्टाद्वैते श्रुतिशिरोभिरेव गम्यमाने श्रुत्यन्तसिद्धः सूत्रपथारूढश्च परिणामवाद एव सुसङ्गतो भवति। तथा श्रुत्यन्ते श्रूयमाणश्चिदचिदीश्वरभेदः, तथा सूत्रेषु तत्र तत्र स्मर्यमाणो जीवेश्वरभेदश्च समन्वेति। विशिष्टैक्याच्चाभेदवादा अपि श्रौताः सुसङ्गता भवन्ति। शरीरवाचकशब्दानां शरीरिणि जात्यादिवाचकानां व्यक्ताविव पर्यवसानं च स्वरससिद्धम्॥

अथ अध्यायक्रमेण शारीरकमीमांसाया हार्दं पूर्वाचार्यदर्शितया रीत्या सङ्गृह्य प्रदर्शयामः—

## अथायं शास्त्रार्थसङ्ग्रहः—

नारायणः परं ब्रह्म जगज्जन्मादिकारणम् ।
साधनं भक्तियोगाख्यं तदनुध्यानलक्षणम् ॥

आविर्भूतस्वरूपस्य सर्वकर्मपरिक्षयात् ।
तत्प्राप्तिः फलमित्येतत् शास्त्रेऽस्मिन् प्रतिपाद्यते ॥

गतागतक्लेशमात्राधायकात् कर्मणस्तु यः ।
निर्विण्णो नित्यमन्विष्यन् फलं सोऽत्र प्रवर्तते ॥

चतुरध्यायी सेयं शारीरकमीमांसा पूर्वोत्तरद्विकभेदेन भिन्ना । पूर्वद्विकेन जगत्कारणं परंब्रह्म सकलचेतनाचेतनविलक्षणमित्येतत् समर्थितम् । उत्तरद्विकेन तदुपासन-तत्प्राप्तिरूपे साधनफले निरूपिते । तत्र प्रथमाध्याये-जिज्ञास्यस्य ब्रह्मणो यल्लक्षणं जगज्जन्मादिहेतुत्वं तस्यायोगान्ययोगव्यवच्छेदनिरूपणेन ब्रह्मणि लक्ष्ये समन्वयः क्रियते । अत एव प्रथमस्याध्यायस्य समन्वयाध्याय इति संज्ञा । द्वितीयाध्याये—उक्तलक्षणस्य परैर्वादिभिरापाद्यमानविरोधपरिहारः क्रियते । अत एवाविरोधाध्याय इति संज्ञा । **इदमुक्तं भवति**—अप्रसङ्गातिप्रसङ्गाभ्यां रहितं तु लक्षणं भवितुमर्हति । यदिदं सकलजगत्कारणत्वं ब्रह्मणो लक्षणतयोच्यते, तत्र अप्रसङ्गातिप्रसङ्गाशङ्का श्रुतिविप्रतिपत्तिप्रयुक्ता वादिविप्रतिपत्तिप्रयुक्ता चेति द्वेधा भवति । तत्र श्रुतिविप्रतिपत्तिप्रयुक्ताप्रसङ्गाशङ्का प्रथमाध्यायस्य प्रथमपादेन परिह्रियते, त्रिपाद्या श्रुतिविप्रतिपत्तिप्रयुक्तातिप्रसङ्गाशङ्का परिह्रियते । वादिविप्रतिपत्तिप्रयुक्ताऽप्रसङ्गातिप्रसङ्गाशङ्का द्वितीयाध्यायस्य प्रथमद्वितीयपादाभ्यां क्रियते । जगति नित्यानां वियदादीनामपि सत्त्वात् सकलजगदुपादानत्वं न घटते इति लक्षणस्यासंभवाशङ्कानिरसनं समनन्तरपादद्वयेन क्रियते । इति । तृतीयचतुर्थाध्याययोः साधनफलभेदेन स्वप्नादिविविधविषयभेदेन च नैकविषययोरुत्तरद्विकत्वेन विभजने द्वयोरध्याययोरनुगतमेकं रूपं वक्तव्यम् । तत्तु उपासनप्रवृत्तिप्रयोजकार्थनिरूपकत्वलक्षणं बोध्यम् । प्रयोजकत्वं साक्षात् परम्परया वा घटते । विना मुमुक्षां विना उपासने मोक्षसाधनताज्ञानं नोपासने प्रवर्तेत, तस्मात् उपासनप्रवृत्तौ मुमुक्षा मोक्षसाधनताज्ञानं चेत्युभयं कारणम् । कर्मलक्षणाविद्यानिवृत्तिपूर्वकदेशविशेषावच्छिन्नब्रह्मानुभवः फलम् । निवर्तनीयकर्मतत्फलभूतसंसारद्वेषादेव भवति तन्निवृत्तीच्छा, तस्मात् स्वप्नादिसंसारदोषनिरूपणांशस्यापि भवति उपासनप्रवृत्तावुपकारकता । देशविशेषावच्छिन्नब्रह्मानुभवेच्छायां ब्रह्मणः अपहतपाप्मत्वसकलकल्याणगुणाकरत्वलक्षणमुभयलिङ्गत्वं ज्ञातव्यम्, तस्मात् तत्प्रतिपादकभागस्यापि भवत्युपासनप्रवृत्तावुपकारकता । उपासनतदङ्गतत्फलप्रतिपादकस्य तथात्वं च सुगमम् ।

अपरश्चायं द्विकविभागप्रकारः सुगमः—ब्रह्म तदुपासनं तत्प्राप्तिश्चेत्येते त्रयोऽस्यां शारीरकमीमांसायां प्राधान्येन प्रतिपाद्या विषयाः । तत्र यत् फलं ब्रह्मप्राप्तिः सा तदनुभवविशेषलक्षणा, तथा च तत्साधने तदुपासने फले च तदनुभवविशेषलक्षणे ब्रह्म विषयो भवति । तत्र समन्वयाविरोधाख्यौ प्रथमद्वितीयाध्यायौ विषयप्रतिपादकौ, साधनाध्यायफलाध्यायाख्यौ तृतीयचतुर्थौ विषयिप्रतिपादकाविति द्विकभेदः ।

तत्र तृतीयाध्यायस्य प्रथमे पादे वैराग्योत्पादनाय संसरतो जीवस्य दोषाः प्रतिपाद्यन्ते । द्वितीये पादे—अन्तर्यामितयाऽवस्थितस्यापि ब्रह्मणः तत्तत्स्थानदोषैरलिप्तत्वज्ञापनाय अपहतपाप्मत्वकल्याणगुणाकरत्वरूपमुभयलिङ्गं प्रतिपाद्यते । तृतीये पादे उपासनलक्षणविद्याभेदाभेदचिन्ता गुणोपसंहारानुपसंहाराद्यर्थतया क्रियते । चतुर्थे पादे—विद्याङ्गविचारः क्रियते । फलनिरूपणप्रधानश्च चतुर्थाध्यायः । तस्यास्य प्रथमे पादे अस्य फलस्येदं साधनमिति ज्ञापनार्थं साधनभूतस्याप्युपासनस्य प्रीतिरूपापन्नतया भगवति परमात्मनि साध्यदशायामिव साधनदशायामपि प्रीत्यनुवृत्तेः फलाविशेषत्वज्ञापनार्थं च विद्यायाः स्वरूपं विशोध्यते । अथ द्वितीयपादे निष्पन्नसाधनस्य मोक्ष्यमाणस्य शरीरादुत्क्रान्तिप्रकारश्चिन्त्यते । तृतीये पादे मार्गो विचार्यते । चतुर्थे पादे मुक्तैश्वर्यप्रकारो विचार्यते । तस्य चरमसूत्रे ब्रह्म प्राप्तस्य पुनरावृत्तिसंभवाशङ्का निरस्यते । एवमुपक्रान्तो ब्रह्मविचारः फलनिरूपणेन परिसमाप्यते ।

तत्तदाचार्यसिद्धान्तसारसङ्ग्रहपूर्वकम् ।
विशिष्टाद्वैतसिद्धान्तसारः सङ्गृह्य दर्शितः ॥

भगवद्रामानुजाचार्यविरचितं शारीरकमीमांसाशास्त्रहार्दावबोधकं श्रीभाष्यं प्रकटपुरुषोत्तमेन भगवता शिक्षापत्र्यां स्वहृदयङ्गमतया आध्यात्मिकशास्त्रेषु प्राधान्येनादरणीयतया स्वचरणनलिनसमाश्रयैः सर्वैरुपसेव्यतया च निरूपितम् । तदीयचरणकमलपरिचर्यापरायणे मुनिवृन्दे तदीयपरमकृपायाः प्रथमपात्रभूतैः श्रीमुक्तानन्दस्वामिभिः तस्यास्य स्वपक्षदार्ढ्यार्थपरपक्षनिरसनांशप्रचुरस्य श्रुतिस्मृतिपथानुकूलतर्कसंभृततया दुरवबोधतां सूक्तिगांभीर्याच्च व्याख्यासापेक्षतां विचार्य सूत्राशयमात्रप्रकाशने प्रवृत्तैः मन्दमतीनामपि सुखावबोधं सूत्रविवरणरूपं भाष्यं भगवदाज्ञया व्यरच्यत । तदिदं भाष्यमलब्धप्रचारमतिनिगूढं जीर्णप्रायमासीत् । तदिदं मुद्राप्य प्रकटीकर्तुमत्युत्सुकैः सद्गुरुवर्यैः पुराणिधर्मस्वरूपदास-शास्त्रिहरिजीवनदास-शास्त्रिकृष्णस्वरूपदासप्रभृतिभिः कृतमनुरोधं सादरमुररीकुर्वाणैरस्माभिः सम्यक् परिष्कृतमिदं प्रस्तावनासनाथं च व्यधायि मुद्रणार्हम् । तस्यास्याचिरादेव सम्मुद्रितस्य प्राकट्यमाशास्महेतराम् ।

एम्बार. कृष्णमाचार्यः ( श्रीरङ्गम् )
( वडताल पाठशालाया भूतपूर्वप्रधानपण्डितः )

श्रीहरिर्जयति ।

# भाष्यप्रदीपसमलङ्कृताया ब्रह्ममीमांसायाः

# प्रस्तावना–

जन्मस्थित्यन्तहेतुं निरुपधिकमहाज्ञानशक्त्यादिपूर्णं
सर्वस्यात्मानमेकं परमपहतावद्यजातं सदैव ।
त्र्यय्यन्तैकान्तवेद्यं परमरसघनं धाम्नि दिव्ये विदीप्तं
वन्दे सर्वैरुपास्यं निरवधिविभवं श्रीहरिं मुक्तभोग्यम् ॥ १ ॥

वेदान्तानां प्रमेयं कतिचिदभिदधत्यज्ञसंसारिभावं
ब्रह्मैकं वस्तुतः श्रीशुभगुणविभवाकारतः शून्यमेव ।
तानेतान् शास्त्रदण्डैः प्रशममुपनयन् साधुयुक्तिप्रयुक्तैः
श्रीमान् रामानुजार्यो मतिमतिविमलां प्रेरयेत्संयमीन्द्रः ॥ २ ॥

विख्यातबोधसारान् देशिकवर्यान् नमामि मम मान्यान् ।
विद्वच्छ्रेण्यां गण्यो जातो येषां कृपाबलादतुलात् ॥ ३ ॥

विशिष्टाद्वैतसिद्धान्तो विशिष्टकुलसेवितः ।
विशिष्टहितशंस्येष विशिष्टार्थो जयत्विह ॥ ४ ॥

विदितमेव हि वैदिकवर्याणां यत्पराशरात्सत्यवत्यामवतीर्णेन भगवता नारायणेन बादरा-
यणाभिख्याविख्यातेन महर्षिणा वेदव्यासेन ब्रह्ममीमांसासूत्राणि प्रकटीकृतानि वेदान्तो-
पनिषद्वाक्यार्थविनिर्णायकानि परब्रह्मस्वरूपस्वभावविभूतिलीलाऽऽनन्दादिविशोधनपराणि
जीवात्मनां स्वरूपयाथात्म्यज्ञानपूर्वकस्वधर्मवैराग्यशमाद्यङ्गकपरब्रह्मभूतपुरुषोत्तमश्रीमन्नारा-
यणोपासनापरिपाकाधीनात्यन्तिककर्ममूलप्रकृतिबन्धविनिर्मोकपूर्वकपरिपूर्णभगवदनुभवसेवा-
लक्षणपरमनिःश्रेयसप्राप्तिफलपर्यवसायीनीति । 'ब्रह्मसूत्रकलापेन महता भारतेन
च । उपबृंहितवेदाय नमो व्यासाय विष्णवे ॥' 'कृष्णद्वैपायनं व्यासं विद्धि
नारायणं प्रभुम् । को ह्यन्यो भुवि मैत्रेय महाभारतकृद्भवेत् ॥' इति च वेद-
वेदान्तवेद्यपरतत्त्वभूतश्रीमन्नारायणावतारत्वं निरणैषि ब्रह्मसूत्रप्रणेतुस्तत्त्वदर्शिभिरित्यति-
रोहितम् । वेदान्तार्थविनिश्चायनविशदीकरणकर्तृत्वलक्षणो महिमातिशयश्चाऽत्र व्यक्तो
भगवतो बादरायणस्य ।

स्कान्दे च विस्तरशः सूत्रकृतो महिमाद्यनुवर्णितम् । यथा—"नारायणाद्विनिष्पन्नं
ज्ञानं कृतयुगे स्थितम् । किञ्चित्तदन्यथा जातं त्रेतायां द्वापरे खिलम् ॥
गौतमस्य ऋषेः शापात् ज्ञाने त्वज्ञानतां गते । सङ्कीर्णबुद्धयो देवा ब्रह्मरुद्र-
पुरःसराः । शरण्यं शरणं जग्मुर्नारायणमनामयम् । तैर्विज्ञापितकार्यस्तु
भगवान् पुरुषोत्तमः ॥ अवतीर्णो महायोगी सत्यवत्यां पराशरात् । उत्स-

**न्नान् भगवान् वेदानुजहार हरिः स्वयम् ॥ चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः । शतधा चैकधा चैव तथैव च सहस्रधा ॥ कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये । चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ॥ अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥ निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यतः । सविशेषाणि सूत्राणि ह्यपराणि विदो विदुः ॥ मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः । इति वेदविदः प्राहुः शब्दतत्त्वार्थवेदिनः ॥ एवंविधानि सूत्राणि कृत्वा व्यासो महायशाः । ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु ॥ ज्ञानं संस्थाप्य भगवान् मोदते परमेश्वरः ॥"** इति ।

चतुर्दशविद्यास्थानान्तर्गतायाः मीमांसाया वेदार्थविनिर्णयोपयुक्तवाक्यतर्कादिन्यायप्रतिपादकतया वेदार्थप्रमितिकरणवेदाख्यप्रमाणपरिबृढसहकारिता चोपश्लोकिता—**'धर्मे प्रमीयमाणे तु वेदेन करणात्मना । इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥'** इति ।

कर्मकाण्ड-देवताकाण्ड-ब्रह्मकाण्ड-लक्षणावान्तरभागत्रयवत्या विंशतिलक्षण्या मीमांसाया वेदार्थभूतकर्मतदाराध्यदेवतातदन्तरात्मपरदेवताविषयकविचाररूपिण्या वेदाख्यैकशास्त्रविचाररूपत्वाद्विशिष्टैकार्थप्रतिपादकत्वाच्चैकशास्त्र्यमेव युक्तम् । प्रतिपादितं चैतत्परमप्राचीनाचार्येण बोधायनेन महर्षिणा वृत्तिकृता **'संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धि'**रिति । अनेन चतुर्लक्षण्या देवतामीमांसाया अपि जैमिनिप्रणीतत्वमवगम्यते । तस्याः संकर्षकाण्डापराभिधानायाः काशकृत्स्नीयत्वप्रथा तु काशकृत्स्नद्वारा प्रवर्तितत्वनिबन्धना स्यात् ।

कृत्स्नवेदार्थो धर्मः । स च द्वेधा–सिद्धः साध्यश्चेति । तत्र **साध्यधर्माः** यज्ञदानहोमादिलक्षणाः सर्वदेवतान्तर्यामिसर्वात्मभूतवासुदेवसमाराधनलक्षणा वेदपूर्वभागोदिताः सकामानामपेक्षिततत्तद्देवतासायुज्यादिलक्षणफलोपधायकाः । निष्कामानां तु त इमेऽन्तःकरणशुद्ध्यादिद्वारा भक्तियोगपरिनिष्पत्तिहेतवो मताः । **सिद्धो धर्मस्तु** श्रियःपतिर्निखिलहेयप्रत्यनीककल्याणैकतानः स्वेतरसमस्तवस्तुविलक्षणोऽनन्तज्ञानानन्दैकस्वरूपः स्वाभाविकानवधिकातिशयज्ञानशक्तिबलैश्वर्यवीर्यतेजःप्रभृत्यसङ्ख्येयकल्याणगुणाकरः भोगलीलाप्रधानक्षराक्षरविभूतिद्वयनायकः सर्वचिदचिद्वस्तुशरीरकः सर्वात्मा सर्वस्याधिपतिः सर्वज्ञः सत्यसङ्कल्पः संसारबन्धस्थितिमोक्षहेतुरानन्दमयो विष्णुर्नारायणो हरिः कृष्णो वासुदेवः पुरुषोत्तमो देवाधिदेवः । स एष वेदान्तेषु परं ब्रह्म, परं तत्त्वं, परं ज्योतिः, पर आत्मेत्येवमभिविश्रुतः । तस्य चास्य सिद्धधर्मत्वं महर्षिवर्यैर्विनिश्चितम् । यथोच्यते-**'ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः । ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ॥'** इति ।

**'अलौकिकश्रेयःसाधनत्वं धर्मत्व'**मिति च सिद्धसाध्यानुगतं धर्मलक्षणम् । उभ-

यत्र फलप्रदः प्रसादविशिष्टः सर्वान्तरात्मा सर्वज्ञः सत्यसङ्कल्पः परमात्मैव । तदाह सूत्रकारः **'फलमत उपपत्ते'**रिति । भगवान् पुरुषोत्तमः समग्रयज्ञादिसम्पत्त्या प्रसादमधिगच्छति यज्ञादिकर्तृषु । समग्रोपासनानिष्पत्त्या च स्वोपासकेषु । शरणागतेषु पुनः स्वयमेव फलप्रदानोपयोगिप्रसादानुगुणां स्वस्य स्थितिं सम्पादयति । इदमेव चालौकिकश्रेयःसाधनत्वं यत्फलप्रदानोपयोगिपरमात्मप्रसादानुकूलस्थितिमत्त्वम् । साच स्थितिः साधनान्तरेषु यज्ञादेरुपासनस्य च समग्राङ्गसाहित्यसंपत्तिलक्षणा, शरणागतौ तु भगवत एव शरणागतविषये प्रसादौन्मुख्यावस्थितिलक्षणा । तथा च यज्ञोपासनादौ फलप्रदत्वमात्रम्, शरणागतौ तूपायत्वं फलप्रदत्वं च भगवत इति सिद्धम् । इदं च पराधिकरणे **'उपपत्तेश्चे'**ति सूत्रे संसूचितम् । सूचनाद्धि सूत्रम् । **'नाना शब्दादिभेदा'**दिति विद्याभेदं सूत्रयता प्रपत्तिविद्याऽपि पृथक्त्वेन संसूचिता । नन्वेवं सिद्धधर्मत्वे भगवतः फलं कादाचित्कं कथमिति चेत्, उच्यते । अस्यादेः सिद्धत्वेऽपि छेदनादेरिव फलस्य कादाचित्कत्वोपपत्तेः । व्यापारकादाचित्कत्वेन फलकादाचित्कत्वं दृष्टान्त इति चेत्, प्रकृतेऽप्येवमेव । जीवकृतां शरणागतिमनुसन्धायाहमस्य निःश्रेयसोपयोगिनं प्रसादं विदध्यामित्यागन्तुकव्यापारस्य भगवति जीवकृतशरणागत्यनन्तरभावित्वात् । एतेन करणत्वं पारतन्त्र्यनियतं सर्वेश्वरे न सम्भवतीत्यपि प्रत्युक्तम् । करणत्वानुपगमे सिद्धधर्मत्वस्य तस्मिन्नुपपादनासम्भवात् । अचेतनत्वनिबन्धनत्वात् पारतन्त्र्यस्य, परमचेतनस्य करणत्वे प्रमाणप्रतिपन्ने पारतन्त्र्यस्याप्रसक्तिरित्यध्यात्मशास्त्ररहस्यम् ।

तत्र साध्यधर्मप्रतिपादकं वेदपूर्वभागार्थनिर्णयफलकं कर्मविचारात्मकं मीमांसापूर्वभागं सदेवताकाण्डं स्वशिष्येन जैमिनिना कारयित्वा स्वयमेव भगवान् बादरायणः तत्त्वप्रधानवेदान्तोपनिषद्भागार्थविनिर्णयफलं सिद्धधर्मरूपपरब्रह्मभूतपरदेवताविचारात्मकं मीमांसोत्तरभागमाररचन्मोक्षोपायस्वरूपसंशोधकं मोक्षशास्त्रम् । एतस्मिन् जीवस्य संसरणगत्यादिनिरूपणेन निर्विण्णो नितरां संसाराद्ब्रह्मप्राप्तेश्चानवधिकातिशयानन्तानन्दकारित्वनिरूपणेन ब्रह्मप्राप्तिलक्षणमोक्षप्राप्तावुत्कटेच्छावान् मोक्षफलप्रदं यथोक्तं परब्रह्मोपासीनो नर उपासनाप्रीतपरमपुरुषप्रसादान्निश्शेषविनष्टसंसारबन्धो देहात्समुत्थाय दिव्येन पथा दिव्यं धाम प्राप्य तत्र भगवदुपसंपत्त्याऽऽविर्भूतस्वरूपो मोक्षायाक्षय्यपरिपूर्णब्रह्मानुभवलक्षणाय कल्पत इति मोक्षफलकत्वान्मोक्षशास्त्रत्वमस्य सूपपन्नम् । तदिदं सर्वजगदेककारणसर्वान्तरात्मसर्वकर्मसमाराध्यसर्वफलप्रदमुमुक्षूपास्यमुक्तप्राप्यपरमपुरुषपरमतत्त्वश्रीमन्नारायणपारम्यप्रतिपादकं मोक्षशास्त्रं मुमुक्षुभिरवश्यमेवाऽध्येतव्यं ज्ञेयं च । अत एव स्वाभिमतं सच्छास्त्राष्टकं परिगणयन् श्रीकृष्णापरावतारो भगवान् सहजानन्दस्वामी अपौरुषेयं स्वतःप्रमाणभूतं वेदमादौ परिगणय्यानन्तरमेव ब्रह्ममीमांसां परिगणयामास **'वेदाश्च व्याससूत्राणी'**ति ।

एषां च व्याससूत्राणां ब्रह्ममीमांसेत्यन्वर्था संज्ञा, शारीरकशास्त्रमिति च । ब्रह्मशब्दश्चानवधिकातिशयबृहत्त्वविशिष्टवस्तुनि मुख्यवृत्तः । तथा च यास्कनिरुक्तं **'ब्रह्म परिवृढं सर्वत'** इति । सर्वतः-सर्वापेक्षया, सर्वप्रकारेण च । असङ्कोचात् स्वरूपरूपगुणविभूतिभिर्निरतिशयबृहत्त्ववद्ब्रह्मेति यावत् । अभिन्ननिमित्तोपादनतोपयुक्तं सार्वज्ञ्यसर्वशक्तिमत्त्वसर्वा-

त्मत्वायनेन फलितं ब्रह्मणः । **'बृहति बृंहयति तस्मादुच्यते परं ब्रह्म' 'बृहत्त्वाद्बृंहणत्वाच्च ब्रह्मेति परिपठ्यते'** इति श्रुतिस्मृतिभ्यां निरतिशयबृहत्त्ववद्बृंहणत्वमपि बृहत्त्वप्रयोजकसङ्कल्पवत्त्वलक्षणं ब्रह्मशब्दस्य प्रवृत्तिनिमित्तमित्यवगम्यते । इदं च जगद्धेतुत्वमोक्षप्रदत्वपर्यवसायि । प्रलये सूक्ष्मावस्थयोश्चेतनाचेतनयोः सङ्कल्पमात्रेण नामरूपायन्वयरूपस्थूलावस्थाप्रापणं, मुक्तानां **'स चाऽनन्त्याय कल्पते' 'सर्वं ह पश्यः पश्यती'**ति श्रुतिप्रतिपादितज्ञानानन्त्यापादनं च हि ब्रह्मधर्मः । तथा च स्वयं स्वरूपतः स्वभावतश्च निरतिशयबृहत् स्वसंबन्धिनामपि बृहत्त्वातिशयाधायकं परं ब्रह्मेति फलितम् । मोक्षकालिकजीवात्मस्वभावभूतज्ञानानन्त्यापादकत्वं च सङ्कल्पमात्रतः स्वतोऽपहतपाप्मत्वादिमत एव संभवतीति बृंहणत्वाक्षिप्तं स्वभावत एव सदा निरस्तसमस्तहेयत्वमपि तस्य ।

एवंभूतब्रह्मशब्दार्थश्च सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायण एव । नारायणस्यैव ब्रह्मशब्दमुख्यार्थत्वं च व्यक्तमुक्तमितिहासपुराणयोः **'वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि । तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने ॥'** इत्यादौ । **'तमेवं विद्वानमृत इह भवति, नान्यः पन्था विद्यतेऽयनाये'**ति यस्य महापुरुषस्य दिव्यरूपस्य वेदनमुपासनरूपमन्तरा नान्योऽस्ति मोक्षोपायोऽञ्जसा, तस्यैव परमपुरुषस्य श्रीमन्नारायणस्य **'तं त्वौपनिषदं पुरुषं पृच्छामी'**त्युपनिषदेकवेद्यत्वेन श्रुतिप्रतिपन्नस्य परस्य ब्रह्मण इयं मीमांसेति यावत् ।

सङ्कर्षकाण्डेऽन्ते **'अन्ते हरौ तद्दर्शनात्' 'स विष्णुराह हि' 'तं ब्रह्मेत्याचक्षते'** इति कर्माराध्यदेवतान्तर्यामिणः श्रीहरेरेव वेदान्तवेद्यपरब्रह्मत्वमुपक्षिप्तम् । तस्यैव मीमांसेयमुपक्रम्यते **'अथातो ब्रह्मजिज्ञासे'**ति । तथा च परमात्मनः श्रीहरेरेवेयं मीमांसेति पूर्वापरानुसन्धानकर्तॄणां सुगममेव ।

शारीरकमीमांसेति नामान्तरं चेममेवार्थं व्यवस्थापयति । सर्वचिदचिच्छरीरकः सर्वान्तरात्मा भगवान् पुरुषोत्तमो विष्णुर्नारायणो वासुदेवः श्रीकृष्ण एवानन्दमयो मुख्यः शारीरः **'शारीर आत्मा'** इति श्रुत्यन्तप्रसिद्धः । **'तस्माद्वा एतस्माद्विज्ञानमयात्, अन्योऽन्तर आत्माऽऽनन्दमयः' 'रसो वै सः' 'तस्यैष एव शारीर आत्मा, यः पूर्वस्ये'**ति हि तैत्तिरीयश्रुतिः । अन्तर्यामिब्राह्मणे छान्दोग्यसौबलादौ च प्रसिद्धोऽयमर्थः । चेतनापृथक्सिद्धविशेषणद्रव्यत्वं च शरीरस्य लक्षणम् । करचरणादिमत्त्वपञ्चवृत्तिप्राणाधारत्वभोगायतनत्वादेस्तिर्यक्स्थावरशरीरेषु परमात्मशरीरतया शास्त्रप्रतिपन्नेषु च प्रकृतिपुरुषादिष्वव्याप्तेः । आत्मनिर्गमे विशरणाच्चात्मापृथक्सिद्धविशेषणत्वं शरीरस्य शक्यमवगन्तुम् । 'चेतनाचेतनानां च सर्वेषां द्रव्याणां **'को ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्' 'तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन' 'यस्मिन्देवा अधिविश्वे निषेदुः' 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥' 'अहमात्मा गुडाकेश सर्वभूताशयस्थितः' 'न तदस्ति विना यत्स्यान्मया भूतं चराचरम्'** इत्यादिश्रुतिस्मृतिवचनैः परमात्मैकधार्यत्वं तदपृथक्सिद्धत्वं च सिद्धम् । **'प्राणो ह्येष यः सर्वभूतैर्विभाति विजानन्वि-**

**ह्मन् भव तेनातिवादी' 'ब्रह्माद्यवस्थाभिरशेषमूर्तिः विष्णुर्वरिष्ठो वरदो वरेण्यः'** इत्यादिश्रुतिस्मृतिवचनैश्च सर्वस्य तत्प्रकारत्वं शक्यमवगन्तुम् । इत्थम्भावलक्षणे हि तृतीया । शरीरं च चेतनैकधार्यत्वनियाम्यत्वव्याप्यत्वचेतनैकशेषभूतं च दृष्टम् । सर्वस्य परमचेतनपरमात्मशरीरत्वस्य **'यस्य पृथिवी शरीरम्' 'यस्यात्मा शरीरम्' 'यस्य सर्वाणि भूतानि शरीरम्' 'जगत् सर्वं शरीरं ते' 'तत्सर्वं वै हरेस्तनुः'** इत्यादिश्रुतिस्मृतिवचनशतप्रसिद्धत्वात् सर्वचेतनाचेतनव्याप्तत्वनियन्तृत्वधारकत्वशेषित्वादिलक्षणनिरतिशयोत्कर्ष एव सर्वात्मनः सर्वतनोः परमात्मनो भगवतो वासुदेवस्य सिध्यति । न तु दोषगन्धः । **'एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः' 'स त आत्माऽन्तर्याम्यमृतः' 'एष त आत्माऽन्तर्याम्यमृत'** इति चाऽऽत्मतया सर्वत्र स्थितस्यापि निखिलहेयप्रत्यनीकत्वं च तत्र तत्रैव श्रुतम् । कर्मकृतो हि शरीरसंबन्धः हेयापादकः । जगद्ब्रह्मणोः शरीरात्मभावलक्षणो गाढसंबन्धश्चायं न कर्मकृतः । किन्तु स्वाभाविकः । **'संभोगप्राप्तिरिति चेन्न वैशेष्यात्' 'भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्'** इति चाकर्मवश्यस्य शरीरसंबन्धतोऽपि दोषानन्वयो भगवतो व्यवस्थापितः सूत्रकृता । सर्वत्र हेयास्पदे चिदचित्प्रपञ्चे स्वशरीरभूतेऽन्तरात्मतया स्थितावपि न दोषगन्धः परब्रह्मणः, सदा निखिलहेयप्रतिभटत्वस्वाभाविकसमस्तकल्याणगुणाकरत्वलक्षणोभयलिङ्गवत्त्वेन सर्वश्रुतिस्मृतिप्रतिपन्नत्वादिति च व्यवस्थापितं **'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि'** इत्यत्र । निखिलहेयप्रत्यनीकत्वं स्वत एव सदा स्वाभाविकानन्तकल्याणगुणाकरत्वं च हेयसम्बन्धविरोधिरूपं हेयानन्वयलिङ्गमिति सूत्रकृतो हार्दम् । इदं चोभयं त्रिविधचेतनाचेतनव्यावर्तकत्वादुभयलिङ्गमित्युद्घुष्यते परस्य ब्रह्मणः । केचिदुभयलिङ्गस्य निषेधं सूत्रार्थमुशन्ति । तन्न शोभनम् । जीवस्य जाग्रत्स्वप्नसुषुप्तिदशासु दोषान्वयो हि प्रागुदाहृतः । सर्वस्यामप्यवस्थायां जीवेन सह स्थितस्य परस्यापि दोषः कथं नेति दोषशङ्काया एव प्रसक्तेः प्रसक्तस्यैव प्रतिषेधौचित्याच्च । किञ्च हेतोः सामग्र्येणोपदेशः । निषेध्यस्य च प्रकरणतः प्रसङ्गं हृदीकृत्य निषेधनं चेति सूत्रकृतः शैली स्वारसिकी । उभयलिङ्गपदस्य निषेध्यसमर्पकत्वे हेतोरसमग्रोपदेशः प्रसज्यते । तत्सिद्धान्त्यभिमतो दोषनिषेध एव सूत्रकारहृदयङ्गम इति दिक् । जीववच्छरीरकृतदोषान्वयस्य परस्मिन् ब्रह्मणि विरहादेव रूपरहितमिव तदिति सूत्रितम् **'अरूपवदेव हि तत्प्रधानत्वा'**दिति । वस्तुतो रूपरहितत्वं चेद्विवक्षितं 'अरूपमेव हि तत्प्रधानत्वा'दित्येव सूत्रयेत् । **'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' 'सर्वस्याधिपतिः सर्वस्य वशी सर्वस्येशानः×× एष सेतुर्विधरणः' 'एषोऽन्तर्यामी' 'अजरोऽमृतोऽभयो ब्रह्मे'**ति च सर्वात्मनोऽस्य महिमातिशय एव हेयसम्बन्धगन्धरहितोऽभिविश्रुतः । स एष सर्वतनुः सर्वभूतान्तरात्मा दिव्यो देव एको नारायण आकाशादिकारणत्वेन सर्वात्मत्वेनाऽऽनन्दमयत्वेन मुमुक्षूपास्यत्वेन मुक्तानुभाव्यत्वेन चानन्दवल्ल्यां श्रुतः मुख्यः शारीर आत्मा । तमेनं कायति–प्रतिपादयतीति ब्रह्ममीमांसाशास्त्रं शारीरकमिति प्रथमन्वविन्दत् । एतेन शारीरो जीवात्मा, शारीरकमिति

नाम्ना च ब्रह्ममीमांसायाः जीवब्रह्माभेदोऽत्र प्रमेय इति प्रत्युक्तम् । वेदान्तैकवेद्यस्य मुमुक्षुभिर्विजिज्ञास्यस्य विचारविषयत्वेन प्रक्रान्तस्य परस्य ब्रह्मणः परमात्मनः **'न च स्मार्तमतद्धर्माभिलापात् शारीरश्च' 'उभयेऽपि हि भेदेनैनमधीयते' 'विशेषणभेदव्यपदेशाभ्यां च नेतरौ'** इत्यादिसूत्रगणैः प्रकृतिपुरुषविलक्षणत्वं सूत्रयन् भगवान् बादरायणः कथमिव जीवब्रह्मैक्यं स्वशास्त्रप्रमेयमनुमन्येत । तत् लोकप्रसिद्धशारीरजीवविलक्षण एव श्रुतिप्रसिद्धो मुख्यः शारीरः परमात्मा नारायणः प्रतिपाद्यत्वेन विवक्षितः ब्रह्ममीमांसायामिति शारीरकनाम्नाऽवगच्छामः ।

इदं च शारीरकमिति ब्रह्ममीमांसाभिधानं विशिष्टाद्वैतस्यैव श्रुत्यन्तराद्धान्तत्वं प्रख्यापयति । जगद्ब्रह्मणोः शरीरात्मभावस्यात्रैव मुख्यतयाऽभ्युपगमात् । सर्वदा समस्तचिदचिल्लक्षणशरीरात्मकापृथक्सिद्धप्रकारविशिष्टश्च परमात्मा । प्रकृतिपुरुषादीनां नित्यानां सर्गप्रलयादावेतच्छरीरतया प्रकारत्वेनावस्थानस्य सदातनत्वादेतद्विशिष्टमेव सदा परमात्मतत्त्वम् । तस्यास्य समस्तचिदचित्प्रकारविशिष्टस्य समान्तरासंभवेनाद्वैतं–सजातीयद्वितीयराहित्यलक्षणमेकत्वं विशिष्टाद्वैतम् । समस्यैवासम्भवेऽधिकस्य का प्रसक्तिः । तथा च श्वेताश्वतरे श्रूयते **'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' 'न तत्समश्चाभ्यधिकश्च दृश्यते'** इति । गीयते स्म च भगवता स्वयमेव **'मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जये'**ति । धनञ्जयेनाप्युररीकृतं च **'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभावे'**ति । मुक्तानां भगवत्साम्यं च–भगवत्प्रसादाधीनं भोगमात्रतः, न तु सर्वथा । व्यक्तीकृतश्चायमर्थः सूत्रकृता **'जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च' 'भोगमात्रसाम्यलिङ्गाच्चे'**ति । परस्य ब्रह्मणो हि मुमुक्षुभिर्विजिज्ञास्यस्य लक्षणमुक्तं जगत्कारणत्वं **'जन्माद्यस्य यतः'** इति । मुक्तस्य चेज्जगज्जन्मादिकारणत्वमिष्येत परब्रह्मलक्षणस्यातिव्याप्तिः स्यात्तत्र । न च मुक्तपरब्रह्मणोरभेद इति वाच्यम् । **'मुक्तोपसृप्यव्यपदेशाच्च' 'पत्यादिशब्देभ्य'** इत्यादिषु तयोर्भेदस्यैव सूत्रकृता प्रख्यापनात् । **'पत्यादिशब्देभ्य'** इति सूत्रविषयवाक्यस्थसर्वशब्दस्यासङ्कोचान्नित्यमुक्तादिसर्वविषयकत्वेन नित्यमुक्तानामपि परमात्मशेषत्वम्, परमात्मनस्तु सर्वशेषित्वमिति भेदः सूचितोऽत्र । मुक्तब्रह्मणोरभेदे ब्रह्मभावं प्राप्तस्य पुनरावृत्तिशङ्काया अप्रसक्तेः **'अनावृत्तिः शब्दा'**दिति सूत्रानुत्थानप्रसङ्गश्च । तत् सर्वथा भगवत्सजातीयस्यासम्भवोऽन्यस्य स्थितः । स्वत एव सदा निरस्तसमस्तहेयत्वं निरुपाधिकानन्तकल्याणगुणाकरत्वं च हि तस्यैवासाधारणो धर्मः । मुक्तानां नित्यमुक्तानां च तत्सङ्कल्पाधीनमेव तन्नित्यमपि श्रुतम् । **'पापनुदं भगेश'**मिति हि श्वेताश्वतरश्रुतिः । उक्तं चाभियुक्तैः–**'इच्छात एव तव विश्वपदार्थसत्ता नित्यं प्रियास्तव तु केचन ते हि नित्याः । नित्यं त्वदेकपरतन्त्रनिजस्वरूपा भावत्कमङ्गलगुणा हि निदर्शनं नः ॥** इति ।

तन्नित्यमुक्तानामप्यक्षरब्रह्मशब्दितानां पुरुषोत्तमपरतन्त्रस्वरूपस्थितिप्रवृत्तिभोगानां न तत्समत्वमिति स्थितेऽन्यत्र तत्साम्यस्य का वार्ता । ब्रह्मसूत्रेष्वेव च मुक्तानां परमपुरुषमुप-

सम्पन्नानां तत्सङ्कल्पादपहतपाप्मत्वादिस्वरूपाविर्भावः परमात्मनस्तु स्वत एव नित्याविर्भूततत्स्वरूपत्वं च दहराधिकरणादौ व्यवस्थापितम् । तत्समस्तचिदचिच्छरीरविशिष्टस्य परस्य ब्रह्मणः निरुपाधिकनित्यनिर्दोषत्वसकलकल्याणगुणगणवतः परात्परस्याद्वैतमेकत्वं विशिष्टाद्वैततत्त्वं त्रय्यन्तप्रसिद्धमिति फलितम् । एकमेव तत्त्वं वेदान्तेषु प्रतिपाद्यत इति सत्यम् । तत्तु न निर्विशेषम्, किन्तु सविशेषमित्युक्तं भवति । द्वयोर्भावो द्विता, द्वितैव द्वैतं-द्वित्वम् । न द्वैतमद्वैतमेकत्वम् । विशिष्टस्याद्वैतं विशिष्टाद्वैतम्–विशिष्टैक्यम् । निखिलचेतनाचेतनविभूतिगुणविग्रहविशिष्टस्य परस्य ब्रह्मण एकत्वं समाभ्यधिकराहित्यलक्षणं विशिष्टाद्वैतमिति यावत् । अयमेव विशिष्टाद्वैतशब्दार्थः प्रतितन्त्रार्थो विशिष्टाद्वैतिनामत्यन्ताभिमतः सर्वत्रय्यन्तसिद्धान्तार्थानुगत इति ध्येयम् ।

भगवान् बादरायणश्चाभिन्ननिमित्तोपादानत्वं परब्रह्मणः सूत्रयन् स्वतन्त्रं कारणान्तरं निषेधति प्रकृतिपुरुषकालादेः तच्छक्तिरूपत्वात् । तत्स्वतन्त्रकारणत्वेन परमात्मनः परब्रह्मणः समो नान्योऽस्तीत्यभिप्रैति । पराधिकरणे चास्मात्परमुत्कृष्टमन्यन्निषेधति । तद्विशिष्टाद्वैतमेव निरुक्तरूपं सूत्रकृदप्युशतीति विमर्शकानां स्वयमेव प्रतिभायात् ।

इममेव विशिष्टाद्वैतसिद्धान्तं श्रीमद्भगवद्रामानुजमुनिभिरनन्तावतारैर्ब्रह्मसूत्रव्याख्याने श्रीभाष्ये सम्यक् व्यवस्थापितं स्वमतत्वेन समादृतवान् भगवान् सहजानन्दस्वामी शिक्षापत्र्यां **'मतं विशिष्टाद्वैतं मे'** इति । व्याससूत्राणां च सत्स्वपि नानाव्याख्यानेषु देवांशैः पूर्वैः मतप्रवर्तकैः शङ्करभगवत्पादादिभिः प्रणीतेषु श्रीमद्रामानुजाचार्यप्रणीतं श्रीभाष्यमेव वाग्देवीसम्मानितं भाष्यरत्नं स्वाभिमताध्यात्मशास्त्रत्वेन च पर्यगृह्णात्–**'एतेषु व्याससूत्राणां गीतायाश्चावगम्यताम् । रामानुजाचार्यकृतं भाष्यमाध्यात्मिकं मम ॥'** इति ।

युक्तं चैतत् । शारीरकशास्त्रप्रणेतुर्भगवतो बादरायणरूपस्य नारायणस्यान्तरङ्गं तदन्तरङ्गवृत्तिरपरिच्छेद्यज्ञानादिगुणविभववत्तयाऽनन्तसंज्ञित आदिशेष एव हि रामानुजमुनिरूपः प्रकटीभूतो यथावद्वेत्तुं प्रभवति; नतु बहिर्वृत्तय इतरे । शङ्करादेश्च मोहकशास्त्रकर्तृत्वप्रसिद्धिरतिरोहितैव । तत्परमतत्वहितपुरुषार्थप्रतिपादकस्य मोक्षशास्त्रस्य मोहकत्वगन्धरहितस्य शारीरकस्य सर्वजीवहितावहप्रवृत्तिमद्वेदव्यासनारायणप्रणीतस्य तदन्तरङ्गाभिज्ञानन्तावतारश्रीभगवद्रामानुजमुनिप्रणीतं श्रीभाष्यमेव तदन्तरङ्गप्रकाशकं मुमुक्षूपसेव्यमिति साधुकृतोऽयं स्वनिर्णयोऽनुशिष्टः स्वभक्तान् प्रति भगवता सहजानन्दस्वामिना । श्रीमद्रामानुजाचार्यव्यवस्थापितप्रकारमेव सूत्रकृतोऽन्तरङ्गमिति व्यवस्थापनाय बादरायणान्तरङ्गमीमांसा प्राप्तावसराऽत्र प्रसङ्गे रसिकबुधचित्तरञ्जिका स्यादिति वितन्यते सारतः समासतश्च ।

**'ब्रह्मविदाप्नोति परं'**मिति प्रस्तुतवेद्यवेदनवेदनफलपरप्राप्तिलक्षणपरमतत्त्वहितपुरुषार्थरूपार्थत्रयमेव प्राधान्येन विचार्य निर्णीतं चतुरध्याय्यां ब्रह्ममीमांसायाम् । तत्र प्रथमद्वितीयौ परमतत्त्वपरौ । तृतीयः परमहितपरः । तुरीयः परमपुरुषार्थपरः । एतेषां च त्रयाणां स्वरूपं कीदृशं भगवता बादरायणेनात्र ब्रह्ममीमांसायां विचार्य निर्णीतमिति

विचारयामः। तत्र परमं तत्त्वं परं ब्रह्मेत्यविवादम्। सविशेषमेव तत् सूत्रकृतोऽभिमतम्। उपक्रमोपसंहारौ हि तात्पर्यलिङ्गम्। मुमुक्षुभिर्विजिज्ञास्यं तत्त्वमुपक्रमे ब्रह्मशब्देन निर्दिशन् स्वरूपतः स्वभावतश्चानवधिकातिशयबृहत्त्व (उत्कर्ष) वदेव तदभिप्रैति। **'बृहन्तोऽस्मिन् गुणा इति ब्रह्म'**ति च श्रुतं ब्रह्मशब्दस्य निरुक्तम्। निर्विशेषं चेदविवक्षिष्यत् 'अथात आत्मजिज्ञासे'ति वा अन्यथा वाऽसूत्रयिष्यत्। निरतिशयोत्कर्षवत्त्वेन स्तुतिरनेकस्य दृश्यते नाम श्रुतौ। तत्कस्मिन् वास्तवं तदित्येतद्विचिकित्साशामकतया ब्रह्मणो जगज्जन्माद्येककारणत्वं लक्षणमाह समनन्तरमेव **'जन्माद्यस्य यतः'** इति। यस्य जगज्जन्मादिकारणत्वं तस्यैव वास्तविकनिरतिशयोत्कर्षवत्त्वाद्ब्रह्मत्वम्। अन्येषां तु स्तुतिमात्रं तदिति हार्दम्। अनेन लक्ष्यलक्षणाकाररूपविशेषवत्त्वसिद्धिर्ब्रह्मणः। जगत्कारणत्वं चोपादानत्वनिमित्तत्वोभयरूपमिति समसाधि प्रकृत्यधिकरणे। विशिष्टस्यैवोपादानत्वं परमतेऽप्यभिमतम्। अविद्योपहितस्यैवोपादानत्वं शाङ्करे पक्षे, स्वांशभूतस्वभिन्नाभिन्नाचिदादिशक्तिविशिष्टस्योपादानत्वं भास्करयादवप्रकाशपक्षयोः। सूक्ष्मचिदचिद्रूपशरीरविशिष्टस्योपादानत्वमिति तु विशिष्टाद्वैते। निमित्तत्वं सङ्कल्पविशिष्टवेषेणेत्यविवादम्। तत्र परमते ब्रह्मण्येवाविद्यासंसरणपरिणामादिविकारप्रसक्तिः। विशिष्टाद्वैते तु शरीरात्मनोः स्वरूपस्वभावासाङ्कर्येण विशिष्टस्योपादानत्वेऽपि न ब्रह्मणि दोषगन्ध इति विशेषः। **'नतु दृष्टान्तभावा'**दिति सूत्रे चायमर्थो निर्णीतः। चेतनाचेतनोपहितस्य ब्रह्मण उपादानत्वे लये सृष्टौ च चेतनाचेतनयोरिव विकारभेदो ब्रह्मणोऽपि प्रसज्यते इति **'अपीतौ तद्वत् प्रसङ्गादसमञ्जस'**मिति सूत्रेणाशङ्क्य परिहारः कृतो **'न तु दृष्टान्तभावा'**दिति। अभिन्ननिमित्तोपादानत्व ऊर्णनाभिदृष्टान्तो हि श्रुतिस्मृतिप्रसिद्धः। तत्र यथा स्वशरीरैकदेशभूताया ऊर्णाया विकासावस्थापादनेन विहृत्य संहरणं लीलार्थं कीटस्य दृष्टम्, तन्तुजाते स्वतन्वेकदेशोर्णाविकारेऽभिन्ननिमित्तोपादानस्यापि कीटस्य न विकारो यथा, तथा परमात्मनः स्वतन्वेकदेशप्रकृतिपुरुषविकासापादनेन सङ्कल्पमात्रतो विहृत्य संहरतोऽभिन्ननिमित्तोपादानत्वेऽपि न विकार इति सूत्राशयः। शास्त्रप्रसिद्धोर्णनाभिदृष्टान्तानुगमितोऽभिन्ननिमित्तोपादानभावश्च विशिष्टाद्वैत्यभिमतप्रकारेणैव समञ्जसो भवति।

जगदुपादानत्वं च परस्य ब्रह्मणः परिणाम्युपादानत्वरूपं न तु शाङ्कराभिमतविवर्तोपादानत्वरूपमिति **'आत्मकृतेः' 'परिणामा'**दिति सूत्राभ्यां सुगमयमेव विदुषाम्। अत एव मृत्परिणामभूतानां घटशरावादीनां संस्थानरूपविशेषाणां भेदेऽपि स्वरूपं मृद्द्रव्यमेवेति मृत्पिण्डविज्ञानेन घटादिविज्ञानस्योपपत्तिर्यथा, तथा ब्रह्मज्ञानेन जगद्विज्ञानस्य प्रतिज्ञातस्योपपत्तिः। जगतो ब्रह्मोपादनकत्वेन ब्रह्मात्मकत्वेन ब्रह्मानन्यत्वात्। तथा च सूत्रं **'तदनन्यत्वमारम्भणशब्दादिभ्य'** इति। इदं च सूत्रं विशिष्टाद्वैतस्यैवानुगुणम्, न तु शाङ्करपक्षस्य। तत्पक्षे मिथ्याभूतस्य जगतः सत्यब्रह्मानन्यत्वायोगात्। ब्रह्मैव सूक्ष्मचिदचिद्रूपविशिष्टं **'बहु स्यां प्रजायेये'**ति सङ्कल्प्य स्थौल्यावस्थाविशिष्टं विधाय चिदचिज्जातं तत्रतत्र स्वयमप्यनुकूलतयाऽन्तर्यामित्वेनात्मतयाऽवस्थितं सन्नानाचेतनाचेतननामरूपभाग्भवद्यथासङ्कल्पमिति हि श्रुत्यन्तप्रक्रिया। **'इदं सर्वमसृजत, यदिदं किञ्च, तत्

**सृष्ट्वा, तदेवानुप्राविशत्, तदनुप्रविश्य, सच्च त्यच्चाभव**'दिति हि श्रूयते । तज्जगदपि स्थूलचेतनाचेतनविशिष्टं ब्रह्मैवेति जगद्ब्रह्मणोरनन्यत्वं मुख्यमेव सूत्रितम् । एवंविधानन्यत्वस्योपगमाच्च रामानुजसिद्धान्तो विशिष्टाद्वैतमिति पप्रथेतराम् । विशिष्टं च विशिष्टं च विशिष्टे तयोरद्वैतम् । सूक्ष्मस्थूलचिदचिद्विशिष्टब्रह्मैक्यमिति यावत् । सूक्ष्मचेतनाचेतनविशिष्टं ब्रह्म कारणम् । स्थूलचेतनाचेतनविशिष्टं तदेव कार्यम् । उपादानोपादेययोश्चानन्यत्वमिति सिद्धान्तप्रक्रियानुसारिणी चेयं व्युत्पत्तिः । इयं च कार्यकारणभावमात्रं सिद्धान्त्यभिमतमुपस्पृशति । सर्वप्रतितन्त्रार्थं तु विशिष्टस्याद्वैतमिति पूर्वनिरुक्तव्युत्पत्तिरेव क्रोडीकरोतीति सैव साधीयसीति सुधीभिरवसेयम् । '**तदनन्यत्व**'मित्यस्य ब्रह्मभिन्नवस्त्वभाव इत्यर्थकरणं त्वस्वरसं नितराम् । तत्र हेतुनिर्देशोऽपि आरम्भणशब्दादिभ्य इति न घटते । आरम्भणशब्दस्य मिथ्यार्थकत्वाभावात् । वाचारम्भणशब्दो हि मिथ्यारूपार्थे परिभाषितः परैः । सिद्धान्ते तु आरम्भणमिति पदच्छेदः । कारणद्रव्येनैव नाना नामरूपं गृहीतमित्यर्थः । अयं चार्थोऽनन्यत्वोपयोगी उपादानोपादेययोः । कारणस्यैव सत्यत्वं विवक्षितं चेत् मृत्तिकैव सत्यमित्येव पर्याप्तं स्यात् । श्रौतेतिपदवैयर्थ्यं च । तथा च विशिष्टाद्वैतमेवात्र सूत्रे श्रुत्यन्ताभिमतं समसूचि भगवता बादरायणेनेति स्पष्टमेवामत्सरहृदयानाम् ।

क्षीरादेर्दध्यादिपरिणामवद्ब्रह्मण एव चेतनाचेतनरूपेण परिणामं '**आत्मकृतेः**' '**परिणामा**'दिति सूत्रस्वरसमित्यातिष्ठन्ते केचित् । तन्मते ब्रह्मणोऽविकारत्वश्रुतिविरोधः । चेतनाचेतनयोः परमात्माधीनस्वरूपस्थितिप्रवृत्तिकत्वलक्षणं परमात्मपारतन्त्र्यं ततोऽत्यन्तभेदं च '**तदधीनत्वादर्थवत्**' '**ज्योतिरुपक्रमा तु तथाह्यधीयत एके**' '**परात्तु तच्छ्रुतेः**' '**उभयेऽपि हि भेदेनैनमधीयते**' इत्यादिसूत्रैः संसूचयन् सूत्रकारः कथङ्कारं ब्रह्मण एव चेतनाचेतनरूपपरिणामत्वमनुमन्येत, सूत्रयेद्वा । कथं वा '**अश्मादिवच्च तदनुपपत्ति**'रिति चेतनस्यैवाचेतनस्याश्मादेरिव ब्रह्मभावानुपपत्तिमुपपादयन् '**अधिकं तु भेदनिर्देशा**'दिति जीवादप्यतिविलक्षणं ब्रह्म प्रतिपादयन् चिदचितोर्ब्रह्मस्वरूपपरिणामत्वं विवक्षेत् । तद्विशिष्टोपादानोपादेयभाव एव बादरायणस्य विवक्षितः । सूक्ष्मचिदचिद्वैशिष्ट्यस्य कारणतावच्छेदकस्य स्थूलचिदचिद्वैशिष्ट्यस्य च कार्यतावच्छेदकस्य क्षीरत्वदधित्वस्थानापन्नतया क्षीरादिपरिणामत्वमिव दध्यादेर्ब्रह्मपरिणामत्वं जगतो ब्रह्मानन्यत्वं च मुख्यमेवोशति भगवान् बादरायणः । ब्रह्मलक्षणतया प्रक्रान्तस्य जगदभिन्ननिमित्तोपादनत्वस्य '**अभिध्योपदेशाच्च**' '**साक्षाच्चोभयाम्नाना**'दिति श्रुतितदर्थापत्तिसिद्धतां सूत्रयन् तदुपयुक्तसर्वधर्मयोगः परस्यैव ब्रह्मणः न तु जीवादेः प्रकृत्यादेर्वा इति '**सर्वोपेता च तद्दर्शनात्**' '**सर्वधर्मोपपत्तेश्चे**'ति प्रतिपादयन् लक्षणसमन्वयं ब्रह्मण्युपादयत् । तत् सविशेषमेव वेदान्तवेद्यं जगत्कारणत्वलक्षणलक्ष्यं मुमुक्षुभिर्विजिज्ञास्यं परंब्रह्माभिप्रैति भगवान् बादरायण इति सिद्धम् ।

निखिलजगदेककारणस्य वेदान्तवेद्यस्यापरिच्छिन्नपुरुषार्थरूपस्यापरिच्छेद्यानन्दोदधेः मुमुक्षुभिरन्वेष्टव्यस्य विजिज्ञासितव्यस्य चेक्षणादिगुणैरचेतनव्यावृत्तिमपरिच्छिन्नानन्दत्वबद्धमुक्तानन्दयितृत्वनिरुपाधिकविपश्चित्त्वादिभिर्बद्धमुक्तोभयविधजीवात्मव्यावृत्तिं स्वाभाविक-

नित्योद्भूतापहतपाप्मत्वादिभिस्तन्निमित्तासाधारणनामभिश्चादित्येन्द्रप्रजापत्याद्याधिकारिक-वैलक्षण्यं चेक्षत्यधिकरणादौ प्रतिपादयन् सर्वविधोत्कृष्टापकृष्टचेतनाचेतनवैलक्षण्यं च **'भेद-व्यपदेशाच्चान्य'** इत्यादिना मुक्तकण्ठं प्रशंसन् सूत्रकारः वैलक्षण्याऽऽवहैस्तैस्तैर्धर्मैः सविशेषमेव परंब्रह्माभ्यनुजानाति ।

त्रिपाद्यामपि तत्तच्चेतनाचेतनेश्वरादिविषयकत्वेन शङ्कनार्हाणि ब्रह्मत्वव्यवस्थापकजगत्कारणत्वतद्व्याप्तधर्मान्वयवन्ति वेदान्तवाक्यानि चेतनाचेतनविषयत्वं निराकृत्य परब्रह्म-विषयत्वेन वाक्यतर्कादिना व्यवस्थापयंश्च तत्तत्प्रकरणप्रतिपन्ननिरवद्यशुभगुणगणयोगं विचार्य-त्वेन प्रक्रान्ते परस्मिन् ब्रह्मणि सङ्गमितवान्। अक्षरपरविद्यावेद्यं च सधर्मकमेव मनुते भगवान् बादरायणः **'अदृश्यत्वादिगुणको धर्मोक्ते'**रिति सूत्रयन् भावरूपेणाऽभावरूपेण च धर्मेण । भूमविद्यावेद्यं च प्रत्यगात्मनोऽत्यन्तविलक्षणं महामहिमानं सर्वकारणत्वसर्वात्म-त्वादिधर्मयुक्तमपरिच्छिन्नसुखरूपं सधर्मकमेव समर्थयति स्म **'भूमा संप्रसादादध्यु-पदेशात्' 'धर्मोपपत्तेश्चे'**ति । सङ्कल्पमात्रेण सर्वविधरणलक्षणं महामहिमानं च गार्ग्य-क्षरविद्यावेद्यस्याऽसुसूत्रत् । कठवल्लीप्रतिपाद्यं च परं ब्रह्म परमात्मानं प्रकृष्टज्ञानवन्तं मनुते **'वदतीति चेन्न प्राज्ञो हि प्रकरणा'**दिति सूत्रयन् । **'सुखविशिष्टाभिधानादेव चे'**ति सूत्रयंश्चापरिच्छिन्नानन्दगुणकं मुमुक्षुवेद्यमर्चिरादिगतिप्राप्यं परंब्रह्म। मैत्रेयीब्राह्मणं च जीवविलक्षणपरमात्मपरं मोक्षार्थविज्ञेयत्वसर्वकारणत्वसर्वात्मत्वानवधिकातिशयमहत्त्वादि-गुणगणप्रतिपादनाद्व्यवस्थापयद्वाक्यान्वयाधिकरणे । तथा **'स्थित्यदनाभ्यां चे'**ति सूत्रेण बद्धवैलक्षण्यं **'मुक्तोपसृप्यव्यपदेशाच्चे'**ति मुक्तवैलक्षण्यं, **'पत्यादिशब्देभ्य'** इति सर्वस्वामित्वसर्वेश्वरत्वसर्वाधारत्वादिना नित्यमुक्तवैलक्षण्यं च परस्य ब्रह्मणोऽभिप्रयन् भगवान् बादरायणः प्रसिद्धाच्छारीरादर्थान्तरं सर्वशरीरकं सर्वात्मानं परमात्मानमेव मुख्यं शारीरमात्मानं निखिलहेयप्रत्यनीकं समस्तकल्याणगुणाकरं वेदान्तवेद्यं परं ब्रह्मेति संस्थाप-यामास । गुणोपसंहारपादे च आनन्दादिगुणजातं परस्य ब्रह्मणोऽवर्णयत् । तद्गुणानां वेदान्ततात्पर्यविषयत्वेनाऽबाध्यत्वं च सूत्रयामास **'आदरादलोप'** इति । एवं सगुणमेव परं ब्रह्म परं तत्त्वं सूत्रकृता वर्णितम् ।

आनन्दमयं च परमात्मानं परं ब्रह्म व्यवस्थापयन् भगवान् बादरायणः साकारं सविशेषमेव परं ब्रह्माभिमन्यते न तु निराकारम् । अपृथक्सिद्धविशेषणमाकारो विशेष इति चोच्यते । परमात्मनश्च दिव्यविग्रहगुणविभूतयः सर्वेऽपृथक्सिद्धविशेषणभूता इति सर्वदा साकारं सविशेषमेव परं ब्रह्मेति श्रुतिस्मृतिसूत्राणां हार्दम् ।

आनन्दमयाधिकरणे सूत्राणि चानन्दमयब्रह्मताव्यवस्थापन एव स्वरसानि श्रीभाष्य-प्रक्रियया । शङ्करभगवत्पादा अपि सूत्रस्वारस्यं निह्नोतुमप्रभविष्णव आनन्दमयस्यैव पर-ब्रह्मत्वं सूत्रैरेतैर्व्याचक्षाणाः प्रथमवर्णके, स्वाभिमतपुच्छब्रह्मत्वपरतया सूत्राणि यथाकथञ्चित संयोजितवन्तो द्वितीयवर्णके । **'यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह, आनन्दं ब्रह्मणो विद्वान्, न बिभेति कुतश्चने'**ति ब्रह्मनिष्ठानन्दस्यापरिच्छेद्यत्वेन

वाङ्मनसानधिगम्यत्वं तदुपासकस्य संसारभयनिवृत्तिं च प्रतिपादयन्ती भगवती तैत्तिरीयश्रुतिः कथमिवानन्दादिगुणयोगाभावं ब्रह्मण्यनुमन्येत । प्रत्युत सुहपशुभगुणमहैश्वर्याणि आनन्दशब्दार्थतया सङ्गिरमाणा सेयं श्रुतिः अपरिमितशुभरूपगुणविभूतिसंपत्तिमेव परब्रह्मणि प्रतिष्ठापयति । अत्र हि प्रकरणे मुमुक्षुभिर्ज्ञातव्यं मुक्तप्राप्यं सच्चिदानन्दलक्षणं विपश्चिदनन्तं परंब्रह्मात्मशब्दितमाकाशादिकारणमन्नरसशुक्रशोणितविकाराह्नमयशब्दितशरीरप्राणमयमनोमयविज्ञानमयशब्दितबद्धमुक्तोभयावस्थजीवविलक्षणं तत्तच्छरीरकमानन्दमयं सर्वजगदभिन्ननिमित्तोपादानत्वेन सर्वरक्षकत्वेन सर्वानन्दयितृत्वेन सर्वनियन्तृत्वेनापरिच्छिन्नानन्दवत्त्वेन मुक्तप्राप्यत्वेन च निरूप्य शास्त्रजन्यतज्ज्ञानवत्तद्विषयकनिरन्तरमननलक्षणायाः तस्मिन्निष्ठाया अभयहेतुत्वं, विदुषोऽप्यमन्तुर्भयप्रसङ्गं च सनिदर्शनमुपपाद्य तस्यास्य हृदयकमले दिव्यरूपेणापरिच्छिन्नानन्दवत्तादिना चोपासनां विधाय प्राकृतलोकादुत्तीर्णे परमे व्योम्नि परिपूर्णपरब्रह्मगुणानुभवः संसारभयनिवृत्तिनिश्चोपासकस्य ब्रह्मविद्याफलमुपदिश्यते । तन्नात्र निर्विशेषशङ्कागन्धोऽपि ।

जगत्कारणं मन्त्रब्राह्मणोदितं परं ब्रह्म परमात्मानं देहेन्द्रियमनःप्राणबुद्धिजीवविलक्षणं स्थूलारुन्धतीन्यायेन सुखेन बुद्धौ समारोपयितुं प्रथममन्नरसपरिणामं शरीरमेव सामानाधिकरण्येनात्मत्वेन ग्राहयामास **'स वा एष पुरुषोऽन्नरसमय'** इति । देह आत्मबुद्धौ स्थितायां तदन्तरं प्राणमयं तदात्मभूतं प्रादर्शयत् । प्राणे प्रक्रान्तात्मबुद्धौ स्थितायां च **'तस्यैष एव शारीर आत्मा यः पूर्वस्ये'**ति शरीरप्राणयोरन्यमात्मानं शारीरमुपचिक्षेप । प्रतिपर्यायं **'शारीर आत्मे'**ति श्रवणात् वस्तुतः तत्र तत्र सामानाधिकरण्यं शरीरात्मभावनिबन्धनमित्यस्फोटयत् । अथ च प्राणमयादन्यं मनोमयमात्मत्वेन बुद्धावारोप्य तस्मिन्नात्मबुद्धौ प्रतिष्ठितायां ततस्तामवरोप्य विज्ञानमये ज्ञानगुणसारे स्वयंप्रकाशे जीवात्मनि समारोप्य तेनैव क्रमेण तस्मादवरोप्य प्रक्रान्तमात्मोपदेशमानन्दमये परिसमापयति स्म भगवती श्रुतिः **'तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमय'** इति । तस्याऽऽनन्दमयस्य प्रियमोदप्रमोदलक्षणानन्दार्णवस्यानन्दैकस्वरूपस्य परस्य ब्रह्मणः पुरुषविधत्वाय प्रियशिरस्त्वादिकल्पनायां आनन्दत्वेनात्मशब्दितमध्यकायत्वकल्पना, ब्रह्मत्वेन पुच्छप्रतिष्ठात्वकल्पना च कृता कल्पनाप्रकरणानुगुणैव । तदेवमानन्दमयस्यैवात्मत्वे ब्रह्मत्वे च स्थिते **'असन्नेवे'**त्यादिश्लोकोऽपि आनन्दमयविषय एव ब्रह्मशब्दघटितः । आनन्दमयब्रह्मणोरैक्याद्वस्तुतः । अत एवान्नमयादीनामिवानन्दमयस्यापि श्लोकः सम्पद्यते । अन्यथा प्रक्रमभङ्गः । प्रक्रमभङ्गेन पुच्छब्रह्मण एवायं श्लोक इति परेषां पक्षे तु आनन्दमयश्लोकाश्रवणमेको दोषः । प्रक्रमभङ्गद्योतकतुशब्दादिप्रयोगाभावश्च । न हि श्रूयते 'ब्रह्म तु पुच्छं प्रतिष्ठा' इति । **'असन्नेवे'** त्यादिश्लोकानन्तरं श्रुतस्य **'तस्यैष एव शारीर आत्मा यः पूर्वस्ये'**त्यस्य श्लोकप्रतिपाद्यब्रह्मणोऽनन्यात्मत्वप्रतिपादने तात्पर्यं सिद्धान्तिभिरुररीक्रियते **'पतिं विश्वस्यात्मेश्वर'** मित्यादाविव । पूर्वपर्यायेषु श्लोकप्रतिपादितस्यैव श्लोकानन्तरे **'तस्यैष एवे'**ति वाक्ये तच्छब्देन परामर्शदर्शनादत्राप्येवमेवार्थो विवक्षितः । प्रायपाठानुविधायित्वेनैवं श्रवणमत्र । परमते तु पूर्वप्रक्रान्तनिरूपणरीतिमुल्लङ्घ्य तच्छब्द-

स्यैतस्य श्लोकाप्रतिपादितानन्दमयपरामर्शित्वकल्पनाऽपरो दोषः । किञ्च पुच्छब्रह्मणः कामनापूर्वकस्रष्टृत्वाद्युक्तेरसामञ्जस्यम्, निर्विशेषत्वात्तस्य । मायोपहितत्वेन तदुपपत्तौ चानन्दमय एव पर्यवसानम् । मायोपहितत्वं चाश्रौतम् । विपश्चित्त्वविशेषणानुपपत्तिश्च । सर्वज्ञत्वं हि तत् । तच्च न चैतन्यमात्रस्य । सर्वप्रकाशकचैतन्यरूपत्वं तदित्यर्थवर्णनं त्वस्वरसम् । लब्धृलब्धव्यभावव्यपदेशास्वारस्यम् । लोकान्तरगमनानन्दमयोपसम्पत्तिसर्वकामानुभवलक्षणमोक्षफलवचनानां चास्वरसगतिः । **'आनन्दं ब्रह्मणो विद्वा'**निति व्यतिरेकनिर्देशास्वारस्यम् । स्थानप्रमाणादानन्दानन्दमययोरैकार्थ्यावगमेन आनन्दमयप्राप्त्यादिफलवचनसाम्येन चानन्दमयब्रह्मत्वव्यवस्थापने भृगुवल्ल्याः प्रतीयमानस्य तात्पर्यस्य प्रहाणं च । अन्ये च श्रुतप्रकाशिकादावुदाहृताः पुच्छब्रह्मवादे दोषा अत्रानुसन्धेयाः ।

यत्त्वानन्दमयस्य ब्रह्मत्वे तत्र शोध्यत्वस्य श्रौतस्यायोग इति । तदपि न । शोधनप्रकारस्य वस्तुस्वरूपानुगुणस्यान्यान्यत्वात् । सर्वेश्वरस्य संसारबन्धस्थितिमोक्षहेतोरिष्टानिष्टसर्वकर्मफलप्रदस्य मुमुक्षूपास्यस्य जीवकृतपापमूलनिग्रहसङ्कल्पापाकरणेन शोध्यत्ववाचोयुक्तेः । निर्विशेषब्रह्मणोऽप्यविद्यामालिन्यनिवर्तनेन शोध्यत्वं परेषामप्यवर्जनीयतयाऽभ्युपगन्तव्यं यदा, तदा सविशेषे सर्वेष्टानिष्टफलप्रदे सर्वेश्वरे परे ब्रह्मणि शोध्यत्ववाचः का वाऽयुक्तिः ।

यत्तु आनन्दमयत्वं दुःखाल्पसंबन्धं गमयतीति । तदपि न । स्वगतानन्दप्राचुर्यस्य प्रतियोगि स्वगतविजातीयाल्पत्वं वा अन्याश्रयगतसजातीयाल्पत्वं वा भवति । यथा प्रकाशमय आदित्य इत्युक्ते नादित्यस्य तमोऽल्पं गम्यते । चन्द्रादिगतप्रकाशस्याल्पत्वमेव तु गम्यते । तदादित्यप्रकाशप्राचुर्यस्य नादित्यगततमोऽल्पत्वं प्रतियोगि, किन्तु चन्द्रादिगतप्रकाशाल्पत्वमेव यथा, तथा ब्रह्मण्यानन्दप्राचुर्यस्य जीवगतानन्दाल्पत्वं प्रतियोगि । तच्चेदं श्रुतमेवेति नानन्दमयत्वेन दुःखगन्धप्रसङ्गो ब्रह्मणीति दिक् । एवं तैत्तिरीयके श्रुतमानन्दमयं वेदान्तवेद्यं परं ब्रह्मेति निरणैषीद्भगवान् बादरायणः । ब्रह्मगुणानामानन्दादीनां सर्वपरविद्यास्वनुसन्धेयत्वनिरूपणे कृते प्रियशिरस्त्वादीनामपि तथात्वात्सर्वत्रानुसन्धेयत्वं स्यादिति प्रसक्तामाशङ्कां न ब्रह्मगुणत्वमेषां कल्पनामात्रत्वादिति परिहरतश्च सूत्रकृतः आनन्दमय एव ब्रह्मेति विवक्षितमिति स्वरसतोऽवगम्यते । पुच्छं चेद्ब्रह्म विवक्षितं कः प्रसङ्गः प्रियशिरस्त्वादिप्राप्तिशङ्कायाः । तत् आनन्दमय एव परमात्मा परं ब्रह्मेति श्रुतिसूत्रसम्मतम् । श्रीभागवते वेदस्तुतौ चानन्दमयस्यैव परब्रह्मत्वं श्रुत्यभिमतमित्युक्तम् **'दृतय इव श्वसन्त्यसुभृतो यदि तेऽनुविधा महदहमादयोऽण्डमसृजन् यदनुग्रहतः । पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः सदसदतः परं त्वमथ यदेष्ववशेषमृतम् ॥'** इति । अन्नमयादिषु पुरुषविधत्वेन निरूपितश्चरम आनन्दमय एव खलु । न तु पुच्छं ब्रह्म । तस्यास्य सदसच्छब्दितचेतनाचेतनात्मत्वं चेतनाचेतनविलक्षणत्वं निरुपाधिकसत्यत्वं परब्रह्मत्वं च **'सदसदतः परं त्वमथ यदेष्ववशेषमृत'**मिति प्रतिपाद्यन्ते **'सोऽकामयत'**इत्यारभ्य **'सत्यं चानृतं च सत्यमभव'**दित्यन्तेन श्रुतानि । **'योऽस्योत्प्रेक्षक आदिमध्यनिधने योऽव्यक्तजीवेश्वरः यः सृष्ट्वेदमनुप्रविश्य ऋषिणा चक्रे पुरः संहिताः** (शास्ति ताः) । **यं सम्पद्य जहात्यजामनुशयी सुप्तः कुलायं यथा**

तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिम् ॥' इति वेदस्तुतिसारसङ्ग्रहे च चेतनाचेतनात्मकत्वं न स्वरूपतः, किन्तु तदन्तरात्मत्वेनावस्थितिनिबन्धनं भगवतः श्रीहरेर्वासुदेवस्य, तस्यास्य कार्यकारणदशयोः प्रधानपुरुषेश्वरत्वं सङ्कल्पतः सृष्ट्यादिकर्तृत्वं हितावबोधिवेदशास्त्रप्रवर्तकत्वं मुमुक्षुध्येयत्वं मायाबन्धविमोचकत्वं चेति स्पष्टमेवोपवर्णितम् । वाङ्मनसनिवृत्तिश्रुतिश्चास्यानन्तस्वरूपगुणविभूतिकत्वेन कार्त्स्न्येन प्रतिपादनाशक्त्यभिप्रायेति च तत्रैव व्यक्तम्—'द्युपतय एव ते न ययुरन्तमनन्ततया त्वमपि यदन्तराऽण्डनिचया ननु सावरणाः । ख इव रजांसि वान्ति वयसा सह यच्छ्रुतयः त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः ॥' इति । तवानन्तत्वात्तवान्तं प्राप्तुमपारयन्तः परिच्छिन्नतत्तद्वस्तुवैलक्षण्येन त्वां 'नेति नेति' 'तदेव ब्रह्म त्वं विद्धि नेदं' 'नेदं' मिति च प्रतिपादयन्तः कथञ्चित्पारोक्ष्येण त्वामपरिच्छिन्ननामरूपगुणविभूतिविस्तारं प्रदर्शयन्तः त्वदावेदनलक्षणं साफल्यं लब्धवन्तः श्रुतिगणा इत्यर्थः । 'महागुणत्वाद्यमनन्तमाहुः' 'देशतः कालतो वापि गुणतो वस्तुतोऽपि वा । अवधिर्यस्य नास्तीति सोऽनन्तः परिकीर्तितः ॥' इति ह्यनन्तपदं निरवोचन् । तदयमेवार्थो विवक्षित इति ध्येयम् । परविद्यायाः फलं चानन्दमयप्राप्तिमेवोशति श्रुतिः । प्राप्तिफलं च ब्रह्मगुणानुभवलक्षणं 'परमे व्योमन्, सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'ति । 'परमे व्योम'न्नित्यस्य पूर्वपादान्तर्गतस्याप्युत्तरपादेनैकवाक्यतायां न क्षतिः । अर्थवशेन वृत्तवशेन वा पादव्यवस्थायाः श्रोत्रियसम्मतत्वात् । ब्रह्मणो विपश्चित्त्वविशेषणमपि सगुणत्वं गमयति । अग्रे भृगुवल्ल्यां 'आनन्दो ब्रह्मेति व्यजाना'दिति श्रुताया भार्गव्या वारुण्या विद्याया अपि स्थानप्रमाणादानन्दशब्दस्याऽऽनन्दमयपरतया आनन्दमयविषयत्वं 'एतमानन्दमयमात्मानमुपसङ्क्रम्ये'ति आनन्दमयप्राप्तिरूपफलवचनात्सुप्रतिष्ठितं भवति । तत् सगुणविषयैव परब्रह्मविद्याऽऽनन्दवल्लीभृगुवल्ल्योरुपदिष्टेति सिद्धम् । अत्र च प्रकरणे 'आनन्दं ब्रह्मणो विद्वा' नित्युपासने 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'ति मोक्षानुभवे च गुणप्राधान्यं गम्यते स्वरसतः । भोग्यसाहित्यं चात्र सहशब्देन विवक्षितम् । ब्रह्मणा सहैकीभूत इत्यर्थस्तु अस्वरसोऽशाब्दश्च । 'अस्माल्लोकात्प्रेत्ये'त्यनेन च परमव्योम दिव्यं स्थानमिति गम्यते ।

△ सोऽयं विपश्चिदानन्दमयः जगज्जन्मादिकारणं परमात्मा नारायण एवेति संसूचितवानन्तरधिकरणे आदित्यमण्डलान्तर्वर्ती हिरण्यवर्णः पुरुषः पुण्डरीकेक्षण आदित्यादिजीवविलक्षण इति स्थापयन् सूत्रकारः । नारायणस्यैव हि सवितृमण्डलमध्यवर्तित्वं मुमुक्षूपास्यत्वं च प्रसिद्धं स्मृतौ—"ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः । केयूरवान् मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥' इति । श्रुतिगतं पुण्डरीकाक्षत्वं च नारायणत्वे लिङ्गम् । यत् कारणं तदेव ब्रह्मेति सूत्रितम् । कारणं च सदात्मब्रह्मशब्दैस्तत्र तत्र निर्दिष्टं नारायण एवेति 'एको ह वै नारायण आसीन्न ब्रह्मा नेशान' इति महोपनिषदि निर्णीतम् । न च 'न सन्न चासच्छिव एव केवल' इति शिवस्य कारणत्वं प्रतीयते श्वेताश्वतर इति

वाच्यम्। शिवशब्देन तत्र **'शाश्वतं शिवमच्युत'**इति श्रुतस्य शाश्वतशिवस्य श्रियःपते-र्नारायणस्यैवोक्तत्वात्। श्वेताश्वतरे हि **'देव'** शब्देनोपक्रमोपसंहारौ। महापुरुषशब्दश्च मध्येऽभ्यस्तः। देवशब्देन च मुख्यतया **'दिव्यो देव एको नारायण'** इति सुबाले श्रुतो नारायण एवोच्यते। सौबालश्रुतिं प्रत्यभिज्ञापयति चात्रैव **'एको देवः सर्वभूतेषु गूढ'** इति वाक्यम्। पुरुषशब्दस्य च नारायण एव मुख्या वृत्तिरिति महर्षिभिः स्मृतम्— **'भगवानिति शब्दोऽयं तथा पुरुष इत्यपि। निरुपाधी च वर्तेते वासुदेवे सनातने॥'** इति। महापुरुषशब्दश्च तत्रैव प्रसिद्धः। **'महान् प्रभुर्वै पुरुषः सत्त्वस्यैषः प्रवर्तक'** इति श्रुतं सत्त्वप्रवर्तकत्वम्, **'हिरण्यगर्भं पश्यति जायमानं स नो देवः शुभया स्मृत्या संयुनक्तु'** इति स्वस्माज्जायमानहिरण्यगर्भद्रष्टृत्वं च शिवशब्दस्य शाश्वतशिवश्रीमन्नारायणपरत्वे लिङ्गम्। नहि चतुर्मुखादुत्पन्नस्य रुद्रस्य चतुर्मुखजनिद्रष्टृत्वं संभवति। अत एव रुद्रादिपदमपि योगेन प्रकरणेऽत्र नारायणपरं व्याख्यातम्। तस्मान्नारायण एव जगत्कारणमिति श्रुत्यन्तेषु स्थितम्। कारणत्वस्य ब्रह्मलक्ष्मतां सूत्रयंश्च नारायणस्यैव परब्रह्मत्वमभिप्रैति भगवान् बादरायणः। तस्यास्य दिव्याकारयोगं चान्तरधिकरण एव संसूचितवान् हिरण्मयपुरुषस्य परब्रह्मत्वसमर्थनेन। ज्योतिरधिकरणे च तस्यास्य निरवधिकदिव्यरूपदीप्तियोगं त्रिपाद्विभूतियोगं पादात्मकलीलाविभूतियोगं च समसूचयत्। महाभारते च भगवतो वासुदेवस्य विभूतिद्वययोगं स्पष्टमेव प्रत्यपादयत् सूत्रकृद्वेदव्यासभगवान्—**'अव्यक्तादिविशेषान्तं परिणामर्धिसंयुतम्। क्रीडा हरेरिदं सर्वं क्षरमित्यवधार्यताम्॥ अक्षरं तत्परं ब्रह्म'** इति, **'दिव्यानि कामगामीनी'**-त्यारभ्य **'एते वै निरयास्तात स्थानस्य परमात्मनः'** इत्यन्ते च। विभूत्यन्तर्गतप्रशस्तविभूतिमत्त्वं चेन्द्रप्राणाधिकरणादौ। तदेवमपरिच्छिन्नज्ञानानन्दादिगुणकोऽनवधिकातिशयदिव्यदीप्तिः दिव्यरूपः क्षराक्षरविभूतियुक्तः लोकेश्वराणामपि महेश्वरः सर्वान्तरात्मा भगवान् विष्णुः वासुदेवो नारायण एव जगज्जन्मादिकारणं वेदान्तैकवेद्यमनन्तपुरुषार्थरूपं मुमुक्षुभिर्विजिज्ञास्यं परं ब्रह्मेति समन्वयाध्यायप्रथमचरणे सूत्रकृता व्यवस्थापितमित्यवसेयं विवेकिभिः।

**'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्मैत'**दिति श्वेताश्वतरे श्रुतं तत्त्वत्रयं च श्रीभगवद्रामानुजाचार्यैः श्रीभाष्यादौ सुप्रतिष्ठापितं, शिक्षापत्र्यां च श्रीहरिणा मुमुक्षुभिरवश्यं ज्ञेयत्वेन वर्णितमत्र शास्त्रे सुप्रतिष्ठापितमेव भगवता बादरायणेन। **'रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्चे'**ति साङ्ख्याभिमतं स्वतन्त्रप्रधानकारणत्वं निरस्यन् सूत्रकारः **'तदधीनत्वादर्थवत्' 'ज्योतिरुपक्रमा तु'** इत्यादौ ब्रह्माधीनं जडात्मकं प्रधानमनुमन्यते। अव्यक्तं, प्रधानं, मायेति चानर्थान्तरम्। मायिकाकाशादिसमष्टिसृष्टिं तत्तच्छरीरकपरमात्मकर्तृकां देवादिव्यष्टिसृष्टिं च चतुर्मुखशरीरकपरमात्मकर्तृकां वियत्पादे संज्ञामूर्तिक्लृप्त्यधिकरणे च व्यवस्थापयन् सूत्रकारः मायिकप्रपञ्चजातं ब्रह्मात्मकं सूचयति स्म। **'नात्मा श्रुतेः' 'ज्ञोऽत एवे'**ति ज्ञातृत्वैकस्वभावं नित्यं जीवस्वरूपं व्यवस्थापयंश्चाचेतनवैलक्षण्यं, परमात्मानमधिकृत्यैव महत्त्वं श्रुतं न तु जीवस्येति **'नाणुरतच्छ्रुतेरिति**

**चेन्नेतराधिकारा**'दिति निर्धारयन् '**उत्क्रान्तिगत्यागतीना**' मित्यादिसूत्रैरणुत्वं '**परात्तु तच्छ्रुते**'रिति परमपुरुषपारतन्त्र्यं च जीवात्मनां व्यवस्थापयन् परमात्मवैलक्षण्यं च समभिप्रैति । ज्ञशब्दश्च ज्ञातर्यैव स्वरसो न तु ज्ञानमात्रे । अणोरपि सर्वशरीरव्याप्तिं धर्मभूतज्ञानद्वारकमाह '**गुणाद्वाऽऽलोकव**'दिति । ज्ञातृत्वैकस्वरूपस्य 'ज्ञान'मिति व्यपदेशश्च ज्ञानगुणसारत्वादानन्दमयस्य परब्रह्मण आनन्दव्यपदेश इवानन्दगुणसारत्वाज्जीवात्मन इति च '**तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञव**'दिति वर्णयामास । बुद्धिगुणसारत्वाद्बुद्धात्मनः बुद्ध्यौपाधिकपरिच्छिन्नव्यपदेश इति व्याख्यानं तु न सूत्रकारहृदयङ्गमं भाति । अन्तःकरणोपाधेरप्रस्तुतत्वेन तच्छब्देन तत्परामर्शस्यास्वरसत्वात् । ज्ञानगुणस्य तु पूर्वं '**गुणाद्वाऽऽलोकव**'दिति प्रस्तुतत्वात्परामर्शो युक्तः । तुशब्दस्तु विज्ञानमात्रमात्मेति पूर्वपक्षनिरासार्थः । पूर्वपक्षश्चाऽऽर्थो न तु सूत्रितः, '**ज्ञोऽत एव**' '**परात्तु तच्छ्रुते**' रित्यादाविव । आगन्तुकचैतन्यगुणकसर्वगतात्मवादप्रतिक्षेपार्थं ज्ञातृत्वैकस्वभावत्वमणुत्वं च स्थापयित्वा विज्ञानमात्रात्मवादनिरासार्थोऽयमुपक्रमस्तद्गुणसारत्वात्तु इति । मुक्तौ चाणोरप्यानन्त्यं श्रुतं स्वगुणभूतालोकस्थानज्ञानद्वारकमिति संसूचितवान् '**प्रदीपवदावेशस्तथा हि दर्शयती**'ति । चेतनाचेतनैरविदितस्तदन्तर्यामी भगवान् वासुदेवः पुरुषोत्तम एव मुख्य ईश्वरः, स एव चतुर्मुखादिद्वारा स्रष्टा मृत्युशब्दितप्रलयकालरुद्रादिद्वारा संहर्ताऽन्तर्यामित्वादिना रक्षकश्चेति समन्वयाध्याये प्रातिष्ठिपत् । एवं तत्त्वत्रयभेदो विशिष्टाद्वैतिसम्मतोऽत्र सुप्रतिष्ठित इति ध्येयम् ।

औद्धवसम्प्रदायप्रसिद्धः 'माया जीव ईश्वरो ब्रह्म परंब्रह्मेति पञ्चतत्त्वभेदोऽप्यत्र संसूचितः । इदं च तत्त्वपञ्चकं तत्त्वत्रयान्तर्गतमेव काणादोक्तसप्तपदार्थ्यन्तर्गतेव गौतमोक्ता षोडशपदार्थी । तत्र जीवा देवादिचतुर्विधभूतराशयः कथ्यन्ते । ब्रह्माण्डैश्वर्यादिप्राप्तिमन्तश्च ईश्वरा इति परिभाष्यन्ते । मुक्ताश्च ब्रह्मेति । ईश्वरशब्दितहिरण्यगर्भादिभेद ईक्षतिकर्माधिकरणकार्याधिकरणादौ परब्रह्मशब्दितस्य परमात्मनः संसूचितः । ईक्षतिकर्माधिकरणे हि जीवघनात्परात्परः पुरिशयः पुरुष दिव्यो देव एको नारायण एव, न तु हिरण्यगर्भ इति स्थापितम् । अर्चिरादिगतिप्राप्यं परंब्रह्मैव न हिरण्यगर्भ इति च कार्याधिकरणे । अतो हिरण्यगर्भादीश्वरभेदः परब्रह्मणः परमात्मनः परमेश्वरस्य नारायणस्य सिद्धः । ब्रह्मशब्दितमुक्तभेदश्च अर्थान्तरत्वादिव्यपदेशाधिकरणादौ । मुक्तानामपि परमात्मशेषत्वादि हि '**पत्यादिशब्देभ्य**' इत्यादिसूत्रे संसूच्यते । तद्विषयवाक्ये सर्वपदस्यासङ्कोचान्मुक्तानामपि क्रोडीकारकत्वात् । मुक्तानामपि भगवत्पारतन्त्र्यमपेक्ष्यैव च '**अत एव चानन्याधिपति**'रिति सूत्रयामास । न तु 'अत एव चानधिपति'रिति । '**अन्यराजानस्ते क्षय्यलोका भवन्ती**'ति श्रुतिप्रसिद्धं कर्मपारवश्यं सत्यसङ्कल्पत्वप्रतिरोधकं नेत्याशयः । अत एव च महर्षिभिराम्रेडितमसकृत् '**पारतन्त्र्यं भगवति प्राप्य निर्गतबन्धनः । स्वातन्त्र्यमतुलं प्राप्य तेनैव सह मोदते ॥**' इति । भगवान् हि स्वान्तरात्मा स्वानन्यत्वेन व्यपदेशयोग्यः । तत्स्वामिकत्वं च शरीरस्यात्मस्वामिकत्वमिव मुक्तानां श्रेयआवहमेवेति अनन्याधिपतित्वं सूत्रयितुर्हार्दम् । मुक्तस्य नानाशरीरयोगं कामतः समर्थयंश्च

परमात्मनि सेवावृत्तिं सूचितवान्। शरीरसाध्या हि सेवा। **'एतमानन्दमयमात्मानमुपसङ्क्रम्य, इमान् लोकान् कामान्नी कामरूप्यनुसञ्चर'**न्निति भगवदनुवर्तनं च मुक्तस्य श्रूयते। **'येन येन धाता गच्छति, तेन तेन सह गच्छति' 'छाया वा सत्वमनुगच्छेत्'** इत्यादिप्रसिद्धं च मुक्तानामपि भगवत्पारतन्त्र्यादि। **'स उत्तमः पुरुष'** इति परज्योतिषः पुरुषोत्तमत्वम्, **'स तत्र पर्येती'**ति परिपूर्णपुरुषोत्तमानुभवानुवर्तनं च परविद्याफलभूतस्वरूपाविर्भावलक्षणे परममोक्ष एव मुक्तस्य तमुपसम्पन्नस्योपदिष्टं श्रुत्यैव। तत्सूत्रकारोऽपि परब्रह्माभेदं मुक्तस्य नानुमन्यते इति बोध्यम्।

नन्वेवं तत्त्वभेदे चेतनाचेतनप्रपञ्चस्य परब्रह्माभेदव्यपदेशाः श्रौताः स्मार्ताश्च कथमुपपद्यन्त इति चेत्। **अत्रोच्यते।** इमामाशङ्कां सूत्रकार एवोद्भाव्यांशत्वं समर्थितवान् चेतनाचेतनयोः परमात्मानं प्रति। तत्रांशाधिकरणे चेतनप्रपञ्चस्याहिकुण्डलाधिकरणे चाचेतनप्रपञ्चस्यांशत्वं प्राधान्येन व्यवास्थापि। अंशत्वं चैकवस्त्वेकदेशत्वम्। तत्र भगवतोऽयमंशो भवन् न स्वरूपैकदेशपरिणामादिरूपतया भवितुमर्हति। ब्रह्मण एव जडजीवरूपतापत्तेः सर्वदोषप्रसक्तेस्तत्र। विशिष्टं चेद्ब्रह्माभ्युपगतं तस्य चापृथक्सिद्धविशेषणतयांऽशत्वं चेतनाचेतनयोः, तर्हि स्वरूपस्वभावासाङ्कर्यं सुरक्षितमभविष्यत्। एवंरूपमेवांशत्वं सूत्रकारो विवक्षति स्म **'प्रकाशादिवत्तु नैवं परः'** इति सूत्रयन्। प्रकाश–आलोकः, आदिपदेन जातिगुणादिर्ग्राह्यः। सूर्यादेः प्रकाशादिरंशो भवन् हि अपृथक्सिद्धप्रकारतया भवति। प्रभावदंशत्वं स्मर्यते च महर्षिभिः **'एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा। परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत्॥'** इति। कार्योपयोग्यपृथक्सिद्धविशेषणं शक्तिः। तत्र द्रव्यं सचेतनं प्रति तथाविशेषणीभूतं च शरीरमित्युच्यते। तच्चेतनाचेतनद्रव्ययोः परमचेतनेश्वरापृथक्सिद्धप्रकारत्वात्तच्छरीरत्वं तदंशत्वं च, तस्य चैतयोरात्मत्वमर्थसिद्धम्। शरीरात्मभावनिबन्धनं च सामानाधिकरण्यमभिप्रैति सूत्रकारः **'अवस्थितेरिति काशकृत्स्न'** इति। अत्र चेतनाचेतनतयाब्रह्मस्वरूपस्यावस्थितिर्नोक्ता। त्रयाणां स्वरूपवैलक्षण्यस्य बहुकृत्वः सूत्रणात्। किन्तु चेतनाचेतनयोरन्तरात्मतयाऽवस्थितिरेव सूत्रकृता विवक्षिता। चेतनाचेतनवाचिनां शब्दानां परमात्मनि मुख्या वृत्तिश्च सूत्रितैव **'चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वा'**दिति। तच्छरीरात्मभावनिबन्धनं सामानाधिकरण्यं मुख्यवृत्तमेवेति भगवतो बादरायणस्य हार्दम्। **'सर्वं समाप्नोषि ततोऽसि सर्वः'** इति गीतोपनिषदि च प्रसिद्धोऽयमर्थः। व्याप्तिश्च नियन्तृत्वेनेति **'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर'** इति तत्रैव व्यक्तम्। **'ईशावास्यमिदं सर्व'**मिति च श्रुतिरेतदर्थपरा। जनकयाज्ञवल्क्यसंवादे चान्तरात्मत्वनिबन्धन एव जगद्ब्रह्मणोरभेदव्यपदेश इति स्पष्टमुच्यते–**'अन्यश्च राजन् स परः तथान्यः पञ्चविंशकः। तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधवः॥'** इति। एवं सर्वश्रुतिस्मृत्यनुरोधिनमन्तरात्मत्वनिबन्धनं सामानाधिकरण्यपदेशमेव सूत्रकारः श्रुतिस्मृतिभिरुपनिषदर्थं प्रतिष्ठापयन् बहुमन्यत इति सुगममेव विचारनिपुणानाम्। एतेन जीवब्रह्मसामानाधिकरण्यं स्वरूपैक्यनिबन्ध-

नम्, अचिद्ब्रह्मसामानाधिकरण्यं तु बाधार्थकमित्यर्धजरतीयाश्रयणं प्रत्युक्तम् । चिदचितो-रेकरूपांशत्वस्यैव सूत्रणात् । भेदाभेदश्रुत्यनुरोधाय जीवानां यादृशमंशत्वमुक्तम्, तादृश-मेवाकाशाद्यमूर्ततेजआदिमूर्तरूपाचित्प्रपञ्चस्यापि भेदाभेदश्रुत्यनुरोधाय ब्रह्मांशत्वमिति हि **'पूर्ववद्वे'**ति समर्थितम् । तस्यास्य सर्वचेतनाचेतनशरीरकस्य सर्वजगदेककारणस्य बाह्य-स्मृतितर्कैरबाध्यस्वरूपस्य सर्वान्तरात्मनः सर्वगतदोषैरसंसृष्टस्य भगवतः पुरुषोत्तमस्य जीव-गतजागराद्यवस्थानिर्वाहकस्य सर्वस्मात्परमत्वं पराधिकरणे व्यवस्थाप्य तस्यैवोपास्यत्वोप-योगिसर्वफलप्रदत्वं च फलाधिकरणे समर्थयति स्म सूत्रकारः । तत्सर्वेश्वरस्यैव पारम्यं पर-ब्रह्मत्वं मुमुक्षूपास्यत्वं च सूत्रकृदभिप्रैति । न तु निर्विशेषब्रह्मणः । एतेन यद्यपि जगत्कार-णत्वं सगुणस्येश्वरस्यैव । तच्च तदतिक्रान्तस्य निर्विशेषब्रह्मणस्तटस्थलक्षणम् । तस्यास्य ज्ञान-मात्रत्वं **'आह च तन्मात्र'**मिति सूत्रयामास । निर्भेदत्वं च **'न स्थानतोऽपी'**ति सूत्रे उभयलिङ्गनिषेधेन प्रत्यबूबुधत्तस्य । प्रपञ्चमिथ्यात्वं च **'मायामात्रं'**त्विति समसूसुचत् । तस्यैव सर्वस्मात्परमत्वं पराधिकरणे प्रत्यतिष्ठिपत् । तस्यैव निर्विशेषब्रह्मणो वेदान्ततात्पर्य-विषयत्वं मुमुक्षुवेद्यत्वं च बादरायणस्याभिमतमिति प्रत्युक्तम् । परब्रह्मविषयत्वेन पराभि-मतानामपि श्रुत्यन्तवाक्यानां सविशेषपरतया सूत्रकारैरेव समर्थितत्वात् । निर्विशेषब्रह्मण उत्सूत्रत्वात् । **'तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम्' 'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । सर्वाध्यक्षः सर्वभूता-धिवासो साक्षी चेता केवलो निर्गुणश्च' 'यस्मात्परं नापरमस्ति किञ्चिद्य-स्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्ते-नेदं पूर्णं पुरुषेण सर्व'**मिति श्वेताश्वतरेऽन्यत्र च सर्वेश्वरस्यैकदेवभूतस्य पुरुषोत्तमस्यैव परान्तरनिरसनेन परमत्वव्यवस्थापनात्तदतिरिक्तनिर्विशेषपरब्रह्माभ्युपगमस्याप्रमाणकत्वाच्च । निर्विशेषं ब्रह्म चेत्पूर्वं व्यवस्थापितं ततः परस्यान्यस्य सद्भावशङ्काया अनुत्थानात्पराधि-करणस्यानुत्थानम् । किञ्च पराधिकरणे निर्विशेषस्य ब्रह्मण एव पारम्यं व्यवस्थापितं चेत्तदनन्तरस्य फलाधिकरणस्यासङ्गतिश्च । तत्र हि पूर्वाधिकरणे परमत्वेन व्यवस्थापितं 'अत'इति परामृश्य सर्वफलप्रदत्वं तस्य समर्थ्यते **'फलमत उपपत्ते'**रिति । नहि निर्वि-शेषस्य सर्वफलप्रदत्वं परेषामप्यभिमतम् । सर्वेश्वरस्यैव हि सर्वफलप्रदत्वमनुमन्यते तैरपि । तत् सर्वेश्वरस्यैव परमत्वं परब्रह्मत्वं च स्वरसगम्यं बादरायणीयेषु ब्रह्मसूत्रेष्विति ध्येयम् ॥

ज्ञानमात्रं निर्विशेषं ब्रह्मेति च न सूत्रकृतो हार्दम् । मुक्तस्य स्वरूपं कीदृशं ? किं चिति-तन्मात्रम्, उत गुणाष्टकविशिष्टमिति वितर्क्य **'एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायण'** इति ज्ञानरूपस्यैवापहतपाप्मत्वसत्यकामत्वादिगुणाष्टकं स्वरूपमिति व्यवस्था-पयन् कथं परब्रह्मणो ज्ञानमात्रत्वं गुणनिषेधलिङ्गत्वेनाभिमन्येत वा सूत्रयेत् । अतो ज्ञानमा-त्रत्वं कार्त्स्न्येन ज्ञानस्वरूपत्वं जडप्रत्यनीकत्वरूपं ब्रह्मणोऽसूत्रयत् **'आह च तन्मात्र'**-मिति । ज्ञानश्रुतिः प्रकाशगुणयोगमात्रमाह जडव्यावर्तकं न तु गुणान्तरनिषेधमिति सूत्राशयः । ज्ञानस्वरूपस्यैव परस्य ब्रह्मण अनन्तज्ञानानन्दादिगुणयोगो भागवते प्रोच्यते **"भक्तिं**

**लब्धवतः साधोः किमन्यदवशिष्यते । मय्यनन्तगुणे ब्रह्मण्यानन्दानुभवात्मनि॥"** इति । तज्ज्ञानश्रुतिर्न गुणनिषेधिका । निर्गुणश्रुतिस्तु सत्त्वादिप्राकृतगुणनिषेधपरेति निर्णीतं महर्षिभिः—**'योऽसौ निर्गुण इत्युक्तः शास्त्रेषु जगदीश्वरः । प्राकृतैर्हेयसंयुक्तैर्गुणैर्हीनः स उच्यते ॥'** इति । तद्भगवान् बादरायणोऽपि परमर्षिर्न श्रौतमार्थं वा गुणनिषेधं सूत्रयामासेति परमार्थः । ज्ञानश्रुतिसिद्धप्रकाशधर्मवत्सर्वेऽपि शुभगुणाः परस्य ब्रह्मणोऽङ्गीकार्यास्तत्तद्गुणविधायकवाक्यावैयर्थ्यायेति चोक्तं **'प्रकाशवच्चावैयर्थ्यात्'** इति । **'दर्शयति चाथो अपि स्मर्यते'** इति च कात्स्न्र्येन श्रुतिस्मृतिगणो ब्रह्मणो हेयप्रत्यनीकत्वं सकलकल्याणगुणाकरत्वं चाहेत्याह । परब्रह्मसाक्षात्कारे च ज्ञानत्वानन्दत्वादेरिव सर्वब्राह्मगुणविभूतेः प्रकाशोऽविशिष्टो विदुषामिति च **'प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासा'**दिति समार्थिथत् । **'अतोऽनन्तेन तथाहि लिङ्ग'**मिति चानन्तशुभविशिष्टत्वसमर्थनेनोभयलिङ्गरूपहेतुसिद्धेः स्थापकम्, न तु ब्रह्मैक्यस्य । तथा सति हि 'अतोऽनन्तेन दर्शना'दित्येव साधीयसी सूत्रशैली । प्रकृतपरमसाध्यसाधकहेतोरसिद्धिशङ्कापरिहरणेन समर्थनं च नावश्यमधिकरणान्तरेणैव कार्यमिति नियमः । प्रकृतसाध्यसिद्धिशेषतया प्रकृताधिकरण एव तस्य सङ्गतेरिति च सुधीभिरवसेयम् । मुक्तस्येव ज्ञानमात्रस्यापि ब्रह्मणोऽपहतपाप्मत्वादिगुणाष्टकसम्भवमनुमन्यमानः नोभयलिङ्गं निषेधति स्म **'न स्थानतोऽपी'**ति सूत्रे । अपहतपाप्मत्वादिगुणाष्टकस्यैवोभयलिङ्गरूपत्वात् । किन्तु सर्वत्रावस्थितिप्रसक्तं दोषमेव उभयलिङ्गेन हेतुना । आद्यसूत्रानुसारेण वृद्धिह्रासादिदोषराहित्यमेव **'वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्चे'**ति सूत्रेऽपि विवक्षितम् । पूर्वसूत्रान्नञोऽनुवृत्तिरपि न दोषाय, **'शारीरश्चोभयेऽपि हि भेदेनैनमधीयत'**इति सूत्रे पूर्वसूत्रतो नञमनुवर्त्यैव शङ्करभगवत्पादैरपि व्याख्यातत्वात् । प्रकृतेऽपि तथा संभवात् । **'अंबुवदग्रहणात्तु न तथात्व'**मित्यत्र हि सूर्यदृष्टान्तेन निर्दोषत्वं ब्रह्मणि न शक्यवचनम् । सूर्यस्य तत्र तत्रोपाधावनवस्थितेः । ब्रह्मणस्तु सर्वत्रावस्थितेरिति शङ्कोद्भाविता । तन्निरासकमिदमवतीर्णं सूत्रं **'वृद्धी'**त्यादि । न सर्वांशेन दृष्टान्तः, अपि तु विवक्षिताकारमात्रेण । निर्दोषत्वमेव दृष्टान्तोपजीव्यम् । अत एव च वस्तुतोऽवस्थितस्याकाशस्यानवस्थितस्य सूर्यस्य च ब्रह्मणि निदर्शनत्वं स्मृतम् । आकाशसूर्यरूपदृष्टान्तद्वयसामञ्जस्यं चैवमेव सङ्घटीतीति सूत्रकृदाशयः । दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यादित्यर्थश्चेद्विवक्षितस्तर्हि निरर्थकमापद्येतोभयपदं सौत्रम् । किञ्च सोपाधिकं च साकारत्वं नेति प्रथमं निषिध्य सोपाधिकविशेषव्यवस्थापने पूर्वविरोधोऽपि प्रसज्यते । परमार्थतः साकारत्वं न, इति तूत्सूत्रम् । **'नेति नेति'** इति श्रुत्याऽपि न श्रौतदिव्यगुणविग्रहविभूतिनिषेधः, किन्तु कतिपयतदुत्कीर्तनप्रसक्तेयत्तानिषेध एवेति च **'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय'** इति स्पष्टमुदैरिरत्सूत्रकारः । परमते तु प्रकृतैतावत्त्वमिति भावप्रत्ययस्य वैयर्थ्यम् । 'ततो ब्रवीति च भूय' इति च गुणरूपविभूत्यादिपरिच्छेदनिषेधोपष्टम्भकतयाऽनुक्तविशेषान्तरसङ्ग्रहण एव समुचितः । अन्यथा सौत्रभूयःपदवैयर्थ्यम् । परमते श्रौतेऽन्यत् परमित्यत्रान्यतरपदवैयर्थ्यं च । सर्वविशेषनिषेधेऽनन्तरं नामनिर्देशोऽपि श्रौतो न घटते **'अथ नामधेयं**

**सत्यस्य सत्य**'मिति । ब्रह्मणोऽन्यदुत्कृष्टं नास्तीति सिद्धान्त्यभिमते त्वर्थे ब्रह्मण एव पारम्यव्यवस्थापकमिदं नाम सङ्गच्छते । अतः श्रुतिसूत्रेषु न ब्राह्मनामरूपगुणविभूतिनिषेध इति विभाव्यम् । '**मायामात्र**' त्विति तु स्वाप्नार्थपरम् । न जाग्रत्पदार्थपरम् । स्वाप्नज्ञानवैलक्षण्यं च जाग्रज्ज्ञानानां व्यवस्थापयन् सूत्रकृत्कथमिव स्वाप्नवन्मायामात्रत्वं जागरप्रपञ्चस्याभ्यनुजानीयात् । मायामात्रत्वमपि न मिथ्यात्वेन । किन्तु विचित्रत्वेनैश्वरैकसृज्यत्वसम्भवमभिप्रेत्योपवर्णितम् । ईश्वरसृज्येषु हि जीवकर्तृत्वसम्भावनानर्हेषु मेघोदयादिषु मायाशब्दः प्रयुज्यते । न तु रज्जुसर्पादिषु भ्रान्तेषु । किञ्च जागरप्रपञ्चस्यापरमार्थत्वं न कुत्रापि ब्रह्मसूत्रे समर्थितं; किन्तु जीवस्येव परमात्मनियाम्यत्वधार्यत्वशेषत्वांशत्वाद्येव '**द्युभ्वाद्यायतनं स्वशब्दात्**' '**अक्षरमम्बरान्तधृतेः**' इत्यादौ । श्रुतिषु च चेतनाचेतनात्मकनानाविधप्रपञ्चस्य ब्रह्मात्मकत्वं निरूप्याब्रह्मात्मकस्वनिष्ठनानात्वमेव निषिद्धं तत्रतत्र '**सर्वं तत्परादाद्योऽन्यत्रात्मनः सर्वं वेद**'त्यादौ । परमात्मनोऽन्यत्रेति विवक्षायां अन्यत्रेति त्रल्प्रत्ययस्य वैयर्थ्यम् । 'मोक्षे च स्वनिष्ठज्ञातृज्ञेयज्ञानकरणादिदर्शननिषेध एव कृतो '**यत्र हि द्वैतमिव भवती**'त्यत्र । भेददर्शनमेव मुक्तौ नास्तीति चेत्सर्वदर्शनश्रुतिविरोधः '**सर्वं ह पश्यः पश्यती**'ति । एतेन '**द्वैताद्वै भयं भवती**'त्यपि व्याख्यातम् । स्वनिष्ठभेददर्शनस्यैव भयहेतुत्वात् । सर्वप्रकारकं ब्रह्मैकमेव पश्यतो हि न भयशोकमोहादेः प्रसक्तिः । तथा चाभिविश्रुतं '**सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत**' '**यत्र सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र कः शोकः को मोह एकत्वमनुपश्यत**' इत्यादावित्यन्यत्र विस्तरः । तदेवं समस्तचिदचिच्छरीरकः परमात्मा नारायण एव परब्रह्मत्वेन परमतत्त्वत्वेन च सूत्रकृद्विवक्षित इति स्थितम् ।

यन्निःश्रेयससाधनं तदेव परमं हितमामनन्ति सन्तः । तत एव हि भवभयनिवृत्तिः, आत्यन्तिकदुःखनिवृत्तिः, निरतिशयानन्दप्राप्तिश्च । तच्च कीदृशं भगवतो बादरायणस्य विवक्षितमित्यद्य परामृशामः—तृतीयेऽध्याये तृतीये चरणे उपनिषदधीतानामक्षरदहरादिब्रह्मविद्यानां स्वरूपभेदादि विचार्य सर्वासामविशिष्टफलत्वेन विकल्पं काम्यविद्यावैलक्षण्यं च सूत्रयामास । विचारितानां ब्रह्मविद्यानां मुक्तिफलत्वं च संसूचयति स्म । यद्यप्युद्गीथप्राणादिविद्या अपि विचारिता अत्र प्रतीकालम्बना मोक्षान्यफलाः प्रसङ्गतः । तत्र कासाञ्चिद्ब्रह्मविद्योपयोगोऽप्यभिप्रेतः । सत्यज्ञानानन्दत्वादि ब्रह्मविद्यास्वनुसन्धेयस्य परब्रह्मण एकत्वात्तत्स्वरूपनिरूपकं सर्वत्रानुसन्धेयमित्याह च '**आनन्दादयः प्रधानस्ये**'ति । तद्दहरादिविद्यानामपि परब्रह्मविद्यात्वं स्थितम् । '**कामादीतरत्र तत्र चायतनादिभ्य**' इति छान्दोग्ये दहरविद्यायां श्रुतानां सत्यकामत्वादीनां वाजसनेयकप्रोक्तदहरविद्यायामप्यनुसन्धेयत्वं सूत्रयन् भगवान् बादरायणो परविद्यात्वेन पराभिमतामपि तां सगुणविषयां मन्यते । आनन्दादयो भावरूपा अदृश्यत्वादयोऽभावरूपाश्च परब्रह्मविद्यायां सर्वस्यामनुसन्धेया धर्मा इति भगवत्पादैरेवोक्तमपि । अस्याश्च ब्रह्मविद्याया सर्वाश्रमसाधारण्यं '**कृत्स्नभावात्तु गृहिणोपसंहार**' इत्यभिहितम् । यज्ञादितत्तदाश्रमधर्माङ्गिकत्वं शमदमाद्यङ्गकत्वं चास्याः '**सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्**' '**सहकारित्वेन च**' '**शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तेषामप्यवश्यानुष्ठेयत्वा**'दिति सूत्रितम् । अत्र तत्तदाश्रमधर्मेश-

मादिसमुच्चयो विवक्ष्यते स्म । शमादेरविहिताप्रतिषिद्धनिषिद्धानर्थकव्यापारविषयत्वान्न तत्तद्धर्मेण समुच्चये कोऽपि विरोधः। शमादेर्यज्ञादेश्चान्तरङ्गबहिरङ्गभावो ध्यानकालेऽपि शमाद्यनुवृत्तियज्ञाद्यननुवृत्तिमात्रतः। उपासनाव्यतिरिक्तकाल एव हि विहितकर्मानुष्ठानम्। **'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने'**ति श्रुतौ सन्नन्तश्रवणाद्धियोत्पत्तावेव यज्ञादेः कारणत्वम्। न तु आरादुपकारकत्वं प्रयाजादेरिव याग इति भगवत्पादैर्व्याख्यातम्। विविदिषां प्रत्येवाङ्गत्वं न तु विद्यायामिति तु न सम्यक्। वेदानुवचनतपआदेर्ब्रह्मविद्यायामेव साक्षात्कारणत्वाद्यज्ञादेरपि तत्सहपठितस्य विद्यायामेवोपयोगस्य साक्षाच्छ्रुत्यभिमतत्वात्। विद्याया अहरहरावर्तनीयत्वात्तत्सिद्ध्यर्थं कर्मणोऽपि विद्यावता कार्यत्वात्। केनोपनिषदि च यज्ञादेः शमादेश्च विद्याप्रतिष्ठापकत्वमुक्तम्। तद्विद्याङ्गत्वमेव यज्ञादेः शमादेश्चेति दिक्। ब्रह्मविद्यायामधिकृतानां निषिद्धनिवृत्तिरप्यभिप्रेता **'अनाविष्कुर्वन्नन्वया'**दिति। अभक्ष्यभक्षणादेश्चापद्विषयत्वम्। नैष्ठिकव्रतभ्रष्टानां ब्रह्मविद्यानधिकारोऽपि सूत्रितः। एवं निषिद्धपरिहारविहितानुष्ठानसापेक्षां शमदमाद्यात्मगुणोपेतविशिष्टाधिकार्यां ब्रह्मविद्यां मोक्षसाधनत्वेन प्रास्तौषीत्तृतीयेऽध्याये सूत्रकारः।

मोक्षसाधनीभूता चेयं ब्रह्मविद्याऽसकृदावृत्तज्ञानलक्षणोपासनात्मिकेति च **'आवृत्तिरसकृदुपदेशा'**दिति सूत्रेण निरधारि। विद्युपास्त्योरेकार्थता च भगवत्पादैरेव स्पष्टमुदीरिता। आसनादियोगाङ्गानि ब्रह्मविद्योपयोगितया प्रतिपादयंश्च ध्यानलक्षणां तां मनुते। **'नायमात्मे'**त्यादिश्रुतौ भक्तिमतैवोपासकेन परमात्मा लभ्य इति कीर्तनाद्भक्तिरूपापन्नत्वमपि ध्यानस्य विवक्षितं सूत्रकृतः। ध्यानस्यैव परिपाकावस्था दर्शनसमानाकारा परभक्तिशब्दिता। तद्दर्शनसमानाकाराऽविच्छिन्नस्मृतिसन्तानलक्षणोपासनात्मकब्रह्मज्ञानमेव मोक्षसाधनं सूत्रकृदभिप्रैति। न तु तत्त्वमसिवाक्यजन्यवाक्यार्थज्ञानमात्रम्। समाधिकाले हि न वाक्यानुसन्धानादेः प्रसक्तिः। न च श्रवणमनननिदिध्यासनैः संस्कृतचेतसो महावाक्यानुसन्धानतो ब्रह्मात्मैक्यसाक्षात्कारो भवति, स एवाविद्यानिवर्तकः, तच्छेषतया च ध्यानादिविधिरिति वाच्यम्। **'ततस्तु तं पश्यति निष्कलं ध्यायमान'** इत्यादौ ध्यानस्यैव साक्षाद्दर्शनसाधनत्वस्य स्वरसतः प्रतीतेरन्तराले वाक्यानुसन्धानादिकल्पनस्यायुक्तत्वात्। वामदेवस्य गर्भस्थस्यैव सर्वात्मभावदर्शनं च प्राक्तनयोगाभ्यासप्रभवमेवेति युक्तिमत्, न तु वाक्यजन्यमिति। न चैवमपि दर्शनमेव मोक्षसाधनं, न तु ध्यानमिति वाच्यम्। दर्शनस्योपासनाफलकोट्यन्तर्भाव एव, दर्शनसमानाकारोपासनस्यैव तु मोक्षसाधनत्वं **'ध्रुवा स्मृतिः, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' 'भिद्यते हृदयग्रन्थिः.... तस्मिन् दृष्टे परावरे'** इति श्रुतिद्वयैकार्थ्यादित्युपगमात्। जातेऽपि दर्शनेऽनन्तरमपि स्मृत्यभ्यासमेव यावदायुषं कुर्यादिति हि आप्रयाणादनुवर्तनीयत्वं सूत्रयामास। ब्रह्मविद्याया ध्यानलक्षणतामासनाद्यङ्गजातं च निरूप्यानन्तरं तत्फलनिरूपणात्तन्मध्यपतितस्याऽऽप्रयाणादिति सूत्रस्यापि ब्रह्मविद्याविषयत्वमेव युक्तम्। **'स खल्वेव'**मिति मन्त्रेऽपि यावदायुषं ब्रह्मप्रत्ययावृत्त्या ब्रह्मलोकप्राप्तिरुक्ता। दर्शनं परज्ञानम्, जातेऽपि तस्मिन् परमभक्तिरूपपरिपाकार्थं ब्रह्मोपासनाऽऽवर्तनीया यावदायुषमिति तु सूत्रकृतो हार्दम्। परब्रह्मोपासकस्यापि यावज्जीवमनुस्मरणमन्तिमस्मृतिश्चापेक्षिते इति गीतोपनिषदि च व्यक्तम्। एतेना-

ऽऽविद्यप्रत्यक्षप्रपञ्चभ्रमनिवर्तकत्वमते प्रत्यक्षरूपत्वमपेक्षितं स्याद्ब्रह्मज्ञानस्य, अदृष्टद्वारा बन्धनिवर्तकत्वमते तु दर्शनरूपत्वस्य कोपयोग इत्यपि प्रत्युक्तम्। श्रौतेऽर्थे कैमर्थ्यशङ्काया अप्रसरात्। इतरविषयरागादिविभेदनस्यापि विलक्षणवस्तुदर्शनत एव सम्भवात्। उत्कटप्राप्तीच्छागर्भपरमभक्तिशब्दितध्यानावस्थापरिपाकस्य दर्शनानन्तरभावित्वाच्च दर्शनरूपतायाः सिद्धान्तेऽप्यभिमतत्वात्। एतेन बन्धनिवर्तकं दर्शनं निर्विशेषचिन्मात्रब्रह्मात्मैक्यविषयकमित्यपि प्रत्युक्तम्। आनन्दादिविशेषगुणयोगस्य परब्रह्मणि मुमुक्षुभिरनुसन्धेयत्वेन सूत्रयितुर्ब्रह्मणो निर्विशेषत्वस्यासम्मतत्वात्। परमात्मनोऽवरात्मनैक्यायोगात्। परमात्मनः सर्वेश्वरस्य जीवात्मत अधिकत्वस्य सूत्रकृतैवोपन्यस्तत्वाच्च। तत्स्वान्तरात्मत्वेनाहमिति परमात्मानुसन्धानमेव **'आत्मेति तूपगच्छन्ति ग्राहयन्ति च'**ति सूत्रे विवक्षितम्। पामराः किल देह एवाहमित्यात्मबुद्धिं कुर्वन्ति। विवेकिनस्तु देहव्यतिरिक्तमात्मानमहमित्यवबुध्यन्ति स्वतन्त्रम्। शास्त्रतत्त्वज्ञास्तु स्वस्यापि परमात्मप्रकारत्वं शास्त्रेण निश्चिन्वन्तः स्वस्याप्यात्मानं परमात्मानमेवाहमित्यनुसन्दधते। अहमादिसर्वनाम्नामपि तत्तज्जीवमुखेन परमात्मपर्यन्तत्वं ख्यापयितुमेव च **'तत्त्वमसी'**ति सर्वनाम्ना सामानाधिकरण्यव्यपदेशः सद्विद्योपसंहारे, प्रातिस्विकतया सर्वात्मनः परमात्मनः स्वात्मत्वानुसन्धानार्थं च। **'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद अकृत्स्नो ह्येष आत्मेत्येवोपासीते'**ति श्रुतौ च केवलस्यात्मनः परमात्मनश्चापूर्णत्वम्, विशेषणमात्रत्वाद्विशेष्यमात्रत्वाच्च। जीवं प्रत्यात्मत्वेन परमात्मानुसन्धानमेव तु पूर्णोपासनम्, तथैव मुमुक्षुभिः कार्यमिति चोद्यते। अत्र च विषयवाक्ये परदेवतायाः परमेश्वरस्यैव जीवेनाहङ्ग्रहेण भावनं कार्यमित्युच्यते। न तु निर्विशेषचिन्मात्रब्रह्मणः। जीवेश्वरयोः स्वभाववैलक्षण्यं च परैरभ्युपगतमेव। जीवत्वैश्वरत्वादिविशेषणप्रहाणेनात्ममात्रैक्यभावनं च नैतद्वाक्यस्य स्वरसो वाक्यार्थः। तच्छ्रीभाष्यप्रक्रिययैवाहङ्ग्रहेण भावनं श्रुतिसूत्राभिमतमिति ध्येयम्। एवंविधात्मत्वेनोपासनं यतो विवक्षितम्; अत एव पृथक्त्वज्ञानमोक्षहेतुत्वपरश्रुतिभिरप्यविरोधः, शरीरात्मनोः शेषशेषित्वादिधर्मवैलक्षण्यज्ञानं तत्रोक्तम्, अत्र च शरीरात्मभावसम्बन्धप्रयुक्तात्मत्वानुसन्धानमिति। **'अविभागेन दृष्टत्वा'**दिति च फलदशायामयुतसिद्ध्यानुभव एव सूच्यते। अविभागशब्दो हि न केवलमभेद एकान्तगतिः। अपृथक्स्थितिसाधारणत्वात्। वियुक्तयोर्द्वयोर्विभक्तप्रत्ययो भिन्नयोरपि गाढसम्बद्धयोरविभक्तप्रत्ययश्च हि लोकदृष्टः। तत् मुक्तावपि ब्रह्मस्वरूपैकतापत्तिर्न सूत्रकृतो विवक्षितेति सिध्यति। **'ब्रह्म वेद ब्रह्मैव भवती'**ति श्रुत्युक्तं च ब्रह्मभावं ब्राह्मगुणाविर्भावनिबन्धनं मुक्तस्यानुमन्यते भगवान् बादरायणः। एतेन अविद्यानिवर्तकं निर्विशेषचिन्मात्रब्रह्मात्मैक्यापरोक्षज्ञानं तत्त्वमसिवाक्यजन्यमेवेत्यपि प्रत्युक्तम्। वाक्यस्यापरोक्षधीजनकत्वस्यादृष्टत्वात्। अहमर्थस्य स्वतोऽपरोक्षत्वेऽपि ब्रह्मात्मकत्वस्य तत्र धार्मिकत्वादेरिव परोक्षत्वात्। ननु योगबलाद्ब्रह्मात्मकत्वस्य प्रत्यक्षत्वसंभवः। तथा च योगाभ्यासजनितसंस्कारसहकृताद्वाक्यादपरोक्षसम्भव इति चेत्। तथा सति योगाभ्याससंस्कृतमनस एवापरोक्षहेतुत्वसंभवेऽपरोक्षहेतुत्वस्य वाक्ये तत्सहकारित्वस्य संस्कृतस्वान्ते च कल्पनाया अत्यन्तगुरुभूतत्वात्। न च जीवब्रह्मणोरनन्यत्वात्तत्त्वमसिवाक्याद्ब्रह्मात्मैक्यसाक्षात्कारः श्रवणादेव जातः परमविशदः,

अनादिभेदवासनातो विशदप्रकाशप्रतिबन्धात् । श्रवणमननिदिध्यासनैर्भेदवासनायां निरस्तायां तु तत एव वाक्यादपरोक्षविशदधीरुदेतीति वाच्यम् । अनादिभेदवासनाया अल्पकालार्जिताभेदवासनया दृष्टद्वारा निरासायोगात् । अनन्ताभेदवासनया निवृत्त्युपगमे चानिर्मोक्षपर्यवसानात् । अदृष्टद्वारा निरासोपगमे च भेदवासनायाः सत्यत्वप्रसङ्गात् । अविद्याकलङ्करहितत्वमेव वैशद्यम्, विशदावभासाच्चाविद्यानिवृत्तिरित्यन्योन्यसंश्रयाच्च । भूयोऽविद्यांशनिवृत्तिर्वैशद्यम्, अविद्याया निःशेषनिवृत्तिः विशदसाक्षात्कारादिति कल्पनाया अपि भूयोऽविद्यांशनिवृत्तेस्तत्त्वसाक्षात्कारतः पूर्वं दुर्निरूपत्वेन परैरशक्यक्रियत्वात् । यच्च तत्त्वमसीति वाक्यस्यापरोक्षधीजनकत्वे **'शास्त्रदृष्ट्या तूपदेशो वामदेववत्'**दिति सूत्रं हठात्प्रमाणीक्रियते परैः; तदप्यनुपपन्नम् । न हि केवलं तत्त्वमसीतिवाक्यं शास्त्रम् । किन्तु सर्वमेव वेदान्तवाक्यम् । तच्च भेदाभेदघटकश्रुतिसमुदायलक्षणम् । तस्य च दृष्टित्वमतीन्द्रियार्थानां स्फुटप्रकाशकत्वमात्रेण । लौकिककविसमयसिद्धं चेदम् । **'कामं कर्णान्तविश्रान्ते विशाले तस्य लोचने । चक्षुष्मत्ता तु शास्त्रेण सूक्ष्मकार्यार्थदर्शिना ॥'** इति हि कविकुलतिलकः कालिदासः । वैदिकसमयसिद्धं चेदं **'श्रुतिस्मृती चक्षुषी द्वे जगतः शाश्वते मते । एकया रहितः काणो द्वाभ्यामन्धः प्रकीर्तितः ॥'** इति हि स्मरन्ति महर्षयः । तत्सर्वश्रुतिस्मृतिपरामर्शजन्येन सर्वस्य ब्रह्मात्मकत्वविज्ञानेन मामुपास्स्वेतीन्द्रस्योपदेशः प्रतर्दनं प्रति इति सूत्रकृदाशयः । इन्द्रस्य ब्रह्मात्मकत्वविशदसाक्षात्कारः प्रजात इत्यत्र च न सुदृढं प्रमाणं किञ्चित् । विशदज्ञानमात्रं तस्य शास्त्रतो जातमित्यत्र तु न वैमत्यम् । वामदेवदृष्टान्तोऽपि न सर्वांशेन । अहन्त्वेन सर्वात्मस्वात्मपरमात्मानुभवमात्रे । तस्य हि गर्भस्थस्य योगिनः स साक्षात्कारो वाक्यजन्य इति न प्रामाणिकम् । स्वानुभवातिरेकेण उपदेशोऽपि तेन परान् प्रति कृत इत्यत्र च न प्रमाणम् । वामदेवनिदर्शनं चेदमुपलक्षणं सूत्रकृतो विवक्षितम् । अत एव भगवता श्रीभाष्यकृता प्रह्लादोऽपि निदर्शनत्वेनोपात्तः । प्रह्लादस्य हि परानसुरपुत्रान् प्रत्युपदेशस्तत्त्वज्ञानिनः **'सर्वगत्वादनन्तस्य स एवाहमवस्थितः । मत्तः सर्वमहं सर्वं मयि सर्वं सनातने ॥'** इत्यादिः । सूत्रे वामदेवनिदर्शनं तु श्रौतत्वात्कृतं श्रौतदार्ष्टान्तिकानुगुण्याय । विचक्षणाः स्वयमेव निदर्शनान्तरमूहिष्यन्तीति च भगवान् बादरायणो मनुते । तदेतत्सूत्रं न वाक्यजन्येऽपरोक्षे प्रमाणमित्यन्यत्र विस्तरः ।

तद्वाक्यजन्यज्ञानतो विलक्षणं ध्यानोपासनादिशब्दवाच्यं परभक्तिशब्दितं ब्रह्मज्ञानमेव मोक्षसाधनमिति सूत्रकृतो हार्दम् । परस्य ब्रह्मणश्च चेतनविभूतिकत्वेनाचेतनविभूतिकत्वेन स्वासाधारणधर्मप्रकारेण चोपासनमिति त्रिविधोपासनं पूर्णोपासनं मोक्षसाधनं मन्यते भगवान् बादरायणः । अस्याश्च मोक्षसाधनभूताया ब्रह्मविद्यायाः परब्रह्मपुरुषोत्तमाराधनरूपत्वमेतत्प्रीतपरमात्मप्रसादतश्चास्य परब्रह्मसाक्षात्कारादिलक्षणं मोक्षफलं चासूसुचत्सूत्रकारः **'अपि संराधने प्रत्यक्षानुमानाभ्या'**मित्यादौ । निर्विशेषचिन्मात्रब्रह्मात्मैक्यज्ञानं चेद्ब्रह्मविद्या मुक्तिसाधनम्, तेन कस्य प्रसादनम् । न तावत्सर्वेश्वरस्य, तदगोचरत्वात् । नापि निर्विशेषब्रह्मणः, तस्य प्रसादायोगात् । तत्पराभिमतां ब्रह्मविद्यां न सूत्रकारोऽनुमन्यत इति ध्येयम् । आनन्दवल्ल्यां च **'स यश्चायं पुरुषे यश्चासावादित्ये स एकः स य एवंवित्'** इत्यादिना हृदयगुहायां निहितस्य जीवान्तरात्मनः परमात्मन उपासनमेवादित्यमण्डल-

स्योपासनवन्मोक्षसाधनत्वेनाभिहितम्। एतेन **'यो वेद निहितं गुहाया'**मिति मन्त्रवर्णांशो व्याख्यातः। गुहा चेयं न हिमवतो विन्ध्यस्य वा। किन्तु पुरुषशरीरान्तवर्तिनी हृदयगुहा। तत्र च हिरण्मयरूपः पुण्डरीकाक्षः पुरुषोत्तम उपास्य इत्यतिदेशेन गम्यते। तत्पुरुषोत्तमध्यानमेव संसारभयनाशनं परमं हितमिति स्थितम्। अन्यत्र निर्णीतं चेदम्—**'आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः। इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा॥'** इति। तदेव ब्रह्मसूत्रेष्वपि व्यवस्थापितं भगवता बादरायणेनेत्यव्याकुलम्।

अथ परमं पुरुषार्थं किञ्चिदिव व्याकुर्मः। अस्माद्भवबन्धनाज्ञानाविधानन्तदुःखानुबन्धान्मोक्ष एव परमः पुरुषार्थ इति सर्वेऽपि दार्शनिका आमनन्त्यैकस्वर्येण। स च मोक्षोऽत्यन्तदुःखनिवृत्तिमात्ररूप इति केचित्। निरतिशयानन्दानुभवगर्भः सर्वदुःखानुबन्धनिवृत्तिलक्षण इति तु त्र्य्यन्तसिद्धान्ततत्त्वनिष्णाता उशन्ति। तत्रापि अनवच्छिन्नानन्दरूपपरब्रह्मतापत्तिरेव मोक्ष इति केचित्। अनवच्छिन्नानन्दपरब्रह्मानुभव एव स ब्रह्मसायुज्यं प्रतिपन्नस्य मुक्तस्येति परे। स्वरूपभूतैर्ब्राह्मगुणैराविर्भावं चिद्रूपस्यात्मनः सूत्रयन् मुक्तौ सायुज्यमभिप्रैति। यथा सलोकत्वादि समानलोकप्राप्त्यादिलक्षणम्, तथा सायुज्यमपि समानधर्मप्राप्तिलक्षणमेव युक्तिमत्। युज्यत इति युक् धर्मः। न तु स्वरूपैक्यम्। क्वचिदेकत्वव्यवहारस्तु समानधर्मान्वयनिबन्धनः 'अयमेको व्रीहि'रितिवत्। एतेन **'स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवती'**ति मुण्डकश्रुतिरपि व्याख्याता। जीवात्मनः स्वरूपानुबन्धिनोऽप्यपहतपाप्मत्वादयो ब्राह्मगुणा मायातत्कार्यान्वयेन तिरोहिता मायान्वयनिवृत्तावाविर्भवन्ति परं ब्रह्मोपसम्पन्नस्य परंब्रह्म तु नित्योद्भूतगुणकमिति तु सूत्रकृदभिमतो विशेषः। ब्रह्मीभूतस्य मुक्तात्मनः परब्रह्मभूतस्य परमात्मनश्च वैलक्षण्यमप्यनेन सिद्धम्। **'परं ज्योतिरुपसम्पद्ये'**ति श्रुतौ उपेत्युपसर्गश्च ब्रह्मसामीप्यमुशति। सामीप्यं चेदं सर्वव्याप्तस्य ब्रह्मणो देहोत्क्रमणानन्तरकालिकं मुक्तस्य **'अस्माच्छरीरात्समुत्थाये'**ति विदधती भगवती श्रुतिरप्राकृताविकारिदेशविशेषं तत्रासाधारणरूपेण स्थितिं च तस्याभ्यनुजानाति। केनकठप्रश्नमुण्डकच्छान्दोग्यबृहदारण्यककौषीतक्यादिषु मुक्तकण्ठमभिहितं चैतत् दिव्यधामादि। ज्योतिरधिकरणे च संसूचितमेतत्सूत्रकृतेत्यब्रूमहि। **'विकारावर्ति च तथा हि स्थितिमाहे'**ति सूत्रे भगवत्पादैरपि परमेश्वरस्य मुक्तैश्वर्यनिर्वाहकस्य नित्यं दिव्यं धामास्तीति भाषितम्। देहात् समुत्थानं परब्रह्मसम्पत्तिश्च बौद्धे इति परे। साक्षादेव तु ते परब्रह्मोपासकस्य विदधाति श्रुतिः। सूत्रकारश्च **'समाना चासृत्युपक्रमा'**दिति विदुषोऽप्यविदुष इव मुख्यां निष्क्रान्तिमसुसूत्रत्। मूर्धन्यनाड्या निष्क्रमणं विदुषो नाड्यन्तरेण निष्क्रमणमविदुष इति तु विशेषं स्पष्टमुदैरिरच **'तदोक'** इत्यादिसूत्रे। अर्चिरादिकां गतिं च ब्रह्मोपासकान् प्रत्यविशेषेणान्वाशास्त। **'कार्यमपरं ब्रह्म नयत्यर्चिरादि'**रिति बादरिमतमादावुपन्यस्य **'परमेव ब्रह्मे'**ति जैमिनिपक्षमनन्तरमुपपाद्य स्वाशयमन्ते व्यञ्जयति स्म **'अप्रतीकालम्बनान् नयतीति बादरायण'** इति। केवलस्य कार्यस्यापि ब्रह्मप्रतीकत्वात्प्रतीकालम्बनत्वमेव तदुपासनस्य। परब्रह्मोपासनस्य ब्रह्मात्मकत्वेन स्वात्मोपासनस्य चाप्रतीकालम्बनत्वं ब्रह्मणोऽप्युपासनकर्मत्वात्। उभयोपासकान् नयतीति **'तद्य इत्थं विदुः ये चेमेऽरण्ये श्रद्धातप इत्युपासते, तेऽर्चिषमभिसंभवन्ती'**त्यादि श्रुतिसिद्धं सूत्रयंश्च जैमिनेः परमेवेत्यवधारणमेव निराचिकीर्षति, नतु परब्रह्मोपासकस्यार्चिरादिकां गतिम्। कार्यप्राप्तिपक्षो बादरेः

सिद्धान्तः, परप्राप्तिपक्षो जैमिनीयः पूर्वपक्षः। पूर्वपक्षेणैवाधिकरणसमापनं चेति भगवत्पादा मन्यन्ते। सूत्रकाररीतिपर्यालोचकाश्च नेदमनुमोदन्ते। यत्र सिद्धान्तोपक्रमः, अथ च पूर्वपक्षवर्णनम्, तत्रानन्तरं पूर्वपक्षनिराकरणेन स्वमतस्थापनमिति हि सूत्रकारशैली। विरुद्धपक्षभेदे मुन्यन्तराभिमते उपन्यस्ते अन्ततः स्वमतख्यापनमिति च। अन्ततः स्वमताख्यापने तु विरुद्धेष्वन्तिममेव स्वमतत्वेनाभिप्रैतीति च सुगमम्। तदत्र **'अप्रतीकालम्बनान्नयतीति'** सूत्रमेव कार्याधिकरणसिद्धान्तसूत्रमिति स्वरसगतिः।

ननु परंब्रह्मोपासीनस्य न गत्यपेक्षा, व्यापकब्रह्मप्राप्तेरिहैव सुलभत्वात्। तथा च कठश्रुतिः **'अथ मर्त्योऽमृतो भवति अत्र ब्रह्म समश्नुते'** इति। तत्सगुणब्रह्मप्राप्तिफलैवार्चिरादिगतिरिति चेत्। अत्र ब्रूमः। कठवल्ल्यां हि अङ्गुष्ठमात्रहृदयायतनपरमपुरुषोपासकस्य मूर्धन्यनाड्योत्क्रमणपूर्वकममृतत्वमाम्नातं **'शतं चैका च'**त्यादिमन्त्रे। अङ्गुष्ठमात्रपुरुषप्रतिपादनान्तर्गतश्चायं मन्त्रः। अङ्गुष्ठमात्रस्य च परमपुरुषत्वं परब्रह्मत्वं च निर्णीतं सूत्रकृता। **'तं विद्याच्छुक्रममृत'**मिति चात्रैव तस्य परब्रह्मत्वमभिव्यक्तम्। तत्संदंशनयात्परमपुरुषोपासकमधिकृत्यैव मूर्धन्यनाडीनिष्क्रमणामृतत्वप्राप्तिपरा श्रुतिः प्रवृत्तेति ज्ञायते। परमपुरुषस्यैव परब्रह्मत्वम्, न तु ततोऽन्यत्परं ब्रह्मेति च **'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गति'**रिति व्यक्तमत्रैव। तृतीयवल्ल्यां **'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद'**मिति संसाराध्वपारभूतं संसारादुत्तीर्णैरुपासकैर्गम्यं भगवतः स्थानमस्तीति यदुक्तम्, तदधिगमार्थैव निष्क्रान्तिर्ब्रह्मनाड्या परविद्यावन्तं प्रत्येवाभिधीयत इति समञ्जसम्। **'विमुक्तश्च विमुच्यते'** इति मुक्तिद्वयं यच्छ्रुतम्। तत्राद्या सा देहस्थस्यैवोपासनापरिपाककाले भवित्री। कामादिनिवृत्तिलक्षणा सञ्चितपुण्यपापविनाशलक्षणा उत्तराघाश्लेषलक्षणा च सा परा तु मूर्धन्यनाड्या निष्क्रम्यार्चिरादिपथा दिव्यं परं पुरुषमुपसम्पन्नस्य स्वरूपाविर्भावपूर्वकसदातनब्रह्मानुभवलक्षणेति कठवल्ल्यादिश्रुत्यन्तप्रसिद्धोऽयमर्थः। भगवता बादरायणेन चानेनैव क्रमेण ब्रह्मविदो जीवद्दशायामेव पुण्यपापयोरश्लेषविनाशादि तुरीयस्य प्रथमे निर्णीय द्वितीयतृतीययोरुत्क्रान्तिं मूर्धन्यया नाड्या दिव्यपथा गमनं च विनिरूप्य तुरीये परमां मुक्तिं स्वरूपाविर्भावपूर्वकपरिपूर्णभगवदनुभवलक्षणां व्यवस्थापयति स्म। **'अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते'** इत्यत्र च जीवन्मुक्तिरपराऽऽम्नायते निरुक्तरूपा। सूत्रकृदपि विदुषो गतिविशेषं निरूपयिष्यन् शरीरसम्बन्धेऽदग्धे स्थित एवाऽऽपेक्षिकममृतत्वं श्रुत्युदीरितमित्युदाह **'समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य'**ति। शरीरादावहन्तामतात्यागाद्ब्रह्मानुभवैकप्रावण्याच्च सिद्धोपासनस्य मुक्तत्वमाम्नातमत्र। **'ब्रह्म समश्नुत'** इत्यस्य समाधौ ब्रह्मानुभवतीत्यर्थमन्तरा ब्रह्म भवतीत्यर्थश्च न हृदयङ्गमो विमर्शकानाम्। बृहदारण्यके अकामयमानब्रह्मविद्विषये यदुक्तं **'ब्रह्मैव सन् ब्रह्माप्येती'**ति, तस्यापि ब्राह्मरूपाविर्भाववान् सन् ब्रह्मणि सङ्गतो भवति। ब्रह्मात्मकमेवात्मानमविभागेनानुभवतीत्यर्थः। **'ब्रह्मविद्ब्रह्मैव भवती'**त्यत्रैव तु ब्रह्मैव भवतीति वा ब्रह्माप्येतीत्येव वा श्रूयेत। ब्रह्मैव सन्निति निरर्थकमसमन्वितार्थकं च भवति तदा। तत्रैवाकामयमानमेवाधिकृत्य प्रवृत्ते श्लोकेऽर्चिरादिगतिराम्नाता **'अणुः पन्था विततः पुराणो मां स्पृष्टोऽनुवित्तो मयैव। तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः'** इति। अयं च स्वर्गो लोको विलक्षणः प्राकृताद्ब्रह्मविद्यावद्भिर्मुक्तैः

प्राप्य इति केनोपनिषदि श्रुतं **'यो वा एतामेवं वेद, अपहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठती'**ति । अस्य पथः परब्रह्मप्रापकत्वं च **'एष पन्था ब्रह्मणा ह्यनुवित्तस्तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्चे'**ति । अत्र पुण्यवशाद्ब्रह्मविदां पञ्चाग्निविद्यावतां चार्चिरादिराम्नाता गतिः । स्मरन्ति चार्चिरादिगतिप्राप्यं सूरिभिर्दृश्यं परब्रह्मविदाऽधिगन्तव्यं स्थानं पराशरादयः, **'एकान्तिनः सदा ब्रह्मध्यायिनो योगिनो हि ये । तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः ॥'** इति । ब्रह्मविदोऽपि अब्रह्मविद इव गत्यर्थं **'प्राणास्तस्मान्नापक्रामन्ति, शरीरात्त्वपक्रामन्तीति, न तस्मात्प्राणा उत्क्रामन्ती'**ति माध्यन्दिनशाखायां स्पष्टमनुश्रूयते । शरीरस्योच्छूनतादि तु प्राणोत्क्रमाद्बाह्यवायुपूरणाच्च समानमेव विद्वदविदुषोर्विलोक्यते । **'न तस्य प्राणा उत्क्रामन्ती'**ति श्रुत्या विद्वत्प्राणानुत्क्रममाशङ्क्य पर्यहार्षीत्स्वयमेव सूत्रकारः **'प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषाम्'** इति । समानप्रकरणे शारीरादुत्क्रमणस्य निषेधात्तस्येत्यपि पञ्चम्यर्थ इति सूत्रकृदाशयः । नच शारीरापादानकोत्क्रमणमप्रसक्तमिति शक्यम् । अविद्वद्विषये शारीरात्प्राणोत्क्रान्तिर्भवति न वेति आर्तभागप्रश्नस्योत्तरतया **'नेति होवाच याज्ञवल्क्य'** इति श्रवणाद्ब्रह्मविद्विषये शारीरापादानकोत्क्रान्तिशङ्कायाः संभवदुदयत्वात् । अत्र **'प्रतिषेधादिति चेन्न शारीरात्'** इत्यन्तस्य पूर्वपक्षत्वं **'स्पष्टो ह्येकेषा'**मित्यस्य सिद्धान्तसूत्रत्वं चोशन्ति भगवत्पादाः । पक्षान्तरत्वस्फोरक **'वा' 'तु'** इत्यादिपदाघटितस्य कथं सिद्धान्तसूत्रत्वं भगवद्बादरायणस्याभिमतं स्यादिति च विमृश्यं परीक्षकैः । सूत्रकृतो हि शैलीयं पूर्वपक्षसूत्रानन्तरं सिद्धान्तत्वस्फोरक **'तु'** इत्यादिपदघटितसूत्रप्रणयनमिति । प्रत्युत प्रकृते **'ही'**ति शारीरादित्यस्य समर्थिकां प्रसिद्धिमेवावबोधयतीति स्थितम् । तत् परब्रह्मविद्यावच्छरीरपातं योगमानन्दरूपतया अभ्यस्यन् योगनिष्पत्त्यैव विध्वस्ताश्लिष्टपूर्वोत्तराघः प्रारब्धं भोगेन क्षपयित्वाऽन्त्यकालेऽपि तमेव परमपुरुषं स्मरन्नप्रच्युतपूर्वसंस्कारो देहान्निष्क्राम्यन् हार्दानुग्रहेण विस्पष्टदृष्टब्रह्मनाडीरन्ध्रस्ततो निर्गत्य विद्यासामर्थ्यादर्चिरादिपथा गच्छन् मायामण्डलमतीत्य दिव्ये धाम्नि भगवन्तमुपसंपद्याविर्भूतस्वस्वरूपः सर्वात्मभूतं तमेवात्मत्वेनावलोकयन् तद्गुणविभूतिविस्तारं च कात्स्न्र्येनानन्दरूपतयाऽनुभवन् प्राप्ताव्याहतैश्वर्यः कामान्नी कामरूपी तदनुवर्तनपरः समानभोगस्तेन नित्यानन्तभोगवान् सम्पद्यते मुक्ताविति फलाध्याये परमं पुरुषार्थं निरणैषीद्भगवान् बादरायणः । एतेन सगुणब्रह्मप्राप्तिलक्षणामपरमुक्तिमेव प्रपञ्चयामास तुरीयस्याध्यायस्य तुरीयचरणे, परां मुक्तिं तु ब्रह्मैक्यलक्षणां **'अविभागेन दृष्टत्वा'**दिति सूचितवानिति प्रत्युक्तम् । स्वरूपाविर्भावफलं हि सङ्कल्पादेव यथेष्टसर्जननानातनुग्रहणादि प्रतिपादयन् सूत्रकारो परममोक्षमेवाऽऽन्तं न्यरूपयदिति स्वरसतोऽवगम्यते । स्वशास्त्रप्रमेयपरब्रह्मविद्याफलपरममोक्षनित्यत्वं चान्तिमसूत्रेण निर्धारयन् पुरुषार्थान्तरविलक्षणं परब्रह्मविद्याफलमनुत्तममुत्तममनन्तमनन्तपरब्रह्मगुणानुभवरूपमिति प्रतिपादयन्नेव शास्त्रं परिसमापितवानिति तु रसिकैर्विभाव्यम् । सगुणब्रह्मातिरिक्तं निर्गुणं ब्रह्म च न सूत्रकृतो हृदयङ्गमम् । षड्विधं हि तात्पर्यलिङ्गं सगुण एवोपलभ्यते ब्रह्मसूत्रेषु । तथा हि ब्रह्मशब्देनोपक्रमः गुणैरपि बृहत्त्ववाचिना, सगुणप्राप्तिफलेनोपसंहारः, ब्रह्मगुणानामेव प्रत्यधिकरणमितरवैलक्षण्यज्ञापकानामभ्यासः, अनवच्छेद्यस्वरूपगुणविस्तारस्य तस्य शास्त्रयोनित्वसूत्रणेनाऽपूर्वता, परमपुरुषार्थरूपतायाः मुक्ता-

नन्दनस्य तस्य मुक्तप्राप्यस्य व्यवस्थापनात् फलम्, सकलजगदेककारणत्वसर्वेश्वरत्वसर्वात्मत्व-नित्यनिरुपाधिकहेयप्रत्यनीककल्याणाकरत्वसर्वपरत्वसर्वफलप्रदत्वमुमुक्षुध्येयत्वमुक्तप्राप्य-त्वादिप्रतिपादनादर्थवादः, 'नेति नेती'त्यादि निषेधानां परिच्छेदादिगोचरत्वव्यवस्थापक-वाक्यतर्कादिनिरूपणादुपपत्तिश्चेति षड्विधतात्पर्यलिङ्गेन च स्फुटतया ब्रह्मसूत्रेषूपलभ्यमानेन सगुण एव तात्पर्यमुन्नयामः सूत्रकृतो भगवतो बादरायणस्य ।

यद्यपि स्वस्वमतानुसारेण सूत्राणि नीयन्ते स्म भगवद्भिः तत्तद्भाष्यकारैः । स्वस्वमत एव सूत्रस्वारस्यमभिमन्यते च तत्तदाचार्यमतानुयायिभिः 'कामी स्वतां पश्यती'ति नयात् । नात्र किञ्चित्प्रतिक्षेप्यं मन्दमतिभिः । तथाऽपि स्वमत एव स्वारस्यं ब्रह्मसूत्राणामिति परे वादिनो हि विलसन्तितराम् । तान् प्रति विशिष्टाद्वैते खलु सूत्राणां स्वरसगतिरिति ज्ञापयितुमेतद्दिक्प्रदर्शनं व्यधायि । **सर्वज्ञोक्तिषु को दोषमुद्भावयितुमीश्वरः । स्वस्वसिद्धान्तगा श्रद्धा केवलं त्वपराध्यति ॥**

स्वपरमाचार्यत्वेन भगवन्तं श्रीमद्रामानुजमुनिं तदनुगृहीतमेव श्रीभाष्यं स्वाभिमता-ध्यात्मशास्त्रत्वेन संभावयंश्च भगवान् सहजानन्दस्वामी स्वसम्प्रदायपरिपुष्ट्यै सद्ग्रन्थप्रणयने स्वान्तेवासिनः प्रख्यातवैदुष्यान् मुनिवरान् समादिशदिति सुविदितमेव संप्रदायग्रन्थतः । तच्चरणारविन्दमिलिन्दवृत्तिषु च विद्वत्सु तदन्तेवासिषु मुक्तानन्दनामा मुनिवरोऽन्यतमः ब्रह्मसूत्रेषु भाष्यं सरलमधुरगम्भीरं लघुशरीरं विशिष्टाद्वैतप्रतिपादकं प्रणिनाय । श्रीभाष्या-ध्ययनाशक्तान् प्रति भाष्यमेतत् सुखबोधं परपक्षप्रतिक्षेपबाहुल्यमन्तरा सिद्धान्ततत्त्वप्रदर्शन-तत्परं श्रीभाष्यप्रक्रियानुसार्येव व्यरच्यतेति तेनैव व्यक्तमभाषि । पाश्चात्यनीलकण्ठीय-भाष्यादियोजनापरामर्शोऽपि तत्र तत्र कृतोऽत्र विलोक्यते ।

प्रसिद्धयोगिराजेन गोपालानन्दस्वामिना च भगवदाज्ञां शिरसोद्वहता ब्रह्मसूत्रार्थमात्र-स्फुटप्रतिपादनतत्परा ब्रह्मसूत्रार्थप्रदीपनाम्ना वृत्तिर्निरवर्त्यत । सेयमनतिविस्तरसङ्ग्रहा सरल-पदसन्दर्भाऽनायासेनैव ब्रह्मसूत्रार्थान् मन्दमतीनपि ग्राहयेदित्यत्र न कोऽपि विशयः । भाष्येऽस्मिन् प्रदीपे च श्रीभाष्यव्यवस्थितप्रकारेणैवाधिकरणविभागसूत्रपाठसङ्ख्यादिर्व्यव-स्थापितो वरीवर्ति । भाष्यप्रदीपसहितायाश्चास्या ब्रह्ममीमांसायाः सम्मुद्राप्य प्रकाशने कृतोत्साहैराचार्यपीठमलङ्कुर्वाणैः सनातनधर्मधुरन्धराचार्यवर्यैः श्रीमद्भिः **आनन्दप्रसाद-महाराजैः** संशोधनादिपरिष्करणे नियोजिता वयं यथामति संशोधनाद्यकुर्महि । अथाऽपि पुरुषधर्मतया प्रमादादेरवर्जनीयप्रसङ्गाः समापतिताः सर्वे दोषा अत्र प्राज्ञैः कृपयाऽपारया मर्षणीया इति सप्रश्रयं विज्ञापयामः ।

एतद्भाष्यप्रकाशने च पुराणिश्री **धर्मस्वरूपदास** शास्त्रिश्री **हरिजीवनदास** शास्त्रिश्री **कृष्णस्वरूपदास**प्रभृतिभिः सद्गुरुवर्यैर्महानुत्साहः प्रकटीकृतः । एतत्संशोधने च शास्त्रिश्री **हरिजीदासै**र्महत् साहाय्यमारचितमिति च प्रसङ्गेऽस्मिन्निवेदयामः । इति सुधीजनविधेयः—

श्रीस्वामिनारायण-संस्कृत-पाठशाला
मु. वडताल
वि. सं. २००८, गुरुपूर्णिमा ।

**प्र. भ. अण्णङ्गराचार्यः** ( तिरुनाङ्गूर )
न्यायव्याकरणशिरोमणिः, वेदान्तविद्वान्,
प्रधानपण्डितः.

# भाष्यप्रणेतुर्मुक्तानन्दमहामुनेश्चरितम् ।

व्याचख्यौ व्याससूत्रं व्यतनुत भगवत्स्वामिनारायणस्य
स्तोत्रं छन्दोमयं यो ह्यकुरुत भगवद्वाक्सुधासङ्ग्रहं च ।
आत्मज्ञानादिपूर्णं गुरुरिति भगवान् मन्यते यं मुनीन्द्रं
तं मुक्तानन्दमीडे शमदमनिलयं साधुगोष्ठीगरिष्ठम् ॥ १ ॥

चरितं मुनिवर्यस्य मुक्तानन्दस्य सारतः ।
लिख्यते सद्गुरुप्रोक्तं यथाश्रुतमिदं शुभम् ॥ २ ॥

अयं किल महामुनिः पूर्वाश्रमे मुकुन्ददासाभिधः सौराष्ट्रप्रान्तान्तर्गते अमरेलीनाम्ना प्रथिते शुभे ग्रामे वैक्रमेऽब्दे चतुर्दशाधिकाष्टादशशततमे (१८१४) अनन्तरामराधानाम्नोः पित्रोर्नन्दनोऽजनि । सर्वजनमनोनयनानन्दकारिण्या रूपसंपदा बाल्योचितलीलाव्यापारेण चाह्लादयन् पितरौ स एष शैशव एवाभ्यस्तसकलशास्त्रः सद्विद्यासंपत्तिमविन्दत । गान्धर्वे च शास्त्रे नैसर्गिकमस्य पाण्डित्यमुदभूदत्यद्भुतम् । कवनशक्तिश्च संस्कृतगूर्जरव्रजभाषासु । तस्यास्य साहजिकं वैमुख्यं मायिकेष्वर्थेष्वनर्थरूपेषु निःश्रेयसनिदानमनुदिनमैधिष्ट वयसा समम् । एतत्पित्रोश्चास्मिन् रूढस्नेहानुबन्धयोरेतद्वैवाहिकमङ्गलं द्रष्टुमत्युत्कण्ठितयोरस्य वैवाहिकमङ्गलसंविधानोत्साहस्तथैवावर्धतान्वहम् । अनिच्छतोऽपि मुकुन्ददासस्य पित्रधीनवृत्तेः तदुत्साहभङ्गं कर्तुमपारयतो गार्हस्थ्यानुप्रवेशोऽवर्जनीयः प्रसक्तः । वैवाहिकमङ्गलनिर्वृत्या चास्य पित्रोरन्तरङ्गममन्दानन्दभरितमभूत् । अस्य पुनरमन्दनिर्वेदभरितम् ।

गृहित्वान्निश्चिक्रमिषोऽपि पित्रोराग्रहभरेण निष्क्रान्तुमपारयतः समुचितं निष्क्रमणोपायमप्यनध्यवस्यतोऽस्य स्वात्मनि उन्मादप्रकटीकरणमेव स्वेष्टसाधनमिति प्रत्यभात् । ततश्चैष जातोन्मादातिशयमिव स्वात्मानं प्रकटीचकार । तमेनमकाण्डे जातोन्मादं बहुवाच्यग्राम्योक्तिभाषिणमसभ्यचर्यं च दृष्ट्वा प्रतीकारोपायमस्यापश्यन्तः पित्रादयो बान्धवा जातावमाना एनं गृहेभ्यो निष्क्रामयामासुः । स्वाभिलषितमवसरमनतिप्रयत्नेन समुपनतमुपलभ्य मुदितान्तरङ्गो गृहान्निर्गत्य नैष्ठिकमकामव्रतं सिषाधयिषुः तत्साधनोपयुक्तप्रभावशालिनं सद्गुरुमन्विष्यन्नयं ध्रांगध्रानगरे कञ्चन विरागिणं साधुं द्वारकादाससमानमधिजगाम । स चानेन यथासमयं स्वाभिलषितं विज्ञापितः स्वस्मिन् तादृशं प्रभावमनुपलक्ष्य तस्मादधिकप्रतापशालिनं वांकानेरपुरनिवासिनं महात्मानं कल्याणदासं समाश्रयेत्यादिशदेनम् । तत्क्षण एव ततो निर्गम्य यथानिर्दिष्टं महात्मानमुपसङ्गम्य सेवाभिः प्रसाद्य तं स्वाशयमाविश्चकारायम् । सोऽप्येतदभिलषितसाधने स्वस्यासामर्थ्यं विचार्य स्वतोऽधिकप्रतापशालिनं शरधारपुराधिवासं तुलसीदासं महात्मानं प्रसादय सेवाभिः, तत्प्रभावादभिलषितसिद्धिर्भवितेत्येनं प्रत्यबूबुधत् । ततस्ततः प्रस्थितः शरधारपुरं प्राप्य तुलसीदासमाश्रित्य तत्सदाचरणवैराग्यादिसाधुवृत्त्या तुष्टान्तरङ्गो भक्त्या तत्सेवापरायणो न्यवसत्तदन्तिकेऽयम् । स चास्य स्वरूपगुणसम्पत्तितः सुप्रीत एनं स्वमुख्यशिष्यं विदधे ।

एवं गच्छति कतिपये समये शिष्यजनाननुग्रहीतुं शरधारनगरमुपागतः समण्डलपरिवारः सद्गुरुवरो **रामानन्दस्वामी** सदुपदेशादिना सज्जनहृदयान्यावर्जयन् व्यराजत तत्रैव कांश्चन मासान् । मुकुन्ददासोऽपि तदा तदा रामानन्दस्वामिनः सदुपदेशश्रवणतः सञ्जातभक्तिस्तस्मिन् तत्प्रसादाविष्कृततदीयदिव्यतेजस्समाकृष्टान्तरङ्गोऽभूत्तत्प्रवणान्तरात्मा । रामानन्दप्रसङ्गमस्य तस्मिन् भक्तिभावं च दृढमालक्ष्य द्वेषेर्ष्याकलुषितचेताः तुलसीदास एनं न्यरुणत् स्वामिप्रसङ्गम् । अथापि यदा तदाऽवसरं सम्पाद्य रहसि स्वामिसमागमं कुर्वाणोऽयं स्वाशयं स्वामिने व्यजिज्ञपद्भक्तिभूम्नाऽवसरं प्रतीक्ष्य । स्वामी च स्वस्मिन् प्रावण्यं निर्वर्णयन्नपि अन्यदीयशिष्यग्रहणप्रसक्ताल्लोकापवादात् भीतस्तदैव तं स्वीकर्तुमप्रभविष्णुर्ग्रामान्तरं जगाम सपरिवारः । स्वामिपादपादारविन्दसेवां तदैवालब्धवतोऽन्तर्विषण्णस्यास्य पुनः प्रत्यहमुत्कण्ठाऽन्ववर्धत स्वामिसेवायाम् । अथाऽयं स्वयमेव तुलसीदासपरित्यागे गुरुत्यागापवादप्रसक्तेर्भीतः स एव यथा त्यजेदात्मानं तमुपायं विचिन्वानः प्रत्युत्पन्नमतिस्तेनोपकल्पिते तीर्थक्षेत्रयात्रिकसाधुविरागिप्रदेयामान्नवितरणसदाव्रते स्वकीयमौदार्यमतिशयेन प्रायुङ्क्त । एनं च सदाव्रते उदारवृत्तिं निरोद्धुमशक्नुवन् कृपणो तुलसीदासोऽतिव्यये धान्यस्याग्रिमो निर्वाहः कथं भवितेति विचारयन् स्वयमेव स्वान्तेवासित्वतो बहिरकरोत् ।

तुलसीदासकृतं स्वपरित्यागमात्मनो महोदयं मन्यमान आनन्दपूर्णान्तरङ्गस्तदानीमेव ततो निर्गत्य श्रीरामानन्दस्वामिपादपद्मयुग्मपरिसरमुपसृप्य दण्डवत् प्रणिपत्यात्मानं स्वामिने न्यवेदयदयम् । अनाथयच्चान्तेवासित्वेनात्मानमङ्गीकर्तुम् । स्वाम्यपि अपरीक्ष्य ग्रहणे शिष्यसङ्ग्रहणतत्परोऽयं गुरुरिति अपवदेयुर्जना इति विचारयन् शास्त्रार्थं चानुसरन्नेनं परीक्षितुं हलचालनकर्मणि नियुयुजे । अयं च साक्षात् स्वामिचरणकमलवरिवस्यामिव स्वामिनाऽऽदिष्टं हलचालनं निरवर्तयदविकृत एव निरभिमानः । अथास्यानुपमसाधुभावेन भक्त्यतिशयेन चातीव प्रसन्नः सद्गुरुवर्यः **रामानन्दस्वामी** स्वसेवायां तमन्तेवासित्वेन स्वीकृत्य बंधीयानामके ग्रामे पारमैकान्त्यपरमहंसदीक्षया चैनं दीक्षयित्वा दीक्षाङ्गभूतं **मुक्तानन्द** इति नाम व्यधत्तान्वर्थमेवास्य । एवं गुरुकृपापात्रभूतोऽयं परमहंसो मुक्तानन्दमुनिरचिरेणैव निष्कामनैष्ठिकव्रतसिद्धिं प्राप्तः साधुशुभगुणगणैरुपशोभितः स्वामिचरणान्तेवासिषु प्राप्नोत् प्रामुख्यं प्रख्यातिं च नितराम् ।

सौराष्ट्रे लोजाभिपदे ग्रामे धर्मज्ञानवैराग्यभक्तिभिर्विभूषितस्य दयाक्षान्त्यौदार्यऋदिमसमतासाधुत्वादिगुणनिधेर्यस्यैव महामुने रामानन्दस्वाम्यन्तेवासिमुख्यस्य प्राथमिकसमागममात्रतो तीर्थक्षेत्रयात्राक्रमेण तं ग्रामं प्राप्तवान् भगवान् धर्मभक्तिनन्दनो **नीलकण्ठवर्णी** पारमैश्वर्यमेतद्गुरोरनुमाय तद्दर्शनौत्कण्ठ्यमबिभः । येनैव परमहंसवर्येण जीवाद्यर्थपञ्चकविषयकमध्यात्मज्ञानं भगवता परिपृष्टेन सच्छास्त्रानुगतं तत्त्व-

ज्ञानं सुचारुसुस्पष्टमुपापादि सद्गुरुपरम्पराप्राप्ततत्त्वज्ञानेन । येनैव मानरहितेन मुनिराजेन स्वगुरोः रामानन्दस्वामिनोऽक्षरधामप्राप्त्यानन्तरं स्वगुरोरादेशमनुपालयता यथा गुरुदेवे श्रीसहजानन्दस्वामिनि दासवत्सेवावृत्तिराचरिता यावदायुषम् । येन चान्तर्वाणीनामग्रेसरेण महामुनिना वटपुरे प्रत्यक्षस्य हरेः प्राप्तिः कलौ न घटते, तन्नामसङ्कीर्तनमेव केवलं युगेऽस्मिन् निःश्रेयससाधनमिति विवदमानान् वादिदन्तिनः सद्युक्तिप्रयुक्तसच्छास्त्रशरजालेन निरस्य कलावपि भगवदवतारसम्भवः सप्रमाणं व्यवास्थापि । त्रियुगशब्दस्यार्थश्च बुधजनमनोज्ञभङ्ग्या न्यरूपि । अवताराणामानन्त्योपपादनपूर्वकं श्रीस्वामिनारायणस्य प्रकटपुरुषोत्तमत्वं तदुपपादकाद्भुतदिव्यैश्वर्याणि च प्रत्यक्षतयेक्षितानि तत्र तत्र प्रत्यपादिषत येनैव विद्वत्सभायां महत्याम्। वादयुद्धे पराजिताश्च विद्वद्वर्या यस्यैव चरणकमले निःश्रेयसाय प्रापद्यन्त । यस्यैव महामहिमश्रवणेनात्यन्तकौतुकाविष्टः श्रद्धया परयोपेतः वटपुराधीश्वरः (सयाजिरावमहाराजः) एतेन महामुनिना स्वगुरुत्वेन परमेश्वरत्वेन चाभिमतं भगवन्तं श्रीस्वामिनारायणं सहपरमहंसमण्डलपरिवारमेतन्मुखतः स्वपुरमानाय्य महाराजोपचारैरभ्यर्च्य परमं स्वादरं प्राचीकशत् । यस्यैव सद्गुरुवर्यस्य प्रभावातिशयाद्वटपुरे सत्सङ्गवृक्षः सुविरूढमूलः शाखोपशाखमभिवृद्धो विराजतेतराम् । तस्यास्य मुक्तानन्दमहामुनेः परमसद्गुरोर्महिमाऽनुपम इति किं वक्तव्यम् । किं बहुना । प्रत्यक्षेण भगवता श्रीसहजानन्दस्वामिना तदा तदा सभायां यस्यास्य मुनिवर्यस्य श्रद्धाभक्तिवैराग्यमाहात्म्यज्ञानाद्यतिशयोऽनुदिनमेधमानः प्रशंसितो मुक्तकण्ठम् । यस्यैव शीलादिनाऽतिप्रसन्नो भगवान् स्वगुरुवदनुमनुते स्मैनम् । सत्यं, सोऽयं महामुनिरादर्शभूतः परमहंसानां मुमुक्षुजनतोपसेव्य इति निश्चप्रचम् ।

कदाचिद्भगवता प्रकटपुरुषोत्तमेन श्रीहरिणा स्वप्रवर्तितस्यौद्धवसम्प्रदायस्य प्रतिष्ठाहेतून् विचारयता मुनिरयमादिष्टः यावद्देहपातं भवता स्वसम्प्रदायस्वेष्टदेवप्रतिष्ठामाहात्म्यव्यवस्थापकानि निबन्धरत्नानि रचनीयानि यैरेव सम्प्रदायस्य पुष्टिर्भवित्रीति । भगवदाज्ञां शिरसोद्वहता चानेन बहवो ग्रन्थाः संस्कृतप्राकृतभाषासु विरचिताः ज्ञानभक्त्याद्यालम्बनाः सम्प्रदायपरिपोषकाः । गैर्वाण्यां तावदेतद्विरचिताः प्रबन्धाः—ब्रह्मसूत्रभाष्यम् १, सत्सङ्गिजीवनमाहात्म्यम् २, निर्णयपञ्चकम् ३, श्रीहनूमत्कवचमन्त्रपुरश्चरणजपविधिस्तोत्राणि ४, इति । प्राकृतभाषायां पद्यरूपास्तावत्—कृष्णप्रसादः १, सतीगीता २, नारायणजन्मादिचरितम् ३, मुकुन्दबावनी ४, गुणविभागः ५, पञ्चरत्नम् ६, धामवर्णनचातुरी ७, श्रीभागवतदशमस्कन्धानुवादः ८, भगवद्गीतानुवादः ९, शिक्षापत्री (अनुवादः) १०, वासुदेवावतारचरितम् ११, कपिलगीता (अनुवादः) १२, अवधूतगीता (अनुवादः) १३, उद्धवगीता (अनुवादः) १४, विवेकचिन्तामणिः १५, नारायणकवचम् (अनुवादः) १६, धर्माख्यानम् १७, सत्सङ्गशिरोमणिः १८, वैकुण्ठधामदर्शनम् १९, इत्याद्याः ।

अन्यानि च सहस्राधिकानि मुनिवर्येणानेनोपक्लृप्तानि गौर्जर्यां व्रजभाषायां च धर्मज्ञानवैराग्यभगवन्माहात्म्यभक्तिरसपरिपोषकाणि रसिकजनहृदयङ्गमानि सत्कर्णरसायनानि कीर्तनानि परमपावनानि कीर्तनीयानि नाम नित्यं भक्तिरसिकैर्विलसन्तितराम् ।

एवं सुरूपगुणविभवमहिमसम्पन्नोऽयं महामुनिर्मुक्तानन्दो नाम प्रत्यक्षे भगवति सुदृढैकान्तिकात्यन्तिकभक्तियुक्तस्तस्य चात्यादरपात्रभूतो देवर्षिरिव वीणावादननिपुणः सकलमुमुक्षुजनोपजीव्यः श्रीस्वामिनारायणस्य भगवतः सर्वदा सर्वथा सेवामाचरन् तदन्तर्धानलीलामनु तद्विरहासहिष्णुर्मास एव वैक्रमेऽब्दे (१८८६) षडशीत्युत्तराष्टादशशततमे आषाढकृष्णैकादश्यां भगवतश्चरणारविन्दयोर्विनिविष्टमनोवृत्तिस्तमेव ध्यायन् अन्वविन्दत तस्यैव श्रीहरेर्धामाक्षरं परमम् ॥

इत्येतच्चरितं प्रोक्तं मुक्तानन्दमहामुनेः ।
प्रशस्तं पावनं नित्यं श्रोतव्यं सद्भिरादरात् ॥

प्र.भ.अण्णङ्गराचार्यः (तिरुनांगूर)
शिरोमणिः,-वडताल संस्कृतपाठशालाप्रधानपण्डितः

---

ब्रह्ममीमांसासूत्रार्थप्रदीपकर्तुः

## श्रीगोपालानन्दमुनेश्चरितम्.

योऽसावष्टाङ्गयोगे जनिसमसमयं पूर्वसंस्कारभूम्ना
सिद्धिं प्राप्तो, भवाब्धिं प्रभवति मनुजो यस्य तर्तुं प्रसादात् ।
यस्त्र्यन्तप्रसिद्धं भजति हि सहजानन्दपादारविन्दं
गोपालानन्दनामा स जयति मुनिराड् ज्ञानवैराग्यधामा ॥ १ ॥
योऽसौ प्राकाशयद्ब्रह्मसूत्रार्थान् स्वप्रदीपतः ।
गोपालानन्दयोगीन्द्रस्येर्यते चरितं शुभम् ॥ २ ॥

इडरप्रान्तान्तर्गतटोरडाग्रामे मूर्तिमदिव सत्सन्तानसौभाग्यं मोतिरामकुशलाम्बयोर्विप्रकुलावतंसयोरानन्दमुपजनयन् सोऽयं प्रादुर्भूत आन्तरतमोविध्वंसनाय जनानां भास्वानिवापरो वैक्रमे सप्तत्रिंशदुत्तराष्टादशशततमेऽब्दे (संवत् १८३७)। अयं च प्रथमं खुशालभट्ट इति नाम्ना पितृभ्यामुपलालित औदीच्यकुलमणिर्माध्यन्दिनशाखाध्यायी गर्भाष्टमे पित्रोपनीतो वेदानध्याप्यमानश्च चतुरो वत्सरान् स्वगृह एवावर्तत । अथ वेदाङ्गान्यध्येतुं पित्रा विहिताभ्यनुज्ञः सोऽयं पञ्चदशक्रोशव्यवहिते ग्रामान्तरे निवसतो विख्यातवैदुष्यस्य कस्यचिद्गुरोः सकाशाच्छब्दानुशासनादीन्यधिजगाम गुरुकुले

निवसन् गुरुसेवापरायणः । आजन्मसिद्धप्रतिभयाऽप्रतिमयाऽल्पेनैव कालेन काणादे पाणिनीये मीमांसायां ज्योतिःशास्त्रादौ च परां प्रज्ञामवाप्तवान् । अस्य हि जन्मत एव सिद्धं योगैश्वर्यम् । भगवति भक्तिश्चास्याऽऽजन्मसिद्धा, शमादिसद्गुणसम्पत्तिश्च । सोऽयं प्राप्तविद्यो गुरुं प्रसाद्य निश्छद्मसेवयैव स्वगृहं प्रतिनिवृत्तश्छात्रानध्यापयन् प्रशान्तवृत्तिर्भगवद्भजनैकधारणः निनाय कञ्चित्कालम् । गृहबन्धे चायं नैव बद्धोऽभून्निसर्गतो विरक्तः ।

आजन्मसिद्धाया भगवद्भक्तेः सत्सङ्गिसङ्गतोऽन्वहमेधमानायाः प्रभावत उद्विग्नो भवसुखेभ्य आपातरमणीयेभ्यो दुःखानुबन्धिभ्यः भगवद्ध्यानमेव परमं सुखं मन्वानो हृदयकमलविनिहितभगवद्ध्यानैकपरायणो योगनिष्ठः प्रत्यक्षमेव भगवन्तं द्रष्टुमुत्सुक आसीत् । योगप्रवणतां बाल्य एवावलोक्यास्य सर्वे 'कश्चिद्योगिराजोऽय'मिति प्रत्ययितास्तथैवैनं 'योगीन्द्र' इति प्रथयन्ति स्म ।

सोऽयं योगिराजः कदाचिदनावृष्टितः पीडिताभिः प्रजाभिरभ्यर्थितो दैन्यमासां विलोक्य परया कृपयाऽऽविष्टः क्षणमन्तर्दृष्ट्या भगवन्तं नारायणमस्तौषीत् । योगप्रभावादस्य सपदि वियत्तलं घनघटाभिरावृतं सान्द्राभिः । घनगर्जितानि च मयूरानिव जानपदमनांस्याह्लादयामासुः । दिगन्तरालानि च तडित्प्रभाऽऽविलानि विलसन्ति स्म । सहैव मारुतवेगेन वेगेन पतमाना वृष्टिधारा धरां जलावृतां व्यधात् । जलसमृद्ध्या च पूर्णमानसा जानपदा योगीन्द्रप्रसादमेनमकाण्डे वृष्टिपातं प्रत्यक्षयन्तो योगीन्द्रस्यास्य पादयोः प्रवणमानसा अभवन् । उपश्लोकितं चेदमितिवृत्तम् । यथा—

उग्रानावृष्टिपीडां क्वचन जनपदे सम्प्रवृद्धां चिराद्यो
योगैश्वर्यप्रभावात् सपदि समधिकोद्भूतवृष्टिप्रपातैः ।
सर्वांशेनापनीय व्यतनुत सकलप्राणिवर्गस्य शान्तिं
गोपालानन्दनामा स दिशतु कुशलं नः सदात्राप्यमुत्र ॥ इति ।

योगीन्द्रश्चायं छात्रानध्येतुमुपसम्पन्नानपि भगवद्भजनपरायणानातन्वानः कदाचिदध्यापयंस्तान् कदाचित्तैर्भगवन्तं भजमानोऽष्टाङ्गं योगमभ्यस्यंश्च कदाचिदात्मनि परां कामपि निर्वृतिमुवाह ।

अथ कदाचिदेनं स्वात्मनि भक्तिभारमुद्वहन्तमनुजिघृक्षुर्नृलोकक्षेमाय भुवि साक्षात्प्रकटः पुरुषोत्तमो भगवान् सहजानन्दस्वामी योगेश्वरेश्वरः स्वयं द्विजो भूत्वोपेत्यैतदन्तिकमुवाच ह 'आगम्यतां मया सह भगवतो दर्शनाय, यः प्रकटीभूतोऽत्रे'ति । सपदि तेन सह कृतप्रस्थानः सोऽयं भगवद्दर्शनलालसो यावज्जेतलपुरमुपेयाय, तावदन्तर्दधे द्विजरूपधरो भगवान् सहागतोऽनेन । अवलोक्य च सपदि तिरोभावं द्विजस्य नूनं भगवानेवायं द्विजरूपधरो मामनुग्रहीतुं समायात इति निश्चित्यात्रैव तस्यावस्थानं स्यादिति चाध्यवस्यन् तदा जेतलपुरमधिवसतो भगवतः श्रीहरिकृष्णस्य विश्रुतपूर्वपारमैश्वर्यस्य पादमूलं शरणमुपजगाम । अथ भगवान् समुपागतमात्मनः

सहजभक्तं 'अयं खल्वस्मदनादिदासोऽपारमहिमा योगिराज' इति प्रशंसन्नभिनन्द्यैनं किमागमनप्रयोजनमित्यन्वयुङ्क्त । भवद्दर्शनतोऽन्यन्न मे प्रयोजनं किञ्चित्, भूमैव हि सुखं श्रूयते, स च भवानेव, या च परा विद्या मोक्षसाधनं सा च भवन्निष्ठैवेति ब्रुवाणमेनं परमप्रीतः भगवान् स्वान्तिक एव न्यवासयत् ।

अस्य च योगप्रभावा बहवः श्रूयन्ते, तेषु द्वित्रा अत्रोदाह्रियन्ते—अयं कदाचिद्भगवदाज्ञया वटपुरमगमत् । तत्र हि भगवत्परायणा लब्धसत्सङ्गा बहवो भागवता विलसन्तितराम् । तेष्वन्यतमो सदाशिवनामा द्विजवर एनं योगिराजं स्वावास एव यावदवस्थिति अभ्यवहारायार्थयति स्म । निश्छद्मप्रार्थनां तस्य सफलीकुर्वंश्चायं मासमेकं तद्गृह एव भुञ्जान आसीत् । अत्याश्चर्यावहा च घटना तदानीमुदभूत् । यदा यदाऽयं योगिराजो भोक्तुं सदाशिवशरणं प्रविशति, तदा तदा भगवानप्यनेन सह प्रविष्टो ऽयलोकि सदाशिवेन । भगवन्तमेव साक्षात्स्वावासमुपागतं भक्तयोगिराजेन निशाम्य परमानन्दभरितः सदाशिवो विविधभक्ष्यभोज्यैर्नवनवैरुभावपि समतर्पयत् । परं योगिराज एव सर्वैः परिसरवर्तिभिर्व्यलोकयत, न तु भगवान् । भगवता भुज्यमानं भक्ष्यादि पुनः क्रमेण न्यूनीभवद्विलोक्यते स्म । एवं हि भगवतोऽस्मिन् प्रेमानुबन्धः तेनास्याविनाभावश्च ।

भगवदेकपरायणस्यास्य योगिराजस्य खुशालभट्टस्य दैवसम्पत्त्यतिशयमहरहरेधमानं विलोक्य परमहंसैरपरैः प्रार्थितो भगवान् पारमहंस्यदीक्षामेनं प्रापय्य गोपालानन्द इति च नाम विधाय स्वाज्ञायामेनमस्थापयत् । स चायं गोपालानन्दस्वामी भगवदाज्ञया शिष्यमण्डलपरिवृतो ज्ञानामृतमभिवर्षन् तत्र तत्र सत्सङ्गिप्रचुरेषु ग्रामेषु पर्यटन् धर्ममैकान्तिकं प्रावर्तयत् । एवं ग्रामे ग्रामे ज्ञानभक्त्यादि संवर्धयन्नयं मुनिवर्यो गोपालानन्दस्वामी कदाचिद्वटपत्तनमुपागतः सत्सङ्गिभिः सम्पूजितः प्रत्यहं उपस्थितायां जन्माष्टम्यां भगवदुत्सवं कारयितुमभ्यर्थितस्तथेति प्रतिश्रुत्य महता सम्भारेण महोत्सवं विदधद्रमणीयां डोलां विरच्य तत्र भगवदर्चां समारोप्य डोलोत्सवं यावन्निरवर्तयत् तावत्साक्षाद्भगवानेव योगिराजेऽस्मिन् प्रेम्णा परमेण स्वेनैव रूपेण सन्निधाय तत्र सर्वनयनगोचरीभूय डोलोत्सवमङ्गीचकार साक्षादेव । विस्मयाविष्टाश्च सर्वे तदानीमस्य महिमानमपारं प्रशशंसुः ।

अथ जातुचिद्भगवान् भावनगरे कस्यचिद्द्विजस्य गृहे वर्तमानं भारतमानेतुमेनं प्रैषयत् । अयं च योगिराजो यथानिदेशं गत्वा तमयाचत भारतम् । अजानता च महिमानमस्य तेनायमवमतोऽपि अर्थादिदानप्रतिपादनेनाप्यवशीभवन्तं द्विजं तं स्वकर्मदेवपूजापरं वशीकर्तुं स्वैश्वर्याविष्करणतोऽन्यमुपायमपश्यन् ध्यातुमारेभे भगवन्तम् । तदा च पूजार्थं साम्मुख्येन स्थापिता अर्चामूर्तिर्बालकृष्णस्य द्विजेन तद्वैमुख्यमभजत् । द्विस्त्रिर्वा साम्मुख्यव्यवस्थापनेऽपि स्ववैमुख्यमुपागतयोगिराजसाम्मुख्यं च भजमानया भगवन्मूर्त्या विषण्णचेताः सोऽयं द्विजवर उपगतं महात्मानं

भगवद्भक्ताग्रेसरमवधार्य सपदि समुत्थाय सदण्डप्रणामं तमनुनीय सादरं भारतं तस्मै समार्पिपत् । अयं च तमनुगृह्य भारतमानीय भगवत्पादारविन्दपरिसरमुपाजगाम । किं बहुना, पाषण्डाद्यधर्मविध्वंसनाय परमैकान्तधर्मप्रवर्तनाय साधुजनसंरक्षणाय च कृतावतरणः साक्षात् पुरुषोत्तमः श्रीस्वामिनारायणो भगवान् स्वाश्रितान् सर्वान् परमहंसादीन् यस्यैवाज्ञायामवस्थातुं समादिदेश । यथोच्यते सत्सङ्गिजीवने—

"स्वस्वधर्मे वर्तयितुं साधून् पद्मांश्च वर्णिनः ।
स गोपालानन्दमुनिं समाहूयाब्रवीद्वचः ॥
स्वस्वधर्मे स्थापनीयास्त्वयैते सकला अपि ।
अस्याज्ञायां वर्तितव्यं भवद्भिर्मामकैर्मुने ॥
वर्तिष्यतेऽन्यथा योऽसौ न मदीय इति ध्रुवम् ।" इति ।

यस्यैवाप्रतिहतयोगैश्वर्यस्य महामुनेः प्रसादलवेन अभीप्सितां तां तां समृद्धिमवापुः पुत्रधनधान्यराज्यादिलक्षणां ते ते, यस्यैव प्रसादबलेन आजन्मतो मूकः सूर्यपुरनिवासिनः पारशीकप्रभोर्बालः सपदि निरर्गलप्रसरद्वाणीविलासो जातः, यदीयस्यैव प्रभावस्य प्रतीकमिव विराजतेऽद्यापि शार्ङ्गपुरेऽनेन प्रतिष्ठापिता हनूमन्मूर्तिरेतदैश्वर्यसमुत्तेजिता सर्वभूताद्युपद्रवनिवारणी भक्ताभीष्टपरिपूरणी च । तस्यास्य गोपालानन्दस्वामिनः महिमा केन वा कार्त्स्न्येन वक्तुं पार्येत । बहुमुखाश्च प्रभावा एवंविधाः श्रोश्रूयन्ते वृद्धमुखतः परम्पराप्राप्ता अस्य महामुनेः परमसद्गुरोर्योगिराजस्य गोपालानन्दस्वामिनः ।

तस्यास्य न केवलं योगैश्वर्यमेवातिशयितम् । शास्त्रार्थविवरणचातुरी चात्यद्भुता । सरलं सरसं सस्फुटं चाध्यात्मशास्त्रतात्पर्यप्रतिपादनरीतिरस्य कस्य वाऽन्तर्बाणेर्हृदयं नानुरञ्जयेत् । साक्षिणश्च विलसन्त्यत्रैतत्प्रणीताः प्रबन्धाः ।

अनेन च प्रस्थानत्रयत्वेन प्रथितानामुपनिषद्भगवद्गीताब्रह्मसूत्राणां विवरणं व्यरचि सरलसरसगभीरम् । एतत्प्रणीतमुपनिषद्भाष्यं गीताभाष्यं च प्राप्तमुद्रणं प्रेक्षावतामीक्षणातिथीबभूवतुरेव । ब्रह्मसूत्राणां भाष्यं तु सरलसरससन्दर्भं महामुनिना मुक्तानन्दस्वामिनाऽऽरचितमेव श्रीहरेराज्ञयेति ब्रह्मसूत्रार्थस्फुटप्रतिपादिका वृत्तिरनेनारच्यत । यस्या नाम ब्रह्मसूत्रार्थप्रदीप इति ब्रह्मसूत्रदीपिकेति वा । अनया च प्रदीपिकया ब्रह्मसूत्रनिगूढार्थाः सुखेन प्रकाशेरन्नेवेत्यत्र नैव संशीतिः । एतेभ्योऽन्ये चानेन निबद्धा गैर्वाण्या वाण्या बहवो निबन्धाः सन्त्येव । यथा—धर्मदेवपूजाविधिः १, भक्तिदेवीपूजाविधिः २, विष्णुयागपद्धतिः ३, विवेकदीपः ४, भक्तिसिद्धिः ५, श्रीकृष्णाभिप्रायबोधिनी (भागवतैकादशस्कन्धव्याख्या) ६, श्रुत्यर्थदीपिका (वेदस्तुतिव्याख्या) ७, अन्वयार्थप्रकाशिका ८, शुकाभिप्रायबोधिका (भागवतद्वितीयस्कन्धव्याख्या) ९, निगूढार्थप्रकाशिका (भागवतदशमस्कन्धव्याख्या) १०, हरिभक्तनामरत्नावली ११, पुराणोक्तश्रीकृष्णपूजा १२, हनूमत्पूजाविधिः १३, इत्याद्याः । भाषाप्रबन्धा अप्येतत्प्रणीताः प्रख्यायन्त एव । अयं चैवं सत्सङ्गि-

हृदयकमलानि विकासयन् स्वान्तर्निहितपुण्डरीकनयनो भास्वानिवापरो भगवदाज्ञां प्रवर्तयन् तमेव भगवन्तं प्रकटपुरुषोत्तमं निरन्तरं प्रसादयन् दिनमेकं ज्वरेणार्दितो हरिकृपामेव ज्वरपीडां सम्भावयन् उदुम्बरपुरतो वृत्तालयमुपागतः पश्यतामेव परमहंसानां प्रकटीभूतं हरिं विलोकयन् अभिष्टूय च तं श्रुतिसुखावहाभिः स्तुतिभिस्तेनैव सहान्तर्दधे अष्टोत्तरैकोनविंशतिशततमेऽब्दे ( सं. १९०८ ) वैशाखशुक्लपञ्चम्याम् ॥

इत्येवं योगिराजस्य गोपालानन्दसद्गुरोः ।
अद्भुतं चरितं प्रोक्तं सर्वसिद्धिकरं शुभम् ॥

ठे. स्वामिनारायणसंस्कृत-
पाठशाला
मु. वडताल.
वि. सं. २००८

प्र. भ. अण्णङ्गराचार्यः ( तिरुनांगूर )
न्यायव्याकरणशिरोमणिः
वेदान्तविद्वान्, प्रधानपण्डितः,

---

## प्रस्तावनायाः शुद्धाशुद्धसूची ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | ३ | समुपक्रमे | समुपचक्रमे |
| २ | ११ | दनेनैत | दनमुखेनैत |
| ५ | १३ | शेषात्' 'युक्तेः | शेषाद्युक्तेः |
| ५ | २० | यम्स्यैकात्म | यम्स्येकात्म |
| ११ | ५ | परिणम | परिणाम |
| १४ | ८ | सर्वेषा | सर्वेषां |
| १५ | २२ | दित्यत | दित्येत |
| १७ | १६ | दर्शियि | दर्शयि |
| १८ | ४ | कारणभावं | कारणभावो |
| २१ | ३२ | पादकस्य | पादकभागस्य |
| ३० | ४ | श्रतं | श्रुतं |
| ३१ | १५ | स्वरसमित्या | स्वरससिद्धमित्या |
| ३३ | ११ | निवृत्तिनिश्चो | निवृत्तिश्चो |
| ३७ | २३ | पुरुष | पुरुषो |
| ४० | १७ | ह्रास | ह्रास |
| ४८ | ३१ | हरिजीदास | हरिजीवनदास |

श्रीस्वामिनारायणो विजयतेतराम् ।

# ब्रह्ममीमांसा

॥ मुक्तानन्दमहामुनिविरचितं भाष्यम् ॥

विश्वसृष्टिस्थितिलयं त्रय्यन्ते श्रूयते यतः ।
तमानन्दघनं ब्रह्म स्वामिनारायणं श्रये ॥ १ ॥

यन्मूलं शास्त्रमाहुर्भवति तदितरन्नैव यस्मिन् प्रमाणं
सिद्धेऽप्यन्वेति यस्मिन्ननवधिकमहानन्दरूपे फलत्वम् ।
कर्मज्ञानादयो यत्प्रसदनविधयो येन सर्वार्थसिद्धि-
र्यत्सेवा मुक्तिसीमा स दिशतु कुशलं स्वामिनारायणो नः ॥ २ ॥

नानादर्शनकान्तारे परिभ्रमथ किं मुधा ? ।
सेव्यताममृतायैषा पाराशर्यवचःसुधा ॥ ३ ॥

व्याख्यातं बहुभिः पूर्वैर्ब्रह्मसूत्रमिदं महत् ।
व्याख्यायते सुबोधाय तत्त्वविद्दृष्टवर्त्मना ॥ ४ ॥

अपौरुषेयो यः शब्दः स प्रमाणमलौकिके ।
वेदो विचार्यः सोऽयं तु पुंसा श्रेयः समिच्छता ॥ ५ ॥

॥ गोपालानन्दमहामुनिविरचितः प्रदीपः ॥

वेदान्ता यन्महिम्नामवधिमनवगम्यैकदेशं स्तुवन्तो
विश्राम्यन्त्यप्यनन्ता विविधमपि जगद्यत्प्रतिष्ठं यतश्च ।
दिव्यानन्दस्वरूपः प्रणिहितमनसां योगिनामप्यगम्यः
सोऽयं भक्त्येकगम्यः स्फुरतु हृदि सदा स्वामिनारायणो नः ॥१॥

(भा०) त्रिवर्गश्चापवर्गश्च द्वयमेतत् ससाधनम् ।
तेनावगम्यते सोऽयं सेव्यते तत्तदर्थिभिः ॥ ६ ॥
निवारयन्ननर्थेभ्यः सदर्थेषु प्रवर्तयन् ।
अकरोत्कर्ममीमांसां भगवान् जैमिनिर्मुनिः ॥ ७ ॥
अन्विष्यतः फलं नित्यं पुंसस्तदवबोधयन् ।
व्यतानीत् ब्रह्ममीमांसां भगवान् बादरायणः ॥ ८ ॥
वृत्तिर्विरचिता तस्या बोधायनमहर्षिणा ।
छान्दोग्योपनिषद्भाष्यं द्रमिडाचार्यनिर्मितम् ॥ ९ ॥
आचार्यसूक्तिसंवादं दर्शयद्भिर्निजोक्तिषु ।
श्रीमद्रामानुजाचार्यैस्तयोर्वाक्यमुदाहृतम् ॥ १० ॥
वृत्तिभाष्यावलम्बोऽयमाचार्यैः परिरक्षितः ।
विशिष्टाद्वैतसिद्धान्तः श्रीभाष्ये संप्रकाशितः ॥ ११ ॥
बोधायनप्रभृतिपूर्वमहर्षिदृष्टे
श्रीबादरायणमते विहितादराणाम् ।
प्राचां वचांसि परिशील्य महत्तराणां
रामानुजेन मुनिना रचितं हि भाष्यम् ॥ १२ ॥
श्रीभाष्यमिति यत्प्राह प्रसन्ना सा सरस्वती ।
दर्शयत्यादरं यस्मिन् प्रकटः पुरुषोत्तमः ॥ १३ ॥

---

(प्र०) यत्पादपङ्कजरजः शिरसा वहन्तः संसारसागरमिमं सुखमुत्तरन्ति ।
तापत्रयप्रशमनप्रथितप्रभावौ धर्मात्मजस्य चरणौ शरणं प्रपद्ये ॥ २ ॥
शारीरकं भाष्यकारैः व्याख्यातं नाम विस्तृतम् ।
व्याख्यायते सङ्ग्रहेण सूत्रार्थसुखबुद्धये ॥ ३ ॥
ब्रह्मसूत्रनिगूढार्थमियं मन्दमतीनपि ।
व्यक्तं व्याख्या ग्राहयन्ती सतां प्रीत्यै प्रकल्पताम् ॥ ४ ॥
निन्दन्तु वाऽभिनन्दन्तु ये केचिदिह नः कृतिम् ।
भगवान् सहजानन्दः स ह्यस्मासु प्रसीदति ॥ ५ ॥

परपक्षप्रतिक्षेपः स्वपक्षं परिरक्षितुम् ।
समादृतो विशेषेण सत्तर्कैः सुप्रतिष्ठितैः ॥ १४ ॥
वादिष्वभिपतत्स्वेष युक्तस्तर्कशरग्रहः ।
जिज्ञासूनां दुर्गमोऽयमंशो मन्दधियां ननु ॥ १५ ॥
अतो विरच्यते व्याख्या सरला पदतोऽर्थतः ।
सूत्राणि सुग्रहाणि स्युर्यया मन्दधियामपि ॥ १६ ॥
अस्माभिर्लब्धभूमा मुनिभिरधिगतो ह्यौद्धवः सम्प्रदायः
भक्तिज्ञानप्रधानैर्विविधकृतिचयैः पोष्यतां यावदायुः ।
सैषा सेवैव मुख्येत्यधिसभमिह मामादिशत् श्रीहरिर्यत्
मुक्तानन्दस्तदाज्ञां शिरसि विनिदधत् सूत्रभाष्यं प्रकुर्वे ॥ १७ ॥

---

(भा०) अथ भगवान् बादरायणः कर्मणो निर्विण्णानां निःश्रेयसाय ब्रह्मौपनिषदं विचारयन् आरभते—अथेति ।

## अथातो ब्रह्मजिज्ञासा ॥ १ । १ । १ ॥

अस्मिन्नधिकरणे ब्रह्मविचारस्यानारम्भणीयत्वाशङ्का निरस्यते । ननु—किं ब्रह्मविचारेण, कर्मभिरेव पुरुषार्थनिष्पत्तेः । अवगमयति च वेदः कर्मणां पुरुषार्थसाधनताम् । अधीतवेदश्च तद्विचारे प्रवर्तते । तदस्मिन् विचारे नाधिकरोति कश्चित् । उच्यते—अविचारितकर्मगति-

---

(प्र०) अथ भगवान् बादरायणः कर्मणो गतौ निर्विण्णाननुगृह्णन् ब्रह्मविचारमारभते । तत्र प्रथमं शास्त्रमवतारयति चतुःसूत्र्या । तत्र ब्रह्मविचारस्य कर्तव्यतां व्यवस्थापयति प्रथमसूत्रेण । कार्येत्यर्थसिद्धम् । **जिज्ञासा**-शब्दो विचारे वर्तते । इच्छाया विषयतन्त्रत्वात् सन्नर्थस्य न विधेयत्वम् । इच्छाया इष्यमाणप्रधानत्वात् सनप्रकृत्यर्थे ज्ञान एव तु कार्यत्वस्यान्वयः । ज्ञानं चेह विचारलक्षणम् । कस्य विचारः कार्यः ? ब्रह्मणो विचारः कार्यः; केनायं कार्यः ?; निर्विण्णेनेत्येतद्गमयन्नाह—**अथात** इति । अथ—कर्मविचारानन्तरम्, अतः—निष्पन्नात्कर्मविचारादेव हेतोः, ब्रह्मविचारः कार्यः । कर्मस्वरूपे तावद्विचारिते कर्मणामल्पास्थिरफलत्वावधारणाद्भवति निर्वेदस्तत्र ।

रापाततः कर्मणः पुरुषार्थं वेदादवगच्छन् प्रवर्तते कर्मस्विति सत्यम्। अधीतसाङ्गसशिरस्कवेदः पुरुषः प्रथमं वेदाद्वेदशिरसश्चापाततः पुरुषार्थमवगत्य सञ्जातरुचिः प्रतिपत्तिक्रमेण प्रथममापातप्रतिपन्नार्थे विशेषावधारणमिच्छन् प्रवर्तते कर्मविचारे। विचारितकर्मगतिः कर्मभिर्जायमानं फलं क्षयिष्णु सातिशयं चावधार्य निर्विण्णः पुनरनन्तस्थिरफलमन्विष्यन् प्रथममेवापातप्रतिपन्नार्थं वेदशिरो विचारयितुं प्रवर्तते। तत्परीक्षितकर्मगतिर्निर्विण्णोऽधिकरोति ब्रह्मविचारे। श्रुतिश्च– "परीक्ष्य लोकान्कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" इति।

अयमस्य सूत्रस्यार्थः—अथ–कर्मविचारानन्तरम्, अतः–कर्मणो विचारान्निष्पन्नादेव हेतोः, ब्रह्मजिज्ञासा कार्या। ब्रह्मविचारः कार्य इत्येतत्। निर्वेदे हि कर्मविचारो हेतुः। निर्वेदाच्चानन्तस्थिरफलजिज्ञासा; तया चायमौपनिषदविचारः, तत्कर्मविचारान्निर्विण्णोऽधिकारीति सिद्धम्। अयं भावः—अध्ययनविधिवश्यतया प्रवृत्तः साङ्गसशिरस्कवेदाध्ययने; अध्ययनक्रमतः प्रथममापातप्रतिपन्नफलकर्मस्वरूपविचाराय प्रवर्तते। अथ निर्विण्णस्ततो वेदान्तवेद्यनित्यफलब्रह्मविचारे प्रवर्तते। आपातप्रतीतिर्हि संशयविपर्ययौ नातिवर्तेत। तस्मात् कर्मविचारानन्तरमौपनिषदविचारः कर्तव्य इति।

ननु–अथशब्दो मङ्गले आरम्भे अर्थान्तरोपक्रमे च प्रयुज्यते।

---

(प्र०) निर्विण्णेन तु अनन्तस्थिरफलार्थिना ब्रह्मविचारः कार्यः। तज्ज्ञानादेव ह्यनन्तस्थिरफलावाप्तिः। तत् कर्मविचारानन्तरं निर्विण्णेन पुरुषेण नित्यफलार्थिना ब्रह्मविचारः कार्य इति निरवद्यम्। **ननु**–विचारो निर्णयान्तः, तत्र प्रवृत्तिर्नासति सन्देहे, सन्देहश्च नापाततोऽप्यप्रतीते, कथं कर्मणो निर्वेदमात्रात् भवेत् ब्रह्मविचारे प्रवृत्तिः। **सत्यम्**–आपाततोऽवगतं नामानन्तस्थिरफलं ब्रह्मेति प्रागेव। अधीतसाङ्गसशिरस्कवेदो हि भवति पुरुषः शास्त्रविधिमनुस्मरन्निति। विशेषश्च भाष्ये॥ १॥

**इति प्रदीपे जिज्ञासाधिकरणम्॥ १॥**

तत्कथमवधार्यते आनन्तर्यार्थ इति । नैतत् । मङ्गलाय प्रयुज्यमानोऽथ-शब्दो भवत्यर्थविधुरः । स च पक्षोऽगतिकः । आरम्भार्थाश्रयणं तु मन्दप्रयोजनम् । विनैव 'आरभ्यत' इति वचनमारभ्यमाणमारम्भं गमयत्येव । न ह्युच्यमानं वचनं 'ब्रवीमी'ति वचनं प्रथममपेक्षते । अधिकर्तुं योग्येत्यर्थाश्रयणं च न शाब्दम् । योग्येत्यध्याहारेण तदर्था-श्रयणमपि न घटते । अथशब्दावबोधितस्यारम्भस्याध्याहृतपदार्थे-ऽन्वयासम्भवात् । न हि समुच्चेतुं योग्येत्यन्वयबोधतात्पर्येण च योग्या इति प्रयोगो दृश्यते । अत इति हेतुनिर्देशश्च व्यर्थः । आनन्तर्यार्थक-तायां तु सुघटोऽन्वयः—'अथ कर्तव्यः' इति । अत इति हेतुनिर्देशश्चो-पपन्नतरः । सूत्रस्य न्यायप्रयोगरूपतया मीमांसासन्दर्भश्च सुशोभनः । न हि सूत्रमुपदेशरूपं प्रवर्तते । अथशब्दस्य प्रयोगप्राचुर्यमानन्त-र्यार्थे । स हि स्वरसगत्याऽऽनन्तर्यार्थेऽवतरति । प्रतिरोधे त्वन्यार्थमुप-सर्पति व्यर्थो वा भवति ॥ अर्थान्तरोपक्रमपरता च नात्र घटते, एक-स्यार्थस्यानिरूपणात् । इदंप्रथमं हीदं शास्त्रम् ।

ननु—आनन्तर्यार्थकता वा कथं घटते? पूर्ववृत्तं हि प्राङ् नोपक्रा-न्तम् । पूर्ववृत्तानुपस्थितेरानन्तर्ये स्वरसगतिरुपरुध्यते । नैतत् । ब्रह्म-जिज्ञासापदसामर्थ्यादाक्षिप्यते हि पूर्ववृत्तम् । अधीतवेदः अविचार्य कर्म न प्रवर्तेत ब्रह्मविचारे । विधिश्चाध्ययने प्रथमं प्रवर्तयति पुरुषम् "स्वाध्यायोऽध्येतव्यः" "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयेत्" इति । स्मृतिश्च—"श्रावण्यां प्रोष्ठपद्यां वा उपाकृत्य यथाविधि । युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान्" इति । साङ्गाध्ययना-दापाततो वेदार्थप्रतिपत्तिः । आपातप्रतिपन्नार्थे च प्रयोजनवति जिज्ञा-सा समुदेति । ब्रह्मणीव कर्मण्यप्यनन्तस्थिरफलापातप्रतीतिर्भवत्येव, "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवती"ति श्रुतेः । कर्मणा-मापातप्रतीतिप्राथम्यात्तद्विचार एव प्रथमं प्रवर्तेत, न तु ब्रह्मविचारे । कर्मणि विचारिते च तदल्पास्थिरफलत्वनिर्णयो भवति । "तद्यथेह कर्म-चितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" "अन्तवदे-

वास तद्भवति" "प्लवा ह्येते अदृढा यज्ञरूपाः" इति च श्रुतिः। आवृत्ति-विधानादिपरिशीलनाच्च कर्ममीमांसायां भवत्ययं निर्णयः। ततश्चापा-तप्रतिपन्ननित्यफलब्रह्मविचारे प्रवृत्तिर्जायते। तत् ब्रह्मजिज्ञासापद-सामर्थ्येन कर्मविचारस्य पूर्ववृत्तस्योपस्थितिर्भवतीति अयमथशब्दः स्वरसत आनन्तर्यार्थेऽवतरत्येव। आक्षेपलभ्यार्थस्यान्वयबोधश्च मीमांसकसमयसंप्रतिपन्नः। पूर्ववृत्तहेतूपस्थापकातःशब्दसमभिव्याहार-श्चानन्तर्यार्थकतां द्रढयति। अनन्तास्थिरफलब्रह्मापातप्रतीतिरध्ययन-समय एव समुत्पन्ना कर्मविचारेण कर्मास्थिरफलत्वनिर्णयविशिष्टा भवति। सेयमापातप्रतीतिर्ब्रह्मजिज्ञासायाः कर्मजिज्ञासानन्तरकर्तव्य-तायां हेतुतया अतःशब्देन विवक्षिता। ऐकशास्त्र्याच्च कर्मविचारब्रह्म-विचारयोरथशब्दस्याऽऽनन्तर्यार्थकता समुचिता नाम। कर्मेव ब्रह्मापि हि वेदार्थः। तत् एकव्याख्येयव्याख्यानात्मना ऐकशास्त्र्यमेनयोरव्या-हतम्। पौर्वापर्यनियमाच्च वेदवेदान्तयोस्तदर्थविचाररूपयोः कर्मब्रह्म-मीमांसयोरपि पौर्वापर्यं च सुस्थितम्। विधिमनु अधीयानो हि प्रथमं संहितामधीत्य तदनु वेदशिरोऽधीते। अधीतक्रमेण च विचारयति। तदेवं व्यवस्थितपौर्वापर्यभागद्वयात्मकवेदार्थविचाररूपतया कर्मब्रह्म-मीमांसयोरेकशास्त्रत्वं सिद्धम्, पौर्वापर्यनियमश्च।

**ननु**—भागद्वयसाधारण्येन प्रथमं 'अथातो वेदार्थजिज्ञासा' इति प्रतिज्ञया भाव्यम्, कथम् 'अथातो धर्मजिज्ञासे'ति विशेषप्रतिज्ञा?। का क्षतिस्ततः?, पूर्वभागं कर्मकाण्डं विचारयितुं प्रवृत्तेन महर्षिणा तदसाधा-रणप्रतिज्ञा कृता। उत्तरभागं ब्रह्मकाण्डं विचारयितुं प्रवृत्तेन महर्षिणा तदसाधारणप्रतिज्ञा कृता। भागद्वयमपि विचारयितुं प्रवृत्तेन तु साऽपि प्रतिज्ञा अवश्यं विधेया "अथातो वेदार्थजिज्ञासा" इति। तत्र "धर्मजिज्ञासे"ति "ब्रह्मजिज्ञासा" इति च। आभ्यां तत्तदसाधारण-प्रतिज्ञाभ्यां साधारणप्रतिज्ञा त्वर्थतो गम्यते।

---

१. तदर्थसंवादिनी श्रूयते उपनिषत्सु इति शेषः। २. इदं च वाक्यं 'तद्यथेहे'ति-वाक्यतः पूर्वं योज्यम्।

"अथातो धर्मजिज्ञासे"त्येव वा साधारणप्रतिज्ञा । 'अलौकिकश्रेयःसाधनं धर्म' इति तु धर्मसामान्यलक्षणम् । धर्मश्च साध्यसिद्धभेदेन द्विविधः । कर्मोपासनादिः साध्यो धर्मः । ब्रह्म तु सिद्धो धर्मः । अलौकिकश्रेयोमात्रस्य प्रधानसाधनं हि तत् । तथा च स्मर्यते–"ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः । ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम्" इति । स्थापयन्ति चाभिवृद्धाः सिद्धेऽप्यर्थे धर्मताम्–"द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते । तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता" इति । तत्र क्रियाप्राधान्यात्साध्यधर्मपरः पूर्वभागः । उपासनातदङ्गादिसद्भावेऽपि ब्रह्मप्राधान्यात्सिद्धधर्मपर उत्तरभागः । ननु–प्रतिज्ञासूत्रस्थेन धर्मशब्देनालौकिकश्रेयःसाधनत्वलक्षणलक्षितो धर्मश्चेद्विवक्षितः; उत्तरसूत्रेण तल्लक्षणं वक्तव्यम् । साध्यधर्मासाधारणं लक्षणमेव तूक्तं "चोदनालक्षणोऽर्थो धर्म" इति । सत्यम् । पूर्वभागप्रतिपन्नं साध्यधर्मं कर्म स्वयं प्रथमं विचारयन् धर्मजिज्ञासापदेनैव तन्त्रेणैव तदसाधारणप्रतिज्ञायाः कृतत्वोपपत्तेरर्थतो वा तल्लाभाभिसन्धेः साध्यधर्मासाधारणं लक्षणं न्यरूपयत् "चोदनालक्षणोऽर्थो धर्मः" इति । यद्येवं साध्यधर्मासाधारणप्रतिज्ञाया इव सिद्धधर्मासाधारणप्रतिज्ञाया अपि अर्थतः सिद्ध्या किमिति प्रथमं प्रतिजानीते–"अथातो ब्रह्मजिज्ञासे"ति । सत्यम् । बहुग्रन्थव्यवधानात् तदलाभाशङ्कापरिजिहीर्षया प्रतिज्ञानिर्देशः ।

मास्तु वा जैमिनेः कर्मब्रह्ममीमांसयोरैकशास्त्र्यविवक्षा, किन्तु साध्यधर्मं कर्म विचारयन् "अथातो धर्मजिज्ञासे"ति कर्मविचारस्य कर्तव्यतां प्रतिज्ञाय तद्विचारमकरोत् । भगवान् बादरायणस्तु तदैकशास्त्र्यमभिप्रेत्य तदेव जैमिनिविरचितं कर्ममीमांसाशास्त्रं पूर्वभागविचाररूपमभ्युपेत्य तदेकशास्त्रतयोत्तरभागविचाररूपं शारीरकशास्त्रं व्यरचयत् । "अतदर्थतया क्लृप्तमपि योग्यमपेक्षितम् । तादर्थ्यमर्हति ग्रामे कल्ये पूर्वतटाकवत्" इति च वचनम् । ब्रह्मप्राप्तिसाधनभूतब्रह्मवेदनाङ्गकर्मविचाररूपतया भवत्यपेक्षितः कर्मविचारो ब्रह्मविचा-

रस्य । श्रूयते च कर्मणां वेदनाङ्गता "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति । एतेन कर्मब्रह्मणोः विरोधात्कर्मविचारस्य कथं पूर्ववृत्ततेति प्रत्युक्तम् । कामनाकलङ्कितं तु कर्म विरुध्यति; न स्वरूपतः । श्रूयते च "कुर्वन्नेवेह कर्माणि जिजीविषेत्" "क्रियावानेष ब्रह्मविदां वरिष्ठः" इति ।

इदं च भगवद्बादरायणाभिमतमनयोः शास्त्रयोरेकत्वम् "अर्थैकत्वादेकं वाक्य"मिति न्यायसिद्धम् । उभयोरपि शास्त्रयोः कर्मसमाराध्ये उपासनाप्राप्ये ब्रह्मणि हि तात्पर्यम् । अतात्पर्यज्ञास्तु कर्म कामनया कलङ्कयन्ति । श्रीशङ्कराचार्यैः "एक आत्मनः शरीरे भावात्" इति सूत्रं व्याचक्षाणैः देहातिरिक्तात्मास्तित्वस्य शास्त्रप्रथमपादे व्यवस्थापनादत्र तद् व्यवस्थापनं पुनरुक्तमित्याशङ्क्य शबरस्वामिना तत्र तत्कृतं न तत्सूत्रसमारूढमिति समाहितम् । अनेन पूर्वोत्तरमीमांसयोः शास्त्रैक्यं तेषामप्यभिमतमिति विज्ञायते । भामत्यां ब्रह्मजिज्ञासासूत्रविवरणे धर्मजिज्ञासापदस्य वेदार्थमात्रोपलक्षणत्वं चोक्तम् । वृत्तिकारस्योपवर्षस्याप्यभिमतमिदमैक्यम् । आह च प्रथमतन्त्रे आत्मास्तित्वाभिधानप्रसक्तौ "शारीरके वक्ष्यामः" इति । तथा भगवतो वृत्तिकारस्य बोधायनस्याप्यभिमतमेतत् । यदाह—"संहितमेतच्छारीरकम् जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धि"रिति ।

ननु—देवता निरस्यते जैमिनिना, अभ्युपगम्यते तु बादरायणेन, प्रबलोऽयं विरोधः, कथमैक्यमेतद्विरचितयोः शास्त्रयोः । नैवम् । यन्न तन्निरसने तात्पर्यं जैमिनेः । किन्तु वेदप्रामाण्यसमर्थने आदरातिशयात्कर्मकर्तव्यताविधाने विशेषतः प्रवृत्तेश्च तत्प्रतिपक्षिनिराकरणायान्वारुह्यवादो देवतानिरासवादः । अपौरुषेयो वेदो यद्विदधाति तद्विधेयमिति । अभिमततरार्थानादरणेनापि हि विपक्षव्युदासो दृश्यते । यथा—"अभीष्टार्थव्ययेनापि जयति क्षेत्रहारिणम् । लब्धक्षेत्रैर्न

---

१. उपवर्ष एव स्याद्बोधायन इति तु केषाञ्चिद्विमर्शः ।

दुष्प्रापः स्यादर्थ इति निश्चयात्", तथाऽभिमततरेश्वरनिरासेनापि वेद-प्रामाण्ये समर्थिते पश्चादभिमततरेश्वरसिद्धिः सुलभेति । शारीरकमीमांसायां च "संपत्तेरिति जैमिनिः" "परं जैमिनिर्मुख्यत्वात्" "ब्राह्मेण जैमिनिः" इत्यादिभिः सूत्रैर्जैमिनेरीश्वराभ्युपगमो हि व्यक्तं विज्ञायते ।

**ननु**—आप्तोपदेशेनापि केवलकर्मणामल्पास्थिरफलत्वनिर्णयो भवेदेव । **सत्यम्** । आप्तोपदेशेनाप्यनन्तस्थिरफलब्रह्मविनिर्णयो भवेदेव । **ननु**—किमनया प्रतिबन्द्या । उच्यते । रागत एव कर्मब्रह्मणोर्विचारे प्रवृत्तिः । सर्वथा ऐकशास्त्र्यमनयोर्मीमांसयोरनपायमित्येतदेवास्माकमभिप्रेतम् । विधिवशगानधीतसाङ्गसशिरस्कवेदानापातप्रतिपन्नतदर्थनिर्धारणाय प्रवृत्तानधिकारिविशेषानभिप्रेत्य प्रवृत्तमिदं भागद्वयात्मकं मीमांसाशास्त्रम् । तदव्याहतमानन्तर्यार्थकत्वमथशब्दस्य । एतेन—आप्तोपदेशेन भगवदनुग्रहेण वा विनैव ब्रह्ममीमांसां निष्पन्नब्रह्मविज्ञाना बहवः सन्तीत्यस्या वैयर्थ्यमित्याशङ्का च प्रतिक्षिप्ता ।

परे तु साधनचतुष्टयसंपत्त्यानन्तर्यार्थकतामथशब्दस्याऽऽचक्षते । तच्च साधनचतुष्टयम्—'नित्यानित्यवस्तुविवेकः, शमदमादिसाधनसंपत्, इहामुत्रफलभोगविरागः, मुमुक्षुत्वं चे'त्येतत् । इदं तु न युज्यते । "तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्येत्" इति श्रुतिर्हि शास्त्रतो विज्ञातात्मतत्त्वस्यात्मदर्शने प्रयतमानस्य ध्याने शमदमादेरङ्गतामुपदिशति । तस्मा अस्याः शमादिसाधनसंपदः ब्रह्मविचारे पूर्ववृत्तत्ववादः श्रुतिविरुद्धः । **ननु** श्रूयते—"प्रशान्तचित्ताय शमान्विताय····प्रोवाच तां तत्त्वतो ब्रह्मविद्या"मिति चेत्, **सत्यम्** । सा तु श्रवणौपयिकं चित्तावधानमभिप्रैति । सूत्रकारश्च "शमदमाद्युपेतः स्या"दिति शमादिसाधनसंपदो ध्याने अङ्गतामुपदिशति । नित्यानित्यवस्तुविवेकश्च कर्मविचारब्रह्मविचारोभयसापेक्षः, विना कर्मविचारं कर्मफलेष्वनित्यतानिर्णयो हि न भवेत् । कर्मणामल्पास्थिरफलत्वमध्यवस्य तु निर्विण्णस्य नित्यं

२. शङ्कराचार्याः ।

जिज्ञासमानस्य नित्यवस्तुविनिर्णयो ब्रह्मविचारादनन्तरभावी, तत् नित्यानित्यवस्तुविवेकस्य ब्रह्मविचारे पूर्ववृत्तता कथं नाम घटेत? आप्तोपदेशेन चेत्स विवेकः, तस्य ब्रह्ममीमांसा पिष्टपेषणं स्यात् । मुमुक्षुत्वं ब्रह्मविचारे पूर्ववृत्तमित्यपि न युज्यते । श्रावयति हि श्रुतिः कर्मणो निर्विण्णस्य नित्यफलजिज्ञासया गुरूपसदनम् "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" इति । ततश्चावधारिते ब्रह्मणि नित्यफले तत्प्राप्तीच्छा, येयं मुमुक्षा । सा च मोक्षोपाये प्रवर्तयति पुरुषम् । तद्ब्रह्मविचारानन्तरभाविन्या मुमुक्षायाः कथं ब्रह्मविचारे पूर्ववृत्तता? । इहामुत्रफलभोगविरागः इतः फलान्तरे तदुपाये च सुदृढमवधारित एव सुदृढो भवेत् । अन्यथा तु शिथिल एव । तत्कर्मविचारस्यैव पूर्ववृत्तत्वमुचितम् । तत एव हेतोस्तदनन्तरकर्तव्यता च ब्रह्मजिज्ञासायां समर्थ्यते—"अथातो ब्रह्मजिज्ञासे"ति ।

ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा । ब्रह्म स्वभावतः स्वरूपतश्च निरतिशयबृहत्त्वगुणविशिष्टम् । स च सर्वेश्वरः । तस्यास्य जिज्ञासा—तद्विषयको विचारः कार्य इति यावत् । यद्यपि सना ज्ञानेच्छा अवबोध्यते । अथापि इच्छाया अविधेयत्वात् ज्ञाने विधेयत्वान्वयो बोध्यः । ज्ञानं च विचारात्मकं बोध्यम् । सामान्यशब्देन विशेषावबोधनं च स्वरससिद्धम् । केचित्—सन्नन्तस्य जिज्ञासापदस्यैव विचारे रूढिमाहुः । अन्ये तु—सन्प्रत्ययस्येच्छार्थकस्य तत्साध्ये विचारे लक्षणामाहुः । ब्रह्मज्ञानेच्छया हि भवति ब्रह्मविचार इति । ब्रह्मणो जिज्ञास्यत्वोक्त्या शास्त्रस्यास्य विषयो ब्रह्मेत्येतत्प्रतिपादितं भवति । फलं चास्य वेदान्ततात्पर्यगोचरपरब्रह्मनिर्णयः । तन्निर्णयद्वारा चानन्तस्थिरफलप्रयोजकताऽस्य शास्त्रस्य । अधिकारी चाथातः-शब्दाभ्यामवगम्यते । एवमनेन सूत्रेणास्मिन् शास्त्रे प्रेक्षावतां प्रवृत्त्यङ्गभूतं विषयादिकमनुबन्धि प्रदर्शितं भवति । एतेन—विषयप्रयोजनाद्यभावेन च शास्त्रस्यानारम्भणीयत्वशङ्का प्रतिक्षिप्ता ।

निर्विशेषज्ञप्तिमात्रब्रह्मवादिना शास्त्रस्य विषयः कः, प्रयोजनं च

किमिति वक्तव्यम् । ब्रह्मणो ज्ञप्तिमात्रस्य विषयत्वं नोपपद्यते, जडत्वप्रसङ्गात् । विषयमात्रस्य जडत्वं हि तदभिमतम् । अविषये तस्मिन् का नाम जिज्ञासा ? को वा निर्णयः ? । जिज्ञासा च न सर्वथा अप्रतिपन्ने, न वा विशेषतोऽवधारिते, तदवगतानवगतांशविभागेन जिज्ञासाहेतुस्तत्फलं च वक्तव्यम् । निर्विशेषे तदसम्भवेन जिज्ञासाहेतुस्तत्फलं च नैव घटते । ब्रह्मपदप्रवृत्त्यनुपपत्तिश्च । निरतिशयबृहत्त्वगुणयोगो हि तत्र निमित्तम् ।

श्रीकण्ठाचार्यस्तु—कर्मब्रह्मविचारलक्षणयोरुभयोरपि मीमांसयोरैकशास्त्र्यमभ्युपगच्छन्ब्रह्मविचारस्य कर्मविचारानन्तरकर्तव्यत्वे पूर्ववृत्तस्य कर्मविचारस्य हेतुत्वमतःशब्दविवक्षितं नित्यानित्यविवेकादिसाधनचतुष्टयद्वारोपपादयति । तथा हि तद्वचनम्—"अतःशब्दोऽयं वृत्तस्य हेतुभावे वर्तते, यतोऽधीतवेदेन धर्मो विचारितः, तदनुष्ठानसंपन्नचित्तशुद्धिना तत्कालसंपन्नविवेकादिगुणसहकृतपरमभक्तिसम्भावितेनानेन ब्रह्मापि निरतिशयनिःश्रेयसकरं विचारणीय"मिति । व्याख्यातं चैतदप्पय्यदीक्षितैः—'नित्यानित्यविवेकं लब्ध्वा तन्मूलमादिशब्दगृहीतमैहिकामुष्मिकफलेभ्यो वैराग्यं शमदमादिसाधनं मुमुक्षुत्वं च प्राप्य, सहजसिद्धायाः शिवभक्तेश्चातिशयं प्राप्य जन्मादिसूत्रमारभ्य प्रवर्तिष्यमाणे ब्रह्मविचारे प्रवर्तन्ते इति युक्तमुक्तम्, तत्कालसंपन्नविवेकादिगुणसहकृतपरमभक्तिसम्भावितेने'ति । अनेनैतद्विज्ञायते ब्रह्मजिज्ञासायां मुमुक्षा, मुमुक्षायां शमदमादिसाधनं, तस्मिंश्च वैराग्यम्, वैराग्ये च नित्यानित्यविवेकः, विवेके च चित्तशुद्धिः, चित्तशुद्धौ परमेश्वराराधनभूतधर्मानुष्ठानं, तदनुष्ठाने च धर्मविचारो हेतुरिति हेतुहेतुमद्भावेन ब्रह्मविचारप्रयोजकता धर्मविचारस्य पूर्ववृत्तस्येति । इदमत्र विचार्यते—कोऽयं नित्यानित्यविवेकः ? कर्मफलस्यानित्यत्वावधारणं, तच्च कया ? कर्मफलपरीक्षया "परीक्ष्य लोकानि"ति श्रुत्यवगतया । सा च—"तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति श्रौतवाक्योपन्यस्तयुक्तिपरामर्शरूपा ।

अस्तु नाम सा तथा, तस्यां धर्मविचारस्य कथं हेतुता?। ननु–अविचारितधर्मः कथमनुतिष्ठेद्धर्मम्? अननुष्ठिते धर्मे कथं चित्तशुद्धिः? अशुद्धचित्तः कर्मफलपरीक्षायां कथं प्रवर्तेत?। सत्यमविचारितधर्मो न शक्नोति धर्मानुष्ठाने। तद्धर्मानुष्ठाने धर्मविचारस्य साधनत्वं तु युक्तम्। तावता नित्यानित्यविवेके धर्मविचारस्योक्तरीत्या हेतुत्वं न न्याय्यम्। परीक्षाया हेतुत्वमात्रेणैव तत्सिद्धेः। परम्परया परीक्षापूर्वभावित्वमात्रेण तत्र तस्य न हेतुता; अन्यथासिद्धेः। किञ्च–तथा सति अथशब्दस्य कर्मपरीक्षानन्तर्यार्थकत्वमतःशब्दस्य तस्या हेतुत्वपरतैव समुचिता। किञ्च धर्मविचारशास्त्रेणैव कर्मफलपरीक्षापि निष्पन्नैव। आवृत्तिविधानादिभिस्तदवगमात्। आवृत्त्या हि कर्मणः फलतारतम्यमवगम्यते, पुण्यं कर्मभिरसकृदनुष्ठितैरधिकं भवति, तेनाधिककालवत्फलोपभोग इति। अनेन च सिद्धं पुण्यफलस्य क्षयित्वं परिच्छिन्नत्वं चेति। किञ्च साधनचतुष्टयस्य पूर्ववृत्तत्वनिरसनेनैव तन्निरस्तप्रायम्। यत्तूक्तम्–'ये तु प्राग्जन्मानुष्ठितैरेव तथाभूतैः कर्मभिः संपन्नचित्तशुद्धयस्त एवैतत्सूत्रपरिज्ञाने प्रवर्तन्ते, तेषां विद्यासाधनस्य विद्यासहकारिणश्च कर्मणोऽनुष्ठानार्थं धर्मविचारापेक्षेति सर्वथा धर्मानुष्ठानानन्तरं शुद्धचित्त एवैतत्सूत्रपाठेन नित्यानित्यविवेकं लब्ध्वे'त्यादि, तत्रेदं प्रष्टव्यम्। प्रथमसूत्रपरिज्ञाने का चित्तशुद्ध्यपेक्षा? सा हि विद्यायामुपासनलक्षणायामपेक्ष्यते, "यज्ञेन दानेन तपसाऽनाशकेन ब्राह्मणा विविदिषन्ती"ति श्रुतेः। "अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इति च। ब्रह्मविचारलक्षणे शास्त्रे वाऽस्मिन् अपेक्षा इष्यताम्। प्रथमसूत्रपरिज्ञानेऽसाधारण्येन तदपेक्षा कुतः? इदं हि सूत्रं शास्त्रस्य विषयप्रयोजनसंबन्धाधिकारिनिरूपणमात्रे प्रवृत्तम्। न चाधिकारिविशेषावबोधनेऽपि चित्तशुद्ध्यापेक्षा। न च धर्मविचाराद्धर्मानुष्ठानं, ततश्चित्तशुद्धिः, ततः कर्मफलपरीक्षा, ततो विवेकादि, ततश्च ब्रह्मजिज्ञासेत्येतदर्थावगमे चित्तशुद्ध्यपेक्षा। इष्यतां वा धर्मानुष्ठानकर्मपरीक्षयोर्लेशतश्चित्तशुद्ध्यपेक्षा। तन्नैतत्सूत्रार्थपरिज्ञाने तदुपयोगः।

विशोध्य चेद्विचार्येत साधनानां चतुष्टये ।
पक्षेऽस्मिन्पूर्ववृत्तत्वमन्ततः पर्यवस्यति ॥
पूर्वपूर्वपरीक्षादिकार्यकारणभावतः ।
नोचितं कर्ममीमांसापूर्ववृत्तत्ववर्णनम् ॥
ऐकशास्त्र्यं मतं यत्तु धर्मब्रह्मविचारयोः ।
तदंशे तेषु सौहार्दमस्माकं सुव्यवस्थितम् ॥

निर्विशेषचिन्मात्रब्रह्मवादिभिः कर्मब्रह्ममीमांसयोरर्थविरोधेन विरोधं पश्यद्भिर्यदिदमुपवर्ण्यते—कर्मकर्तृक्रियाभेदव्याकुलात्कर्मणः पथः । भेदमात्रप्रतिद्वन्द्वि ब्रह्मात्यन्तविदूरगम् ॥ कथं कर्मविचारस्य स्यादेतत्पूर्ववृत्तता । अतोऽविरुद्धं यत्किञ्चित्पूर्ववृत्तमुपेयताम् ॥ श्रावयति हि श्रुतिस्त्रिविधभेदराहित्यं ब्रह्मणः "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय"मिति । तत्रैकमित्यनेन सजातीयभेदः प्रतिषिध्यते । एवकारेण स्वगतभेदः प्रतिषिध्यते । अद्वितीयमित्यनेन विजातीयभेदः प्रतिषिध्यते । यश्चायं परिदृश्यते भेदः स सर्वोऽपि अविद्यया तिरोहिते ब्रह्मण्यध्यस्तो मिथ्याभूतः । विकारमात्रस्यासत्यत्वं कारणस्यैव सत्यत्वं मृत्पिण्डमृण्मयादिदृष्टान्तेन निरूपयन्त्या "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य"मित्यनया श्रुत्या च ब्रह्मण एव सत्यत्वं, सर्वस्यास्य जगतो मिथ्यात्वं चावबोध्यते । "नासदासीन्नो सदासीत् तदानीं तम आसीत् तमसा गूढमग्रे प्रकेत"मित्यविद्यया सदसद्विलक्षणया ब्रह्म तिरोहितमिति च श्राव्यते । "नेह नानास्ति किञ्चन मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति" "सर्वं खल्विदं ब्रह्म"त्यादिना कण्ठरवेण भेदश्च निषिध्यते । तथा जीवब्रह्मैक्यं चावबोध्यते "तत्त्वमसि" "त्वं वाऽहमस्मि भगवो देवते अहं वै त्वमसी"त्यादिभिः । तदेवं सकलभेदविरोधिब्रह्मविचारे कर्मविचारस्य पूर्ववृत्तत्वमित्येतत् अर्थतो विरुद्धमिति ।

अत्र ब्रूमः—कर्मकर्तृक्रियाभेदसुस्थितात्कर्मणः पथः । भेदमात्राप्रतिद्वन्द्वि ब्रह्म नैवातिदूरगम् ॥ सर्वेश्वरः परंब्रह्म समस्तचिदचिद्वपुः । सपर्याविधयस्तस्य समस्ताः कर्मचोदनाः ॥ विज्ञाने न विरुध्यन्ते तदुपासनलक्षणे । भक्तिविज्ञानकाष्ठा या परमप्रेमलक्षणा ॥ नातोऽतिरिक्तं विज्ञानं वेदान्तेष्ववबोध्यते । कर्मणामुपयोगोऽत्र श्रुत्यैवास्ति निरूपितः ॥ स च सर्वेश्वरः स्वामी साक्षान्नारायणो मतः । इदं वेदशिरोहार्दं तत्त्वविद्भिर्निरूपितम् ॥

मृत्पिण्डमृण्मयदृष्टान्तेन विकारमात्रमिथ्यात्वं श्रुतिः श्रावयतीत्येतदापातरमणीयम् । तथा हि—गुरुकुलात्प्रत्यागतमनधिगतब्रह्मविद्यमालक्ष्य पुत्रं पिता ब्रह्मावबोधयन्नुवाच 'स्तब्धोऽस्युत तमादेशमप्राक्ष्यः ? येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञात'मिति । प्रष्टुरयमाशयः—गुरुकुलान्निरवशेषमवगत्य प्रत्यावृत्त इव लक्ष्यसे, यत्त्वं स्तब्धोऽसि । अपि त्वं तद्गुरोरवबुद्धवानसि, यस्मिन्विज्ञाते सर्वं विज्ञातं स्यादिति । अनेनोपादानोपादेययोरनन्यत्वं सर्वस्यास्य प्रपञ्चस्यैकोपादानकता च पितुरभिमतेत्येतत्सारतोऽवगम्यते । एवं पृष्टः पुत्रः प्रत्याह—"कथं नु भगवः स आदेशो भवती"ति । अस्मिन्प्रतिवचने प्रष्टुराक्षेपोऽवगम्यते; कथं न्विति निर्देशात् । आक्षेपश्चायमस्य हृदि निगूढः । नन्वन्यदेव कार्यमन्यदेव कारणम्, कालभेदात्प्रयोजनभेदाच्च । न चास्य प्रपञ्चस्यैकमुपादानं भवितुमर्हति । पृथिव्यादिभेदेन चतुर्धा विभिन्नो हि महाभूतलक्षणः कार्यवर्गः । गन्धादिभिन्नस्वभावाः परमाणव एव चतुर्विधा मूलमेषाम् । कणादेनाक्षपादेन वेदप्रामाण्यवादिना । इदमेवाभ्युपगतं मुनिना तत्त्वदर्शिना ॥ अस्तु वा सर्वस्यास्य जडस्य गुणमयस्य मूलमेका प्रकृतिस्त्रिगुणात्मिकेति । इदमेव ह्यभिमतं कपिलेन महर्षिणा । अग्रेसरस्तत्त्वविदामेष हि प्रथितो भुवि ॥ ये च पुरुषास्ततो विभिन्नास्तेषां विज्ञानं तद्विज्ञानेन कथं स्यात् ? प्रकृतिपुरुषावत्यन्तविभिन्नौ हि । वेदविदां मुखादिदमेव मयाऽवगतम् । तदत्र विप्रतिपत्ति-

रेव मे इति । अथ पिता पुत्रं हितमवबोधयन् प्रथममसत्कार्यवाद-वासनां निरस्यति—यथेत्यादिना । अयमाशयः—प्रसिद्धमेतन्मृत्पिण्डे विज्ञाते सर्वं घटशरावादि विज्ञातमेव भवति, मृत्त्वाविशेषात् । ननु कथमेतत् ? अविशिष्टेऽपि मृत्त्वे पिण्डादन्यदेव घटादिकं द्रव्यम्, भिद्यते हि तयोः कालः, प्राङ् नासीद्घटः, इदानीमेव घट उत्पन्न इति । नाम च तथा, अयं घटो न पिण्ड इति निर्देशात् । प्रयोजनं च तथा, घटस्य प्रयोजनं जलाहरणादि न पिण्डस्येति । एवं व्यवहारभेदात्कारणादर्थान्तरेण कार्येण भाव्यम्, न त्वनन्येन । तत्राह—'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य' मिति । सत्यं कार्यकारणयोर्व्यवहारः जलाहरणादिलक्षणो भिद्यत इति । न तावता कारणादर्थान्तरेण कार्येण भाव्यम् । अर्थैक्येऽपि भिन्नभिन्नव्यवहारालम्बनं तु विकारभेदः—अवस्थाभेदस्तत्कृतो नामधेयभेदश्च । वाचा—आबन्तोऽयं निर्देशः, व्यवहारः । वाक्पूर्वकत्वाद् व्यवहारो वाचाशब्देन निर्दिश्यते, तस्या आरम्भणमालम्बनम् । भिन्नभिन्नव्यवहारेत्वालम्बनं विकारः—अवस्थाविशेषः कंबुग्रीवादिलक्षणः, तत्प्रयुक्तश्च घट इति नामभेदः, तथाच नार्थभेदापेक्षा व्यवहारवैचित्र्ये । तत् 'मृत्तिकातः कारणादन्यदेव कार्य'मिति यन्मतं तदसत्यम् । मृत्तिकेत्येव तु मतं सत्यम् । यद्वा—मृद्द्रव्ये भवत्यवस्थाभेदः पिण्डावस्था कम्बुग्रीवाद्यवस्था च, तदेकमेव द्रव्यमवस्थाभेदात्कारणं कार्यं च भवति, व्यवहारभेदं च प्राप्नोति । तदवस्थाभेद एवालम्बनं व्यवहारभेदे । अवस्थाभेदश्च न कालत्रयानुगतः, पिण्डावस्था प्राक् इदानीं तु कम्बुग्रीवाद्यवस्था, तथा नष्टे घटे शकलावस्थैव । मृत्तिकैव तु सत्यं—कालत्रयानुगतं तु मृद्द्रव्यमेव । न च कालत्रयाननुवृत्तितदनुवृत्तिभ्यां विकारद्रव्ययोरनृतत्वतत्प्रत्यनीकत्वलक्षणसत्यत्वयोः प्रसङ्गः । तस्मादनेन वाक्येन न शुक्तिरजतदृष्टान्तेन सम्भावनीयोऽध्यासवादानुगुणप्रपञ्चमिथ्यात्ववादो व्याख्यातो भवेत् । कालत्रयाननुवृत्तता त्वनित्यत्व-

मात्रे विश्राम्यति। विकृतिमात्रस्याध्यस्ततां प्रकृतिमात्रस्य तदधिष्ठानतां च निरूपयन्प्रकारान्तरेण जगदपलपतीत्येव विमर्शका मन्येरन्। न वा रज्जुस्वरूपावगमे सर्पवन्मृत्स्वरूपावगमे निवर्तते घटः। मृदोऽनतिरिक्तं घटं जानन्नपि जलाहरणार्थी घटमादत्ते। "तदनन्यत्वमारम्भणशब्दादिभ्यः" "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधा"दिति सूत्रविवरणावसरे च विशेषतो विवेचयिष्यामः। नन्वस्तूपादानोपादेययोरभेदः, अथापि चिदचिन्मयस्यास्य प्रपञ्चस्य किमेकमुपादानं घटेत? सम्भवत्येकोपादानकत्वे हि एकस्मिन्विज्ञाते सर्वं विज्ञातं स्यात्। तत्राह— "सदेव"त्यादिना। अयमर्थः—इदं यन्नामरूपविभागयुक्तमिदानीं तदग्रे सृष्टेः प्रागप्यासीत्। अनेनासत्कार्यवादो निरस्यते। ननु कथमुच्यते 'इदं सृष्टेः प्रागासी' दिति, व्याहतमेतद्वचः। न। इदमग्रे एवं नासीत्; किन्तु सदेवासीत्सन्मात्रमासीत्। घटशरावादीदं पूर्वस्मिन्दिने मृण्मात्रमासीदितिवत्। लोके सर्वमेवोपादानमुपादेयात्मना यदा परिणमति, तदा एकस्यैव तस्य द्रव्यस्य देशतो भेदः कालतो भेदो नामतो भेदो रूपतो भेदश्च भवति। मृद्द्रव्यमेकमेव हि घटशरावाद्यात्मना बहुधा परिणतं सत् इह घटो नेह, इह शरावो नेह, इदानीं घटो नेदानीं, इदानीं शरावो नेदानीं, अयं घटो न शरावः, अयं शरावो नायं घटः, घटः कम्बुग्रीवादिमान्नायं शराव इति देशतः कालतो नामतो रूपतश्च भेदमापद्यते, कारणावस्थायां तु तथाविधभेदरहितं केवलं देशकालसम्बद्धमत एव मृण्मात्रमिति व्यपदेशार्हं वर्तते। तथा ब्रह्मैकमेवेदानीं बहुधा विभक्तं विविधस्थूलरूपभेदास्पदं सृष्टेः प्राक् तथाविधभेदरहितं देशकालसंबन्धमात्रेण सदित्येतावन्मात्रव्यवहारास्पदं वर्तते। तदिदमभिप्रेत्य 'सदेवे'त्युक्तिः। एवकाराभिप्रेतमेवार्थं व्यक्तं व्याचष्टे—'एकमेवे'ति। तथाविधभेदरहितमित्यर्थः। अद्वितीयमित्यनेन लोकदृष्टाधिष्ठातृसापेक्षता निरस्यते। निमित्तान्तरनिरपेक्षत्वमुक्तं भवति। उपादानवदुपादेयारम्भे यदि निमित्तान्तरं स्यात्-

दैकविज्ञानेन सर्वविज्ञानं न घटेत । निमित्तमुपादानं च स्वयमेवेत्येतत् । तदिदमनुपदं श्राव्यते—"तदैक्षत बहु स्यां प्रजायेये"ति । 'ऐक्षते'ति निमित्तत्वं 'बहु स्या'मिति उपादानत्वं च गम्यते । तन्नात्र त्रिविध-भेदनिषेधप्रसङ्गः । तन्नेहाध्यासवादावसरः; किन्तु परिणामपक्ष एवेदं श्रौतं वचनं स्वरसतः समन्वेति । उत्तरत्र "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा"इति श्रुतिः सत एवोत्पत्तिं सता स्थितिं सति लयं च निरूपयन्ती सर्वस्य सदात्मकतामाह—"ऐतदात्म्यमिदं सर्व" मिति । कथमियमध्यासवादे स्वरसा भवेत्? अन्यत्रापि श्रूयते—"यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति । यथा सतः पुरुषात्केशलोमानी"ति । "यथा सुदीप्तात्पावकाद्विस्फु-लिङ्गा" इति च । एभिर्दृष्टान्तैः परिणामपक्ष एव दृढीक्रियते ।

ननु परिणामपक्षसमर्थने कस्ते लाभः? । त्रय्यन्तपथादध्यासवादस्य बाह्यताज्ञापनम् । सुवर्णस्य कटकमुकुटात्मनेव स्वरूपतः परस्य ब्रह्मणः परिणाममनङ्गीकुर्वतस्तव कोऽयमभिनिवेशः परिणामवादे? । श्राव-यति परिणामवादं श्रुतिरिति । श्रावयतु सा, चिदचिदीश्वराणां स्वरूप-स्वभावभेदं वदतो भवतः परिणामपक्षः कथमुपपद्यते? । इत्थम्—ब्रह्मैव कार्यं कारणं च, अवस्थाभेदात्तदुपपत्तिः । स च भेदः सौक्ष्म्यस्थौल्य-लक्षणः । नन्वविकृतस्य परस्य ब्रह्मणः सौक्ष्म्यं स्थौल्यं वा किम्? इदं तत्, नामरूपविभागराहित्यमेव तु सौक्ष्म्यं, तद्योग एव तु स्थौल्यम् । तदपि नित्यैकरूपस्य कथम्? एवम्, स्वतनुभूतचेतनाचेतनद्वारा तद-न्वयः । ननु तद्द्वारा तदन्वय इति गौणम् । नैतत् । ब्रह्म स्वरूपस्वभा-वाभ्यां चेतनादचेतनाच्च विलक्षणमपि स्वतनुतया ताभ्यामपृथक्सिद्ध-प्रकाराभ्यां विशिष्टमेव, आकाशादय इव शब्दादिना । चेतनाचेतन-जातस्य परमात्मशरीरता चान्तर्यामिब्राह्मणे—"यस्य पृथिवी शरीरं" "यस्यात्मा शरीर"मित्यादिषु व्यक्तं निरूप्यते । तदेतद्विशिष्टं ब्रह्म कारणावस्थायां सूक्ष्मचिदचिद्विशिष्टं भवति, कार्यावस्थायां च स्थूल-चिदचिद्विशिष्टं भवतीति कार्यकारणभावो मुख्य एव ब्रह्मणः । अत-

आनन्त्यतया एकस्मिन् ज्ञाते सर्वं विज्ञातं भवतीति सुसङ्गतम् ।

घटकश्रुतिमाश्रित्य वेदान्तानां समन्वयम् ।
सुनिरूपयतां पक्षे कुतो दोषः प्रसज्यते ॥

सद्विद्यायामेव च विशिष्टस्योपादानत्वं गम्यते । तत्र स्वतनुभूतजीवद्वाराऽनुप्रवेशमूलकं नामरूपव्याकरणं हि श्रूयते–"अनेन जीवेनात्मनानुप्रविश्ये"ति । आत्मनेति शरीरेणेत्यर्थः । अन्यत्रावसरे विस्तरेणोपपादयिष्यामः ।

यदपि नानात्वनिषेधकं वचनं तदपि अन्तर्यामिब्राह्मणोक्तशरीरशरीरिभावकृतं सर्वस्य ब्रह्मात्मकत्वमभिप्रेत्य नानात्वनिषेधे प्रवृत्तम् । एकत्र यदि धर्मिद्वयं स्यात्तदा इह नानाऽस्तीति स्यात् व्यवहारः । एकमेव चेदनेकविशेषणविशिष्टं वर्तेत तदा तु इहैकमेव वर्तते न नाना इति निषेधो युज्यते नाम । एवं तत्त्वमसीत्यादिनिर्देशोऽपि ब्रह्मात्मकत्वदृष्ट्यैवेति न काचित्क्षतिः । अन्यथा तत्र तत्र भेदप्रतिपादकश्रुतिविरोधो दुष्परिहरः स्यात् । व्याख्यातं चैतदौपनिषदं वाक्यमुपनिषद्भाष्ये, तत एवावगन्तव्यम् । प्रकृतमनुसरामः ।

तत् कर्मविचारानन्तरं तत एव हेतोरवधारितकर्मास्थिरफलेन निर्विण्णेनाधिकारिणा आपातप्रतिपन्नानन्तस्थिरफलब्रह्मावधारणाय ब्रह्मविचारः कार्य इति युक्तमुक्तम् ।

अस्मिन्नधिकरणे शास्त्रारम्भणीयत्वसमर्थनपरे शास्त्रमारम्भणीयं न वेति सन्देहः । तत्र निमित्तं ब्रह्ममीमांसाशास्त्रे प्रेक्षावतामुपादित्सा सम्भवति उत नेति संशयः । तत्र च कर्मास्थिरफलत्वनिर्णयसहितसिद्धब्रह्मतात्पर्यसम्भावनाविशिष्टाधिकारो लभ्यते उत नेति । तत्र च वेदान्तेषु सिद्धब्रह्मतात्पर्यसम्भावनाविशिष्टापातप्रतीतिः सम्भवत्युत नेति । तत्र च सिद्धे पदानां व्युत्पत्तिरस्ति उत नेति । यदा सिद्धे पदानां व्युत्पत्तिर्नास्ति तदा वेदान्ते सिद्धतात्पर्यसम्भावनाविशिष्टापातप्रतीतिर्न सम्भवति, यदा सा न सम्भवति तदा विशिष्टाधिकारालाभः, तदलाभे च ब्रह्मविचारः कर्तुं न योग्य इति शास्त्रे न प्रेक्षा-

वतामुपादित्सासम्भवः, यदा तदसम्भवस्तदा शास्त्रमिदमनारम्भणीयमिति पूर्वपक्षे फलफलिभावः । यदा सिद्धे पदानां व्युत्पत्तिस्तदा वेदान्तेषु सिद्धतात्पर्यसम्भावनाविशिष्टापातप्रतीतिः सम्भवति, सा यदा सम्भवति तदा विशिष्टाधिकारलाभः, यदा च तल्लाभस्तदा ब्रह्मविचारः कर्तुं योग्य इति शास्त्रेऽस्मिन्प्रेक्षावदुपादित्सा सम्भवति, यदा च सा सम्भवति तदा शास्त्रमारम्भणीयमिति सिद्धान्ते फलफलिभावः । उक्तं चाधिकरणलक्षणम्—"विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् । प्रयोजनं सङ्गतिश्च प्राञ्चोऽधिकरणं विदु"रिति ।

अयं भावः—शास्त्रमिदं नोपदेशरूपम्, किन्तु विप्रतिपत्तिनिरसनाय न्यायप्रयोगरूपेण प्रवृत्तम् । विप्रतिपत्तिश्च वादिनां विवादतो भवति । विप्रतिपत्तितो भवति संशयः । तन्निरसनं च न्यायप्रयोगरूपेण सूत्रेण । इदं च प्रथमसूत्रं सिद्धे पदानां व्युत्पत्त्यसम्भवात् ब्रह्मविचारस्यानारम्भणीयत्वे पूर्वपक्षिणा समर्थिते पदानां सिद्धे व्युत्पत्तिसमर्थनमुखेन ब्रह्मविचारस्यारम्भणीयत्वसमर्थनाय प्रवृत्तमिति पूर्वपक्षसिद्धान्तयोः फलफलिभाव उपपादितक्रमेण बोध्य इति ।

ननु—सौत्रपदार्थपर्यालोचनायां अधीतसाङ्गसशिरस्कवेदेनापातप्रतिपन्नानन्तास्थिरफलकर्मब्रह्मणा कर्मविचारेणाधिगतकर्मफलाल्पास्थिरत्वनिर्णयेनापातप्रतिपन्नानन्तस्थिरफलब्रह्मजिज्ञासा कर्मविचारानन्तरं कर्तव्या, कस्मात्? अतः—केवलकर्मास्थिरफलत्वनिर्णयसहितानन्तस्थिरफलब्रह्मापातप्रतीतेः इति हि सूत्राशयो निष्पद्यते । पदानां सिद्धे व्युत्पत्त्यभावशङ्कातन्निरसनयोः क्वावसरः? । उच्यते । येयमनन्तस्थिरफलापातप्रतीतिः सा हि सम्भावितप्रामाण्या विवक्षिता । तादृश्येव हि प्रवृत्तिहेतुः । तत्र ब्रह्मज्ञानस्य येयमनन्तस्थिरफलापातप्रतीतिस्तस्यां प्रामाण्यसम्भावना नोपपद्यते । सिद्धवस्तुनि पदानां बोधकत्वानुपपत्तेः । कार्यपरवाक्यानामेव प्रामाण्यादिति हेतौ विशिष्टविशेष्यांशेऽसिद्धिशङ्का समुदेति । तदेवं शङ्कापरिहारौ सूत्रकृतस्तात्पर्यगम्याविति न काप्यनुपपत्तिः । परैरप्यधिकरणेऽस्मिन् शङ्कापरिहारौ तात्पर्यगम्यावेव निरूपितौ ।

अत्र पूर्वपक्षवादी प्रत्यवतिष्ठते—ननु वेदान्ता ब्रह्मणि न प्रमाणम् । ब्रह्म हि सिद्धं वस्तु । सिद्धे पदानां न बोधनसामर्थ्यम् । तत्र तेषामव्युत्पत्तेः । वृद्धव्यवहारादन्यत्र शब्दस्य बोधकत्वं हि नावधार्यते । सर्वो हि व्यवहारः कार्योपस्थापनपर एव इदमानय इदं नयेति । तथाच कार्यान्वित एव पदानां शक्तिरवगम्यते । कार्यं च लिङादिभिरुपस्थाप्यते । लोके तच्च क्रियालक्षणमेव । वेदे तु अपूर्वं तत् । तस्मात् वेदान्तानां सिद्धे प्रामाण्यं न घटते । तत् ब्रह्मविचारो नारम्भणीय इति ।

नैतत् । सिद्धेऽप्यर्थे पदानां व्युत्पत्त्यवधारणात् । बाला हि मातापितृभिरङ्गुल्या निर्दिश्य 'इयं गौः' 'अयमश्वः' 'अयं चन्द्रः' इति शिक्ष्यमाणा दृश्यन्ते । अवधारयन्ति च ततोऽस्य पदस्यायमर्थ इति । पदश्रवणमात्रेणार्थोपस्थितिं स्वस्यानुभूय पदार्थयोः संबन्धान्तरादर्शनात्पदानामर्थावबोधने शक्तिमवधारयन्ति । तदेवं सिद्धेऽप्यर्थे पदानां बोधनसाधनत्वं निरवद्यमिति वेदान्तानां ब्रह्मणि प्रामाण्यसम्भवात्कर्मविचारानन्तरं ब्रह्मविचारः कार्य इति सुस्थितम् ।

परे[1] त्वत्र "परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन, तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्, तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्या"मिति वाक्यं विषयवाक्यतया स्वीकृत्येत्थमाशयं वर्णयन्ति—विरचितधर्मविचारस्यात एवावधृतकेवलकर्मास्थिरफलकत्वस्यापातप्रतिपन्नानन्तस्थिरफलकब्रह्मावधारणार्थं गुरूपसदनं विदधतानेन वाक्येन ब्रह्मविचारस्य कर्मविचारानन्तरकर्तव्यता गम्यते । संशयपूर्वपक्षसिद्धान्ताश्चेत्थम् । ब्रह्म विचारयोग्यं न वा । सन्दिग्धे हि विचारः, नतु विनिश्चिते । 'अयमात्मा ब्रह्मे'ति च प्रत्यक्षवन्निर्देशः । योऽयमखिलैरनुभूयतेऽहंप्रत्ययगोचरः कर्ता भोक्ता विज्ञानात्मा पुरुषः, स ह्यवधृत एव

---

टिप्प०—१ श्रीकण्ठाचार्याः ।

धर्मं विचारयतापि । नैतत् । यद्यप्यस्त्ययमात्मेति निर्देशः, अथापि 'अन्नं ब्रह्म' 'मनो ब्रह्म' 'विज्ञानं ब्रह्म' 'आदित्यो ब्रह्मे'त्यादिनिर्देशाद्भवति ब्रह्मस्वरूपे संशयः । भवति च तत्त्वमसीत्यादिनिर्देशाज्जीवात्मैव ब्रह्मेत्यापातप्रतीतिः । न च तदुपपद्यते, सुखदुःखभोगैकास्पदस्य स्वरूपतः स्वभावतश्च बृहत्त्वलक्षणं ब्रह्मत्वं कथमिव घटेत? तदेवं सन्दिग्धार्थनिर्णयाय युक्तो ब्रह्मविचार इति । तदस्मिन्पक्षे नास्माकमतीव विवादः ॥ १ ॥

**—अत्रायमधिकरणार्थसङ्ग्रहः—**

अधीतसाङ्गसशिरःस्वाध्यायो विधिचोदितः ।
आपातप्रतिपन्नार्थं विचारेणावधारयन् ॥ १ ॥
आदौ प्रवर्तते धर्मविचारेऽध्ययनक्रमात् ।
कृतकर्मविचारस्य तत्फलास्थैर्यनिर्णयात् ॥ २ ॥
ब्रह्मण्युदेति जिज्ञासा नित्यानन्तसुखास्पदे ।
तस्मात् विचार्यं तत् ब्रह्म तस्मिन् धर्मे विचारिते ॥ ३ ॥

**पूर्वपक्षः—**

कथं प्रमाणं वेदान्ताः सिद्धे ब्रह्मणि वस्तुनि ।
ननु कार्यपरत्वे हि वाक्यानां स्यात्प्रमाणता ॥ ४ ॥
कार्यान्विते पदानां तु शक्तिर्न तदनन्विते ।
तथाहि व्यवहारेण शक्तिरध्यवसीयते ॥ ५ ॥
व्यवहारो हि वृद्धानां दृष्टः कार्यैकगोचरः ।
गामानय बधानाश्वमेहि याहीति लौकिकः ॥ ६ ॥
श्रूयते व्यवहारश्च यजेत जुहुयादिति ।
क्रियाकार्यान्विते वृत्तिः पदानां लोकतो मता ॥ ७ ॥
अपूर्वान्वित एवार्थे शक्तिर्व्यवहृतेः श्रुतेः ।
अतो न मानं वेदान्तः सिद्धे कार्याद्यनन्विते ॥ ८ ॥

## सिद्धान्तः—

अयं ग्रामो ब्राह्मणानां धनाढ्यानामियं पुरी ।
अयं गौरयमश्वोऽयं गजोऽयं तु मृगाधिपः ॥ ९ ॥
अस्ति काश्यां महाराजः सर्वसेव्यो गुणाधिकः ।
जातः पुत्रश्चैत्र तव कन्या ते चैत्र! गर्भिणी ॥ १० ॥
इत्यादयः सिद्धपराः प्रयोगाः सन्ति लौकिकाः ।
प्रामाण्यमेषां सर्वेषां सुस्थितं स्वार्थबोधनात् ॥ ११ ॥
अस्ति सिद्धपरं वाक्यं श्रुतावपि बहुस्थले ।
विधिशेषतया तस्य प्रामाण्यं यत्तु कल्प्यते ॥ १२ ॥
किं तत्स्वार्थप्रहाणेन घटेत सुविचार्यताम् ।
शक्तिग्रहो व्याकरणकोशादेरपि जायते ॥ १३ ॥
शक्तिः कार्यान्विते नापि व्यवहारेण सिध्यति ।
उपलक्ष्य गवाद्यर्थं नयनानयनक्रिया ॥ १४ ॥
विश्राम्यन्ती ग्राहयति शक्तिं तत्रैव केवलम् ।
तस्माद्वेदान्तवाक्यानां प्रामाण्यं ब्रह्मणि स्थितम् ॥ १५ ॥

इति भाष्ये जिज्ञासाधिकरणम् ॥ १ ॥

---

किं तत् ब्रह्म यद्विचार्यं तत्राह—

## जन्माद्यस्य यतः ॥ १ । १ । २ ॥

लक्षणमिदमुच्यते ब्रह्मणः । ननु किं कार्यं लक्षणेन । व्यावृत्तिः । केभ्यः । अग्नीन्द्रादिभ्यः । ननु कः प्रसङ्गः, यत्तेभ्यो व्यावृत्तिः कार्या भवति । प्रसजति हि तत्रापि ब्रह्मपदप्रवृत्तिनिमित्तनिरतिशयबृहत्त्व-

---

(प्र०) ननु किंलक्षणकं तद्ब्रह्म यज्जिज्ञास्यमुच्यते । तत्राह—

**जन्माद्यस्य यतः । १ । १ । २ ।**

अस्य—अचिन्त्यविविधविचित्ररचनस्य चराचरलक्षणस्य प्रपञ्चस्य, जन्मादि—जन्म आदिर्यस्य समुदायरूपस्य तत् सृष्टिस्थितिलयम्, यतः, तद् ब्रह्मेत्यर्थः ।

योगः । कथम् । श्रूयते हि तत्र लिङ्गम् 'न किरिन्द्र त्वदुत्तरः' 'अग्निः सर्वा देवताः' 'एक एव रुद्रः' इत्यादिषु । यदि न व्यावर्त्येत लक्षणतः; ब्रह्मतत्त्वं व्याकुलं स्यात् । माहात्म्यपरं वाक्यान्तरमन्यपरतयाऽनादृत्य कारणवाक्यस्यैव तत्त्वनिर्णायकतया अनन्यपरतामभिप्रेत्य ब्रह्मणो लक्षणमाह सूत्रकारः—'**जन्माद्यस्य यत**' इति । जन्म आदिर्यस्य जन्मस्थितिलयसमाहारस्य, तत् जन्मादि—जन्मस्थितिलयम् । तद्गुणसंविज्ञानो बहुव्रीहिः । 'अस्ये'तीदमा निर्देशः 'इमानि भूतानी'-ति श्रौतं निर्देशमनुसरति । 'इमानी'ति हि भूतानामिदमा निर्देशः । अनेन प्रपञ्चस्याचिन्त्यरचनावैचित्र्यं भोगवैचित्र्यं च देशकालनियतं विवक्षितम् । अचिन्त्यविविधविचित्ररचनस्य पिपीलिकादिब्रह्मान्तभोक्तृवर्गमिश्रस्य प्रपञ्चस्येति यावत् । तस्यास्य जन्मादि **यतः**—यस्मात् सर्वज्ञात् सर्वशक्तेः कारणात्, तद्ब्रह्मेत्यर्थः । अस्य कारणेन सर्वज्ञेन सर्वशक्तिना हि भाव्यम् । जन्मस्थितिलयमिति समुदायविवक्षया त्रयस्य समुदितस्य लक्षणत्वमवगम्यते, न त्वेकैकस्य । जन्मकारणत्वं स्थितिकारणत्वं लयकारणत्वं च न प्रत्येकं लक्षणम्, किन्तु जन्मकारणत्वे सति स्थितिकारणत्वे सति लयकारणत्वं लक्षणमिति यावत् । यद्यपि प्रत्येकमपि लक्षणं भवितुमर्हति, अनतिप्रसक्तेः । अथापि जन्मकारणं ब्रह्मेत्युक्ते स्थितेर्लयस्य वा कारणं किमन्यदिति शङ्का प्रसजेत्, ततश्च निरतिशयबृहत्त्वे मन्दानां शङ्का प्रसजेत् अन्यदेव

---

तथा च श्रुतिः—"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्ब्रह्म" इति । प्रयन्ति सन्ति—लीयमानानि सन्ति यदभिसंविशन्ति । अनेन लयहेतुत्वमुच्यते । सूत्रे यत इति हेतौ पञ्चमी । हेतुत्वं च निमित्तोपादानोभयसाधारणम् । तेनोभयविधमपि कारणत्वं ब्रह्मणः सिध्यति । जगज्जन्मादिकारणत्वं ब्रह्मणो लक्षणमुक्तं भवति । एतेन ब्रह्मविचारलक्षणं शास्त्रमिदमनारम्भणीयम्, लक्षणतः प्रतिपत्तुं योग्ये हि विचारो घटेत, ब्रह्म च न लक्षणतः प्रतिपत्तुं योग्यमिति शङ्का परास्ता ॥२॥

**इति प्रदीपे जन्माद्यधिकरणम् ॥ २ ॥**

स्थितिकारणं लयकारणं चेति । तच्छङ्कानिरासाय समुदितस्य लक्षणत्वमुक्तम् । तथा च जन्मादिषु त्रिष्वपि कारणमेकमेवेदमिति निरतिशयबृहत्त्वं ब्रह्मपदप्रवृत्तिनिमित्तं ब्रह्मणि स्थिरीकृतं भवति ।

यत इति हेतुपञ्चम्यन्तात्तसिल् । उपादाननिमित्तोभयसाधारणं हेतुत्वमिह विवक्षितम् । ननु— कथमिदमवगम्यते । उच्यते । यदिदमस्य सूत्रस्य विषयवाक्यं 'यतो वा इमानी'त्यादि, न तत् कारणत्वप्रापकम् । यत इति प्रसिद्धवन्निर्देशात् । तत् प्रापकवाक्यानुसारेणैवार्थो नेयः । प्रापकवाक्यं तु 'सदेवे'त्यादि । तत्र च 'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' इति निर्देशात् अभिन्ननिमित्तोपादानत्वं व्यक्तं बोध्यते । प्रापकवाक्यावबोधितमेव तु 'यतो वा इमानि भूतानी'त्यनेनानूद्यते । इदमेव वाक्यं विषयीकृत्य सूत्रकारः प्राह—'जन्माद्यस्य यत' इति । 'भृगुर्वै वारुणिर्वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मे'त्यारभ्य श्रूयते—"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म" इति । अत्र यद्यपि 'तद्विज्ञासस्वे'त्युपासनं विचारो वा विधीयत इव । अथापि 'अधीहि भगवो ब्रह्मे'ति प्रश्नानुरोधात् प्रतिवचने 'यतो वा इमानि भूतानि जायन्ते तद्ब्रह्मे'त्यनूद्य जगत्कारणं ब्रह्मत्वं विधीयते इत्येव बोध्यम् । 'विजिज्ञासस्वे'ति वचनं तु तदेतत्त्वमवधारयेत्युपदिश्यमानार्थे सन्देहनिवृत्त्यर्थमवधानार्थं वा ।

अत्र संशयः—ब्रह्मानेन लक्षणेन प्रतिपत्तुं शक्यते न वेति । किं प्राप्तम् । न शक्यमिति । तथाहि—विशेषणतया जन्मादयो ब्रह्म लक्षयन्तिः उतोपलक्षणतया । यदि विशेषणतया, तदा ब्रह्मत्रित्वमापतेत् । त्रयाणां जन्मादीनां विशेषणत्वात् । विशेषणानां च भेदकत्वस्वाभाव्यात् । नाप्युपलक्षणतया, तथा सत्युपलक्षणोपलक्ष्याकाराभ्यामन्येन संप्रतिपन्नाकारेण तृतीयेन भाव्यम् । यत्र सारसः तद्देवदत्तगृहमित्यत्रोपलक्षणात् देवदत्तसंबन्धित्वाच्चान्यदेव हि गृहत्वं संप्रतिपन्नाकारः, तद्वत् नेह तृतीयाकारः कश्चित् । अत्र ब्रूमः—उभयथाऽप्येतल्लक्षणं

भवितुमर्हति । विशेषणतया जन्मादीनां त्रयाणां लक्षणत्वेऽपि न ब्रह्मत्रित्वप्रसङ्गः । विशेषणानां ह्येष स्वभावः—स्वानाश्रयात् स्वाश्रयस्य भेदकत्वम्, न तु स्वेतराश्रयमात्रात् स्वाश्रयस्य भेदकत्वम् । न हि रूपं स्वेतरगन्धाश्रयमात्रात् स्वाश्रयं भिनत्ति । एकस्योभयधर्माश्रयत्वं हि सर्वानुभवसिद्धम् । तत् यदेव जन्मकारणं तदेव स्थितिकारणं भवितुमर्हत्येव । उपलक्षणत्वमप्येषां घटेत । जन्मस्थितिलयाः स्वकारणभूतं ब्रह्मोपलक्षयन्ति, यतः सर्वज्ञात् सर्वशक्तेः सत्यसङ्कल्पात् जन्मादि तत् ब्रह्मेति । अत्र निरतिशयबृहत्त्वलक्षणं ब्रह्मत्वमुपलक्ष्याकारः, ततोऽन्यत् सर्वज्ञत्वादिकं संप्रतिपन्नाकारः । अभिन्ननिमित्तोपादानताक्षिप्ता हि सर्वज्ञत्वादयः कारणवाक्यावसेयाः । 'यत' इत्यत्र यच्छब्देनोक्तगुणविशिष्ट एव चोपस्थाप्यते ।

ब्रह्मणोऽभिन्ननिमित्तोपादानतां वर्णयन्तः परे—'यतो वे'त्यादिना ब्रह्मणस्तटस्थलक्षणमुच्यते इति वदन्ति । तथा हि—ननु जिज्ञास्यस्य निर्गुणब्रह्मणः कारणत्वं कथं लक्षणमिति चेत् । उच्यते । यथा रजतं शुक्तेर्लक्षणं यद्रजतं सा शुक्तिरिति, तथा यज्जगत्कारणं तद्ब्रह्मेति कल्पितं कारणत्वं तटस्थं सदेव ब्रह्मणो लक्षणमित्यनवद्यमिति ।

तान् पृच्छामः—तटस्थं सदेव लक्षणमिति किम् ? । साक्षाल्लक्ष्ये असंबद्धमपि लक्ष्यं लक्षयतीति तटस्थलक्षणमुच्यते । असंबद्धं सत् ज्ञापयतीत्येतत् कथम् ? । ननु—शाखा चन्द्रं ज्ञापयति, सा च न चन्द्रे संबद्धा । नैतत् । अपरिपूर्णकलमस्फुटावभासं चन्द्रमवबोधयन्तः प्राहुः 'शाखायां चन्द्रः' 'शाखाचन्द्र' इति वा । चन्द्रदेशं तत्समरेखागतप्रदेशया शाखया लक्षयन्ति । 'क्व चन्द्र' इति पृष्टे शाखां प्रदर्श्य तद्देशसमरेखं चन्द्रदेशं ज्ञापयितुमयमभ्युपायः 'शाखाचन्द्र' इति । चन्द्रदेशस्य लक्षणं भवतु शाखा न चन्द्रस्य । किञ्च असम्बद्धं लक्षणमिति व्याहतम् । शाखायाश्चन्द्रलक्षणत्वे विवक्षितः सम्बन्धः समरेखदेशस्थत्वम्, तेन सम्बन्धेन शाखा चन्द्रेण सम्बद्धैव । येन सम्बन्धेन लक्षणत्वं विवक्षितं तेन सम्बन्धेन हि लक्ष्यसम्बन्धोऽपेक्ष्यते नान्येन । ननु—कल्पितं

जन्मादि तत्कारणत्वं वा, तस्य न निर्विशेषे ब्रह्मणि सम्बन्धः। अथापि ज्ञापयति व्यवहृतेः, तदुच्यते तटस्थलक्षणमिति। न। स्वगोष्ठीमात्रनिष्ठेयं हि प्रक्रिया सत्यं लक्षयति कल्पितमिति। नहि कल्पितं रजतं शुक्तिं लक्षयितुं प्रभवेत्। यदि प्रभवेत् कल्पितेऽवधृतेऽधिष्ठानमवधृतमेवेति कथमध्यासावभासः। लक्षणस्य फलमेतदेव हि यल्लक्ष्यतत्त्वनिर्णयः। ननु—कार्यं धूमादि कारणं वह्न्यादि लक्षयति, विना कारणं कार्यस्य कथमुद्भव इति। तथैवाध्यासोऽधिष्ठानं विना नैव भवेत्, तदध्यासोऽधिष्ठानं लक्षयति। वह्नेर्लक्षणं भवन्नपि यथा धूमो न वह्नेः स्वरूपमवधारयितुमीष्टे, तथैवाध्यासोऽधिष्ठानस्य लक्षको भवन्नपि नाधिष्ठानस्वरूपं निर्धारयितुमीष्टे। अत एव ब्रूमः "सत्यं ज्ञान"मित्यादिश्रुतिः स्वरूपमवगमयतीति। सत्यम्। कार्यं कारणं लक्षयति। तथाऽपि न कारणस्याधारणधर्मः कार्यम्। तत् कार्यं केवलं कारणमनुमापयति। असाधारणधर्मस्तु लक्षणम्, यस्य व्यावृत्तिर्व्यवहारो वा प्रयोजनं भवेत्। कथमपि ज्ञापके भवति तस्येदं लक्षकमिति लक्षणमिति वा व्यवहारः। न तद्वस्तुपरीक्षायामुपयुज्यते। तथाच किं वक्तव्यमध्यासो नाधिष्ठानस्य लक्षणमित्यत्र। यज्जिज्ञास्यतया प्रस्तुतं तत्परीक्षा हि भवत्युत्तरेण ग्रन्थेन। कथमप्युपलक्षकेन परीक्षणं कथं घटेत। तुष्यतु वा परः कल्पितेन जन्मादिना सत्यं ब्रह्मोपलक्ष्यत इति। परं सूत्रकारस्य नैतद्धार्दम्। तथा सति 'यतोऽध्यास' इति सूत्रेण भाव्यम्। ननु सूत्रकारः श्रुतिशैलीमनुसरति; "यतो वा इमानि भूतानि जायन्त" इति हि श्रूयत इति। सत्यम्; श्रुतिमनुसरति सूत्रकारः, भवांस्तु न तां न तं चेत्येतदेव ब्रूमः।

स्वेतरसमस्तवस्तुविलक्षणं परं ब्रह्म सविशेषमभ्युपगच्छन्नपरो[1]ऽप्याह—'यद्यपि जन्मादेर्जगन्निष्ठत्वेन ब्रह्मण्यसम्बन्धः, तथापि ताटस्थ्येन लक्षणत्वं युज्यत' इति। व्याचक्षते चेदं तस्य टीकाकाराः[2]—

टिप्प०—१ अपरः—श्रीकण्ठाचार्यः। २ अप्पयदीक्षिताः।

'अतन्निष्ठत्वेन तल्लक्षणत्वासम्भवं तावत्परिहरति—यद्यपीति । असम्बन्धो धर्मधर्मिभावसम्बन्धाभावः । ताटस्थ्येनेति । यथा शाखाग्रस्य चन्द्रलक्षणत्वं तद्व'दिति । असत्यपि धर्मधर्मिभावे लक्ष्यगतविशेषासमर्पकतया शाखाग्रस्य ताटस्थ्येन चन्द्रलक्षणत्वमास्ताम् । जन्मादिसमुदायस्य तु लक्ष्यगतनिरतिशयबृहत्त्वलक्षणविशेषसमर्पकस्य लक्ष्येण विना सम्बन्धं यत् ताटस्थ्यलक्षणत्वनिर्वहणं तत् कथमित्यभिप्रायेण नन्वित्यादिना पुनस्त एवाशङ्क्य समादधते—'ननु जन्मादिसमुदायस्य लक्ष्यगतनिरतिशयबृहत्त्वसिद्धौ हेतुभावेनैवोपयोग इति तस्य कथं ताद्धर्म्याभावे लक्षणत्वमुपपद्यत इति चेत् । उपपद्यत एव । निमित्तोपादानसाधारणहेतुहेतुमद्भावसम्बन्धेन जन्मादिकस्य लक्षणीकरणात्' इति ।

इदमिह विचार्यम्—अतिपतितपारमैश्वर्यनिर्विशेषब्रह्मवादिनां तु जगत्कारणत्वस्य लिलक्षयिषिते ब्रह्मण्यसम्बन्धेन तटस्थलक्षणत्वाश्रयणं युक्तम् । सुवचं नामास्य सविशेषं ब्रह्माभ्युपगच्छतः जगज्जन्मादिकारणत्वं धर्मधर्मिभावेन ब्रह्मणो लक्षणमिति । सूत्रस्वरसगतिश्च जन्मादिकारणत्वस्य लक्षणत्वे । यतोऽस्य जन्मादि तद्ब्रह्मेति हि सूत्रार्थः । सत्यप्येवं किमिति जन्मादेर्जगन्निष्ठस्य लक्षणत्वं सूत्रकारोक्ततयाऽभिप्रेत्यातन्निष्ठं चन्द्रस्य शाखाग्रमिव तटस्थलक्षणमिति परिक्लिष्टमाचष्टे । व्याख्याता च घटयति कारणत्वसम्बन्धेन जन्मादेर्ब्रह्मणि सम्बन्धं निरूपयन् तटस्थलक्षणताम् । जन्मादिकारणत्वस्य लक्षणत्वे सम्भवति जन्मादेः कारणत्वसम्बन्धेन लक्षणत्वं किमित्याश्रीयते इत्याशङ्क्य लाघवादिति च स एव समाधत्ते । अत्रापि किं तल्लाघवमिति विचार्यम् । कारणत्वस्य लक्षणशरीरेऽप्रवेशादिति चेत् । जन्मादेरपि लक्षणशरीरे प्रवेशस्त्यज्यताम्, जगदेव स्वीयजन्मादिकारणत्वसम्बधेन लक्षणमिष्यताम्, ततोऽपि लाघवात् । भेदेन लक्ष्ये लक्षणयोगमुपपादयन् स्वरूपलक्षणतटस्थलक्षणभेदं निर्वहति । तदिदं निर्वहणकौशलप्रदर्शनं केवलम् ॥ २ ॥

**(अ. स.)** विचित्ररचनस्यास्य जन्मस्थितिलयं यतः ।
जिज्ञास्यं तत् परं ब्रह्म सर्वज्ञं सर्वशक्ति च ॥ १ ॥

उपादाननिमित्तत्वरूपा विश्वस्य हेतुता ।
सर्वज्ञे सर्वशक्तौ च लक्ष्ये ब्रह्मणि वर्तते ॥ २ ॥
बहु स्यामिति सङ्कल्प्य बहुधा भवतः स्वयम् ।
उपादाननिमित्तत्वे ह्यक्षते श्रुतिदर्शिते ॥ ३ ॥

**पूर्वपक्षः–**

विचारो ब्रह्मणः सोऽयमारब्धुं नैव युज्यते ।
प्रतिपत्तुमयोग्यस्य विचारो घटते नहि ॥ ४ ॥
वस्तुनः प्रतिपत्तिस्तु लक्षणेनैव सिध्यति ।
ननु जन्मस्थितिलयैर्जगतो ब्रह्म लक्ष्यते ॥ ५ ॥
भृगुवल्ल्यां समाम्नाता सेयं जन्मादिहेतुता ।
श्रूयतां लक्षणं तन्न लक्ष्यं लक्षयितुं क्षमम् ॥ ६ ॥
विशेषणतया तस्य ब्रह्मलक्षणता यदि ।
हेतुतात्रयरूपत्वात् ब्रह्मत्रित्वं प्रसज्यते ॥ ७ ॥
विशेषणबहुत्वे हि विशेष्यं च विभिद्यते ।
विभिनत्ति विशेष्यं हि तस्य यत्स्यात् विशेषणम् ॥ ८ ॥
अथोपलक्षणत्वेन ब्रह्म लक्षयतीति चेत् ।
लक्ष्याकारातिरिक्तेन प्रतिपन्नेन केनचित् ॥ ९ ॥
आकारेण तृतीयेन भाव्यं नेह स कश्चन ।

**सिद्धान्तः—**

स्वानाश्रयाद्विशेष्यं तु विभिनत्ति विशेषणम् ॥ १० ॥
न स्वेतराश्रयात् तन्न ब्रह्मत्रित्वं प्रसज्यते ।
उपादाननिमित्तत्वाक्षिप्तसर्वज्ञतादिभिः ॥ ११ ॥
लक्ष्याकारबृहत्त्वान्यतृतीयाकारसम्भवात् ।
तस्योपलक्षणत्वेन लक्षणत्वं च युज्यते ॥ १२ ॥

इति भाष्ये जन्माद्यधिकरणम् ॥ २ ॥

ननु—शास्त्रमिदमनारम्भणीयम् । मानान्तराप्राप्ते हि शास्त्रस्य प्रामाण्यम् । ब्रह्म तु मानान्तरेणापि सिध्यति । तद्धि जगत्कारणमुक्तम् । स चेश्वरः । स चानुमानेन सिध्यति इत्यत आह—

## शास्त्रयोनित्वात् । १ । १ । ३ ।

शास्त्रं योनिः ज्ञापकं यस्य तत्त्वात् । शास्त्रमेव योनिर्यस्येत्यवधारणगर्भो बहुव्रीहिः । शास्त्रैकगम्यत्वादिति यावत् । यस्माद्ब्रह्म शास्त्रैकवेद्यम्, न मानान्तरगम्यम्, तदप्राप्तत्वात् तत्र शास्त्रस्य प्रामाण्यं युज्यत इति शास्त्रमिदमारम्भणीयमिति सूत्रार्थः ।

**अत्र संशयः**—ब्रह्म मानान्तरगम्यं न वेति । तत्र पूर्वपक्षी मन्यते—अस्ति मानं श्रुतेरन्यत् तस्मिन् । ननु असन्निकृष्टे तस्मिन् न बाह्यमध्यक्षम् । नापि मानसम्, तद्धि स्वात्मनि स्वीये सुखादावेव प्रभवति । न च योगजमस्मिन् प्रभवति । स्मृत्यभ्यासपाटवायत्तप्रत्यक्षसधर्मताकः स्मर्यमाणार्थावभास एव तु सः, स्मृतिश्च पूर्वानु-

---

ननु शास्त्रमिदमनारम्भणीयम् । अप्राप्ते हि शास्त्रं प्रवर्तते । ब्रह्म च प्रमाणान्तरतः प्राप्तमेव । अनुमानेन जगत्कारणत्वलक्षणलक्षितस्य तस्य सिद्धेः । इयं चात्रानुमानसरणिः—यत् कार्यं तत्सकर्तृकम्, यथा घटादि; कार्यं च महीमहीधरादि । न चास्य कर्ता परिमितज्ञानशक्तिको जीवो भवेत् । तत् अपरिमितज्ञानशक्तिना अतीन्द्रियार्थदर्शिना केनचित् सर्वेश्वरेणैव भाव्यमिति । तथा च प्रमाणान्तरप्राप्तत्वान्न तद्विचारलक्षणं शास्त्रमारम्भणीयमित्यत्राह—

### शास्त्रयोनित्वात् । १ । १ । ३ ।

शास्त्रमेव योनिः—ज्ञापककारणं यस्य, तथात्वात् । प्रमाणान्तरागम्यत्वादिति यावत् । कार्येण सकर्तृकेन भाव्यमित्यस्तु नियमः । एकदैवैकेनैव कर्त्रा सर्वं कार्यजातं कृतमिति तु न नियमः । गोपुरप्राकारादीनि हि पृथुतरकार्याणि कालक्रमेण बहुभिः संभूय निर्मितानि दृश्यन्ते । तस्मात् विविधविचित्रजगद्धेतुभूतः परमात्मा सर्वेश्वरः शास्त्रैकगम्य इति तद्विचारलक्षणं शास्त्रमिदमारम्भणीयमेव ॥ ३ ॥

**इति प्रदीपे शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥**

भूतस्यैव। कल्पितस्य चेत् स्मृतिः अप्रमाणमेव तु सा। नाप्यनुमानम्। लिङ्गाभावात्। नियतसाहचर्यनिश्चये च प्रत्यक्षसापेक्षतया न तस्येहावकाशः। न। सावयवत्वेन जगतोऽस्य महीमहीधरादिलक्षणस्य कार्यत्वे सिद्धे, कार्यत्वसकर्तृकत्वयोश्च नियतसाहचर्यं विनिश्चितमेव कार्यवर्गे इति कार्यत्वेन हेतुना कर्तुरीश्वरस्य सिद्धिः। ननु सिध्यन्नप्यज्ञोऽसमर्थो वा सिध्येत्। न। स्वोपादानगोचरापरोक्षज्ञानवता स्वनिर्माणसमर्थेन हि कर्त्रा सर्वत्र भूयते। तत् जगतोऽस्य महीमहीधरादिविचित्रकार्यवर्गस्य कर्त्राऽपि तदुपादानोपकरणाद्यभिज्ञेन सर्वज्ञेन सर्वसमर्थेन भाव्यम्। तथाविधश्च कर्ता सर्वेश्वर एव। नन्वभिन्ननिमित्तोपादानं हि ब्रह्म, तच्च नानुमानगम्यम्। नैतत्। विरुद्धमिदमर्थतत्त्वम्, विकारयोग्यं हि भवत्युपादानम्, अतदर्हः पुमानेव निमित्तम्। न तु तत्र[1] शब्दोऽपि प्रभवति। शब्दश्चेत्तथाविधः कश्चित्, उपचारत एव तु नेयः। तदानुमानिके ईश्वरे शब्दः सर्वोऽपि अनुवादकतयैवान्वेति। श्रुतिश्चाप्तप्रणीततयैव तु प्रामाण्यमर्हति। भारतादिवत्। स ह्याप्ततमः सर्वेश्वरः कर्ता श्रुतेः। तत्कर्तृकतया प्रमाणभूता च सा विप्रतिपन्नं प्रति न तं प्रमापयितुमीष्टे। तदनुमानमेव तु तस्मिन् प्रमाणम्।

ननु सिध्यतु सकर्तृकत्वम्, तथाप्येककर्तृकत्वं कथं सिध्येत्। न। अचेतनारब्धमेकचेतनाधीनं दृष्टम्; यथा स्वशरीरमरोगम्। ननु कार्यमात्रस्याल्पज्ञाल्पशक्तिकपुरुषकर्तृकत्वमेव तु दृष्टम्, तदनुमानेन सिध्यतोऽल्पज्ञानाद्यापतेत्। नैतत्। घटादेः कर्त्रा घटोपादानोपकरणसम्प्रदानाद्यभिज्ञेन तन्निर्माणसमर्थेन भाव्यमित्येव तु नियमः, न तु ततोऽन्यत्रानभिज्ञेनापि भाव्यमिति। न हि तत्रानुकूलस्तर्कः। दृश्यमानेऽपि साहचर्यनियमे अप्रयोजकशङ्काऽनुकूलतर्केण हि वार्यते। ननु एवमपि सर्वमेव कार्यं न कर्तारं साधयितुमीष्टे, यत् शक्यक्रियं शक्योपादानविज्ञानं च तदेव तु कर्तारं साधयितुमीष्टे। तथाहि—घटादिकार्यं कुलालादिकृतं पश्यन् तज्जातीयं पृथुतमं शक्यक्रियं जानन् तत्रापि

टिप्प०—(१) तत्र—अभिन्ननिमित्तोपादाने। तत्प्रतिपादन इति यावत्।

कर्तारमनुमिनोतु, महीमहीधरादिकं बीजाङ्कुरादि चाशक्यक्रियं जानतः कथं तत्र सकर्तृकत्वसिद्धिः । तथाच सकर्तृकत्वसाधकतयाऽभिमतं कार्यत्वं शक्यक्रियत्वेन सोपाधिकतया भवति व्याप्यत्वासिद्धम् । नैतत् । कथमशक्यक्रियत्वमवधार्यते तत्र । न शक्नोति कश्चित् कर्तुं तदिति चेत् । नैवम् । सावयवत्वेन कार्यत्वे निश्चिते तेनैव लिङ्गेन तन्निर्माणसमर्थः कर्ताऽनुमानबललभ्य इति नाशक्यक्रियत्वं तत्र सिध्यति । उपाधिलक्षणे साधनाव्यापकत्वांशो नेत्येतत् । तत् अनुमानगम्ये ब्रह्मणि न श्रुतेः प्रामाण्यमिति ब्रह्मविचारात्मकमिदं शास्त्रं नारम्भणीयम् ।

अत्रोच्यते—कार्यत्वं सकर्तृकत्वं साधयदपि नैककर्तृत्वं साधयितुं प्रभवति । दृश्यन्ते हि कार्याणि बहूनि रथगोपुरप्रासादादीन्यनेककर्तृकाणि । तथा नैककालकृतत्वमपि, तेष्वेव कार्येषु रथादिषु क्रमशः कालभेदेन निष्पत्तिदर्शनात् । न चानुकूलस्तर्कः एकदैवैककर्तृकत्वे । तदनुमानेन न सर्वज्ञसर्वसमर्थैकेश्वरसिद्धिः सम्भवेत् । यदप्युक्तमचेतनारब्धमेकचेतनाधीनं दृष्टमिति । किमिदमेकचेतनाधीनत्वम्? । न तावदेकचेतनायत्तोत्पत्तिस्थितिकत्वम्, दृष्टान्ते तदसम्भवात् । नहि शरीरस्योत्पत्तिः स्थितिर्वा एकचेतनायत्ता । अदृष्टद्वारेण चेत्, भार्यापुत्राद्यदृष्टायत्तत्वमप्यस्त्येव । या तु शरीरस्य स्थितिरवयवेष्ववयविनः सा तु अवयवसंश्लेषविशेषायत्तेति न चेतनायत्ता । या तु प्राणनलक्षणा स्थितिर्न सा पक्षतयाऽभिमते महीमहीधरादौ । पक्षसपक्षसाधारणीं तु तां न पश्यामः । ननु उपचितपुण्यविशेषैः बहुभिः कालभेदेनेदं कृतमिति न घटते । उपचितपुण्यविशेषा बहवोऽपि हि परिमितशक्तिका एवेति न तैरस्याचिन्त्यविचित्ररचनस्योत्पत्तिरुन्नेया । अतोऽपरिमितशक्तिनैतेभ्योऽन्येन सर्वज्ञेनैव भाव्यमिति चेत् । नैतत् । एकदैवास्य सर्वस्य सृष्टिः लयश्चेत्येतत्तु प्रत्यक्षतो विरुद्धम् । क्रमश एव चोत्पत्तिविनाशा वस्तूनां दृश्यन्ते । तदुपचितपुण्यविशेषैः पुरुषैरेव क्रमश एवेदं कृतमित्यपि वक्तुं सुशकम् । अतिरिक्तैककल्पनायां गौरवात् ।

किञ्च—कार्यं सकर्तृकमिति व्याप्तिरपि विचार्यमाणा न सिध्यति ।

कार्यमिति किमभिप्रेतम्, किं कृतिसाध्यम्, उत जन्यमात्रं वा। कृत्या साध्ये पाकादौ स्यात् कर्तुरपेक्षा, कृत्या चेतनधर्मेण चेतनाधिष्ठिते शरीरे चेष्टा समुद्भवति, ततश्च पाकादीति। तत् शरीरव्यापारसाध्ये भवतु कृतेरपेक्षा, जन्यमात्रे तु न। अङ्कुरादि तु स्वकारणसन्निपातादुद्भवति, दावानलादि च स्वकारणसन्निपातादेवेति न तत्र तत्र कर्तुरपेक्षा। तान्यपि पक्षे अन्तर्भाव्य सकर्तृकत्वसाधनं तु केवलं शुष्कतर्ककौशलम्। तैलादिषु ज्वलनकारणेषु क्षीयमाणेषु दीपः स्वयमेव नश्यति, तत्र किं नाशकहेतोः कर्तुरपेक्षया। तथैवोत्पत्तावपि क्वचित्। अतिलङ्घ्य प्रत्यक्षसिद्धं कार्यकारणभावं किं जन्यमात्रस्य सकर्तृकत्वकल्पनया। तत् कथमप्यनुमानेन नेश्वरः सिध्येत्।

किञ्च कृतिश्चेतनधर्मोऽपि सशरीरस्यैव दृष्टा, अशरीरस्य मुक्तात्मनः कर्तृत्वादर्शनात्। अशरीरश्चेश्वरः। यदि सशरीरः, तस्य तत् शरीरं नित्यमुतानित्यम्। सावयवस्य तस्य नित्यत्वमनुपपन्नम्। अनित्यत्वे विनाशस्याप्यवश्यम्भावः। उत्पादकं च तस्य वक्तव्यम्। न चादृष्टादि तस्य। सत्यदृष्टादौ तस्य संसारित्वमापतेत्। सृष्टेः प्राक् शरीरारम्भकं च न किञ्चित्। न च परमाणव एव शरीरमिति वक्तुं युक्तम्। ते ह्यतल्लक्षणाः। भोगायतनत्वं हि तल्लक्षणम्। अथ केन लक्षणेन तत्तस्य शरीरम्। ज्ञानेच्छाकृतीनामवच्छेदकतयेति च न युक्तम्। नित्यानामीश्वरधर्माणां तेषां किमवच्छेदककल्पनेन। इच्छामात्रेण व्याप्रियमाणत्वादिति चेत् योगिनामिच्छामात्रेण व्याप्रियमाणानां मूर्तान्तराणामपि तच्छरीरत्वं प्रसजेत्। न चास्मास्वेष पर्यनुयोगः प्रसजेत्। श्रुतिविरुद्धं तर्कं न वयं प्रमाणयामः। श्रुत्येकसमधिगम्ये न केवलतर्कावसरः। तत् ब्रह्मणः शास्त्रैकगम्यत्वेन मानान्तरागम्यत्वात् शास्त्रमिदमारम्भणीयमिति सुस्थितम्॥ ३॥

(अ. स.) शास्त्रादन्येन मानेन ब्रह्मणः प्राप्त्यसम्भवात्।
शास्त्रस्यारम्भणीयत्वमस्य तावत्सुखं स्थितम्॥ १॥

## पूर्वपक्षः-

महीमहीधरादीदं कार्यं सावयवत्वतः ।
सर्वं सावयवं कार्यं कार्यं यत्तत्सकर्तृकम् ॥ २ ॥
भाव्यं कर्त्रा तु तस्यास्य शक्तेनाखिलदर्शिना ।
उपादानोपकरणसम्प्रदानाद्यजानतः ॥ ३ ॥
न युज्यते हि कर्तृत्वं तन्नाल्पज्ञेऽस्य कर्तृता ।
तथा च सकलस्यास्य कर्तैकः सिध्यतीश्वरः ॥ ४ ॥

## सिद्धान्तः-

नानुमानं प्रभवति विश्वकर्तुः प्रसाधने ।
आस्तां सावयवं कार्यं कार्यं चापि सकर्तृकम् ॥ ५ ॥
महीमहीधरादीनां कर्तैकस्तु न सिध्यति ।
प्रकृष्टपुण्यसम्पन्नशक्तिप्रज्ञाबलान्वितैः ॥ ६ ॥
सम्भूय बहुभिः कालक्रमात्स्युस्ते कृता न किम् ।
अन्यान्यकर्तृकं सर्वं दृष्टमन्यान्यकालजम् ॥ ७ ॥
आदौ विश्वमिदं कश्चित् सृजतीत्यपि दुर्वचम् ।
कार्यशून्यस्तु समयः काले नैव कदाचन ॥ ८ ॥
कार्यजातमिदं सर्वं स्वस्वहेतुसमुद्भवम् ।
नापेक्षते समुत्पत्तावधिष्ठातारमीश्वरम् ॥ ९ ॥
जीवानामेव भोक्तॄणां स्यादधिष्ठातृता न किम् ।
भोगोपधायकादृष्टद्वारेण घटिता हि सा ॥ १० ॥
तस्माच्छास्त्रैकगम्यत्वे निर्बाधं ब्रह्मणि स्थिते ।
तद्विचारात्मकं शास्त्रमारब्धव्यमिति स्थितम् ॥ ११ ॥

॥ इति भाष्ये शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

यद्यपि ब्रह्म प्रमाणान्तराप्राप्तम्, अनवगतेऽर्थे भवति नाम जिज्ञासा। अथापि न तस्मिन् वेदान्तवाक्यानां प्रामाण्यमुपपद्यते। तद्धि न पुरुषार्थभूतम्। पुरुषार्थस्तु प्रवृत्त्या निवृत्त्या वा साध्यः। ब्रह्म तु सिद्धम्, तदपुरुषार्थभूते तत्र न शास्त्रं प्रमाणं भवितुमर्हति। अतस्तद्विचारो नारम्भणीयः। अत आह—

## तत्तु समन्वयात् ॥ १।१।४ ॥

तत्-ब्रह्मणः शास्त्रप्रमाणकत्वं सम्भवत्येव। तुशब्दः शङ्कानिवृत्तौ। कस्मात्? समन्वयात्, पुरुषार्थतया ब्रह्मणि वेदान्तवाक्यानामन्वयः—सम्यगन्वयः।

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—अस्तु नाम पदानां सिद्धार्थोपस्थापने सामर्थ्यम्। सिद्धमपि ब्रह्म पदेनोपस्थाप्यतां च। तच्च ब्रह्म भवतु लक्ष-

---

ननु शास्त्रैकगम्यत्वं ब्रह्मणो न घटते, अपुरुषार्थत्वात्। यदेव फलं तदेव हि पुरुषेणाभ्यर्थ्येत। फलेन च साध्येन भाव्यम्। नच वर्षस्वर्गादिवदिदं साध्यम्, नित्यसिद्धत्वात्। अत्रोच्यते—

### तत्तु समन्वयात्। १। १। ४॥

तत्तु—शास्त्रैकगम्यत्वं तु, समन्वयात्—फलतयाऽन्वयः—सम्यगन्वयः, तस्मात्। फलतया वेदान्तवाक्यैर्ब्रह्म बोध्यत इत्येतत्। फलत्वं चानन्दमयत्वात्। नहि साध्यमात्रं फलम्, अपुरुषार्थस्यापि साध्यत्वाविशेषात्। आनन्दस्यैव तु फलत्वम्। नित्यसिद्धत्वेऽपि पुरुषैरभ्यर्थ्यत्वं नानुपपन्नमप्राप्तत्वात्। श्रूयते च परस्य ब्रह्मणः आनन्दमयत्वमानन्दवल्ल्याम्। **यद्वा**[1]—ननु यत् शास्त्रैकगम्यत्वं ब्रह्मण उक्तं तन्न सम्भवति, वेदान्तवाक्यानां तस्मिन्ननन्वयात्। क्वचित् सन्मात्रस्य क्वचिदसतः क्वचिदात्मनः क्वचिदाकाशस्यैव हि जगत्कारणत्वं प्रतिपाद्यते। इत्यत्राह—**तत्तु समन्वया**दिति। शास्त्रयोनित्वं ब्रह्मणो युज्यत एव; समन्वयात्—वेदान्तवाक्यानां सर्वेषां तस्मिन्नविरोधेन समन्वयात्। अयमन्वयः समर्थ्यते शास्त्रेणानेन वर्तिष्यमाणेन ॥ ४ ॥

**इति प्रदीपे समन्वयाधिकरणम् ॥ ४ ॥**

---

**टिप्प०—१** इयं योजना परप्रक्रियया परेषामपि रञ्जनार्था। परं सिद्धान्ताविरोधिनी।

णत्वः प्रतिपत्तुं शक्यम् । प्रमाणान्तराप्राप्तं च । अथापि न तत् प्रयोजनम् । प्रयोजनं च प्रवृत्तिनिवृत्तिसाध्यं दृष्टं लोके । अतस्तत्पराणामेव वाक्यानां प्रामाण्यम् । यथा—अर्थार्थी राजकुलं गच्छेत् मन्दाग्निर्नाम्बु पिबेदिति । वेदे च "ज्योतिष्टोमेन स्वर्गकामो यजेत" "न कलञ्जं भक्षयेत्" इति । तत्प्रयोजनपर्यवसायितयैव शास्त्राणां प्रामाण्यात् ब्रह्मणश्च प्रवृत्त्या वा निवृत्त्या वाऽसाध्यतया प्रयोजनत्वासम्भवेन न तस्य शास्त्रप्रमाणकत्वम् । जैमिनिनाप्येतदुक्तम्—"आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामि"ति । ननु—यत् प्रयोजनपर्यवसायि न, न तत्प्रमाणमिति न नियमः, चक्षुरादि प्रमाणं काष्ठलोष्टाद्यप्रयोजनमवगमयत् भवत्येव तत्र प्रमाणम् । उक्तं च तन्त्रटीकायाम्—'नहि लोष्टं पश्यतस्तद्दर्शनं निष्प्रयोजनमिति सुवर्णदर्शनता कल्प्यते' इति । नैतत् । प्रत्यक्षस्यैष स्वभावः, प्रयोजनमप्रयोजनं वा स्वविषयं प्रमापयतीति । शास्त्रस्य तु न तथा, शास्त्रेण प्रयोजनावबोधकेनैव भाव्यम् । नन्वस्तु तथा, अथापि सिद्धमपि प्रयोजनं भवितुमर्हति । नैतत् , प्रवृत्त्या निवृत्त्या वा साध्यमेव तु प्रयोजनम् । नित्यसिद्धस्य कथं पुरुषार्थता । ननु प्रवृत्तिनिवृत्तिपरत्वाभावेऽपि प्रयोजनपरं वाक्यं 'पुत्रस्ते जात' इत्यादिकं लोके दृष्टम् । अनेन वाक्येन श्रोतुर्हर्षोदयात् । पुरुषार्थावबोधेनैव हि तत्र हर्षः । नैतत् । पुत्रजन्मनः सतोऽप्यज्ञातस्य न हर्षाधायकतेति तज्ज्ञानं हर्षाधायकमिति वक्तव्यम् , तथा च पुत्रजन्मज्ञानस्यैव पुरुषार्थता । ज्ञानं चासत्यप्यर्थे स्यादेवेति न तद्वाक्यं पुत्रजन्मनि प्रमाणं भवितुमर्हति । बालातुरोपच्छन्दनवाक्यवत् । तथा च 'सदेव सोम्येदमग्र आसीत्' 'आत्मैवेदमग्र आसीत्' 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिवेदान्तवाक्यानां प्रवृत्तिनिवृत्तिपरत्वाभावेन, सिद्धब्रह्मावबोधपरत्वेऽपि असत्यप्यर्थे ज्ञानोदयसम्भवेन न ब्रह्मणि प्रामाण्यम् । तस्मादुक्तं शास्त्रयोनित्वं ब्रह्मणो न सम्भवति । एतेन सिद्धब्रह्मस्वरूपावबोधकानामपि 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिवेदान्तवाक्यानां 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्य' इति ध्यानविधिशेषतया

ब्रह्मणि प्रामाण्यमित्यपि निरस्तम् । ध्यानविधेः स्मर्तव्यसापेक्षत्वेऽपि स्मर्तव्यपारमार्थ्यानपेक्षतया, तत्र तेषां प्रमापकत्वासिद्धेः । नामब्रह्मोपासनादिवत् ध्यानविधेरुपपत्तेः ।

अत्रोच्यते—शास्त्रप्रमाणकत्वं ब्रह्मणः सम्भवत्येव । समन्वयात्—पुरुषार्थतया तस्य वेदान्तेष्वन्वयात् । ननु सिद्धस्य-असाध्यस्य कथं पुरुषार्थता ? । साध्यस्य वा कथं पुरुषार्थता ? । पुरुषेणाभ्यर्थतया । अभ्यर्थना कस्य ? अनुकूलस्य । तर्ह्यानन्द एवानुकूलः सर्वस्य । निरतिशयानन्दस्वरूपं च ब्रह्म । श्रूयते च—"आनन्दो ब्रह्मे"ति । आनन्दवल्ल्यां चानन्दमयता । तापत्रयातुरस्य तु शास्त्रतस्तद्विजानतस्तत्प्राप्तौ भवेदेव सपदीच्छा । श्रावयन्ति च तत्प्राप्तावुपायम्—"ब्रह्मविदाप्नोति पर"मित्याद्याः । "रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवती"ति च पुरुषार्थलाभम् । न च साध्यमात्रं पुरुषार्थः । दीपमभिपतन् शलभः प्राप्नोति तु विनाशम् । ग्रीष्मे वनाद्वनं पर्यटतः परितप्तस्य तृषार्तस्य प्रसन्नशीतलमधुरसलिलसम्पूर्णं सरोवरं पश्यत एव कोऽप्यानन्दस्तदवगाहनेन च तापनिवृत्तिस्तृषोपशमः तृप्तिश्च भवति । तथास्य भवमहारण्ये पर्यटतस्तापत्रयाभिभूतस्याऽऽर्तस्य सर्वसन्तापशमनममृतमानन्दमयमुपश्रृण्वतो हृष्यतो भवति तत्प्राप्तौ त्वरा, सपदि तत्प्राप्तिसाधने तदुपासने प्रवर्तते, तत्प्राप्त्या च व्यपेतसर्वसन्तापः परमानन्दं च प्राप्नोति । तस्मात्सर्वमेव वेदान्तवाक्यजातं परमानन्दमयं प्राप्यं तत्प्राप्तिसाधनं चोपदिशत् प्रयोजनपर्यवसाय्येवेति ब्रह्मणः शास्त्रप्रमाणकत्वमुपपन्नतरमेव । यस्य तु मते परमार्थतो न तापत्रयातुरः, परमार्थतो न तापश्च, न वा तन्निवृत्तिः परमार्थतः, विशेषश्च न कश्चित्, नित्यशुद्धबुद्धं विज्ञानमेकं परमार्थभूतम्, तेन प्रयोजनपर्यवसायित्वं शास्त्रस्यास्य दुर्वचनम् ।

न तापो न निवृत्तिर्वा नाविद्या न तदाश्रयः ।
न तन्निवर्तकं ज्ञानं न विशेषश्च तत्त्वतः ॥ १ ॥
अथापि युक्ता शास्त्रस्य पुरुषार्थावबोधिता ।
इति ब्रुवाणा ये नाम कथं स्युस्तत्त्वदर्शिनः ॥ २ ॥

ननु—न शास्त्रमप्यतात्त्विकमिति तस्य पुरुषार्थपर्यवसायित्वमप्यतात्त्विकमेवास्तामिति चेत्, तदवबोध्यस्य ब्रह्मणोऽप्यतात्त्विकतैवापतेत् । यच्चोक्तम्—ब्रह्मस्वरूपावबोधकवाक्यानामसत्यप्यर्थे बालातुराद्युपच्छन्दनवाक्यवत् ज्ञानमात्रेण पुरुषार्थपर्यवसायितेति । नैतद्युक्तम् । हन्तेदमुपच्छन्दनमात्रमिति ज्ञाते विलीयत एव हर्षः समुत्पन्नोऽपि । तदर्थसत्यतां विना वाक्यं प्रयोजनपर्यवसायि नैव भवेत् । ध्यानविधिशेषतया स्वरूपपरवेदान्तवाक्यानां ब्रह्मणि प्रामाण्यसमर्थनमपि नानुपपन्नम् । सद्विद्यायामपि—'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति प्रयोजनशिरस्कता व्यक्तं श्रूयते । अतश्च सिद्धं ब्रह्मणः शास्त्रप्रमाणकत्वम् ।

केचित्तु[1]—सूत्रमिदं ब्रह्मणो जगदुपादानकारणत्वसमर्थनपरतया व्याचक्षते—'तत् ब्रह्मैव समवायिकारणम् । कुतः ? समन्वयात्—सम्यगनुवृत्तत्वात्' इति । टीकाकारश्चैतद्व्याचष्टे—'तदनुभूतं प्रसिद्धं वा समवायिकारणं ब्रह्मैवेत्यन्वयः' इति । नैतत्साधु । तत्पदस्य समवायिकारणपरता कथं नाम युज्यते । नन्वनुभवविशेषात् प्रसिद्धेश्च । कारणेषु त्रिषु समवाय्यसमवायिनिमित्तेषु समवायिकारणस्य प्रसिद्धिरनुभवविशेषश्चेति चेत् । समवायिन इवासमवायिनो निमित्तस्य च सा समानैव । पूर्वप्रकृतपरामर्शितायां स्वरससिद्धायां तत्प्रहाणमस्वरसम् । ब्रह्मेवेति च कुत आकृष्यते । प्रथमसूत्रतो विभज्य चेदाकर्षः, हन्त महान् क्लेशः । उत्तरत्र "प्रकृतिश्चे"ति सूत्रेण समवायिकारणत्वं स्थापयिष्यति सूत्रकार इति नेह तदवसरः । यत्तु 'जन्माद्यस्य यतः शास्त्रयोनित्वा'दित्येकं सूत्रम्, तत्र च ब्रह्मेति प्रकृतम् । शास्त्रयोनित्वादित्यस्मिन् सूत्रावयवे शास्त्रप्रतिपाद्यत्वेन कारणत्वं प्रकृतम्, पूर्वांशे च यत इत्यनेन । तस्मात् अस्मिन्नुत्तरसूत्रे तच्छब्देन समवायिकारणस्य ग्रहणमुचितमिति समुत्प्रेक्षणम् । तदपि विचार्यम् । नहि शास्त्रे समवायि-

---

१. वल्लभाचार्याः ।

कारणमेव प्रतिपाद्यते । [1]ननु समवायिकारणं प्रसक्तमिति तु ब्रूमः । [2]प्रसक्तस्य कारणत्वान्तरस्य समर्थनाय कुतः सूत्रान्तरं न व्यरचि । [3]निरूपणनिरपेक्षं सिध्यत्येव तदिति चेत् । [4]निरूपयिष्यत्यवसरे समवायिकारणत्वं 'प्रकृति'श्चेति सूत्रेणेत्युक्तमस्माभिः । [5]जन्माद्यस्य यतः, शास्त्रयोनित्वात्, इति वाक्यभेदे सति कथमेकसूत्रताश्रयणम् । लाभो वा तेन कः ? । "जन्माद्यस्य यत"इत्येतत् "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ती"तिश्रुतिं विषयीकृत्यैव प्रवर्तते इति कारणत्वस्य शास्त्रगम्यत्वे सिद्धे तत्समर्थनाय शास्त्रयोनित्वादिति कथनं व्यर्थम् । सूत्रस्थानि जन्माद्यस्येत्यादीनि प्रत्यभिज्ञापयन्ति हि तां श्रुतिम् । अस्येत्येकवचननिर्देशस्य तत्प्रत्यभिज्ञापकत्वोपमर्दकत्वमिति तु आग्रहमात्रम् । इदमा निर्देशः समानः, यत इति चैकम् । जन्मादीति जन्मादीनां श्रौतानां सङ्ग्रहः । एवं सति वचनभेदः कथमुपमर्दकः, जात्या तेषां निर्देशात् । यच्चोक्तम्—एकस्यैव कारणवाक्यस्य विषयत्वेन कारणवाक्यान्तराणामसङ्ग्रहेण ब्रह्मभेदापत्तिरिति । तदप्यपेशलम् । यदि कारणवाक्यमितोऽन्यदन्यथैव कारणतां ब्रूयात्तर्हि तदापत्तिः स्यात् । सरूपेषु कारणवाक्येषु एकस्मिन् विचारिते विचारितमेवेतरत् । यत इति पञ्चमी हेतुत्वमात्रपरेति निमित्तोपादानतयोः सङ्ग्रहः । जन्मस्थितिलयापेक्षया च कारणत्वोक्तिः । नेतः प्रकारान्तरेण कारणवाक्यं श्रूयते क्वचित् । यत्र चान्यथाशङ्कावकाशः, तत्र सूत्रकृतैवोत्तरत्र विचार्यते । [6]परे तु सूत्रमिदं सिद्धेप्यर्थे पदानां व्युत्पत्तिसमर्थनपरतया व्याचक्षते । नैतद्युक्तम् । प्रथमसूत्र एव तस्य समर्थितत्वात् ।

[7]केचिदेवमपि व्याचक्षते—यद्यपि वेदान्तवाक्यैर्ब्रह्मोपस्थाप्यते, अथापि न तत्र तेषां प्रमापकता । यत्परं शास्त्रं तत्रैव तस्य प्रामाण्यम् । आम्नायानां तु क्रियास्वेव तात्पर्यम् । आह च जैमिनिः—"आम्नायस्य क्रियार्थत्वादि"ति । आम्नायत्वाविशेषात् वेदशिरसामपि कर्मस्वेव तात्पर्यम् ।

---

**टिप्प०**—१ शङ्कावाक्यम् । २. परिहारवाक्यम् । ३. पुनः शङ्का । ४ परिहारः । ५ दूषणान्तरमाह पराभिमतसूत्रयोजनायाम् । ६ यादवप्रकाशीयाः । ७ निम्बार्काचार्यादयः ।

ज्ञानोपासनादि तु कर्मणां वीर्यवत्तरत्वायोपयुज्यते । ब्रह्मस्वरूपपराणां च वाक्यानां कर्मविधिशेषतया जपादौ विनियोगमात्रेण निर्वाहः । तस्मात् ब्रह्मणः शास्त्रप्रमाणकत्वं न युज्यत इति । तत्राह—'तत्तु समन्वया'दिति । अयं भावः—तत्परमेव शास्त्रं तत्र प्रमाणमिति युक्तम् । वेदशिरांसि च ब्रह्मपराण्येव । कथमिदमवगम्यते—समन्वयात् । ब्रह्मण्येव वेदान्तवाक्यानां सम्यगन्वयात् । तथाहि—"परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान् नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं, तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय × × × प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" इत्यनेन निर्विण्णमधिकृत्यैव ब्रह्मविद्या प्रवर्तते इत्यवगम्यते । तथा श्रूयते चायं प्रश्नः—"अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यति तद्वद" इति । धर्मतत्फलाभ्यां निर्वेदो ह्यनेन गम्यते । तस्मान्न कर्मविधिशेषतया वेदान्तानामन्वयो घटते । अपि तु ब्रह्मण्येव तेषां सम्यगन्वयः । यन्निःश्रेयसार्थिभिः प्राप्यतयोपास्यतया च ब्रह्मैव प्रतिपाद्यते,प्रतिपाद्यते च तस्यास्य स्वरूपम् । तथाहि श्रूयते—"ब्रह्मविदाप्नोति परम्" "सत्यं ज्ञानमनन्तं ब्रह्म" "यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति । वेदनं चेदमुपासनमेव । "उपासीते"त्यादिविशेषश्रुतेः । तस्यास्य ब्रह्मणः सर्वान्तरात्मनः सत्यज्ञानादिस्वरूपस्य सर्वकारणतां "आत्मन आकाशः सम्भूत" इत्यादिना प्रतिपाद्य तस्यानन्दमयस्य सर्वलोकप्रशासितृत्वं "भीषास्मादि"त्यादिना प्रतिपाद्य तस्यैव परमपुरुषार्थतामवबोधयितुं "सैषानन्दस्य मीमांसा भवती"त्यादिना निरतिशयानन्दत्वमुपपाद्यते । "रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इति ब्रह्मविदः ब्रह्मानन्दलाभश्च पुरुषार्थः श्राव्यते । "एष ह्येवानन्दयाती"ति पुरुषार्थप्रापकता च । एवं शाण्डिल्यविद्यायाम्—"सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते"ति ब्रह्मोपासनमुपक्रम्य "एतमितः प्रेत्याभिसम्भविताऽस्मी"ति

ब्रह्मप्राप्तिफलकतया तदुपासनमुपसंह्रियते। तथा चैष सारार्थः सर्वासामुपनिषदाम्—उपास्यमानः परब्रह्मभूतः पुरुषोत्तमः सर्वेश्वर आनन्दमयः उपासनया प्रसन्न उपासकानां स्वानन्दानुभवं वितरतीति। तत्र कानिचिद्वेदान्तवाक्यानि यदेव प्राप्यमुपास्यं च निःश्रेयसार्थिनां तस्य परस्य ब्रह्मणः स्वरूपं सर्वस्य कारणं सर्वकल्याणगुणपरिपूर्णं प्रतिपादयन्ति, कानिचिद्वेदान्तवाक्यानि तदुपासनाभेदं प्रतिपादयन्ति। तदेवमनन्यपरतया तस्मिन्नेव शास्त्रस्यास्य समन्वयात् ब्रह्मणः शास्त्रयोनित्वं युक्तमेवेति। यश्चात्र परेषामाक्षेपः स्वानन्यतया ब्रह्मणः प्राप्यता नोपपद्यते इति, स च जीवात्मपरमात्मनोर्भेदसमर्थनेन प्रतिक्षिप्तो वेदितव्यः। सूत्रकार एव च भेदं समर्थयिष्यति। अवसरे निरूपयिष्यामः।

(अ.स.) शास्त्रप्रमाणकत्वं यत् ब्रह्मणस्तदबाधितम्।
पुरुषार्थतया तस्य वेदान्तेषु समन्वयात् ॥ १ ॥

**पूर्वपक्षः—**

प्रवृत्त्या वा निवृत्त्या वा ननु साध्यं प्रयोजनम्।
यदसाध्यं नित्यसिद्धं कथं स्यात्तत्प्रयोजनम् ॥ २ ॥
यदप्रयोजनं तस्मिन् शास्त्रं नैव प्रमापकम्।
सिद्धे ब्रह्मणि शास्त्रस्य तत्प्रामाण्यं न युज्यते ॥ ३ ॥

**सिद्धान्तः—**

अज्ञातब्रह्मतत्त्वानामाक्षेपोऽयमसङ्गतः।
निःसीमानन्दरूपत्वात् ब्रह्मणः पुरुषार्थता ॥ ४ ॥
साध्योऽप्यननुकूलश्चेन्न तस्य पुरुषार्थता।
ज्वलद्दीपशिखास्पर्शो ह्यनर्थो बालचापलम् ॥ ५ ॥
सिद्धस्याप्यनुकूलस्य दृष्टा च पुरुषार्थता।
आनन्दान्न परं किञ्चिदनुकूलं तु वर्तते ॥ ६ ॥
पुमर्थता तत्र मुख्या साधनेषूपचारतः।
तथा च शास्त्रयोनित्वं ब्रह्मणस्तदबाधितम् ॥ ७ ॥

इति भाष्ये समन्वयाधिकरणम् ॥ ४ ॥

प्रथमं निःश्रेयसार्थिभिर्ब्रह्म जिज्ञास्यमिति प्रतिज्ञातम् । अथ तस्य जन्मादिकारणत्वं लक्षणमुक्तम् । ब्रह्मणः प्रमाणान्तरप्राप्तत्वाप्रयोजनत्वाशङ्के शास्त्रस्यानारम्भणीयत्वापादके क्रमाद्वाभ्यां सूत्राभ्यां परिहृते । अथ ब्रह्मणः कारणत्वप्रापकवेदान्तवाक्यानि परीक्ष्यन्ते । लक्षणनिरूपणानन्तरं लक्षणप्रापकवाक्यं हि परीक्षणीयम्, येनाशङ्कानिरसनेन लक्षणं सुस्थितं स्यात् । तत्र 'सदेव सोम्येदमग्र आसी'दित्यादि वेदान्तवाक्यं ब्रह्मैव प्रतिपादयति न प्रधानमिति समर्थ्यते—

## ईक्षतेर्नाशब्दम् ॥ १ । १ । ५ ॥

अत्र सन्देहः—किं तत्र सच्छब्दवाच्यं जगत्कारणं परोक्तमानुमानिकं प्रधानम्, उत ब्रह्मैव । अत्र साङ्ख्यः शङ्कते—जगत्कारणतयाऽस्मदभिमतं प्रधानमेव 'सदेवे'त्यादिवाक्यं प्रतिपादयति । 'इद'मिति गुणमयं निर्दिश्याग्रे 'सदेकमेवासी'दित्युक्त्या विभक्तं वियदादि सकलं सृष्टेः प्राक् प्रधानात्मना सदेकमेवासीदित्यसत्कार्यवादनिषेधमुखेन गुणमयस्यास्य सर्वस्य विकारस्य प्रकृतिभूतं गुणमयमेव प्रधानमेकमासीदिति गम्यते । उपसंहृतसकलविशेषतया सन्मात्रमिति तस्य निर्देशः । कार्यकारणयोरनन्यता च श्रूयते 'इदमग्रे एकमेवासी'दित्यनेन । सा च प्रधानकारणवाद एवोपपद्यते । प्रतिज्ञादृष्टान्तयोः श्रवणादानुमानिकप्रधानपरता च व्यक्तं गम्यते । मृत्पिण्डादिदृष्टान्त-

---

(प्र०) ननूक्तं जगत्कारणत्वलक्षणं ब्रह्मणि न समन्वेति । श्रुतिरेव हि आनुमानिकस्य प्रधानस्य जगत्कारणत्वमनुवदति 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय'मिति । महदादिसकलविशेषरहितं सन्मात्रं गुणत्रयसाम्यावस्थं प्रधानमेकमेवाग्र आसीदिति हि तदर्थः'। अत्राह—

### ईक्षतेर्नाशब्दम् । १ । १ । ५ ॥

अशब्दम्—यस्मिन् न शब्दः प्रमाणम्, किन्त्वनुमानमेव तत् । आनुमानिकं पराभिमतं प्रधानमित्येतत् । तन्न सन्मात्रशब्दप्रतिपाद्यम् । ईक्षतेः । 'तदैक्षत बहु स्यां प्रजायेये'ति अनुपदमीक्षतिधातुश्रवणात् । तेन बोध्यमानस्य ईक्षणगुणस्य चेतनधर्मस्य प्रधाने जडेऽसम्भवात् ॥ ५ ॥

श्रुतिश्चाचेतनकारणत्वेऽनुगुणा । 'तत्तेजोऽसृजत' 'तदपोऽसृजत' 'ता अन्नमसृजन्त' इति निर्देशश्च चेतनानधिष्ठितस्यैव प्रधानादेः स्वकार्योत्पादकत्वे स्वातन्त्र्यं गमयति । तस्मादानुमानिकं प्रधानमेव सच्छब्दवाच्यम् । इति ।

**अत्रोच्यते**—अशब्दम्–शब्द एव यस्मिन्न प्रमाणं तदशब्दम् । ब्रह्माधिष्ठिते प्रधाने शब्दः श्रुतिरेव प्रमाणम्, श्रुत्येकगम्यं हि तत् । साङ्ख्याभिमते स्वतन्त्रे प्रधाने तु अनुमानं प्रमाणम्, तदिदमानुमानिकं प्रधानमशब्दमुच्यते । तत् न सदेवेत्यादिकारणवाक्यप्रतिपाद्यम् । कुतः? **ईक्षतेः**–अस्मिन्हि वाक्ये 'तदैक्षत' इति ईक्षतिधातुः श्रूयते । स च चेतनधर्मभूतेक्षणवाची सच्छब्दस्य प्रधानपरत्वे नोपपद्यते । **ननु**–ईक्षणमचेतनस्यापि प्रधानस्योपपद्यते । तद्धि सत्त्वरजस्तमसां समवायः । तत्र सत्त्वं प्रकाशस्वरूपम् । प्रकाशयति हि विषयम् । तत्प्रकाशो ज्ञानमेवेति प्रधानस्यापीक्षणयोगोऽस्त्येवेति । **नैतत्** । सत्त्वं हि स्वच्छं मणिरिव बिम्बोद्ग्राहे प्रभवति । रजस्तमसी तु अस्वच्छे न तद्ग्रहणसमर्थे । स्वच्छतया चैतन्यबिम्बोद्ग्राहितामात्रेण प्रकाशकत्वव्यपदेशः । नेक्षणं चैतन्यलक्षणमचेतनस्य घटेत । वस्तुतस्तु ज्ञानं ज्ञातुरात्मन एव धर्मः, कर्मवश्यस्य जीवस्य प्रकृतिसंश्लिष्टस्य धर्मभूतज्ञानप्रसरणे चक्षुरादिकरणसापेक्षस्य तमस आवरणस्वभावस्योद्रेके ज्ञानप्रसरणमिन्द्रियद्वारा भवत्प्रतिरुध्यते, प्रकाशकस्वभावस्य सत्त्वस्योद्रिके आवरणस्य तमसोऽभिभवेन प्रसरति ज्ञानम्, तस्मात् तत्प्रकाशकमित्युच्यते, अन्धकारनिरसनेन दीप इव । तच्चेतनधर्मस्येक्षणस्य न प्रधाने सम्भवः । तदिह कारणत्वेन सर्वज्ञं सर्वशक्तं परं ब्रह्मैव प्रतिपाद्यते । यच्चेदं वाक्यं प्रतिज्ञादृष्टान्तोपन्यासगर्भतया प्रधानानुमापरमिति । तन्न । अनुमाने प्रधानाङ्गं हेतुः स चेह न प्रयुक्तः । कथमस्य वाक्यस्यानुमानसमर्पकता । नाप्यत्र अनुमानाङ्गभूतपक्षसाध्यदृष्टान्तोपन्यासः । एकस्मिन्विज्ञाते सर्वस्य विज्ञाततायामनुपपत्त्याशङ्कानिरसनाय निदर्शनं लोकदृष्टं श्रावयितुं प्रवृत्तं 'यथा सोम्यैकेने'-

त्यादिवाक्यम् । एकस्मिन् विज्ञाते सर्वस्य विज्ञातता च सर्वस्य प्रपञ्चस्यैकोपादानकताविवक्षया श्रुता । तन्नात्र प्रधानानुमापकप्रतिज्ञाहेतुदृष्टान्तोपन्यासः । न चैकोपादानकताविवक्षामात्रमानुमानिकप्रधानवादे लिङ्गम् । ननु—अचेतनस्यास्य कथं चेतनोऽविकारी उपादानं भवितुमर्हति । कथं वाऽचेतनं प्रधानं सङ्कल्पशक्तिरहितं निमित्तकारणं भवितुमर्हति । तदैक्षतेति निमित्तकारणस्य धर्मः सङ्कल्पविशेषो हि श्रूयते । ननु किमनया प्रतिबन्द्या, चेतनस्याविकारिणः कथं बहुभवनम् । उच्यते—परं ब्रह्म सर्वज्ञं सर्वशक्तं स्वयं साक्षादपरिणामि बहुभवनयोग्यं च । कथमेतत् ? । तद्धि न निर्विशेषम्, किन्तु विशिष्टम् । तस्य हि चेतनाचेतनवर्गद्वयमपृथक्सिद्धविशेषणम्, ताभ्यां विशिष्टमेव तु तत् । विशेषणांशे स्थौल्यसौक्ष्म्ययोगाच्च विशिष्टस्य तस्यैव कार्यवस्था कारणावस्थेति अविकारित्वं बहुभवनं च । तदिदं "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि"त्येतत्सूत्रविवरणावसरे व्यक्तमुपपादयिष्यामः ॥ ५ ॥

ननु—ईक्षणमिह न मुख्यम्, "तत्तेज ऐक्षत ता आप ऐक्षन्त" इति गौणेक्षणसाहचर्यात् । तेजसः अपां च हि न मुख्यमीक्षणम् । अचेतनेष्वपि चेतनधर्मोपचारो दृष्टः वृष्टिप्रतीक्षाः शालयः, वर्षेण बीजं प्रतिसञ्जहर्षेति । तथा च प्रधानस्येक्षणं कार्योन्मुख्यावस्थैव । इत्यत्राह—

## गौणश्चेन्नात्मशब्दात् ॥ १ । १ । ६ ॥

ईक्षतिना विवक्षितोऽर्थो गौण इति चेन्न, सच्छब्दवाच्यस्य 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' इति आत्मशब्देन निर्देशात् ।

---

ननु तदीक्षणं गौणमेव, 'वर्षेण बीजं प्रतिसंजहर्षे'त्यादिवत् । तच्च महदादिविशेषभावेन परिणामौन्मुख्यरूपम् । अत्राह—

### गौणश्चेन्नात्मशब्दात् । १ । १ । ६ ॥

गौणोऽयमीक्षतिशब्द इति चेन्न । उत्तरत्रात्मशब्दात् । अस्मिन्नेव प्रकरणे सच्छब्दवाच्यं प्रकृत्य 'स आत्मा तत्त्वमसि' इति आत्मशब्दः श्रूयते हि ॥ ६ ॥

अयं भावः–यद्यपि सच्छब्दः साधारणः, अथाप्युपसंहारे नवकृत्वः 'स आत्मा' इति विशेषशब्देन सच्छब्दवाच्यो निर्दिश्यते । तत् मुख्यमेवेक्षणमिह विवक्षितम् । 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्ते'ति गौणेक्षणसाहचर्यं श्रूयत इति तु न । तत्रापि मुख्यमेवेक्षणं विवक्षितम् । सर्वस्य सन्मूलतां बहुभिर्निदर्शनैर्निरूप्योपसंहारे 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' इति सर्वस्य सदात्मकतां सत आत्मत्वं च नवकृत्वो निरूपयन्ती श्रुतिः तेजःप्रभृतीनामपि सदात्मकतयैव वस्तुत्वमभिप्रैति । नामरूपव्याकरणं च सदात्मकतयैवेति चात्रैव श्रूयमाणेन 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी'तिवाक्येनावगम्यते । तच्चेतनासाधारणं मुख्यमेवेक्षणमिहेक्षतिना निर्दिश्यते ॥ ६ ॥

नन्वस्तु आत्मशब्दः, सहि स्वरूपार्थोऽपि प्रयुज्यते 'मृदात्मको घट' इति । तदयं शब्दो न चेतनमवधारयितुमीष्टे । अतो हेत्वन्तरमाह—

## तन्निष्ठस्य मोक्षोपदेशात् । १ । १ । ७ ॥

'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये' इति सन्निष्ठस्य सत्सम्पत्तिलक्षणो मोक्षो ह्युपदिश्यते । अयमर्थः–मुमुक्षोः श्वेतकेतोः 'तत्त्वमसी'ति सदात्मकत्वानुसन्धानमुपदिश्य, तन्निष्ठस्य शरीरपातमात्रं विलम्बः,शरीरपातसमनन्तरं सम्पत्स्यते सर्वकारणभूतं परं ब्रह्म सच्छब्दवाच्यमिति । अनेन सूत्रेण 'कारणं तु ध्येय' इति श्रूयमाणमुमुक्षूपास्यत्वपर्यालोचनया सच्छब्दस्य प्रधानपरत्वनिरास इति विशेषः । यदि

---

नन्वात्मशब्दः स्वरूपार्थकोऽपि प्रयुज्यते; तदयं शब्दश्चेतनत्वे नैकान्तं लिंगम्, इत्यत्राह—

**तन्निष्ठस्य मोक्षोपदेशात् । १ । १ । ७ ॥**

तन्निष्ठस्य–सच्छब्दवाच्यनिष्ठस्य–तदुपासकस्येत्येतत्, मोक्षोपदेशात् । उपदिश्यते ह्युत्तरत्र "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इति सन्निष्ठस्य मोक्षः । सन्निष्ठस्य मोक्षोपदेशाच्च चेतनमेव सच्छब्दितम् ॥ ७ ॥

प्रधानमिह विवक्षितं स्यात् तदात्मकत्वानुसन्धानस्य मोक्षहेतुत्वोपदेशो नोपपद्येत । तस्मान्न प्रधानं सच्छब्दवाच्यम् । इति ॥ ७ ॥

यदि प्रधानं सच्छब्देन विवक्षितं स्यात् तन्निष्ठया तत्सम्पत्तिरेव स्यात् यथाक्रतुन्यायात् । स च बन्ध एव, न मोक्षः । तथा च तन्निष्ठां हेयतया ब्रूयात्, तथा नोक्तमिति उक्तमेव हेतुं द्रढयति–

## हेयत्वावचनाच्च ॥ १ । १ । ८ ॥

नोक्तं हेयत्वम् । प्रत्युत मुमुक्षूपादेयत्वमेवोक्तम् ॥ ८ ॥

इतश्च न प्रधानम्–

## प्रतिज्ञाविरोधात् ॥ १ । १ । ९ ॥

उपक्रमे हि श्रूयते एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा–'येनाश्रुतं श्रुतं भवती'ति । येन कारणेन श्रुतेन सर्वमिदं कार्यं श्रुतं भवतीति तदर्थः । ननु सर्वमिति नेह श्रूयते । अथाप्यसङ्कोचात् तल्लाभः । समानप्रकरणेषु 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विज्ञातम्' इति सर्व-पदं श्रूयते । अत्राप्युत्तरत्र 'सन्मूलाः सोम्येमाः सर्वाः प्रजा' इति । प्रजाशब्दनिर्देशात् भोक्तृवर्गोऽपि सङ्गृह्यते । प्रधानं चेत् सच्छब्दवाच्यं

---

इतश्च न सच्छब्दवाच्यं प्रधानमित्याह–

### हेयत्वावचनाच्च । १ । १ । ८ ॥

प्रधानं यदि सच्छब्दवाच्यमभविष्यत् हेयत्वमवदिष्यत् । हेयत्वं तु नोक्तम् । प्रधानं हि गुणमयं बन्धकत्वात् हेयम् ॥ ८ ॥

इतश्च न प्रधानं सच्छब्दवाच्यम्—

### प्रतिज्ञाविरोधात् । १ । १ । ९ ॥

अस्याः सद्विद्याया उपक्रमे 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञात' मिति एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा हि श्रूयते । तस्या विरोधप्रसङ्गात् नेह सच्छब्देन प्रधानं विवक्षितम् । नहि तस्मिन् विज्ञाते चेतनवर्गस्य विज्ञानं घटेत ॥ ९ ॥

स्यात्, इयं प्रतिज्ञा विरुध्यते। चेतनाचेतनसमुदायरूपेऽस्मिन्प्रपञ्चे चेतनानां प्रधानकार्यत्वाभावात्। ननु ब्रह्मणः सच्छब्दवाच्यत्वेऽपि तुल्य एष विरोधः। न। ब्रह्म हि चिदचिद्विशिष्टम्। तदेव कारणं तदेव कार्यं च। चिदचितोः स्थौल्यसौक्ष्म्यावस्थाभेदात् कार्यकारणभावः। तन्न विरोधः सिद्धान्ते ॥ ९ ॥

इतश्च न प्रधानम्—

## स्वाप्ययात् ॥ १ । १ । १० ॥

सदेवेत्यनेन सर्वकारणतयोपक्रान्तं सच्छब्दवाच्यमधिकृत्येदं श्रूयते—'यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते' इति। सेयं श्राव्यमाणा सुषुप्तस्य पुरुषस्य सति सम्पत्तिः स्वाप्ययलक्षणा सतः प्रधानत्वे विरुध्येत। अप्येतुः पुरुषादन्यदेव हि प्रधानम्। सच्छब्दवाच्यस्य सुषुप्त्यवस्थात् पुरुषादनन्यत्वं हि स्वमपीतो भवतीत्यनेन गम्यते। ननु विरोधस्तुल्यः, अन्यदेव हि ब्रह्म सुषुप्तात् पुरुषात्। पुरुषश्चायं नित्यः। सत्यं, ब्रह्म जीवाद्भिन्नम्। तथाप्यविभक्तम्। विशिष्टमेव तु ब्रह्म। जाग्रदवस्थजीवशरीरकस्य ब्रह्मणः सुषुप्तावस्थजीवशरीरके ब्रह्मणि स्वस्मिन्नप्ययात् सति सम्पत्तिर्नानुपपन्ना। जीवस्यापि ज्ञानसङ्कोचविकासाभ्यामवस्थाभेदात् सौक्ष्म्यस्थौल्ये सम्भवतः। **अयमाशयः**— यदा पुरुषः स्वपिति तदा पुरुष एष सता सम्पन्नो भवति। कुत एत-

---

इतश्च न प्रधानं सच्छब्दवाच्यम्—

### स्वाप्ययात्। १। १। १० ॥

अस्यामेव सद्विद्यायामुत्तरत्र सुषुप्तौ जीवस्य स्वस्मिन् अप्ययः श्रूयते 'यत्रायं पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति' इति। सच्छब्दवाच्यं चेत् प्रधानम्, स्वमपीतो भवतीति विरुध्यते। नहि स्वपतः स्वं रूपं प्रधानं भवितुमर्हति। ननु—परं ब्रह्म वा कथं स्वं रूपम्? भाष्ये व्यक्तीकृतमेतत् ॥ १० ॥

द्विज्ञायते । स्वपितीत्याचक्षते ह्येनं लोकाः । ततः किम्?, अस्य प्रयोगस्य निर्वचनं ह्येतत् एष सुषुप्तिदशायां स्वं कारणं स्वरूपमपीतो भवतीति । अप्ययशब्दश्च लये रूढः । कारणे लीयते इत्येतत् । सदेव तु कारणम् । सृष्टेः प्राग्यथाऽयं सन्मात्रं तथा सुषुप्तावपि सन्मात्रमेव भवति । कथम्? । जाग्रदवस्थायां देवमनुष्यादिनामरूपरागद्वेषलोभमोहाद्यनुगुणबहिर्मुखज्ञानप्रसरणवज्जीवशरीरकः परमात्मा तद्रहितजीवशरीरकत्वलक्षणसूक्ष्मावस्थां प्राप्नोतीति प्रलय इव दैनन्दिनप्रलयेऽपि सता सम्पन्नो भवतीति । सच्छब्दस्वशब्दयोरनन्यार्थकतायामेव स्वाप्ययनिरूपणप्रकरणानुगुण्यम् । एतेन—सता सम्पन्न इत्यस्य प्रधानेन सम्पन्न इत्येवार्थः, स्वमपीतो भवतीत्यस्य नामरूपाद्यभिमानरहितं स्वमेव सूक्ष्मं रूपमप्येतीत्येवार्थः, तत् सदेवेतीयं श्रुतिः प्रधानपरैवास्तामित्येतन्निरस्तम् । सर्वस्यास्य चेतनाचेतनप्रपञ्चस्य सन्मूलतां श्रावयितुं प्रवृत्ता श्रुतिरियं 'सन्मूलाः सोम्येमाः सर्वाः प्रजा' इति प्रजाशब्देन चेतनानामपि सन्मूलतामुपसंहरति । तथा च सिद्धं स्वाप्ययलक्षणा सत्सम्पत्तिः सच्छब्दवाच्यस्य प्रधानत्वे नोपपद्यत इति । 'सति सम्पद्य न विदुः सति सम्पद्यामहे' इति योऽयं सुषुप्तौ ज्ञानप्रसरणाभावः श्रूयते, स एवान्यत्र सुषुप्तिप्रकरणे 'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तर'मिति परमात्मना परिष्वक्तस्योच्यत इति च सच्छब्दस्य परब्रह्मपरतैव समुचिता, न प्रधानपरता ॥ १० ॥

इतश्च न प्रधानम्—

## गतिसामान्यात् ॥ १ । १ । ११ ॥

कारणत्वनिरूपकवाक्यानां या गतिः—प्रवृत्तिः तत्साधारण्यात्

---

इतश्च न सच्छब्दवाच्यं प्रधानम्—

### गतिसामान्यात् । १ । १ । ११ ॥

सदेवेति वाक्यस्य कारणत्वावबोधकवाक्यान्तरगतिसमानत्वं प्रधानस्य सच्छब्दवाच्यत्वे न घटते । अतो गतिसामान्यात् ब्रह्मैव सच्छब्दवाच्यम् । श्रूयते हि 'आत्मैवेदमग्र आसी'दित्यादि ॥ ११ ॥

सच्छब्दवाच्यं न प्रधानम्, किन्तु परमात्मैव। तथा हि सृष्टिप्रकरणेषु श्रूयते 'आत्मा वा इदमेक एवाग्र आसीत् नान्यत्किञ्चन मिषत् स ईक्षत लोकान्नु सृजा इति' 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इत्यादि ॥ ११ ॥

इतश्च न प्रधानम्—

## श्रुतत्वाच्च ॥ १ । १ । १२ ॥

अस्यामेव विद्यायां सच्छब्दवाच्यस्यात्मत्वेन नामरूपव्याकर्तृत्वस्य 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवनात्मनानुप्रविश्य नामरूपे व्याकरवाणी' इति श्रुतत्वाच्च । जीवेनात्मना—जीवभूतेन मया, जीवशरीरकेण मयेत्यर्थः। यद्वा—अन्यत्र कण्ठरवेण 'एको ह वै नारायण आसीदि'ति श्रुतत्वाच्च। यद्वा—अस्यामेव छान्दोग्योपनिषदि 'आत्मतः प्राणः आत्मत आशा × × × × आत्मत एवेदं सर्वं' इति श्रुतत्वाच्च ।

अस्मिन्नधिकरणे प्रथमसूत्रमपरे[1] एवं योजयन्ति। नेति साध्यनिर्देशः। अशब्दमिति हेतुनिर्देशः। हेतोरसिद्धिशङ्कापरिहाराय ईक्षतेरिति। साङ्ख्यपरिकल्पितमचेतनं प्रधानं न जगत्कारणवादिवेदान्तवाक्यप्रतिपाद्यम्। तद्धि अशब्दम्—सदेवेत्यादिकारणत्वप्रापकवाक्यगतसच्छब्दाबोध्यं हि तत्। कस्मात्? ईक्षतेः—कारणे श्रूयमाणस्येक्षणस्यानन्वयात् इति। अत्र निषेध्यसमर्पकस्य निषेधानुयोगिसमर्प-

---

न केवलं वाक्यान्तरगतिसामान्यम्, इहैव श्रूयते च—'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी'ति सर्वान्तर्याभिभूता परा देवतेत्याह—

### श्रुतत्वाच्च। १। १। १२ ॥

सेयमिति तच्छब्देन सच्छब्दवाच्यं प्रतिनिर्दिश्य 'देवतैक्षते'त्यादिश्रूयते ॥ १२ ॥

**इति प्रदीपे ईक्षत्यधिकरणम् ॥ ५ ॥**

---

टिप्प—१ बल्लभीयाः केचन ।

कस्य च पदस्याध्याहारक्लेशः । तथाऽशब्दमिति प्रथमान्तनिर्देशस्य साध्यांशोपस्थापकत्वे स्वरसे हेतुपरताश्रयणं ईक्षतेरित्यस्य निषेधहेतुतया प्रतीयमानस्यान्यत्र हेतुत्वकल्पनं चास्वरसम् । अन्ये[1] तु–अधिकरणमिदमुक्तलक्षणस्यातिप्रसङ्गवारकतया वर्णयन्ति । नैतदुपपद्यते । अभिन्न[2]निमित्तोपादानत्वं हि लक्षणतया विवक्षितम्, परिणामस्वभावतया प्रधाने उपादानत्वसम्भावनायामपि अचेतनतया सार्वज्ञ्यायोगान्निमित्तत्वसम्भावनानवकाशात् ॥ १२ ॥

## पूर्वपक्षः–

(अ. स.) इदं विकारजातं प्राक् सदेवासीदिति श्रुतेः ।
दृश्यस्यास्य विकारस्य सर्वस्य त्रिगुणात्मनः ॥ १ ॥
मूलप्रकृतिरूपेण साम्यावस्थगुणात्मना ।
स्थितिः सन्मात्रशब्देन स्वारस्येन तु गम्यते ॥ २ ॥
येनाश्रुतं श्रुतमिति प्रतिज्ञा श्रूयते च या ।
विज्ञातं मृण्मयं सर्वं मृत्पिण्डेन यथेति च ॥ ३ ॥
द्वयोः प्रतिज्ञादृष्टान्तवचसोरन्वयादिह ।
अनुमानं गम्यते च प्रधानस्य प्रसाधकम् ॥ ४ ॥
अचिद्विलक्षणः कश्चिदात्मा सर्गस्य कारणम् ।
इत्येतन्नैव वेदान्तवाक्यस्वारस्यसङ्गतम् ॥ ५ ॥

## सिद्धान्तः–

सामान्यशब्दश्रवणमात्रसम्भ्रान्तमानसः ।
अनुमानसरूपत्वमस्थानेऽपि विभावयन् ॥ ६ ॥
स्वपक्षस्यानुगुणतां वेदान्तेष्वपि शङ्कते ।
अनुमानप्रधानाङ्गं हेतुवाक्यं न चात्र हि ॥ ७ ॥
न च दृष्टान्तवचनं न्यायाङ्गमिह विद्यते ।
ज्ञातेनैकेन सर्वस्य ज्ञाततायाः असम्भवम् ॥ ८ ॥

---

१ श्रीकण्ठाचार्याः । २ ब्रह्मलक्षणस्यासम्भवपरिहार एवात्र पादे विवक्षितः ।
३ ब्रह्म०

निदर्शनमुखेनेदं निराकर्तुं प्रवर्तते ।
यस्मिन् ज्ञाते सर्वमिदं ज्ञातं स्याद्वस्तु तादृशम् ॥ ९ ॥
किं त्वयाऽवगतं यत्त्वं स्तब्धोऽसीत्याह केवलम् ।
न च प्रतिज्ञा न्यायाङ्गभूता काचिदनूद्यते ॥ १० ॥
अथोत्तरेषु वाक्येषु दृष्टिः सम्यग्विधीयताम् ।
प्रधानं कारणत्वेन यत्सांख्यैः परिकल्प्यते ॥ ११ ॥
सदेवेत्यादिवेदान्तवाक्यैर्न तदनूद्यते ।
ईक्षतेः श्रूयमाणाया अन्वयानुपपत्तितः ॥ १२ ॥
ईक्षतिर्न च गौणोऽयं स आत्मेत्यात्मशब्दतः ।
श्रूयते मोक्षहेतुत्वं सन्निष्ठाया न हेयता ॥ १३ ॥
येनाश्रुतं श्रुतमिति प्रतिज्ञा च विरुध्यते ।
तया हि सति विज्ञाते विज्ञातं सर्वमुच्यते ॥ १४ ॥
ज्ञाते प्रधाने विज्ञानं चेतनानां कथं भवेत् ।
प्रधानकार्यता तेषां नैव ह्यपरिणामिनाम् ॥ १५ ॥
श्रूयते सतिसम्पत्तिर्या च स्वाप्ययलक्षणा ।
पुरुषस्य सुषुप्तस्य सा च तत्र विरुध्यते ॥ १६ ॥
कार्यस्य कारणे योऽसौ लयः सह्यप्ययः स्मृतः ।
न हि प्रधानं तद्धेतुः ब्रह्म तु स्याद्यथाश्रुति ॥ १७ ॥
ईक्षापूर्वकसृष्ट्युक्तावेकरूपा गतिस्तथा ।
कण्ठोक्त्या श्रूयतेऽत्रापि हेतुता परमात्मनः ॥ १८ ॥
जीवेनानेनात्मनेति जीवात्मात्मतयैव हि ।
नामरूपव्याचिकीर्षा प्रक्रान्ते श्रूयते सति ॥ १९ ॥
अस्यामेवोपनिषदि श्रूयन्ते परमात्मनः ।
सर्वाधारत्वसार्वज्ञ्यप्रमुखा बहवो गुणाः ॥ २० ॥
तस्मात् वेदान्तवाक्येषु प्रधानं साङ्ख्यकल्पितम् ।
नोच्यतेऽतः कारणत्वं परे ब्रह्मणि सुस्थितम् ॥ २१ ॥

इति भाष्ये ईक्षत्यधिकरणम् ॥ ५ ॥

सदेवेत्यादिकारणवाक्यस्य प्रधानकारणतापरत्वनिरसनमुखेन अचेतनाद्विलक्षणं ब्रह्मैव कारणमिति समर्थितम् । अथ 'आत्मन आकाशः सम्भूत'इत्यादिकारणवाक्यस्य क्षेत्रज्ञकारणतापरत्वनिरसनमुखेन चेतनादपि विलक्षणं कारणं ब्रह्मेति समर्थ्यते । इयं च सङ्गतिः—ईक्षणपूर्वकसृष्टेः प्रधानेऽसम्भवान्माभूत्कारणवादिवेदान्तवाक्यप्रतिपाद्यं तत् । जीवात्मनस्तु सा घटत इति न ततोऽन्यत् परमात्मभूतं ब्रह्म कारणम् । 'तत्त्वमसी'ति च तस्यामेवोपनिषदि जीवैक्यं ब्रह्मणि श्रावितमित्याशङ्कायां विज्ञानमयाज्जीवादन्य आनन्दमय एव तु परमात्मा कारणमिति समर्थयन्नाह—

## आनन्दमयोऽभ्यासात् ॥ १ । १ । १३ ॥

तैत्तिरीयाणां शाखायां श्रूयते—'स वा एष पुरुष' इति प्रकृत्य 'तस्माद्वा एतस्मात् विज्ञानमयादन्योऽन्तर आत्मा आनन्दमयः' इति । इदं च वाक्यं 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इति आकाशादिकारणतया प्रस्तुतमात्मानं विविच्य ज्ञापयितुं प्रवृत्तम् । तमिम-

---

(प्र०) ननु ईक्षतिश्रवणात्कारणेन चेतनेन भाव्यमिति युक्तम्, स च जीव एव भवितुमर्हति । तैत्तिरीये हि 'तस्माद्वा एतस्मादात्मन आकाशः संभूत' इति कारणं निरूपयितुमुपक्रान्ता श्रुतिः उत्तरत्र आनन्दमयमात्मानं श्रावयति । आनन्दमयश्च जीव एव, स एव हि पुण्यविशेषोपचयेन भवत्यानन्दमयः, इत्याशङ्कायामाह—

**आनन्दमयोऽभ्यासात् । १ । १ । १३ ॥**

'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमय' इति श्रूयमाणो न जीवः, अपि तु परमात्मैव । अभ्यासात्—शतगुणितोत्तरक्रमेण मानुषानन्दादारभ्यानन्दानामभ्यासात् । परमात्मनः आनन्दप्रचुरतां निरूपयितुं प्रवृत्ता हि श्रुतिः 'सैषाऽऽनन्दस्य मीमांसा भवती'त्युपक्रम्य 'स एको ब्रह्मण आनन्दः' इत्यन्तेन मानुषानन्दापेक्षया देवादीनामुपर्युपरिशतगुणितानन्दतां ब्रह्माऽऽनन्दं यावन्निरूप्य ततः परस्य ब्रह्मणः 'यतो वाचो निवर्तन्तेऽप्राप्य मनसा सहे'ति निरतिशयानन्दतां निगमयति । तस्मादानन्दमयः परमात्मैवेति ॥ १३ ॥

मात्मानं पुरुषेऽस्मिन्नन्तः सन्निहितं सर्वतः सूक्ष्मतमं स्थूलारुन्धतीन्याये़न सुखेन ग्राहयत्प्रथमं स्थूलेऽन्नमये आत्मदृष्टिं सम्पाद्य ततस्ततः सूक्ष्मसूक्ष्मतरादिषु प्राणमयमनोमयादिषु पूर्वपूर्वतस्तामात्मदृष्टिमपनीय उत्तरोत्तरत्र सङ्क्रामयति, आनन्दमये सर्वतः सूक्ष्मतमे परमात्मन्युपक्रान्तमात्मनिरूपणं परिसमापयति च ।

अत्रायं संशयः–किमयमानन्दमयः प्रत्यगात्मनोऽन्यः परमात्मा, उत स एव ? । किं युक्तम् । प्रत्यगात्मैवेति । कस्मात्, 'शारीर आत्मे'ति शरीरसम्बन्धश्रवणात् । शरीरसम्बन्धश्च तस्यैव हि संसरतः । ननु–'सत्यं ज्ञानमनन्तं ब्रह्मे'ति उपक्रमे प्रस्तुतं ब्रह्मैव हि 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत' इति आत्मशब्देनेह निर्दिश्यते । सत्यम् । अनन्यदेव ह्यस्माज्जीवात् । श्रूयते चान्यत्र 'तत्त्वमसि' इति तयोरैक्यम् । जीवस्यास्यैव स्वरूपं परिशुद्धं प्राप्यमुच्यते । ननु–'विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमय' इति जीवादन्यत्वमानन्दमये श्रूयते । न । 'विज्ञानमय' इति तु बुद्धिर्निर्दिश्यते, न प्रत्यगात्मा । बुद्धेरन्यश्चायं प्रत्यगात्मा । ननु विशुद्धस्य प्रत्यगात्मस्वरूपस्यानन्दमयत्वं कथम् । संसरत्येव हि आनन्दान्वयः । न तस्य प्राप्यता । उच्यते । नात्र मयट् प्राचुर्यार्थो विकारार्थो वा । किन्तु स्वार्थः । आनन्दता च दुःखाद्व्यावृत्तिलक्षणा । तथा च विशुद्धमेव प्रत्यगात्मस्वरूपमाकाशादिकारणतया निरूप्यमाणमात्मशब्दाभिलप्यम् । आनन्दमय इत्यनेनेदमेव निर्दिश्यते । इति । प्राचुर्य एव वा मयडस्तु, उपचितपुण्यविशेषे चतुर्मुखादौ जीवविशेषे आनन्दाधिक्येनानन्दमय इति निर्देश उपपद्यते, आकाशादेः स्रष्टा च स भवितुमर्हति ।

अत्रोच्यते—**आनन्दमयोऽभ्यासात्** । आनन्दमयो जीवादन्यः परमात्मा । अभ्यासात् । शतगुणितोत्तरक्रमेण योऽयमानन्दोऽभ्यस्यते तस्य निरतिशयानन्दस्य योगात् । जीवात्मनि च तदयो-

---

टिप्प०—१ 'नेतरोऽनुपपत्ते'रित्युत्तरसूत्रान्नेतर इत्याकृष्यते । इतरो जीवो न भवतीत्यन्वयेन लब्धोऽयमर्थः ।

यात् । 'सैषाऽऽनन्दस्य मीमांसा भवति, युवा स्यात् साधु युवाध्या-पकः आशिष्ठो द्रढिष्ठो बलिष्ठः तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् स एको मानुष आनन्दः, ते ये शतं मानुषा आनन्दाः स एको मनुष्य-गन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं मनुष्य-गन्धर्वाणामानन्दाः । स एको देवगन्धर्वाणामानन्दः' इत्येवं शतगुणि-तोत्तरक्रमेण आनन्दमयस्य परब्रह्मण आनन्दं निरूपयितुं प्रवृत्ता श्रुतिः 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चने'त्युक्त्वा विरमत्यानन्दगुणनिरूपणात् । तस्मादनवधि-कातिशयानन्दगुणयोगः प्रमितः परिमितानन्दे जीवे नैव घटते । किन्तु परमात्मन्येव । प्रत्यगात्मस्वरूपं परिशुद्धं केवलमदुःखमिति येषां मतं तेषां तु सुतरां सैषाऽऽनन्दस्य मीमांसा विरुध्यते । शारीरत्वं चास्मिन् मुख्यतया समन्वेति, सर्वमेवास्य परमात्मनः शरीरमिति । अन्तर्यामि-ब्राह्मणे चैतत् श्रुतम् ।

यत्तु परैः[1] पुच्छब्रह्मवादमौपनिषदं मन्यमानैः सूत्राण्यन्यथा योज्यन्ते— आनन्दमयः—आनन्दमयवाक्यस्थं पुच्छशब्दसमानाधिकरणतया श्रूय-माणं ब्रह्मपदं स्वप्राधान्येन ब्रह्मावबोधकम् । कस्मात्? अभ्यासात्— अनुपदं श्रुते 'असन्नेव स भवति असत् ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इति प्रकृतार्थे श्लोके ब्रह्मण एव केवलस्या-भ्यासात् । अयं भावः—अन्नमयादिवदानन्दमयोऽप्यमुख्य एवात्मा, नतु आकाशादिकारणभूतं यदात्मतत्त्वं ब्रह्म । प्रियमोदाद्यवयवकल्पनात्, विकारार्थकमयट्प्रकरणाच्च । निर्विशेषमविकृतमेव तु ब्रह्म, 'यतो वाचो निवर्तन्ते' इति च निर्विशेषताऽवगम्यते । वाचां हि सविशेषे प्रवृत्तिः । सत्यज्ञानादिस्वरूपं प्रक्रान्तं ब्रह्म 'ब्रह्म पुच्छं प्रतिष्ठे'त्युपसंहियते, तदेवाधिकृत्यायं श्लोकः 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत्' इति; नानन्दमयमधिकृत्य । नन्वानन्दमयं प्रकृत्य 'तस्य प्रियमेव

टिप्प०—१ शङ्कराचार्यैः ।

शिर' इत्यादिना शिरःप्रभृत्यवयवरूपेण मोदादिरिवावयवविशेषलक्षण-
पुच्छात्मना ब्रह्म निर्दिश्यते, तत् न ब्रह्मात्र स्वप्राधान्येन निरूप्यते। न । इदमेव विचारयन्नाह सूत्रकारः—आनन्दमयोऽभ्यासादिति । आनन्दमयवाक्यस्थं ब्रह्मपदं स्वप्राधान्येन ब्रह्म गमयति, अभ्यासात् इति । अभ्यासश्च नानन्दमयस्य, किन्तु ब्रह्मण एव श्रूयते 'असन्नेव स भवती'त्युत्तरश्लोके । इति । ननु ब्रह्म पुच्छमित्यानन्दमयस्यावयव-विशेषमवगमयत् ब्रह्मपदं कथं ब्रह्म स्वप्राधान्येनावबोधयेदित्याशङ्का-मनूद्य परिहरति—विकारशब्दान्नेति चेन्न प्राचुर्यादिति । विकार इत्यवयवो लक्ष्यते, पुच्छमित्यवयवोपस्थापकशब्दयोगान्न स्वातन्त्र्येण ब्रह्मेहोपस्थाप्यतेति चेन्न । प्राचुर्यात् । पुच्छशब्देन नान्यत्रेवेहावयव-विवक्षा, अपितु आधारत्वमात्रविवक्षा। प्रियमोदादेः लौकिकस्यानन्दस्य सर्वस्य प्रतिष्ठा हि ब्रह्म स्वयमानन्दस्वरूपम् । श्रूयते चान्यत्र 'एतस्यैवा-नन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति । नन्ववयववाचिना शब्देन कथमाधारत्वव्यवस्थापनम्? प्राचुर्यात् । प्राचुर्यं प्रायापत्तिः । अवयव-प्रायवचनादित्यर्थः । पूर्वमन्नमयादिषु अवयवप्रधानोपक्रमादानन्द-मयेऽपि शिरःपक्षाद्यवयवोक्तेरवयवस्योपस्थिततया तद्विशेषवाचिना-ऽऽधारत्वलक्षकेन पुच्छशब्देन निर्देशादिति यावत् । तथा च सिद्धं 'सत्यं ज्ञान'मित्युपक्रान्तं ब्रह्मैव 'ब्रह्म पुच्छ'मिति स्वप्रधानतया प्रति-पाद्यते न त्वानन्दमयस्य शेषतयेति ।

तदेतच्चिन्त्यम् । अन्नमयादिपञ्चकोशनिरूपणं कस्मै इति वक्तव्यम् । प्रतिपिपादयिषितार्थस्य बुद्धौ सुखेनावतारणाय । कश्चात्र प्रतिपिपादयिषितः? आकाशादेः कारणतया य आत्मा प्रक्रान्तः । तर्हि प्रतिपिपादयिषापर्यवसानभूमिरानन्दमय एवेति स्वरसतोऽवगम्यते । आत्मावबोधनसोपानपरम्पराऽऽनन्दमय एव हि विश्राम्यति । अन्नमय-प्राणमयमनोमयादिक्रमेण पूर्वपूर्वेषु समारोपितामात्मदृष्टिं 'अन्योऽन्तर आत्मा प्राणमयः' 'अन्योऽन्तर आत्मा मनोमयः' 'अन्योऽन्तर आत्मा विज्ञानमय' इति पूर्वपूर्वतोऽवतार्य उत्तरोत्तरेषु सङ्क्रामयन्ती श्रुतिः

'अन्योऽन्तर आत्माऽऽनन्दमय' इति आनन्दमये सङ्क्रम्य विश्राम्यति । न ततोऽन्यमात्मानं निर्दिशति 'अन्योन्तर आत्मे'ति । तत् प्रतिपिपादयिषापर्यवसानभूमित्वात्प्राधान्यमानन्दमयस्य स्वरसतोऽवगम्यते । ननु 'ब्रह्मविदाप्नोति पर'मिति ब्रह्म हि प्रक्रान्तम् । तत् प्रतिपिपादयिषितं ब्रह्मैव । पूर्यते तु प्रतिपिपादयिषा 'ब्रह्म पुच्छं प्रतिष्ठे'त्यनेनैव ब्रह्मनिरूपणेन । उपश्लोक्यते च ब्रह्मैव नानन्दमयः । तत्प्रतिपिपादयिषापर्यवसानभूमित्वेन प्राधान्यं ब्रह्मण एवेति 'ब्रह्म पुच्छं प्रतिष्ठे'त्येतदेव वाक्यं स्वप्राधान्येन ब्रह्म गमयति । नत्वानन्दमयवाक्यम् । सत्यं ब्रह्म प्रक्रान्तम्, तन्नानन्दमयवाक्ये उपसंह्रियते, अपि तु 'ब्रह्म पुच्छं प्रतिष्ठे'ति वाक्य एवेत्येतत्तु विचार्यम् । प्रक्रान्तं सत्यज्ञानादिस्वरूपं समतिलङ्घ्य आत्मनो निरूपणं किमित्युपक्रान्तम् । ननु न तदतिलङ्घितम् । यदुपक्रान्तं ब्रह्म सामान्यशब्देन, तदेव विशेषशब्देन परिशील्यते 'तस्माद्वा एतस्मादात्मन' इति । तर्हि आकाशादिकारणमात्मा सत्यज्ञानादिस्वरूपाद्ब्रह्मणोऽनन्य इति सिद्धम् । स चात्मा 'अन्योऽन्तर आत्माऽऽनन्दमयः' इत्यानन्दमयवाक्ये आत्मशब्देन उपसंह्रियते । अयमप्यन्नमयादिवदमुख्य एव, यथावदात्मतत्त्वावबोधनायाश्रितेष्वभ्युपायेष्वन्यतमश्चेत् । तर्ह्यन्योऽन्तरात्मा इतो निरूपणीयः । स च न निरूपितः । ननु किं तावता ? । स्वरसगतिर्निरुध्यते इति । किञ्च—उपक्रमे ब्रह्मेतिसामान्यशब्देन न भवति विशेषावधारणम्, गुणविशेषवाचको ह्येष शब्दः, गुणविशेषश्च बृहत्त्वम्, तदुदेत्येव जिज्ञासा किं तदिति, कस्माच्च तस्य बृहत्त्वमिति । तदिदमवबोधयद्वाक्यं प्रवर्तते 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः आकाशाद्वायु'रित्यादि । पुनश्च समुदेति जिज्ञासा कोऽयमात्मा सर्वस्य कारणमिति । अथ तमात्मानं स्थूलारुन्धतीन्यायेन सुखेनावबोधयितुं प्रवर्ततेऽन्नमयादिवाक्यम् । यद्यन्नमयादिवदानन्दमयस्यात्मावबोधनोपायपरम्परापतितमात्रता, न तत्त्वतस्तेनावबोधित आत्मा । केन तर्ह्यात्मा बुबोधयिषितो बोध्यते । ब्रह्म पुच्छमित्यनेनैवेति वक्तव्यम् । समुत्पन्ना विशेषजिज्ञासा पुनरनेन

सामान्यशब्देन न शाम्यति । ननु विकारार्थकमयट्प्रवाहनिपतितोऽयमानन्दमयशब्दो विकारमेवावगमयेत्, न त्वविकृतमात्मतत्त्वम् । नैतत् । प्राचुर्यार्थको ह्यत्र मयट् । नन्वानन्दप्राचुर्यं दुःखाल्पतां गमयेत् । प्राचुर्यं हि प्रतियोग्यल्पत्वमपेक्षत इति । नैतत् । न ह्येकस्य प्राचुर्यं अन्यस्याल्पसम्बन्धमवगमयितुमीष्टे । रसप्रचुरमिदं फलमित्युक्ते न हि काटवमल्पमित्यवगम्यते । फलान्तरस्याल्परसतैव तु गम्यते । एवं परमात्माऽऽनन्दप्रचुर इत्युक्ते जीवस्याल्पानन्दता विज्ञायेत । सा च श्राव्यते आनन्दप्राचुर्यनिरूपणप्रकरणे 'स एको मानुष आनन्द' इत्यादौ । यच्चानन्दमयत्वे सविशेषता प्रसज्येत, तथा सति 'यतो वाचो निवर्तन्ते' इत्येतत् व्याहन्येतेति । नैतत् । 'यतो वाच' इत्यनेन परिच्छिन्नानन्दतैव प्रतिषिध्यते । न तु विशेषमात्रनिषेधः । तथा सति ब्रह्मपदं च नैव प्रवर्तेत । अनितरसाधारणं विशेषमूरीकृत्यैव हि तत्पदं प्रवर्तते । तस्य निरतिशयबृहत्त्वमुपपादयितुमेव च सकलजगत्कारणत्वमैश्वर्यविशेषश्च प्रतिपाद्यते । तदयं पुच्छब्रह्मवादो नौपनिषदः पक्षः । तथा न सूत्रपथारूढश्च । अस्वरसा हि तत्र सूत्रगतिः । तत्रानन्दमयोऽभ्यासादिति सूत्रे आनन्दमयपदस्य आनन्दमयवाक्यस्थ पुच्छपदसमानाधिकरणब्रह्मशब्दपरताश्रयणेन लक्षणास्वीकारेऽस्वारस्यम् । आनन्दमयशब्देन स्वरसतः प्रतीयमानस्यानन्दप्राचुर्यस्योपपादकतया स्वरसतः समन्वेत्यभ्यासादितिहेतुनिर्देशः । अभ्यस्यते ह्यानन्दः शतगुणितोत्तरक्रमेणोत्तरोत्तरं समधिकः । आनन्दमयशब्दसहचरितोऽयमभ्यासशब्दः स्वरसत आनन्दशब्दाभ्यासमेव गमयेत् । ब्रह्मशब्दाभ्यासादानन्दशब्दाभ्यास एव तु समधिकः । ननु मयडन्तस्याभ्यासो नास्ति । मास्तु किं तावता । योऽयमानन्दमयः स स्वयमानन्दस्वरूपोऽपि । 'आनन्दो ब्रह्म' 'आनन्दं ब्रह्मणो विद्वा'नित्युभयश्रुत्यनुरोधात् । पुच्छब्रह्मवादे 'पुच्छं ब्रह्माभ्यासा'दिति सूत्रशैल्या भाव्यम् । किञ्च-'असन्नेव स भवती'त्यस्य श्लोकस्य पुच्छब्रह्मविषयताश्रयणमपि न युक्तम् । अन्नमयादिषु पूर्वपूर्वेषु 'तदप्येष श्लोको

भवती'त्यत्र श्रूयमाणस्तच्छब्दो हि शिरःप्रभृतिपुच्छान्तं निरूपितमन्नमयाद्येव परामृशति । तस्मादिहापि 'तदप्येष श्लोको भवती'त्यत्र तच्छब्दस्य शिरःप्रभृतिपुच्छान्तानन्दमयपरतैव न्याय्या । न त्वप्रधानपुच्छमात्रपरता । आनन्दमयमधिकृत्य श्लोक एव न प्रवृत्त इति वा वाच्यम् । तथा च सति वैगुण्यम् । द्वितीयसूत्रे विकारशब्दस्यावयवपरताश्रयणेन लक्षणाकल्पनं दोषः । विकारार्थकं मयट्प्रत्ययमेव त्वव्यवहितपूर्वस्थं शङ्काबीजं स्वरसतोऽवगमयति 'विकारशब्दादि'त्येतत् । प्राचुर्यादित्यस्यावयवप्रायवचनादिति च लाक्षणिकम् । सूत्रसन्निवेशश्चोक्तार्थेऽस्वरसः । तदा तु 'अवयवशब्दादिति चेन्न प्रायापत्तेः' इति सूत्रशैल्या भाव्यम् । एवं तृतीयादिसूत्रव्याख्यानेष्वपि वैगुण्यं विस्तरभयान्नेह वितन्यते ॥ १३ ॥

## विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १ । १ । १४ ॥

नन्वानन्दमय इत्यत्र श्रूयते मयट् प्रत्ययः, स च विकारार्थः । अन्नमयवाक्ये तदर्थक एव तूपक्रान्तः । विकारार्थकमयट्प्रवाहनिपतितश्चायम् । इति चेन्न । आनन्दमय इत्यत्र मयट्प्रत्ययो हि प्राचुर्यमर्थं गमयति । न विकारम् । विकारार्थता प्राणमयादिष्वेव भग्ना । प्राणवृत्तिप्राचुर्यात्तु प्राणमय इति निर्देशः । अव्यवहितपूर्ववाक्यस्थो विज्ञानमयशब्दश्च विज्ञानप्राचुर्यमाचष्टे ॥ १४ ॥

इतश्चान्यो जीवादानन्दमयः—

## तद्धेतुव्यपदेशाच्च ॥ १ । १ । १५ ॥

आनन्दमयस्य जीवानन्दहेतुत्वेन व्यपदेशात्—निर्देशात् । श्रूयते हि 'एष ह्येवानन्दयाती'ति । एषः आनन्दस्वरूपोऽयमानन्दमयो

---

**विकारशब्दान्नेति चेन्न प्राचुर्यात् । १ । १ । १४ ॥**

ननु—मयडत्र श्रूयते 'आनन्दमय' इति । सच विकारार्थः, परं ब्रह्म चाविकृतमिति चेन्न । मयडत्र प्राचुर्यार्थकः । नन्वन्नमय इति प्रक्रमे हि विकारार्थः श्रूयते । सत्यम् । सच प्रक्रमः प्राणमय एव भग्न इति न वैरूप्यमिह दोषः ॥ १४ ॥

हि जीवानानन्दं प्रापयति । तस्मात् आनन्दयितव्यात् जीवादानन्दयिताऽयमन्यः । यच्च व्याख्यातं परैः 'सानन्दमयस्य सर्वस्य विकारस्य हेतुत्वेन व्यपदेशात्' इति; तत्तु न युज्यते । तच्छब्दो हि पूर्वं परामृशति । यद्यप्यानन्दमयशब्दो विकारशब्दश्च पूर्वसूत्रयोः श्रूयेते । ताभ्यां विवक्षितोऽर्थस्तु न विकारः सानन्दमयः । विकारशब्देन हि परैर्विवक्षितोऽवयवः, आनन्दमयशब्देन च आनन्दमयवाक्यस्थं पुच्छं ब्रह्म, तत्सानन्दमयस्य विकारस्य पूर्वमप्रस्तुततया कथं तच्छब्देन तस्य परामर्शः ? । नन्वानन्दस्य वा कथं तच्छब्देन परामर्शः ? । उच्यते । आनन्दमय इत्यनुवर्तते हि पूर्वसूत्रात् । तत्र प्रकृत्यर्थस्य परामर्शो युक्तः । न च परैरानन्दमयशब्दस्य प्रकृतिप्रत्ययार्थविभाग आश्रितः ॥ १५ ॥

इतश्चानन्दमयो जीवादन्यः—

## मान्त्रवर्णिकमेव च गीयते ॥ १ । १ । १६ ॥

'ब्रह्मविदाप्नोति पर'मिति सङ्ग्रहेण श्रावितस्यार्थस्य विवरणरूपो मन्त्रवर्णः प्रवर्तते—'तदेषाभ्युक्ते'त्युपक्रम्य 'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद

---

### तद्धेतुव्यपदेशाच्च । १ । १ । १५ ॥

तस्यानन्दस्य हेतुत्वेनानन्दमयस्य व्यपदेशाच्चायमानन्दमयः परमात्मैव । 'एष ह्येवानन्दयाती'ति सर्वेषां जीवानां बद्धानां मुक्तानां चानन्दप्रापयिताऽयमानन्दमय एवेति हि श्रूयते । तन्नानन्दमयो जीवो भवितुमर्हति ॥ १५ ॥

### मान्त्रवर्णिकमेव च गीयते । १ । १ । १६ ॥

उपक्रमे 'सत्यं ज्ञानमनन्तं ब्रह्म' इति मन्त्रवर्णेन यत् प्रस्तुतं परंब्रह्म तदेव 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यात्मशब्देन प्रतिनिर्दिश्य तं सकलकारणं परंब्रह्म परमात्मानं स्थूलारुन्धतीन्यायेन सुखेन ग्राहयितुं प्रवृत्ता श्रुतिः अन्नमयादिक्रमेणोत्तरोत्तरं सूक्ष्ममान्तरं प्रतिपाद्य तेभ्यः आत्मबुद्धिं प्रत्याहृत्याऽऽनन्दमये व्यवस्थापयति 'अन्योऽन्तर आत्माऽऽनन्दमय' इति । तन्मन्त्रवर्णोदितं परंब्रह्मैव आनन्दमयशब्देन गीयते । तदयमानन्दमयः परमात्मैव, न जीवः ॥ १६ ॥

निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति । तदेतन्मन्त्रवर्णोदितं ब्रह्मैवानन्दमय इतीह गीयते । 'तस्माद्वा एतस्मादात्मन' इत्यादिना 'अन्योऽन्तर आत्माऽऽनन्दमय' इत्यन्तेनात्मानं सर्वकारणं सुखेन ग्राहयता । प्राप्यप्राप्तृविभागपरत्वेन प्रवृत्तस्य ब्राह्मणस्य विवरणरूपतया प्रवृत्तेऽस्मिन्मन्त्रवर्णे ब्रह्मविदिति पदस्य विवरणं 'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहाया'मिति । आप्नोति परमित्यस्य विवरणं 'परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति । तदेवं मन्त्रवर्णेन वेत्तृतया प्राप्तृतया च प्रतिपादिताज्जीवादन्यद्वेद्यतया प्राप्यतया च यत्प्रतिपादितं परं ब्रह्म, स एवात्माऽऽनन्दमयः ॥ १६ ॥

ननु–जीवात्मनो नान्यत् वेद्यतया प्राप्यतया च मन्त्रवर्णे प्रतिपादितम्, अपि तु विशुद्धं तस्यैव स्वरूपम् । अनन्य एव तु जीवो ब्रह्मणः । अविद्यया कल्पितस्तस्यैव जीवभावः, तच्च निर्विशेषं विज्ञानमात्रम्, तत्राह—

## नेतरोऽनुपपत्तेः ॥ १ । १ । १७ ॥

इतरः–जीव एव मन्त्रवर्णे विशुद्धेन स्वेन रूपेण निर्विशेषविज्ञानलक्षणब्रह्मात्मना प्राप्यतयोच्यत इति तु न; अनुपपत्तेः । 'विपश्चिते'ति श्रूयमाणस्य विपश्चित्त्वस्य तस्मिन्पराभिमते विशुद्धे स्वरूपे असम्भवात् ।

---

**नेतरोऽनुपपत्तेः । १ । १ । १७ ॥**

आनन्दमयो नेतरः–बद्ध इव मुक्तोऽपि भवितुं नार्हति । अनुपपत्तेः । मन्त्रवर्णोदितस्य यो गुणः श्रूयते 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'ति विपश्चित्त्वं नाम, तस्य तस्मिन्ननुपपत्तेः । विविधं पश्यत् चित् विपश्चित् । स्वतः सर्वदा सर्वदर्शित्वं हि परमात्मन एव । मुक्तस्तु एतदायत्तसार्वज्ञ्यः । न च तयोः स्वरूपाभेदः । 'ब्रह्मविदाप्नोति पर'मिति प्राप्यप्राप्तृभावेन भेदस्यैव निर्देशात् । अयमेवार्थो विशदीक्रियते 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति ॥ १७ ॥

'सोऽकामयते'त्यादिना श्रूयमाणं सर्गौपयिकं सत्यसङ्कल्पत्वादिरूपं हि विपश्चित्त्वम् । तच्च तस्मिन्निर्विशेषे नैवोपपद्यते ॥ १७ ॥

इतश्च जीवात्मनः अन्य एवायमानन्दमयः—

## भेदव्यपदेशाच्च ॥ १ । १ । १८ ॥

'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमय' इति हि विज्ञातुर्जीवादन्यत्वमानन्दमये स्फुटमेव व्यपदिश्यते ॥ १८ ॥

इतश्चायमानन्दमयो जीवादन्यः—

## कामाच्च नानुमानापेक्षा ॥ १।१।१९ ॥

आनन्दमयश्लोकसमनन्तरं श्रूयते "सोऽकामयत बहु स्या"मित्यादिना जगतः सर्गः । तत्र स इत्यानन्दमयो निर्दिश्यते, तस्य काममात्रेण सङ्कल्पमात्रेण सर्गकर्तृत्वं श्रूयते 'सोऽकामयत बहु स्यां प्रजायेयेति स तपोऽतप्यत स तपस्तप्त्वा इदं सर्वमसृजत' इति । नेतरस्येवास्य सृजत आनुमानापेक्षा । आनुमानं प्रधानम् । इतरस्य जीवस्य किमपि सिसृक्षतो भवति प्रकृतिपरिणतिभूतस्य करणकलेवरादेर्वाऽन्ततः अपेक्षा । नास्य सा । तस्मादयमानन्दमयो जीवादन्य एव ॥ १९ ॥

---

### भेदव्यपदेशाच्च । १ । १ । १८ ॥

विज्ञानमयाज्जीवाद्भेदः आनन्दमये 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमय' इति हि व्यपदिश्यते ॥ १८ ॥

इतश्च न जीव आनन्दमयशब्दप्रतिपाद्यः—

### कामाच्च नानुमानापेक्षा । १ । १ । १९ ॥

आकाशादिसकलकार्यवर्गस्य स्रष्टा ह्येष श्रूयते । स्रष्टुश्चास्य सर्गकर्मणि नानुमानापेक्षा—आनुमानं प्रधानम्, तदपेक्षा नास्तीत्यर्थः । अन्येषां चतुर्मुखादीनां सृजतामपि प्रधानपरिणतिविशेषलक्षणदेहेन्द्रियमनःप्रभृतिसापेक्षताऽस्त्येव । न हि तद्विहीनाः सर्गकर्मणि प्रभवन्ति । परमात्मा तु कामादेव—सङ्कल्पमात्रादेव सृजति । अतोऽयमानन्दमयः परमात्मैव ॥ १९ ॥

इतश्चायमन्यो जीवादानन्दमयः—

## अस्मिन्नस्य च तद्योगं शास्ति ॥ १ । १ । २० ॥

अस्मिन्नानन्दमये परमात्मनि अस्य जीवात्मनः तद्योगम्—आनन्दयोगं शास्ति श्रुतिः । आनन्दमयं परमात्मानं प्राप्तस्य तदनुभवजनितानन्दयोगः श्रूयत इति यावत् । तथा च श्रूयते अत्र—'रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति । सः आनन्दमयः रसो वै—रस्यतमो ह्येष एव । नहि निरतिशयानन्दघनादस्मादन्यदस्ति रस्यतमम् । अयं चोपासकस्तं लब्ध्वाऽऽनन्दी भवतीति । तदयमानन्दमयो रस्यतमः रसयितुर्जीवादन्य एव ॥ २० ॥

(अ०स०) तैत्तिरीये श्रूयमाण आत्माऽऽनन्दमयोऽन्तरः ।
स जीवः परमात्मा वेत्येतदत्र विचार्यते ॥ १ ॥

पूर्वपक्षः—

जीव एवायमानन्दमयः शारीरताश्रुतेः ।
शरीरयोगः सर्वत्र दृष्टः संसरतो ननु ॥ २ ॥
विकारार्थमयड्योगः सुखदुःखादियोगतः ।
धर्मद्वारेण घटते जीवात्मनि कथञ्चन ॥ ३ ॥
तस्य स्वरूपं यत् शुद्धं मन्त्रवर्णे निरूप्यते ।

सिद्धान्तः—

नैवानन्दमयो जीवस्तस्याऽऽनन्दोऽल्पको ननु ॥ ४ ॥

---

इतश्चानन्दमयः परमात्मैव—

**अस्मिन्नस्य च तद्योगं शास्ति । १ । १ । २० ॥**

अस्मिन्नानन्दमये अस्य जीवस्य तद्योगं—आनन्दयोगं शास्ति श्रुतिः—'रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति ॥ २० ॥

**इति प्रदीपे आनन्दमयाधिकरणम् ॥ ६ ॥**

उत्तरोत्तरमानन्दो मानुषानन्दतः क्रमात् ।
अभ्यस्यते शतगुणः पूर्वपूर्वाधिकः खलु ॥ ५ ॥
एवमभ्यस्यमानोऽयमन्ते वाचामगोचरः ।
जीवे न युज्यते किन्तु परमात्मनि युज्यते ॥ ६ ॥
तथा च जीवादन्योऽसावानन्दमय उच्यते ।
युक्ता शारीरताप्यस्मिन्नन्तर्यामितया स्थितेः ॥ ७ ॥
विकारार्थमयड्योगात् जीव एवेति चेन्न तत् ।
प्राचुर्यार्थक एवैष श्रूयते मयडत्र हि ॥ ८ ॥
विकारार्थकता याऽन्नमये सा नानुवर्तते ।
अपि प्राणमयादौ स प्राचुर्यार्थक एव हि ॥ ९ ॥
एष ह्येवानन्दयातीत्येवमानन्दहेतुता ।
श्रूयमाणाऽऽनन्दमये जीवेषु न घटेत हि ॥ १० ॥
आनन्दयति यो यांस्तु भेदः स्पष्टस्तयोः खलु ।
यद्वेदनेन यत्प्राप्तिः श्रूयते मन्त्रवर्णतः ॥ ११ ॥
स एव ह्ययमानन्दमय इत्यत्र गीयते ।
जीवस्वरूपं यच्छुद्धं मन्त्रवर्णोदितं न तत् ॥ १२ ॥
विपश्चित्त्वं श्रूयमाणं तस्मिन्न ह्युपपद्यते ।
तस्माच्च विज्ञानमयात् भेदोऽस्मिन् व्यपदिश्यते ॥ १३ ॥
न चानन्दमयादन्य आत्मात्र श्रूयतेऽन्तरः ।
श्रूयते सोऽकामयत स तपोऽतप्यतेति हि ॥ १४ ॥
सङ्कल्पादेव सृष्टिर्या जीवे सा नोपपद्यते ।
रसं लब्ध्वाऽऽनन्दमयं भवत्यानन्दवानयम् ॥ १५ ॥
तस्माच्च जीवादन्योऽयमात्मानन्दमयः परः ।
पुच्छं ब्रह्मेति पक्षस्तु सूत्रकाराविवक्षितः ॥ १६ ॥

इति भाष्ये आनन्दमयाधिकरणम् ॥ ६ ॥

आनन्दवल्ल्यामानन्दमयमधिकृत्य श्रूयते 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इति। श्रूयमाणमिदमादित्यान्तःस्थत्वं छान्दोग्ये श्रूयते— 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः, तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति। तस्यास्य नयनाद्यवयवयोगश्रवणात् आदित्यान्तःस्थेन कर्मपरवशेनैव भाव्यम्। आनन्दमयेनापि तेनानेनैव भाव्यम्, स्थानैक्यप्रत्यभिज्ञानात्; इत्याक्षेपत आनन्दमयविचारानन्तरमिदमधिकरणमारभ्यते— 'अन्तस्तद्धर्मोपदेशा'दिति। एतेन कारणवाक्यविचारप्रकरणे का सङ्गतिरन्तरादित्यविद्याविचारस्येति शङ्काऽपास्ता। आनन्दमयाधिकरणशेषतयाऽस्य सङ्गतेः।

यत्तु—श्रीकण्ठाचार्यैः 'साधकानां संसारभेषजं मनःसमाधानयोग्यं किमपि रूपं प्रदर्शयितुमिदमधिकरणमारभ्यते' इत्युक्तम्, तत्तु कारणवाक्यविचारप्रकरणाननुगुणम्। अतिव्याप्तिनिराकरणपरतयैव हि पूर्वपराधिकरणान्यवतार्यन्ते तैरेव। यद्यपीयमाशङ्का दीक्षितैरनूद्य परिहृता व्याख्यायाम्—'कथं चातिव्याप्तिनिरासार्थपेटिकामध्ये ध्यानोपयुक्तरूपविशेषनिरूपणार्थाधिकरणस्य प्रस्तावः, तस्य च साधनाध्यायसङ्गतस्य समन्वयाध्याये का सङ्गतिः, का च पूर्वाधिकरणसङ्गतिः। उच्यते—लक्षणपरिष्कारपेटिकासमाप्तिप्रदर्शनार्थो लक्षणसूत्रार्थमारभ्यानुवादः। अत एवातिव्याप्तिनिराससिद्धार्थोपन्यासः। आकाशप्राणाधिकरणद्वयमाकाशप्राणयोरतिव्याप्तिनिरासार्थं न भवति। तयोरधिकरणनिरसनीयातिव्याप्तिशङ्काहेतोरदर्शनात्। किन्त्वाकाशप्राण-

---

(प्र०) ननु 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति पुरुषस्योपास्यत्वं श्रूयते, उपास्यत्वश्रवणाच्च तस्यैव कारणत्वमप्युचितम्, 'कारणं तु ध्येय' इति श्रुतेः। करणकलेवरयोगश्चास्योपवर्ण्यते। तदयं आदित्यपुरुषः उपचितपुण्यविशेषो विख्यातो मण्डलाधिपतिरेव इति प्राप्ते उच्यते—

वाक्ययोर्ब्रह्मणि तात्पर्यनिरूपणार्थम् । तदर्थेन तेन वाक्यशेषगतकारण-त्वानुवादप्रभवमन्दशङ्काविषयातिव्याप्तिनिरासोऽपि लभ्यते इत्यानुष-ङ्गिकप्रयोजनसूचनार्थं तदवतारिकाभाष्यम् । इदमप्यधिकरणमन्तरादि-त्यविद्यावाक्यस्य ब्रह्मणि तात्पर्यनिरूपणार्थमेव । ध्यानार्थरूपविशेष-सिद्धिरप्यनेनाधिकरणेन लभ्यते इत्येतदवतारिकाभाष्यमप्यानुषङ्गिक-प्रयोजनसूचनार्थम्' इति । तथापि यत्र अधिकरणे यत् प्राधान्येन प्रतिपिपादयिषितं तदनुगुणेनैवावतरणेन भाव्यम् । न तथेदमवतरण-मित्यस्वारस्यमवतरणग्रन्थे सुसंस्थितम् । एवमेवाकाशप्राणाधिकरणद्व-यावतरणग्रन्थेऽपि ।

## अन्तस्तद्धर्मोपदेशात् ॥ १ । १ । २१ ॥

छान्दोग्ये श्रूयते 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिर-ण्यश्मश्रुः हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति । अत्र संशयः—कोऽयमादित्यमण्डलान्तर्वर्ती पुरुषः । किमुपचितपुण्यविशेषो मण्डलान्तर्वर्ती कश्चित् क्षेत्रज्ञः, उत परमात्मा सर्वेश्वरः । तत्राह—क्षेत्रज्ञ एवायमिति । कुतः ? करचरणाद्य-वयवयोगश्रवणात् । स च क्षेत्रज्ञस्यैव । शरीरयोगनियतो हि प्रिया-प्रियसंस्पर्शः । क्षेत्रज्ञस्यैव तु तदन्वयः । नन्वानन्दमयाधिकरण एव शरीरयोगश्रवणलक्षणं शङ्काबीजं निरस्तम् । 'शारीर आत्मे'ति आनन्द-मयेऽपि शरीरयोगः श्रुतः । सत्यम् । अथाप्येष विशेषः । प्रियमोदादिषु

---

**अन्तस्तद्धर्मोपदेशात् । १ । १ । २१ ॥**

नायं मण्डलाभिमानी देवताविशेषः । **अन्तः**—आदित्यमण्डलान्तःस्थः परमात्मैव, कुतः ? तद्धर्मोपदेशात्—तस्य परमात्मनः ये असाधारणधर्माः अपहतपाप्मत्वादयः, तेषामुपदेशात् । तथा चोत्तरत्र श्रूयते—'स एष सर्वेभ्यः पाप्मभ्य उदित' इत्यादि । ननु विग्रहयोगः श्रूयते । का हानिः । ननु कर्मवश्य-स्य हि सः । न । तदसाधारणः अप्राकृतो हि हिरण्यश्मश्रुरित्यादिना दिव्या-कारः श्रूयते । कप्यासश्रुत्यर्थश्च भाष्ये व्यक्तः ॥ २१ ॥

करचरणाद्यवयवभेदकल्पनामात्रं तत्र, इह तु तात्त्विकस्तद्योगः, ततश्चेयं शङ्का समुद्भवत्यत्र । अन्यत्र श्रूयमाणं जगत्कर्तृत्वमपीदृशेषूपचितपुण्यविशेषेषु पुरुषेषु शक्त्यतिशयात् घटेतेति । अत्रोच्यते—अन्तः-आदित्यमण्डलस्यान्तः यः पुरुषः श्रूयते, स क्षेत्रज्ञादन्य एव । कस्मात्? तद्धर्मोपदेशात्—तस्य योऽसाधारणधर्मः क्षेत्रज्ञाद्व्यावृत्तः अपहतपाप्मत्वादिः, तस्योपदेशात् । श्रूयते हि 'स एष सर्वेभ्यः पाप्मभ्य उदित' इति । अपहतपाप्मता चाकर्मवश्यतैव । तथा सर्वलोककामेशत्वं च परमात्मासाधारणो धर्मः श्रूयते—'स एष ये चामुष्मात् पराञ्चो लोकास्तेषां चेष्टे देवकामानां च' 'स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां चे'ति । तथा ऋक्साम्नोरेतद्गुणगानकर्तृत्वं च श्रूयमाणमस्य परमात्मत्व एवोपपद्यते । श्रूयते च 'तस्य ऋक्साम च गेष्णा'विति । ननु शरीरयोगः कर्मवश्यतायां लिङ्गम् । न । इच्छागृहीताभिमतोरुदेहो ह्येषः । न च श्रूयमाणमस्य प्राकृतं रूपम् । अजायमानो बहुधा विजायते । स्वेच्छया स्वाधारणेन दिव्येन रूपेण सन्निधत्ते उपासकानुग्रहाय । तदेतद्दिव्यं रूपमुपवर्ण्यते 'हिरण्यश्मश्रु'रिति । कमनीयश्मश्रुः कमनीकेश आप्रणखात् कमनीयः सर्वतः । तस्याक्षिणी यथा कप्यासं पुण्डरीकमेवम् । पुण्डरीकसदृशे इत्येतत् । पुण्डरीकं विशिनष्टि—कप्यासमिति । कं जलं पिबतीति कपिः सूर्यः, तेन आ समन्तात् अस्यते क्षिप्यते विकास्यते इति कप्यासम्—रविकरविकसितम् । कं पिबतीति कपिः नालम्, तस्मिन्नास्त इति कप्यासम्-सनालम् । के-सलिले अप्यास्ते इति कप्यासम् 'वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यकारलोपः । सलिलस्थम् । इत्थमर्थत्रयमिह कप्यासशब्देन विवक्षितमिति वेदार्थसङ्ग्रहे निरूपितम् । रविकरविकसितं तच्च सनालं तदपि सलिलादनुद्धृतमिति शोभातिशयः कमलस्य ज्ञाप्यते । तथाविधकमलसदृशे अक्षिणी इति यावत् । न चेदं रूपमुपासकैरुपासनाय कल्पितम्, 'दृश्यते' इति हि श्रूयते, न तु विभाव्यते इति । परमिदं नास्माभिर्दृश्यते, किन्तु योगिभिः । श्रूयते चान्यत्र—'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्म-

दर्शिभि'रिति। स्थूलदर्शिभिर्न दृश्यते। परं सूक्ष्मवस्तुदर्शनसमर्थैर्योगिभिर्योगदृष्ट्या दृश्यते। तथा श्रूयते-'न सन्दृशे तिष्ठति रूपमस्ये'ति। अस्य रूपमिति रूपस्यसद्भाव एवावगम्यते, न तु भावनामात्रपरिकल्पितता। तथा च सिद्धं रूपश्रवणं न परमात्मत्वे विरुद्धमिति॥ २१॥

इतश्च आदित्यान्तःस्थः परमात्मैव-

## भेदव्यपदेशाच्चान्यः॥ १। १। २२॥

अन्तर्यामिब्राह्मणे 'य आदित्ये तिष्ठ'न्नित्यादिना आदित्यान्तर्वर्तितया आदित्यपुरुषाधिष्ठातुः परमात्मनः श्रवणादन्य एव क्षेत्रज्ञादयमानन्दमयः आदित्ये वर्तमानः॥ २२॥

(अ०स०) आदित्यमण्डलान्तःस्थः छान्दोग्ये श्रूयते तु यः।
हिरण्यश्मश्रुकेशादिः पुरुषोऽत्र विचार्यते॥ १॥

पूर्वपक्षः—

शरीरयोगश्रवणात् ब्रह्मणस्तदसम्भवात्।
कर्मवश्यः पुण्यशाली कश्चित् क्षेत्रज्ञ एव सः॥ २॥

सिद्धान्तः—

पुरुषः पुण्डरीकाक्षः पुरुषोत्तम एव सः।
तदसाधारणो धर्मस्तत्रैव ह्युपदिश्यते॥ ३॥
पापप्रतिभटत्वं च लोककामेशताऽपि या।
ऋक्सामगेष्णता चापि क्षेत्रज्ञे नोपपद्यते॥ ४॥
शरीरयोगश्रवणं ब्रह्मणो न विरुध्यते।
तस्यासाधारणं रूपं श्रूयते तत्र तत्र हि॥ ५॥

---

भेदव्यपदेशाच्चान्यः। १। १। २२॥

आदित्यस्याप्यन्तरात्मतया आदित्यात् भेदेन व्यपदेशाच्चायमन्य एव ततः। तथा हि व्यपदेशः 'य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीर'मिति॥ २२॥

इति प्रदीपे अन्तरधिकरणम्॥ ७॥

अभिमानी मण्डलस्य य आदित्यः प्रकीर्त्यते ।
अन्तर्यामिश्रुतौ तस्मात् भेदोऽस्मिन् व्यपदिश्यते ॥ ६ ॥

इति भाष्ये अन्तरधिकरणम् ॥ ७ ॥

---

ईक्षणाल्लिङ्गाज्जगत्कारणत्वलक्षणलक्षितं ब्रह्म नाचेतनमिति समर्थितम् । अथ लिङ्गात् श्रुतेर्बलीयस्त्वात् 'आकाशाद्ध्येव खल्विमानि भूतानि जायन्ते' इति विशेषश्रुतेराकाशस्य प्रसिद्धस्यैव कारणत्वं युक्तमित्याशङ्कायामाह—

## आकाशस्तल्लिङ्गात् ॥ १ । १ । २३ ॥

छान्दोग्ये श्रूयते 'अस्य लोकस्य का गतिरिति, आकाश इति होवाच, सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशो ह्येभ्यो ज्यायानाकाशः परायणम्' इति । अत्र संशयः- अयमाकाशः किं प्रसिद्धो भूताकाशः उत परमात्माऽवयवव्युत्पत्त्या प्रतीयमान इति । अत्राह–योगाद्रूढेर्बलीयस्त्वात् भूताकाशस्यैव ग्रहणं युक्तम् । यद्यप्यन्यत्र कारणश्रुतावीक्षणं लिङ्गं 'तदैक्षते'ति श्रूयते । तथाऽपि लिङ्गात् श्रुतिर्बलीयसी । श्रुतिश्चेयमाकाशाद्ध्येवेति विशेष-

---

(प्र०) ननु छान्दोग्ये श्रूयते 'अस्य लोकस्य का गतिरिति, आकाश इति होवाच' इति । अनेनास्य लोकस्य प्रतिष्ठा आकाश एवेति गम्यते, तत्राह—

**आकाशस्तल्लिङ्गात् । १ । १ । २३ ॥**

अत्र श्रूयमाण आकाशः परमात्मैव न भूताकाशः, कस्मात् ? श्रूयमाणात्तु तस्य परमात्मनोऽसाधारणाल्लिङ्गात् । तथाहि समनन्तरं श्रूयते 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्' इति । अत्र श्रूयमाणं सर्वभूतोत्पत्तिहेतुत्वं सर्वभूतलयस्थानत्वं सर्वतो ज्यायस्त्वं परायणत्वं च न कार्यकोटिप्रविष्टस्य भूताकाशस्य घटेत । परमात्मन एव चैतानि लिङ्गानि ॥ २३ ॥

इति प्रदीपे आकाशाधिकरणम् ॥ ८ ॥

शब्देन, तत्र तु सदेवेति सामान्यशब्देन । सामान्यश्रुतेर्विशेषश्रुतिरियं प्रबला । विशेषश्रुत्यनुसारादन्यत्र श्रूयमाणमीक्षणं लिङ्गं गौणं नेयम् । 'आत्मन आकाशः सम्भूत' इत्यत्रात्मशब्देन स्ववाचिनाऽऽकाशस्यैव सूक्ष्मं स्वरूपं तन्मात्रलक्षणं निर्दिश्यते । आकाशः स्वस्मादेव सूक्ष्मादुत्पन्न इति यावत् इति । अत्रोच्यते—आकाशस्तल्लिङ्गात् । अयमाकाशः परमात्मैव । कस्मात्? तल्लिङ्गात्—परमात्मासाधारणलिङ्गात् । श्रूयते च लिङ्गं निखिलजगत्कारणत्वं ज्यायस्त्वं परायणत्वं च । 'सर्वाणि ह वा इमानि भूतानी'ति भूतशब्देन निखिलमेव जगच्चिदचिन्मिश्रं हि बोध्यते, न केवलं बाह्याचेतनमात्रम् । अनुसार्यते ह्यनेन 'यतो वा इमानि भूतानि जायन्ते' इत्येष श्रौतो निर्देशः, स च 'येन जातानि जीवन्ती'त्यनेन सहचरितः । तद्भूतशब्दोऽयं चिदचिन्मिश्रनिखिलजगद्वाचकः । प्राणिषु प्रसिद्धश्च भूतशब्दः । सर्वाणीति च विशेषणम् । अनेन व्यावर्त्यते कतिपयकारणमाकाशः । 'आकाशो ह्येवैभ्यो ज्यायान्' इति सर्वतो ज्यायस्त्वम् । ज्यायस्त्वं हि स्वरूपतः स्वभावतश्च । तच्च ज्ञानशक्त्याद्यनन्तकल्याणगुणयोग एव । इदं च व्यावर्तयति भूताकाशम् । 'आकाशः परायण'मिति परायणत्वम् । परम्—अयनम्—परा प्रतिष्ठा, परं प्राप्यमिति च । इदं च परायणत्वं भूताकाशं व्यावर्तयति । परमप्राप्यता च परमपुरुषस्यैव । 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसम्भवन्ती'तिवदिदमपि वाक्यं कारणत्वानुवादकमेव न कारणत्वप्रापकम् । 'सर्वाणि ह वा' इति प्रसिद्धवन्निर्देशात् । प्रसिद्धिश्च हवेत्यनेन गम्यते । तत्प्रापकवाक्यं तु 'सदेव सोम्येदमग्र आसीत्' 'आत्मन आकाशः सम्भूतः' इत्यादिकमेव । ईक्षतेः सन्नाचेतनम् । 'शारीर आत्मे'ति शरीरप्रतिसम्बन्धित्वश्रवणान्नात्मा स्वरूपमात्रम्, किन्तु चेतनविशेष एव । स चानन्दमय इति चोपसंहारवचनेन समर्थ्यते ॥ २३ ॥

(अ०स०) आकाशः कारणत्वेन छान्दोग्ये श्रूयते तु यः ।
प्रसिद्धो वाऽयमाकाशो ब्रह्म वेति विचार्यते ॥ १ ॥

**पूर्वपक्षः—**

न विरोधः कश्चिदत्र प्रसिद्धार्थपरिग्रहे ।
सर्वाणीमानि भूतानि ह्याकाशादित्यबाधितम् ॥ २ ॥
क्षित्यादिभूतजातस्य नन्वाकाशो हि कारणम् ।
यतो वेत्यादिवाक्येन कारणं यदनूदितम् ॥ ३ ॥
विशिष्याकाशशब्देन तदेवात्र समर्प्यते ।
सदेवेत्यादिसामान्यश्रुतेरेषा बलीयसी ॥ ४ ॥

**सिद्धान्तः—**

आकाशः परमात्मैव तल्लिङ्गादत्र गम्यते ।
ज्यायस्त्वादि श्रूयमाणं लिङ्गं हि परमात्मनः ॥ ५ ॥
सर्वप्रपञ्चहेतुत्वं भूताकाशे तु बाधितम् ।
प्राणिमात्रे स्वरसतो भूतशब्दः प्रयुज्यते ॥ ६ ॥
तन्न क्षित्यादियत्किञ्चित्कार्यमात्रं विवक्षितम् ।
विशेषश्रुतिरप्येषा यतोवेत्यादिवाक्यवत् ॥ ७ ॥
अनुवादसरूपैव हवेति श्रूयते यतः ।
प्रकाशगुणयोगात्तु ब्रह्मैवाकाश उच्यते ॥ ८ ॥

इति भाष्ये आकाशाधिकरणम् ॥ ८ ॥

---

## अत एव प्राणः ॥ १ । १ । २४ ॥

छान्दोग्ये श्रूयते—'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंवि-

---

**अत एव प्राणः । १ । १ । २४ ॥**

छान्दोग्ये श्रूयते 'कतमा सा देवता ?····प्राण इति होवाच' इति । अत्र प्राण-शब्देन निर्दिष्टः परमात्मैव, न पञ्चवृत्तिः प्राणाख्यो वायुविशेषः । कस्मात् ? अत एव—आकाश इवास्मिन् सर्वभूतोपादानत्वं सर्वभूतलयस्थानत्वं च 'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते' इति यतः श्रूयते अत एव । नहि कार्यकोटिप्रविष्टे प्राणे तत्संभवः । सर्वप्राणयितृत्वगुणयोगाच्च परमात्मा प्राणशब्देनोच्यते ॥ २४ ॥

इति प्रदीपे प्राणाधिकरणम् ॥ ९ ॥

शन्ति प्राणमभ्युज्जिहते' इति । सर्वेषामेव प्राणिनां प्राणाधीनस्थिति-प्रवृत्तिकत्वदर्शनात् प्रसिद्ध एवायं प्राणवायुः प्राणो भवितुमर्हतीति शङ्कायामुच्यते । अत एव—आकाशे इवास्मिन्नपि उपदिश्यमानात् परमात्मासाधारणाल्लिङ्गात् सर्वप्राणनकर्तृत्वगुणयोगेन प्राणः परमात्मैव । श्रूयते च लिङ्गम् 'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते' इति । अनेन सर्वस्य कार्यवर्गस्य प्राणतो निष्क्रमणं प्रादुर्भावः, प्राण एवाभिसंवेशो—लयश्च परमात्मासाधारणं हि लिङ्ग-मुच्यते । प्रसिद्धात् प्राणात् न शिलाकाष्ठादेरुद्भवो लयो वा तस्मिन् घटेत । अतः प्राणः परमात्मैव ॥ २४ ॥

छान्दोग्ये कारणत्वेन प्राणो यः श्रूयते तु सः ।
परमात्मैव तस्माद्धि श्रूयेते प्रभवाप्ययौ ॥ १ ॥
सर्वप्राणनहेतुत्वगुणयोगादबाधितात् ।
परमात्मनि योगेन प्राणशब्दः प्रवर्तते ॥ २ ॥
प्रसिद्धप्राणसंयोगः शिलाकाष्ठादिके न च ।
उद्गमो निर्गमश्चापि सर्वस्य प्राणतः श्रुतः ॥ ३ ॥

इति भाष्ये प्राणाधिकरणम् ॥ ९ ॥

---

कारणत्वप्रतिपादकान्यन्यपरत्वशङ्कावहानि वाक्यानि विचारितानि । अथ कारणत्वाक्षेपकलिङ्गावबोधकानि विचार्यन्ते—

## ज्योतिश्चरणाभिधानात् ॥ १ । १ । २५ ॥

श्रूयते छान्दोग्ये 'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः [1]पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु इदं वाव तद्यदिमस्मिन्नन्तः-

---

ज्योतिश्चरणाभिधानात् । १ । १ । २५ ॥

'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वि'-त्यादिना छान्दोग्ये श्रूयमाणं ज्योतिः किं प्रसिद्धमादित्यादि उत परमात्मैवेति विचार्यते । तत्र श्रूयमाणं ज्योतिः परंब्रह्मैव । कस्मात् ? चरणाभिधानात्

---

टिप्प०—१ पृष्ठेषु-बहिर्भूतेषु ।

पुरुषे ज्योतिः' इति । निरतिशयदीप्तियोग इह कारणत्वाक्षेपकं लिङ्गम् । श्रूयते हि मुण्डके कारणप्रकरणे 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति ।

अत्र संशयः–इह किं ज्योतिःशब्दवाच्यमादित्यं ज्योतिः किंवा परमेव ब्रह्म । अत्राह–प्रसिद्धमादित्यमेव ज्योतिः । 'इदं वाव तद्यदिमन्तःपुरुषे ज्योति'रिति कौक्षेयज्योतिषा ऐक्यश्रवणात् । दीप्यते ह्यादित्यं ज्योतिः परितो भुव्यन्तरिक्षे च । अतः 'परो दिव' इत्यत्र श्रूयमाणा द्यौः सूर्यभूम्योर्मध्ये वर्तमानः कश्चिदन्तरिक्षलोकः । अत्रोच्यते–ज्योतिरिह परमेव ज्योतिः परं ब्रह्म । कुतः? चरणाभिधानात् । 'पादोऽस्य सर्वा भूतानी'ति सर्वाणि भूतान्यस्य पादत्वेन–अंशत्वेनाभिधीयन्ते हि । न चेदमुपपद्यते आदित्ये । श्रूयते चान्यत्र 'परं ज्योतिरुपसम्पद्ये'ति । परत्वं चास्य ज्योतिषो ज्योतिषामपि ज्योतिष्ट्वात् । श्रूयते च 'तं देवा ज्योतिषां ज्योति'रिति । प्रकाशकता च मुख्या चेतन एव । श्रूयते चान्यत्र 'किंज्योतिरेवायं पुरुष' इत्युपक्रम्य 'आत्मना ज्योतिषा' इति । तेषामप्येष परमात्मा प्रकाशक इति परं ज्योतिः परमात्मैव । 'विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्वि'ति श्रूयमाणो निरतिशयदीप्तियोगश्चास्मिन्नेवोपपद्यते । विश्वतः सर्वत इति च समष्टिव्यष्टिवर्गः । ननु स्ववाक्ये न श्रूयते ज्योतिषश्चरणः । पूर्वखण्डे हि 'पादोऽस्ये'ति श्रूयते । सत्यम् । अथाप्यत्र श्रूयमाणो द्युसम्बन्धश्चरणवाक्येऽपि 'त्रिपादस्यामृतं दिवी'ति श्रूयते । तेनास्यैकप्रकरणता प्रत्यभिज्ञायते । द्यौश्चाप्रकृतः स्थानविशेषः । कौक्षेयज्योतिषा ऐक्योपदेशश्च कौक्षेयज्योतिषः परब्रह्मात्मकत्वभावनाविधायकः फलविशेषार्थः । स्मर्यते च–'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः' इति ॥ २५ ॥

---

चरणं–पादः, तस्याभिधानात् । पूर्वस्मिन् वाक्ये 'पादोऽस्य विश्वा भूतानी'ति सर्वभूतपादत्वस्याभिधानात् । न परमात्मनोऽन्यस्य सर्वाणि भूतानि पादो भवितुमर्हन्ति । पादो ह्यंशः । भूतेष्वन्यतमस्यादित्यादिज्योतिषः कथं भूतपादकता ॥ २५ ॥

ननु पूर्वखण्डे गायत्रीमधिकृत्य प्रवृत्ते 'त्रिपादस्यामृतं दिवी'ति द्युसम्बन्धः श्रूयते । इह तु ज्योतिषो द्युसम्बन्धः । तत्प्रकरणभेदात्तदेवेदमिति न प्रत्यभिज्ञायते इत्याशङ्कामनूद्य परिहरति–

## छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगमात् तथा हि दर्शनम् ॥ १ । १ । २६ ॥

पूर्वखण्डे–'गायत्री वा इदं सर्वं भूत'मिति छन्दः गायत्री अभिधीयते, तदेव छन्दोऽधिकृत्य श्रूयते–'तदेतदृचाऽभ्युक्तम् । तावानस्य महिमा ततो ज्यायांश्च पुरुषः । पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इति । तस्मान्नास्य ज्योतिषः सर्वभूतचरणतेति चेन्न । तथा चेतोऽर्पणनिगमात्–तथा गायत्रीत्वेन ब्रह्मणि चेतसः अर्पणं तत्र निगम्यते । ब्रह्मैव गायत्रीसादृश्यात् गायत्रीत्वेन रूप्यते । गायत्रीसादृश्यानुसन्धानं ब्रह्मण्युपदिश्यते इति यावत् । सादृश्यनिरूपकधर्मश्चेह चतुष्पात्त्वम् । गायत्री च चतुष्पदा–'इन्द्रः शचीपतिः, बलेन पीडितः,

---

ननु पूर्ववाक्यं प्रकरणान्तरस्थम् । 'गायत्री वा इदं सर्वं' इति गायत्री हि पूर्वं प्रस्तुता । तत् सर्वभूतपादता न परज्योतिषा सह संबध्यते इत्याशङ्क्य परिहरति—

## छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगमात्तथा हि दर्शनम् । १ । १ । २६ ॥

छन्दः गायत्रीछन्दः, तस्य पूर्वमभिधानात् प्रकरणं भिद्यते इति चेन्न । तथा–गायत्रीसदृशत्वेन परस्मिन् ब्रह्मणि चेतसोऽर्पणनिगमात् । गायत्रीसाम्यदृष्टिर्गायत्रीशब्देन ब्रह्मणि विधीयते इत्येतत् । अन्यथा 'गायत्री वा इदं सर्वं भूतं यदिदं किञ्चे'त्यनन्वितं स्यात् । न हि गायत्र्याः सर्वभूतात्मत्वमुपपद्यते । गायत्रीसादृश्यं च चतुष्पात्त्वषड्विधत्वाभ्याम् । तदिदं अस्मत्कृतादुपनिषद्भाष्यात् व्यक्तं बोध्यम् । तथा हि दर्शनम्–तथैव निदर्शनमपि श्रूयते संवर्गविद्यायां हि विराट्छन्दस्साम्यात् 'सैषा विराट्' इति विराट्छन्दस्त्वं श्रूयते इति ॥ २६ ॥

दुश्च्यवनो वृषा, समित्सुसासहिः' इति। भूतपृथिवीशरीरहृदयैश्चतुष्पात्त्वं ब्रह्मणः । तदेतदनन्तरसूत्रविवरणे निरूपयिष्यामः । एतदुक्तं भवति–गायत्रीशब्देन न छन्दोमात्रमभिधीयते, अपि तु तत्सदृशं ब्रह्मैव लक्षणयाऽभिधीयते। छन्दोमात्रे सर्वभूतचरणता ह्यनुपपन्ना। तथा हि दर्शनम्–छन्दःसादृश्येन छन्दोवाचिशब्देन निर्देशो ह्यन्यत्रापि दृष्टः। यथा संवर्गविद्यायाम्–'ते वा एते पञ्चान्ये पञ्चान्ये दश सम्पद्यन्ते। सैषा विराडन्नाद्' इति ॥ २६ ॥

इतश्च गायत्री न छन्दोमात्रम्–

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ १ । १ । २७ ॥

भूतादीनाम्–भूतपृथिवीशरीरहृदयानां चतुर्णां पादत्वेन योऽयं व्यपदेशः 'गायत्री वा इदं सर्वं भूतम्×××या वै सा गायत्री इयं वाव येयं पृथिवी×××या वै सा पृथिवी इदं वाव सा यदिदमस्मिन् पुरुषे शरीरम् ××××यद्वै तत्पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे हृदयम् ×××× सैषा चतुष्पदा षड्विधा गायत्री' इति, स हि ब्रह्मण्येवोपपद्यते । न तु छन्दसि । षाड्विध्यं च एकैकस्य पादस्य द्वैविध्येन [१]तृतीयचतुर्थयोश्च पादयोर्विधाद्वैविध्ये ऐकरूप्येण । श्रूयते च तत्रैव प्रतिपादं द्वैविध्यम्। छन्दसश्चतुष्पात्त्वं पूर्वसूत्रविवरण एव तु प्रदर्शितम्। तत्र 'इन्द्रः शचीपतिः' इत्यादौ एकैकस्मिन् पादे अक्षरषट्कस्य विद्यमानतया च गायत्र्याः षड्विधत्वं बोध्यम् ॥ २७ ॥

---

### भूतादिपादव्यपदेशोपपत्तेश्चैवम् । १ । १ । २७ ॥

भूतादीनाम्–भूतपृथिवीशरीरहृदयानां चतुर्णां गायत्रीपादत्वव्यपदेशः अनुपदं श्रूयते। स च परब्रह्मण्येवोपपद्यते, न गायत्र्याम्, अत एवम्–गायत्रीसाम्यात् गायत्रीशब्दो ब्रह्मणि इत्येव ॥ २७ ॥

---

**टिप्प०**—१ भूतलक्षणः प्रथमः पादः गानकर्मत्वत्राणकर्मत्वलक्षणविधाद्वयोपेतः। पृथिवीरूपः द्वितीयः पादः भूतप्रतिष्ठात्वभूतानतिलङ्घ्यत्वलक्षणविधाद्वयोपेतः । शरीरहृदयरूपौ तृतीयचतुर्थपादौ प्राणप्रतिष्ठात्वप्राणानतिलङ्घ्यत्वरूपविधाद्वयोपेताविति बोध्यम्।

ननु पूर्वखण्डे 'त्रिपादस्यामृतं दिवी'त्युपदिश्यते । अत्र तु 'अतः परो दिवो ज्योतिर्दीप्यते' इत्युपदिश्यते । एकत्र द्युसम्बन्धः, अपरत्र दिवः परो यो देशस्तत्सम्बन्धः, एवं देशभेदश्रवणात् भिद्यते प्रकरणमिदमित्याशङ्कामनूद्य निरस्यति—

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् । १ । १ । २८ ॥

उभयस्मिन्नपि निर्देशे अर्थस्वाभाव्येनाविरोधात् । वृक्षादूर्ध्वमाकाशे पतन्तं श्येनमधिकृत्य 'वृक्षाग्रे श्येनः, वृक्षाग्रात् परतः श्येन' इति द्विविधोऽपि निर्देशो यथोपपद्यते तथाऽयमपि निर्देश उपपद्यते ॥ २८ ॥

(अ. स.) छान्दोग्ये श्रूयते ज्योतिर्यदतः परतो दिवि ।
प्रसिद्धं तत्किमादित्यं ब्रह्म वेति विचार्यते ॥ १ ॥

---

अर्थभेदमाशङ्क्य परिहरति—

**उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ।१।१।२८॥**

ननु—पूर्ववाक्ये 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवी'ति सप्तम्यन्तउपदेशः, इह तु 'परो दिवो ज्योति'रिति पञ्चम्यन्तः, सप्तम्यन्तेन दिव आधारत्वं गम्यते, दिवः इति पञ्चम्यन्तेन द्युलोकादुपरिस्थितिरिति विरोधात् उभयत्रार्थो भिद्यत इति चेन्न । उभयस्मिन्नपि निर्देशे अविरोधात् । वृक्षाग्रात्परतः श्येनः वृक्षाग्रे श्येन इति निर्देशयोर्यथा एकाभिप्रायकता तथैवेहापि । अयमाशयः—वृक्षाग्रे श्येन इति सप्तम्यन्तः वृक्षतोऽग्रतनोर्ध्वाधोभागस्थितिसाधारणो निर्देशः, वृक्षाग्रात्परत इति तु ऊर्ध्वभागस्थित्यसाधारणः, तथा च वृक्षादूर्ध्वभागे तत्राप्यूर्ध्वप्रदेशे स्थितिरुक्ता भवति । सामान्यविशेषनिर्देशरूपतया अविरोधः । द्यौश्चेयमप्राकृतो लोकः ॥ २८ ॥

इति प्रदीपे ज्योतिरधिकरणम् ॥ १० ॥

**पूर्वपक्षः—**

ज्योतिरादित्यमेवेदं सर्वतो दीप्यते ननु ।
मानुषादान्तरिक्षाच्च लोकादुपरि दीप्यते ॥ २ ॥
कौक्षेयज्योतिषा चैक्यं श्रूयमाणं च युज्यते ।

**सिद्धान्तः—**

नैतज्ज्योतिरिदं तावत् ज्योतिषां ज्योतिरेव यत् ॥ ३ ॥
यस्य भासा भाति सर्वं ब्रह्म सर्वावभासकम् ।
पादोऽस्य सर्वा भूतानीत्येतदस्यैव युज्यते ॥ ४ ॥
ननु ज्योतिष्प्रकरणं पूर्वस्मादन्यदेव हि ।
गायत्री वेति पूर्वं हि प्रस्तुतं छन्द एव तु ॥ ५ ॥
नैतद्ब्रह्माधिकृत्यैव स खण्डोऽपि प्रवर्तते ।
चतुष्पदत्वषाड्विध्यसमानगुणयोगतः ॥ ६ ॥
आध्यानाय परं ब्रह्म छन्दश्शब्देन कीर्त्यते ।
तथा संवर्गविद्यायां दृष्टं सैषा विराडिति ॥ ७ ॥
भूतक्षित्यादिपादत्वं छन्दसो नैव युज्यते ।
युज्यते तस्य यस्यैव विभूतिरखिलं जगत् ॥ ८ ॥
द्युसम्बन्धश्चोभयत्र श्रूयमाणोऽस्य युज्यते ।
दिवः परो दिवीत्येतौ निर्देशौ न विरुध्यतः ॥ ९ ॥
तमसो यः परो देशः स ताभ्यां हि विवक्षितः ।
कौक्षेयज्योतिषैक्यं तु भावनीयतयोच्यते ॥ १० ॥
ब्रह्मात्मकत्वात्तस्यापि युक्ता सापि हि भावना ।
स्मर्यते च तथा तस्मात् ज्योतिर्ब्रह्मेति सुस्थितम् ॥ ११ ॥

इति भाष्ये ज्योतिरधिकरणम् ॥ १० ॥

पूर्वस्मिन्नधिकरणे कारणत्वव्याप्तनिरतिशयदीप्तियोगो ज्योतिषि श्रूयमाणः परस्य ब्रह्मण एवेति समर्थितम् । अथास्मिन्नधिकरणे कारणत्वव्याप्तमुमुक्षूपास्यत्वयोग इन्द्रप्राणे श्रूयमाणः परब्रह्मण एवेति समर्थ्यते—

## प्राणस्तथाऽनुगमात् ॥ १ । १ । २९ ॥

कौषीतकीब्राह्मणे श्रूयते—'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व' इति । इदं च वचनं मुमुक्षुं प्रतर्दनं प्रति हिततममुपदिशत इन्द्रस्य । **अत्र संशयः**—प्राणशब्दवाच्यो किमिन्द्रो जीवविशेषः उत परमात्मेति । **अत्राह**—इन्द्र एवायं प्राणः । इन्द्रो ह्युपदिशति—'प्राणोऽस्मि मामुपास्स्वे'ति । प्राणिनां प्राणने वृष्ट्याधायकतया हेतुत्वेन प्राण इति निर्दिश्यते । मुमुक्षुं प्रदर्शनं प्रत्ययं हिततममुपदिशन्नात्मानमुपास्यतयाऽऽह । अतो मुमुक्षूपास्यतास्येति कारणत्वमप्यस्यैव युक्तम् । 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति कारणोपासकस्य हि श्रूयते मोक्षः । इति । **अत्रोच्यते**—प्राणस्तथाऽनुगमात् । उपास्यत्वेन निर्दिष्टः प्राणोऽत्र परमात्मैव, कुतः ? तथाऽनुगमात्—तथा परमात्मत्वानुगुण्येन अनुगमात्, अनुगतेः उत्तरवाक्येन सम्बन्धात् । 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्स्वे'ति निर्दिष्टस्य प्राणस्य 'स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृत' इत्युत्तरवाक्येऽस्ति ह्यनुगतिः—सम्बन्धः । स च

---

(प्र०) ननु कौषीतकिब्राह्मणे प्रतर्दनविद्यायां श्रूयते 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्स्व' इति । अनेन इन्द्रवचनेन इन्द्रस्यैव मुमुक्षूपास्यता गम्यते, इत्याशङ्कायामाह—

**प्राणस्तथाऽनुगमात्** । १ । १ । २९ ॥

अत्र इन्द्रप्राणशब्दवाच्यः परमात्मैव, तथाऽनुगमात्—तथा परमात्मपरतयैव अनुगमात्पूर्ववाक्यस्योत्तरवाक्येन संबन्धात् । अनुपदं श्रूयते—'स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृत' इति । अनेन 'प्राणोऽस्मि तं मामुपास्स्वे'ति यः प्राण उपास्यतया निर्दिष्टः स एव 'स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृत' इति सामानाधिकरण्येनानुगम्यते । उपचितपुण्यविशेषश्च कर्मवश्यो जीवविशेष इन्द्रोऽजरोऽमृतो नैव भवेत् । किन्तु परमात्मैवेति ॥२९॥

सम्बन्धः परमात्मत्वानुगुणः । आनन्दत्वादिर्हि परमात्मन एव धर्मः ॥ २९ ॥

ननु वक्ता इन्द्रः आत्मानमुपास्यत्वेन वदति–'मामेव विजानीहि' 'तं मामायुरमृतमुपास्स्वे'ति । तत् आनन्दत्वादयो धर्मा एतदनुगुणमेव नेया इत्याशङ्कामनूद्य परिहरति—

## न वक्तुरात्मोपदेशादिति चेन्नाध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ १ । १ । ३० ॥

न–तथाऽनुगमादित्ययं हेतुर्नोपपद्यते 'मामेव विजानीहि' 'मामुपास्स्व' 'त्रिशीर्षाणं त्वाष्ट्रमहन'मिति वक्तुरात्मोपदेशो हि प्रबलः। इति चेन्न । अध्यात्मसम्बन्धभूमा ह्यस्मिन्–आत्मनि–सर्वस्यात्मभूते परमात्मनि यद्वर्तते तदध्यात्मम्–परमात्मासाधारणधर्मः, तेषां सम्बन्धः, तस्य भूमा भूयस्त्वम् , तद्ध्यस्मिन् प्रकरणे । अस्मिन् प्रकरणे परमात्मा-

---

## न वक्तुरात्मोपदेशादिति चेन्नाध्यात्मसंबन्धभूमा ह्यस्मिन् । १ । १ । ३० ॥

ननु–प्रतर्दनं प्रति उपास्यत्वेन वक्तुरात्मा–उपदेष्टुरिन्द्रस्यात्मा स्वरूपं हि अत्रोपदिश्यते 'तं मामायुरमृतमुपास्स्वे'ति। इह चास्मच्छब्देनोपास्तिकर्मनिर्दिश्यते। उपक्रमे 'त्रिशीर्षाणं त्वाष्ट्रमहन'मिति त्वाष्ट्रसंहारकर्तृत्वेनावगतजीवभावश्चायमुपदेष्टा, इति चेन्न । अध्यात्मसंबन्धभूमा ह्यस्मिन् । अस्मिन् प्रकरणे अध्यात्मसंबन्धभूमा हि श्रूयते । आत्मनि परमात्मनि ये वर्तमानास्ते अध्यात्मशब्दवाच्याः, परमात्मासाधारणधर्मा इत्येतत्, तेषां भूमा–बहुत्वम् । तथा हि–प्रथमं 'यं त्वं मनुष्याय हिततमं मन्यसे' इति व्रियमाणस्य हिततमत्वं, तथा–'एष एव साधु कर्म कारयति यमेभ्यो लोकेभ्य उन्निनीषती'त्यादिना श्रूयमाणं साध्वसाधुकर्मकारयितृत्वं, तथा 'तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता' इत्यादिना श्रूयमाणं सकलचेतनाचेतनाधारत्वमित्यादयो हि परमात्मासाधारणा धर्मा बहवः, तेषां च नेन्द्रे संभवः, तन्नोपास्यत्वमिन्द्रस्यात्रोपदिश्यते ॥ ३० ॥

साधारणधर्मा बहवः श्रूयन्ते, तत् भूयसां योऽनुगुणः स एवार्थ इह ग्राह्यः, नतु मामिति निर्देशमात्रेण। श्रूयते चाध्यात्मसम्बन्धभूमा—'त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे' इत्युपक्रम्य 'मामेव विजानीहि मामुपास्स्वे'तिश्रूयमाणमुपास्यत्वं परमात्मासाधारणो धर्मः, मोक्षसाधनमुपासनमेव हि हिततमम्। तथा—'एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति एष एवासाधु कर्म कारयति तं यमधो निनीषति' 'तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैमा भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः' 'स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः' 'एष लोकाधिपतिरेष सर्वेश्वर' इति। एते च मुमुक्षूपास्यत्वसाध्वसाधुकर्मकारयितृत्वसर्वाधारत्वसर्वलोकाधिपतित्वसर्वेश्वरत्वादयो धर्मा जीवे नैवोपपद्यन्ते ॥ ३० ॥

ननु एवं चेत् कथमयमिन्द्रः स्वात्मानमुपास्यतयोपदिशति। तत्राह—

## शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ १ । १ । ३१ ॥

दृष्टिर्हि भवति द्वेधा—लोकतः शास्त्रतश्च। अनधिगतशास्त्राः अज्ञातशास्त्रतात्पर्याः निखिलमिदं चेतनाचेतनवस्तुजातं स्वनिष्ठमेव स्वतन्त्रमेव मन्यन्ते। अत एव तत्तद्धियां तत्तच्छब्दानां च तं तमेवार्थं मुख्यं

---

ननु तर्हि कथमिन्द्र उपास्यं मामुपास्स्वेति अस्मच्छब्देन निर्दिशति। तत्राह—

**शास्त्रदृष्ट्या तूपदेशो वामदेववत् । १ । १ । ३१ ॥**

अज्ञातशास्त्रतात्पर्या हि सर्वस्यैकमन्तरात्मानमत एव स्वेतरसमस्तवस्तुप्रकारकं सर्वशरीरकं नावगच्छन्ति। अवगततद्धृदयास्तु सकलचेतनाचेतनशरीरकमत एव सर्वात्मकमेकं पश्यन्ति। तथा शास्त्रदृष्ट्या पश्यतां तु सर्वेषामेव शब्दानां पर्यवसानभूमिस्तत्तच्छरीरकः परमात्मैवेति व्यक्तं गम्यते। अतोऽयमिन्द्रः शास्त्रदृष्ट्या स्वशरीरकं स्वस्यान्तर्यामिणं परमात्मानमेव **मामिति** निर्दिश्योपदिशति। वामदेवादिवत्। श्रूयते हि ब्रह्मदर्शिनामेवं व्यवहारः 'अहं मनुरभव'मित्यादिः शास्त्रदृष्टिमूलकः ॥ ३१ ॥

विषयं मन्यन्ते । व्यवहरन्ति च तदनुगुणमिदमहं करोमि स इदं करोति इति अन्यान्यकर्तृकतया । यस्तु विज्ञातशास्त्रतात्पर्यः सर्व-शरीरिणं सर्वस्यान्तरात्मानं सर्वेषां शब्दानां बुद्धीनां तमेव मुख्यगोचरं जानन् तमेव सर्वात्मकं भावयन्पश्यति सर्वमेव तदात्मकम् । एवं पश्यंस्तत्त्वदर्शी स्वात्मानमिदं च जगत् न स्वतन्त्रं व्यवहरेत्, किन्तु ब्रह्मरूपतयैव । तथा च वामदेवादयः—'अहं मनुरभव'मिति । एवमिन्द्रः सर्वान्तरात्मनि सर्वशरीरे शास्त्रतो विहितदृष्टिः स्वात्मानं ब्रह्मात्मकं पश्यन्नुपदिशति मामुपास्स्वेति । तदयं 'मा'मिति निर्देशः स्वशरीरिणं परमात्मानमेव ग्राहयतीति न काचिदनुपपत्तिः । अयं भावः—अवि-ज्ञातात्मतत्वाः केचिदहंग्रहस्य गोचरं देहमेव मन्यन्ते, कतिचन व्यपे-तदेहात्मभ्रमाः देहाद्विलक्षणं देहे वर्तमानं जीवात्मानं जानन्तो देहिनि स्वात्मबुद्धिमुन्नयन्त अहं जानामि अहं करोमि अनेन कर्मणा फलमि-हामुत्र च भोक्ष्ये इति व्यवहरन्तोऽहंग्रहपर्यवसानभूमिं जीवात्मानं मन्यन्ते । 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति' इत्यादिश्रुतिभ्यः स्वस्याप्यन्तरा-त्मानं परमात्मानमवगत्य तदात्मकमेव स्वात्मानं भावयन्तोऽहंग्रहस्य मुख्यं गोचरं तमेव विभावयन्तो वामदेवादयस्तु व्यपेतस्वतन्त्रात्म-भ्रमाः 'अहं मनुरभवं सूर्यश्चाहं कक्षीवानृषिरस्मी'ति व्यवहरन्ति स्म । तथा च श्रूयते—'तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे । अहं मनुर-भवं सूर्यश्चे'ति । प्रह्लादोऽपि—'सर्वगत्वादनन्तस्य स एवाहमवस्थितः । मत्तः सर्वमहं सर्वं मयि सर्वं सनातने' ॥ इति । तथैवायमिन्द्रः शास्त्र-दृष्ट्योपदिशति मामिति । ममात्मभूतं परमात्मानमुपास्स्वेत्येव तु तदाशय इति ॥ ३१ ॥

पुनराशङ्क्य परिहरति–

## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ १ । १ । ३२ ॥

नन्वास्तां परमात्मधर्मसम्बन्धभूमा । जीवमुख्यप्राणयोर्लिङ्गमिह व्यक्तं श्रूयते 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' 'त्रिशीर्षाणं त्वाष्ट्रमहनं अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छम्' इति । इदं च जीवलिङ्गम् । 'अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति' इति । इदं च मुख्यप्राणलिङ्गम् । तस्मात् जीवविशेषपरत्वमेव युक्तमिति चेन्न । उपासात्रैविध्यात्–त्रिविधा हि भवत्युपासना परब्रह्मणः, स्वरूपेण चेतनशरीकत्वेनाचेतनशरीरकत्वेन च । तैत्तिरीयके चेदमुपासनात्रैविध्यमाश्रितम् । तदिदमुपासनात्रैविध्यमिहाप्यभिप्रेतम् । अथ जीवलिङ्गप्राणलिङ्गयोस्तत्तच्छरीरकपरमात्मनि समन्वयो युज्यते । 'आनन्दोऽजरोऽमृतः' इत्यादिषु स्वरूपधर्मा बोध्याः ॥ ३२ ॥

---

## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् । १ । १ । ३२ ॥

**ननु** 'न वाचं विजिज्ञासीत वक्तारं विद्यात् त्रिशीर्षाणं त्वाष्ट्रमहन' मिति जीवलिङ्गम्, तथा 'अथ खलु प्राण एव प्रज्ञात्मा इदं शरीरं परिगृह्योत्थापयति' इति मुख्यप्राणलिङ्गं च श्रूयते । तस्मात् कथमत्र परमात्मन उपास्यत्वोपदेशो युज्यते इति चेत् । न । उपासात्रैविध्यात् । परमात्मन उपासना हि त्रेधा स्वेन ज्ञानानन्दादिस्वरूपेण, चेतनशरीरकतया, अचेतनशरीरकतया चेति । अन्यत्राप्युपनिषदि त्रिविधं ब्रह्मण उपासनमाश्रितम् । तदिदमुपासनात्रैविध्यमभिप्रेत्येहापि जीवादिलिङ्गं प्रवर्तते । तत्र 'आनन्दोऽजरोऽमृत' इति स्वरूपेणोपासनं विवक्षितम्, जीवलिङ्गेन तच्छरीरकोपासनं, मुख्यप्राणलिङ्गेन च तच्छरीरकोपासनमिति ॥ ३२ ॥

इति प्रदीपे इन्द्रप्राणाधिकरणम् ॥ ११ ॥

इति ब्रह्मसूत्रार्थप्रदीपे प्रथमस्याध्यायस्य प्रथमः पादः ॥ १ ॥

(अ. स.) प्राणोऽस्मि मामुपास्स्वेति प्राहेन्द्रो यत्प्रतर्दनम् ।
कौषीतकीब्राह्मणस्थं वाक्यमद्य विचार्यते ॥ १ ॥
उपास्यत्वेन यः प्राणो वाक्येऽस्मिन्नुपदिश्यते ।
स किं जीवविशेषो वा ब्रह्म वेत्यत्र संशयः ॥ २ ॥

पूर्वपक्षः—

प्राणोऽस्मि मामुपास्स्वेति व्यक्तमाहेन्द्र एव हि ।
उपास्य इन्द्रः प्राणोऽयं प्राणिप्राणनकारणम् ॥ ३ ॥
इन्द्रो हि प्राणिनां प्राणान् वृष्ट्याधानेन रक्षति ।

सिद्धान्तः—

नैतद्युक्तं यतः प्राणः आनन्दो ह्यजरोऽमृतः ॥ ४ ॥
इत्युत्तरेण वाक्येन ब्रह्मभावेन गम्यते ।
ब्रह्मासाधारणा धर्मा ह्यानन्दत्वादयो गुणाः ॥ ५ ॥
ननु वक्ता स्वमात्मानमुपास्यत्वेन वक्ति तु ।
नैवमिन्द्रस्य जीवस्य मुमुक्षूपास्यता कथम् ॥ ६ ॥
कथं च सर्वाधारत्वं सर्वलोकेशता कथम् ।
कर्मकारयितृत्वं च कथमानन्दतादिकम् ॥ ७ ॥
मामुपास्स्वेति वाक्यस्य ननु सङ्गमनं कथम् ।
ब्रह्मात्मकस्वात्मदृष्ट्या शास्त्रविज्ञानमूलया ॥ ८ ॥
स्वस्याप्यात्मतया ब्रह्म सम्पश्यन् वामदेववत् ।
मामुपास्स्वेति तु प्राह नातो वक्तुरुपास्यता ॥ ९ ॥
यत्त्वाष्ट्रहननं यच्च शरीरस्य विधारणम् ।
जीवलिङ्गं प्राणलिङ्गं श्रुतं तन्न विरुध्यते ॥ १० ॥
भोक्तृभोग्यात्मना स्वेन रूपेणोपासना त्रिधा ।
विवक्षिताऽस्मिन्वाक्येऽतः प्राणो ब्रह्मेति सुस्थितम् ॥ ११ ॥

॥ इति भाष्ये इन्द्रप्राणाधिकरणम् ॥ ११ ॥

॥ इति ब्रह्ममीमांसाभाष्ये प्रथमाध्यायस्य प्रथमः पादः ॥ १ ॥

---

अखिलजगत्कारणं ब्रह्मैव वेदान्तवेद्यमित्युक्तम् । अथैतत्समर्थनाय क्षेत्रज्ञप्रधानपरत्वशङ्कावहानि वेदान्तवाक्यानि विचार्यन्ते । अविचारितेषु तेषु तद्वाक्येषु श्रूयमाणाः कल्याणगुणविशेषा अन्यत्र सम्भाव्येरन्, तथा सति कारणत्वलक्षणेन लक्ष्यं ब्रह्मणो यत् बृहत्त्वं स्वरूपतः स्वभावतश्च तन्न सिद्ध्येत्, कल्याणगुणविशेषाणामन्यत्र सम्भावनया तत्पूर्त्यसिद्धेः । तत्र द्वितीये अस्पष्टजीवादिलिङ्गकानि, तृतीये स्पष्टतल्लिङ्गकानि, तुरीये च तच्छायानुसारीणि विचार्यन्ते । तत्र प्रथमं छान्दोग्ये श्रूयमाणं 'अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति । स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः' इत्येतद्वाक्यं विचार्यते—

## सर्वत्र प्रसिद्धोपदेशात् ॥ १ । २ । १ ॥

अत्र संशयः—मनोमयत्वादिगुणकोऽयं जीवः परमात्मा वेति । किं युक्तम् । जीव एवेति । तस्य हि मनआदय उपकरणम् । इह च

---

एवं प्रथमे पादे जिज्ञास्यं परं ब्रह्म निखिलजगदेककारणमानन्दमयः सकलेतरविलक्षणः सर्वेश्वरः पुरुषोत्तमः पुण्डरीकदलामलायतेक्षणो नारायण इति समर्थितम् । अथ द्वितीये पादे अस्पष्टजीवलिङ्गककतिपयौपनिषदवाक्यविचारमुखेन परं ब्रह्म पुरुषोत्तमः सर्वेश्वर एव सकलजगत्कारणमुपास्य इति इत्येतत् समर्थ्यते—

### सर्वत्र प्रसिद्धोपदेशात् ॥ १ । २ । १ ॥

छान्दोग्ये श्रूयते 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इति । अत्र 'सर्वं खल्विदं ब्रह्मे'ति सर्वत्र सामानाधिकरण्येन विधीयमानं ब्रह्मैव न जीवः, कस्मादिदमवगम्यते ? प्रसिद्धोपदेशात्—यस्मादिदं सर्वं तज्जलान्—ततो जातं तस्मिन्नेव लीनं तेनैवान्यते, तस्मात् सर्वं ब्रह्मैव खल्विति । खलुशब्देन प्रसिद्धतयोपदेशात् । सर्वस्य ब्रह्मोपादानकत्वेन ब्रह्मात्मकत्वं वाक्यान्तरप्रसिद्धमिहानूद्यते शान्तिहेतुतया । प्रसिद्धवन्निर्देशो हि वाक्यान्तरतः सिद्धिमपेक्षते । तच्च वाक्यान्तरं 'सदेव सोम्येदमग्र आसीत्, तदैक्षत बहु स्यां

'मनोमयः प्राणशरीर' इति निर्देशः उपकरणोपकरणिभावसम्बन्धमभिप्रेत्य प्रवर्तते । 'अप्राणो ह्यमना' इति च तद्योगः प्रतिषिध्यते ब्रह्मणि । वागाद्यपेक्षया मनोवृत्तेरुपकरणतायां प्राधान्यात् मनोमय इत्युक्तिः । मनोवृत्तिप्रचुर इति यावत् । चक्षुरादीनामुपकरणताऽपि मनोवृत्त्यायत्तेति मनोवृत्तिप्राचुर्यं युज्यतेऽस्य । प्राणः शरीरं चास्य भोक्तुरुपकरणम् । अर्श आद्यजाश्रयणेन तद्विशिष्ट इत्यर्थः । यद्वा–शरीरशब्दो नियाम्यपरः । प्राणो नियाम्यो यस्य । प्राणनियन्तेति यावत् । एष चक्षुरादीन् प्राणानिन्द्रियाणि विषयेषु भोग्येषु प्रेरयति । ननु–ब्रह्मात्रोपास्यतया सम्बध्यते, 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इति पूर्वं ब्रह्म हि प्रस्तुतम् । न । न हि तदुपासनविधानाय प्रवृत्तम्, किन्तु उपासनोपयुक्तशान्तिसम्पादनोपायावबोधनाय । 'स क्रतुं कुर्वीते'ति वाक्यमेव तु उपासनविधायकम् । तत्र विधीयमानस्योपासनस्य कर्मो[1]च्यते 'मनोमय' इति । वाक्यान्तरस्थस्य कर्मतयाऽनुपगमात् स्ववाक्यस्थस्य 'मनोमय' इत्यस्यैव विभक्तिविपरिणा[2]मेनान्वयः समुचितः । अत्रोच्यते–नायं मनोमयो जीवः । किन्तु परमात्मैव । कस्मात्? सर्वत्र प्रसिद्धोपदेशात् । सर्वत्र–सर्वेष्वपि वेदान्तेषु ब्रह्मासाधारणतया श्रूयमाणस्य मनोमयत्वादेर्गुणस्येहोपदेशात् । श्रूयमाणं मनोमयत्वादिकं परमात्मन एव गुणः, तथा चान्यत्र श्रूयते इति भावः । तथा च श्रूयते–'मनोमयः प्राणशरीरनेता' 'एषोऽन्तर्हृदय आकाशः, तस्मिन्नयं पुरुषो मनोमयः, अमृतो हिरण्मयः' । 'हृदा

---

प्रजायेय, तत्तेजोऽसृजत, ऐतदात्म्यमिदं सर्वं' 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति' 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यादि । ततश्चावगम्यते परंब्रह्मैव जगत्कारणमिति । अतो न प्रत्यगात्मन इहोपास्यत्वमुच्यते ॥ १ ॥

---

**टिप्प०**—१ कर्म. विषयः । २ मनोमयस्येति षष्ठ्यन्ततया विपरिणतस्य क्रतुमित्यनेनान्वयः । क्रतुरुपासनम् । एवं प्राणशरीर इत्यादेरपि ।

मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति' 'मनसा तु विशुद्धेन'। तथा 'प्राणस्य प्राणः' इति। मनोमयत्वं चेह विशुद्धमनोग्राह्यत्वम्। प्राणशरीरत्वं च प्राणस्याप्याधारत्वम्। 'प्राणस्य प्राण' इति च तदेवोच्यते।

यद्वा[1]—'सर्वं खल्विदं ब्रह्मे'त्येतदेव वाक्यमिह विषयः। स्ववाक्यस्थं ब्रह्मेति पदमेव विभक्तिविपरिणामेन उपासीतेति विधीयमानोपासनकर्मतयाऽन्वेति। यस्मादिदं तज्जलान् तस्मादिदं सर्वं खलु ब्रह्मेति ब्रह्मात्मकत्वदृष्ट्या शान्तः सन् ब्रह्मोपासीतेति तदर्थः। अत्र संशयः—ब्रह्मात्र किं जीवः उत परमेव ब्रह्म। आह—जीव एवेति। मनोमयत्वादिकं ह्युपास्यतया प्रस्तुतस्य ब्रह्मणो गुणतया विधीयते 'मनोमय' इत्यादिना। स च जीवस्यैव गुणः। तथा चात्र ब्रह्मशब्दो जीव एव वर्तते। सम्पद्यते चास्य बृहत्त्वं कर्मप्रक्षये। 'स चानन्त्याय कल्पते' इति हि श्रूयते। जीव एव कर्मणा सुरनरतिर्यक्स्थावरात्मना भवति। तद्युक्तं 'सर्वं खल्विदं ब्रह्मे'ति। अदृष्टद्वारा चास्य जगज्जन्मस्थितिलयहेतुतोपपद्यते इति। अत्रोच्यते—'सर्वं खल्विद'मित्यनेन वाक्येनोपास्यतया प्रतिपाद्यमानं परंब्रह्मैव। कुतः? सर्वत्र प्रसिद्धोपदेशात्—सर्वत्रास्मिन् जगति ब्रह्मणः तादात्म्येन 'सर्वं खल्विदं ब्रह्मे'ति प्रसिद्धवन्निर्देशात्। खल्विति प्रसिद्धिर्हि गम्यते। प्रसिद्धिश्च श्रौती। 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मे'ति। तथा 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म' 'आनन्दो ब्रह्म' 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इति। आनन्दस्वरूपं च परंब्रह्मैव। तैरेतैर्वाक्यैः परमेव ब्रह्म जगदुत्पत्तिस्थितिलयहेतुरिति व्यक्तमवगम्यते। तज्जत्वतल्लत्वतदनत्वैस्तत्तादात्म्यमुपदिश्यमानं ब्रह्मणः सर्वशरीरितया सर्वप्रकारत्वेन सर्वात्मनाऽवस्थितेरुपपद्यते। जीवानां तु प्रतिशरीरं भिन्नतयाऽदृष्ट-

टिप्प०—१ प्रकारान्तरेण विषयादिकमाह।

द्वारेणापि न निखिलजगदुदयलयस्थितिहेतुता । नापि सर्वस्य तदेकात्मकता । अदृष्टद्वारेण हेतुत्वोपवर्णनं केवलमौपचारिकम् । स हि सर्वस्य कर्ता सर्वेश्वरो जीवकर्मानुगुणं सर्वं भोग्यभोगोपकरणं सृजति । तत् परंब्रह्मैवात्र ब्रह्मशब्दवाच्यमिति सुस्थितम् ॥ १ ॥

## विवक्षितगुणोपपत्तेश्च ॥ १ । २ । २ ॥

अनुपदं ये विवक्षिता गुणाः मनोमयत्वादयोऽनादरत्वपर्यन्तास्तेषां परस्मिन्नेवोपपत्तेर्ब्रह्मशब्दवाच्यं परंब्रह्मैव । तथाहि–'शान्त उपासीते'त्यनेन विहितमुपासनं गुणविधानाय 'स क्रतुं कुर्वीते'त्यनूद्य 'मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर' इति गुणा विधीयन्ते । **अयमर्थः**–मनोमयः-विशुद्धमनसैव ग्राह्यः, प्राणशरीरः–प्राणः शरीरं यस्यायम्, सर्वप्राणिप्राणनियन्तेति यावत् । भारूपः–प्रकाशमानदिव्यरूपः । अनेन देदीप्यमानदिव्यमङ्गलविग्रहयोगो गम्यते । सत्यसङ्कल्पः–अप्रतिहतसङ्कल्पः । आकाशात्मा–आसमन्तात् प्रकाशमानदिव्यस्वरूपः । स्वरूपस्य ज्ञानैकघनतया स्वयंप्रकाशतोक्ता । सर्वकर्मा–सर्वं कर्म विधीयमानं यस्मै सोऽयं सर्वकर्मा । सर्वकामः–सर्वे कामाः कल्याणगुणा यस्य । काम्यन्त इति कामाः कल्याणगुणाः । कामाः–भोग्यभोगोपकरणानि वा । यस्याप्राकृतानि दिव्यानि तानि सन्ति । सर्वगन्धः सर्वरसः–अप्राकृता गन्धरसादयोऽपि यस्य । सर्वमिदमभ्यात्तः–उक्तं सर्वमिमं कल्याणगुणं स्वीकृत्यावस्थितः । अनादरोऽवाकी–पूर्णकामतयाऽनादरः, अत एवावाकी–अतिभाषणरहितः । एते गुणाः परमात्मन्येवोपपद्यन्ते इति ॥ २ ॥

---

**विवक्षितगुणोपपत्तेश्च । १ । २ । २ ॥**

अस्मिन्नेवोत्तरत्र 'आकाशात्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः' इति ये आकाशात्मत्वादयो गुणा विवक्षितास्तेषां परस्मिन् ब्रह्मण्येवोपपत्तेश्च ब्रह्मैवात्र प्रतिपाद्यते ॥ २ ॥

## अनुपपत्तेस्तु न शारीरः ॥ १ । २ । ३ ॥

न केवलमस्मिन्नुपपद्यन्ते, शारीरे जीवे नैवोपपद्यन्ते । अतोऽत्र शारीरः जीवः शङ्कापदमपि नार्हति ॥ ३ ॥

इतश्चात्र ब्रह्मशब्दाभिलप्यः परमात्मैव—

## कर्मकर्तृव्यपदेशाच्च ॥ १ । २ । ४ ॥

प्राप्तिकर्मतया परस्य ब्रह्मणः, प्राप्तिकर्तृतया च जीवस्य व्यपदेशादुपासकाज्जीवादुपास्यतया श्रूयमाणं परंब्रह्मैव ॥ ४ ॥

उपास्यतया समुपक्रान्तं ब्रह्मशब्दवाच्यं परंब्रह्मैव—

## शब्दविशेषात् ॥ १ । २ । ५ ॥

अत्रैवान्ते श्रूयते 'एष मे आत्माऽन्तर्हृदये' इति । मे इति षष्ठ्यन्तः शब्दः उपासकजीवबोधकः, 'अन्तर्हृदये आत्मे'ति च उपास्यपरब्रह्मबोधकः प्रथमान्तशब्दः । एवं शब्दविशेषाच्च परमेव ब्रह्म कीर्त्यते ॥५॥

---

### अनुपपत्तेस्तु न शारीरः । १ । २ । ३ ॥

एषां कल्याणगुणानां शारीरे जीवात्मन्यनुपपत्तेः परंब्रह्मैवेह प्रतिपाद्यते । नहि सुखदुःखभागिनि आकाशात्मत्वसर्वगन्धत्वादयः संभवन्ति ॥ ३ ॥

### कर्मकर्तृव्यपदेशाच्च । १ । २ । ४ ॥

उत्तरत्र 'एतमितः प्रेत्याभिसंभविताऽस्मी'ति परब्रह्मणः एतमिति प्राप्तिकर्मतया प्रत्यगात्मनः अभिसंभवितास्मीति प्राप्तिकर्तृतया व्यपदेशाच्च अभिसंभवनीयः पूर्वोक्तः परमात्मैव न प्रत्यगात्मा । एतेन विशुद्धस्य मुक्तस्वरूपस्योपास्यत्वमत्रोच्यते इति शङ्का निरस्ता भवति । उभयोर्भेदेन प्रतिपादनात् ॥ ४ ॥

### शब्दविशेषात् । १ । २ । ५ ॥

श्रूयते चात्रैव शब्दविशेषः—'एष मे आत्माऽन्तर्हृदये' इति । मे इति निर्दिष्टादुपासकाद्भेदेन 'एष आत्मा' इति परमात्मा उपास्यो हि श्रूयते । अतश्च नात्रोपास्यतया श्रूयमाणं प्रत्यगात्मस्वरूपम्, किन्तु ततो भिन्नं परंब्रह्मैव ॥ ५ ॥

## स्मृतेश्च ॥ १ । २ । ६ ॥

मे आत्मा अन्तर्हृदये-स्वीयहृदयान्तरवस्थितः परमात्मा स्वस्याप्यात्मभूत इति श्रुत्युक्तेऽस्मिन्नर्थे स्मृतिश्च—

'सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च'
'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥
तमेव शरणं गच्छ सर्वभावेन भारत' ॥ इति ॥ ६ ॥

## अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ १ । २ । ७ ॥

नायं परमात्मा । अर्भकौकस्त्वात्-अस्य स्थानमर्भकम्-अल्पं ह्यत्र श्रूयते 'एष मे आत्मा अन्तर्हृदय' इति । हृदयं हि अल्पपरिमाणम् । तद्व्यपदेशाच्च-तस्य अर्भकत्वस्य अणीयस्त्वस्य साक्षान्निर्देशाच्च । 'अणी-

---

## स्मृतेश्च । १ । १ । ६ ॥

'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ तमेव शरणं गच्छ सर्वभावेन भारत' 'सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च' इत्यादिना उपास्योपासकयोर्भेदेन स्मरणाच्च नोपास्यः प्रत्यगात्मा भवितुमर्हति ॥ ६ ॥

पुनराशङ्क्य परिहरति—

## अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च । १ । २ । ७ ॥

**ननु**-अस्मिन्नेव प्रकरणे अस्योपास्यस्य अर्भकौकस्त्वम्-अल्पायतनत्वं श्रूयते 'एष मे आत्मान्तर्हृदये' इति । हृदयान्तःप्रदेशो ह्यल्पपरिमाणः । अर्भकमित्यल्पं लक्ष्यते । तद्व्यपदेशाच्च-तस्याल्पत्वस्य व्यपदेशाच्च । 'अणीयान् व्रीहेर्वा यवाद्वे'ति अल्पत्वं स्वरूपतोऽस्य श्रूयते । तस्मादुपास्यतयेह प्रतिपाद्यमानो न परमात्मा अपि तु प्रत्यगात्मैव । इति चेन्न । निचाय्यत्वादेवं-ध्येयत्वादेवमुच्यते । स्वतोऽनणुरप्ययमणुत्वेन ध्यानार्थमुपदिश्यते । स्वरूपतस्त्वयं

यान्व्रीहेर्यवाद्वा' इत्यणीयस्त्वं हि श्रूयते। जीवस्य चाणुत्वमन्यत्रापि श्रुतमिति जीव एवात्र विवक्षितः स्यादिति चेन्न। निचाय्यत्वादेवम्। एवं निचाय्यत्वात् द्रष्टव्यत्वात् उपास्यत्वात् परमेव ब्रह्म तथा व्यपदिश्यते। महतोऽप्यस्य हृदयस्थानसन्निहितस्य स्थानोपाधिनाऽणीयस्त्वम्, न पुनः स्वरूपतः। व्योमवच्चायं तत्रैव व्यपदिश्यते। 'ज्यायान् पृथिव्याः ज्यायानन्तरिक्षात् ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्य' इति। तथा च सिद्धं अर्भकौकस्त्वमणीयस्त्वं चोपासनार्थं न स्वरूपत इति उपास्यतया प्रक्रान्तं परंब्रह्मैवेति ॥ ७ ॥

## सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ १ । २ । ८ ॥

जीवात्मन इव परब्रह्मणोऽपि शरीरान्तर्हृदये चेत्स्थितिः तस्येवास्यापि भोक्तृत्वमापद्येत इति चेन्न। वैशेष्यात्। श्रूयते हि स्थितौ विशेषः 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति' इति। भोक्तृत्वं कर्मनिबन्धनं न शरीरसम्बन्धनिबन्धनमिति भावः ॥ ८ ॥

---

महान्। श्रूयते च तत्रैवास्य महत्त्वं व्योम्न इव 'ज्यायान् पृथिव्या ज्यायानन्तरिक्षात् ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः' इति। यद्वा स्वरूपतोऽपि अणुत्वनिरूपणं व्योम्न इवोपपद्यते। यथा व्योम सूचीकर्णरन्ध्रोपाधिना अणु इति व्यपदेशमर्हति, एवं परमात्माऽपि उपासकहृदयोपाधितः अणुरिति व्यपदिश्यते इति ॥ ७ ॥

### संभोगप्राप्तिरिति चेन्न वैशेष्यात्। १ । २ । ८ ॥

**ननु**—परमात्मनोऽपि हृदयेऽवस्थित्या जीववत् सुखदुःखादिसंभोगप्राप्तिः स्यात्। शरीरसंबन्धादिति चेन्न। वैशेष्यात्—वैलक्षण्यात्। जीवः कर्मवश्यः, अयं तु अकर्मवश्यः। 'सर्वभूतान्तरात्मा अपहतपाप्मा' इति हि श्रूयते। कर्मणा जीवः शरीरे निमग्नः, अयं तु तमनु तन्नियमनाय तत्र प्रविष्टः स्वेच्छयैव इति॥८॥

**इति प्रदीपे सर्वत्रप्रसिद्ध्यधिकरणम् ॥ १ ॥**

---

**टिप्प०**—१ चायृ दर्शन इति हि धातुः। तद्व्याख्यातं द्रष्टव्यत्वादिति। दर्शनशब्देन च दर्शनसमानाकारमुपासनं विवक्षितमिति द्योतयन्नाह 'उपास्यत्वा'दिति।

(अ० स०) छान्दोग्ये श्रूयते सर्वं खल्विदं ब्रह्म तज्जलान् ।
इति शान्त उपासीतेत्यत्रोपास्यतयोच्यते ॥ १ ॥
यः स जीवः परंब्रह्म किं वेत्येतद्विचार्यते ।

पूर्वपक्षः—

अशुद्धजगदात्मत्वं शुद्धस्य ब्रह्मणः कथम् ॥ २ ॥
किन्तु सर्वमिदं तावत् जीवो भवितुमर्हति ।
तेन संसरता हीदं सम्पूर्णं सकलं जगत् ॥ ३ ॥
तज्जत्वादिकमप्यस्याऽदृष्टद्वारेण युज्यते ।
मनोमयत्वादिकं च जीव एवोपपद्यते ॥ ४ ॥
प्रक्षीणे कर्मबन्धे तु स चानन्त्याय कल्पते ।
तस्मात् ब्रह्मेति निर्देशो जीवात्मन्युपपद्यते ॥ ५ ॥

सिद्धान्तः—

अत्र ब्रूमः परंब्रह्मैवात्रोपास्यतयोच्यते ।
सर्वं खल्विति वाक्येऽस्मिन् खलुशब्दप्रयोगतः ॥ ६ ॥
अस्मिन्वाक्ये श्राव्यमाणं ब्रह्मजत्वादिहेतुभिः ।
ब्रह्मात्मकत्वं सर्वस्य प्रसिद्धमिति गम्यते ॥ ७ ॥
तदस्य प्रापके वाक्ये दृष्टिर्देया विशेषतः ।
सद्विद्यायां च सर्वस्य सन्मूलत्वादिहेतुभिः ॥ ८ ॥
सदात्मत्वं श्राव्यमाणं ब्रह्मण्येव हि गम्यते ।
अन्यत्र च तथाऽऽनन्दस्वरूपात् ब्रह्मणः खलु ॥ ९ ॥
सर्वेषामपि भूतानां जनिस्थितिलयाः श्रुताः ।
विवक्षिताश्च वाक्येऽस्मिन् सत्यसङ्कल्पतादयः ॥ १० ॥
अस्मिन्नेवोपपद्यन्ते न शारीरे कथञ्चन ।
शारीरादन्य एवायं व्यपदेशो हि भिद्यते ॥ ११ ॥
अभिसम्भविताऽस्म्येतमिति कर्तुश्च कर्मणः ।
अस्ति शब्दविशेषश्च येन भेदोऽवगम्यते ॥ १२ ॥

उपास्यः प्रथमान्तेन षष्ठ्यन्तेन ह्युपासकः ।
आत्मैष मेऽन्तर्हृदये इति निर्दिश्यते ननु ॥ १३ ॥
उपासकोपास्यभावभेदो जीवपरमात्मनोः ।
'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ॥ १४ ॥
भ्रामयन्सर्वभूतानीत्यादिना स्मर्यतेऽपि च ।
अन्तर्हृदय आत्मैष इति स्थानाल्पता च या ॥ १५ ॥
व्रीहेरणीयानिति यदणीयस्त्वं हि कीर्त्यते ।
आध्यानाय व्योमवच्चेत्यतो नैव विरुध्यते ॥ १६ ॥
न चान्तर्हृदये स्थित्या जीवस्येवास्य भोक्तृता ।
अकर्मवशगस्य स्यात् सर्वेशस्य परात्मनः ॥ १७ ॥

इति भाष्ये सर्वत्र प्रसिद्ध्यधिकरणम् ॥ १ ॥

---

## अत्ता चराचरग्रहणात् ॥ १ । २ । ९ ॥

आम्नायते कठवल्ल्याम्—'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः' ॥ इति ।

**अत्र संशयः**—कोऽयमत्रात्ता, किं जीवः किंवा परमात्मा । अत्राह—जीव एव, तस्यैव ह्यत्तृता, 'अनश्नन्नन्योऽभिचाकशीति' च श्रूयते । अत्रोच्यते—अत्रात्ता परमात्मैव, न ह्यत्र कर्मकृतं भोक्तृत्व-

---

कठवल्ल्यां श्रूयते—'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥' इति । अत्र ओदनश्रुत्या ब्राह्मणादियोनिप्राप्त्या तत्तद्भोक्तृत्वं गम्यते । अतो जीवस्यैवोपास्यत्वमत्रोच्यते इत्यत्राह—

**अत्ता चराचरग्रहणात् । १ । १ । ९ ॥**

अत्ता—सर्वस्य संहर्ता परमात्मैवात्रोच्यते, कस्मात्? चराचरग्रहणात्—चराचरयोर्ग्रहणात् । 'मृत्युर्यस्योपसेचन'मिति प्रजासंहारकस्य मृत्योरपि उपसेचनत्वश्रवणात् । 'ब्रह्म च क्षत्रं चे'ति चराचरमखिलमेव संहार्यमुच्यते । उपलक्षकं तु तत् । अन्यथा मृत्योरुपसेचनत्वं नोपपद्येत । तस्मात् परमात्मनः प्रलये यत् सर्वसंहर्तृत्वं तदेवेहोच्यते नतु भोक्तृत्वम् ॥ ९ ॥

मुच्यते । किं तर्हि ? । संहर्तृत्वलक्षणमैश्वर्यमुच्यते । इह हि 'ब्रह्म च क्षत्रं चे'त्यनेन विवक्षितं चराचरमखिलमेव । 'मृत्युर्यस्योपसेचनं' इति मृत्योरप्यद्यत्वं ह्यत्र श्रूयते । स्वयमप्यद्यमानं सदन्यस्यादने यदुपकारकं तदुपसेचनमुच्यते । संहरतो मृत्योरुपसेचनत्वोक्त्या सर्वसंहर्तृत्वमैश्वर्यं ह्यत्र विवक्षितमिति व्यक्तं विज्ञायते । ओदनशब्दश्चात्र संहार्यपरः । तदयमत्ता परमात्मैव ॥ ९ ॥

## प्रकरणाच्च ॥ १ । २ । १० ॥

इदं च प्रकरणं परस्य ब्रह्मणः । श्रूयते हि—'महान्तं विभुमात्मानं मत्वा धीरो न शोचति' 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति । न च प्रकरणभेदशङ्कावकाशः । पूर्वं 'धातुः प्रसादान्महिमानमात्मन' इति यत् विना परमात्मप्रसादं दुरवबोधत्वमस्योक्तं तदेवेह प्रत्यभिज्ञायते 'क इत्था वेद यत्र सः' इति । अस्य महिमानं इत्थमिति को वेदेत्यर्थः ॥ १० ॥

ननु—उत्तरत्र 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये । छायातपौ' इति श्रूयते । ऋतमिति कर्मफलमुच्यते, तस्य भोक्तारौ बुद्धिजीवौ छायातपशब्दाभ्यां तत्र रूप्येते । तदेकप्रकरणत्वाच्चास्य वाक्यस्य ब्रह्मक्षत्रादिलक्षणविविधभोग्यभोक्ता जीव एवात्रापि प्रतिपाद्यते । इत्याशङ्कायामाह—

---

**प्रकरणाच्च । १ । २ । १० ॥**

प्रकरणं चेदं परमात्मनः 'महान्तं विभुमात्मानं मत्वा धीरो न शोचति' 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वा'मिति हि पूर्वं प्रकृतम् । 'नायमात्मे' त्यनेन यत्प्रस्तुतं तस्य तत्प्रसादैकलभ्यत्वरूपं दुरधिगमत्वं तदिह 'क इत्था वेद यत्र स' इत्यनेन प्रत्यभिज्ञायते ॥ १० ॥

ननु—'यस्य ब्रह्म च क्षत्रं चे'त्येतन्न परमात्मपरम् । उत्तरत्र—'ऋतं पिबन्तौ

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ १ । २ । ११ ॥

तत्र 'गुहां प्रविष्टा'विति जीवात्मपरमात्मानावेवोच्येते न बुद्धिजीवौ, कस्मात्? तद्दर्शनात्—तयोर्द्वयोरस्मिन् प्रकरणे हृदयगुहाप्रवेशदर्शनात्। तथा हि—'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' इति। अत्र परमात्मनो गुहाप्रवेशः श्रुतः। 'या प्राणेन सम्भवत्यदितिर्देवतामयी। गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत' इति। अत्र तु जीवस्य। 'द्वा सखाया' विति च तावेव हि निर्दिष्टौ। अत्ति, अनश्नन्निति विशेषणात्। छायातपाविति चाज्ञत्वसर्वज्ञत्वाभ्यां तावेव रूप्येते। 'ऋतं पिबन्ता'विति पातृत्वपाययितृत्वाभ्यामुपपद्यते। प्रयोज्यप्रयोजकसाधारणं कर्तृत्वमिह विवक्षितम्। मन्त्रार्थस्तूपनिषद्विवरणतो बोध्यः ॥ ११ ॥

## विशेषणाच्च ॥ १ । २ । १२ ॥

अस्मिन् प्रकरणे जीवात्मपरमात्मनोर्द्वयोस्तत्तदसाधारणगुणैर्विशेषि-

---

सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये' इति भोक्त्रोरेव हृदयगुहाप्रवेशश्रवणात्। बुद्धिसद्वितीयो जीव एव गुहां प्रविष्ट इति हि तत्रोच्यते। अत्राह—

**गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्। १। २। ११ ॥**

गुहां प्रविष्टौ—'ऋतं पिबन्ता'वित्यत्र गुहां प्रविष्टाविति श्रूयमाणौ आत्मानावेव—जीवपरमात्मानावेव। तद्दर्शनात्। तयोरेव गुहाप्रवेशस्य प्रकरणेऽस्मिन् श्रवणात्। 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाती'ति पूर्वं परमात्मनो गुहाप्रवेशः श्रूयते। "या प्राणेन संभवत्यदितिर्देवतामयी। गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत' इत्युत्तरत्र जीवस्य। तदयमपि मन्त्रो जीवपरमात्मनोरेव गुहाप्रवेशं श्रावयति ॥ ११ ॥

**विशेषणाच्च। १। २। १२ ॥**

अस्मिन् हि प्रकरणे जीवपरमात्मनोरेव च वैलक्षण्येन विशेषितत्वात्।

---

**टिप्प०—१** मन्त्रेऽदितिरिति जीववाची, अत्तीति व्युत्पत्तेः, जीवस्य च कर्मफलभोक्तृत्वात्। छान्दसोऽयं प्रयोगः।

तत्वात् । तत्तदसाधारणगुणविशिष्टतया तयोर्निरूपणादिति यावत् । 'ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति' इति जीवो विशिष्य निरूप्यते । ज्ञाताऽयं जीवः, ब्रह्मणो जातः परमात्माधीनदेवादिजनिमान्, सोऽयं ब्रह्मजज्ञ उच्यते । तं न स्वतन्त्रं विद्यात्, सहि परमात्मनः शरीरभूतस्तदात्मक एव । तस्मात्तमेनं देवमीड्यं विदित्वा, ईड्यो यो देवः परमात्मा, तदात्मकं विदित्वा शान्तिमत्यन्तमेति । अनेनोपासकस्यात्मनः स्वरूपमुक्तं भवति । 'यः सेतुरीजानानामक्षरं ब्रह्म यत्परम् । अभयं तितीर्षतां पारं नचिकेतं शकेमही'ति परमात्मन उपास्यस्य स्वरूपमुच्यते । तथा 'आत्मानं रथिनं विद्धि शरीरं रथमेव चे'त्यनेन जीवात्मा योऽयमुपासकः प्राप्ता स रथित्वेन रूप्यते । 'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद'मिति च प्राप्यः परमात्मोच्यते । तदिदं प्रकरणं जीवात्मपरमात्मानावधिकृत्य प्रवर्तत इति स्पष्टमवगम्यते ॥ १२ ॥

पूर्वपक्षः—

(अ. सं.) ब्रह्मक्षत्रौदनत्वेन श्रूयमाणो विचार्यते ।
भोक्तृत्वं हि श्रुतं जीवे ब्रह्मक्षत्रादिभावतः ॥ १ ॥

---

प्राप्यत्वप्रापकत्वोपास्यत्वोपासकत्वादिविशेषनिरूपणमुखेन द्वयोरेव प्रतिपादनाच्चेति यावत्। 'आत्मानं रथिनं विद्धि शरीरं रथमेव च । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च' 'विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति । अत्र रथित्वेन जीवात्मा निरूप्यते प्राप्यत्वेन विष्णुर्यः सर्वान्तरः । 'ब्रह्मजज्ञं देवमीड्यं विदित्वे'ति च जीवपरमात्मानौ । ब्रह्मणो जातो ज्ञो जीवः, ईड्यो देवः परमात्मा । 'न जायते म्रियते वा विपश्चि'दित्यनेन जीवः, 'अणोरणीया'नित्यनेन परमात्मा । एवं जीवपरमात्मनोरेव प्रकरणेऽस्मिन् विनिर्देशात् 'ऋतं पिबन्ता'वित्ययमपि मन्त्रस्तद्विषय एव प्रयोजकप्रयोज्योभयसाधारण्येन पिबन्ताविति निर्देश उपपद्यते ॥ १२ ॥

इति प्रदीपे अत्त्रधिकरणम् ॥ २ ॥

अनेनौदनशब्देन भोग्यजातं तु लक्ष्यते ।
तस्मादयं जीव एव ब्रह्मक्षत्रौदनः स्मृतः ॥ २ ॥

सिद्धान्तः—

नायं जीवः परंब्रह्म मृत्युर्यस्योपसेचनम् ।
प्रपञ्चं ग्रसतो ह्येव मृत्युः स्यादुपसेचनम् ॥ ३ ॥
'महान्तं विभुमात्मानं मत्वा धीरो न शोचति' ।
इत्यादिना यत्प्रकृतं तत् ब्रह्मैवात्र गद्यते ॥ ४ ॥
ऋतं पिबन्तावित्यत्र प्रवेशः श्रूयते तु यः ।
हृद्गुहायां द्वयोः सोऽयं जीवात्मपरमात्मनोः ॥ ५ ॥
उपासकोपास्ययोश्च जीवात्मपरमात्मनोः ।
अस्मिन्प्रकरणे तैस्तैर्विशेषैस्तु विशेषणम् ॥ ६ ॥

इति भाष्ये अत्रधिकरणम् ॥ २ ॥

---

## अन्तर उपपत्तेः ॥ १ । २ । १३ ॥

छान्दोग्ये श्रूयते—'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचे'ति । अत्राक्ष्याधारतया श्रूयमाणः पुरुषः कः ? किं प्रतिबिम्बात्मा, उत चक्षुरभिमानी देवताविशेषः, किंवा जीवः, आहोस्वित्परमात्मा । अत्राह–प्रतिबिम्बात्मैव भवितुमर्हति । दृश्यते हि

---

छान्दोग्ये उपकोसलविद्यायां 'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच' इत्युपास्यतया श्रूयमाणो न परमात्मा । 'अक्षिणि दृश्यते' इति श्रवणात् । न ह्यक्षिणि तस्य सन्निधानम् । जीवस्य तु तच्छ्रवणमुपपद्यते । जीवन् अक्षिणि हि परीक्ष्यते । प्रतिबिम्बात्मा वा पुरुषः । अक्ष्यभिमानी देवताविशेषो वा इत्यत्राह—

### अन्तर उपपत्तेः । १ । २ । १३ ॥

अन्तरः—अक्ष्यन्तर्वर्तितया श्रूयमाणः परमात्मैव । 'एतदमृतमभयमेतत् ब्रह्मे'ति श्रूयमाणानाममृतत्वादिधर्माणां तस्मिन्नेवोपपत्तेः ॥ १३ ॥

सर्वैः परस्य चक्षुषि प्रतिबिम्बात्मा पुरुषः । 'रश्मिभिरेषोऽन्तः प्रतिष्ठित' इति श्रूयमाणश्चक्षुरभिमानी देवताविशेष एव वा । जीवात्मैव वा । स हि ज्ञानप्रभया आपादतलमस्तकं व्याप्य वर्तमानोऽपि विशेषतश्चक्षुषि सन्निधत्ते, अत एव मुमूर्षोश्चक्षुषी उन्मील्य पश्यन्तो निश्चिन्वन्ति जीवसत्ताम् । 'य एषोऽक्षिणि पुरुषो दृश्यते' इति यच्छब्देन प्रसिद्धवन्निर्देशश्चोपपद्यत इति । अत्रोच्यते—अन्तरः—चक्षुरन्तरवस्थिततया यः पुरुषः श्रूयते स परमात्मैव । उपपत्तेः—तस्मिन्नेव तत्र श्रुतानां गुणानामुपपत्तेः । श्रूयन्ते हि गुणविशेषाः—'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच, एतदमृतमेतदभयमेतद्ब्रह्म एतं संयद्वाम इत्याचक्षते, एतं हि सर्वाणि वामान्यभिसंयन्ति, एष एव वामनिः, एष हि सर्वाणि वामानि नयति, एष एव भामनिः एष हि सर्वेषु लोकेषु भाती'ति । न ह्यमृतत्वादयो गुणाः परमात्मनोऽन्यत्र सम्भवन्ति । निरुपाधिकममृतं निरुपाधिकमभयं चैष एव, एनमेव वामाः-कमनीया गुणाः अहमहमिकयाऽभिसंयन्ति, एष एवान्यान् स्वोपासकान् वामान्नयति । स्वयं चैष एव सर्वेषु लोकेषु भाति ॥ १३ ॥

## स्थानादिव्यपदेशाच्च ॥ १ । २ । १४ ॥

चक्षुरस्य स्थानमित्यादि व्यपदिश्यते च अन्तर्यामिब्राह्मणे 'यश्चक्षुषि तिष्ठन् चक्षुषोऽन्तर' इत्यादिना । सेयं श्रौती प्रसिद्धिर्य इत्यनेनात्र गम्यते । दृश्यते चायं योगिभिः ॥ १४ ॥

---

ननु—तस्य चक्षुषि स्थितिः कथं घटते । उच्यते—

### स्थानादिव्यपदेशाच्च । १ । २ । १४ ॥

स्थानादीनां स्थानविशेषतन्नियमनादीनां 'यश्चक्षुषि तिष्ठन् चक्षुषोऽन्तरो यं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरो यमयति' इति व्यपदेशात् ॥१४॥

## सुखविशिष्टाभिधानादेव च ॥ १ । २ । १५ ॥

इतश्चाक्ष्याधारः परमपुरुष एव । 'कं ब्रह्म खं ब्रह्मे'ति निरवधिक-सुखविशिष्टतया श्रुतस्य परस्य ब्रह्मण उपासनस्थानविधानार्थं उपास्यगुणविशेषविधानार्थं चैव हि 'य एषोऽन्तरक्षिणी'त्यादिनाऽभिधानम् । ननु 'कं ब्रह्म खं ब्रह्मे'ति यत् प्रस्तुतं सुखविशिष्टं न तदिह प्रतिपाद्यते । अग्निविद्यया ह्यन्तरितः 'कं ब्रह्म खं ब्रह्मे'त्युपदेशः । श्रूयते हि समनन्तरं 'अथ हैनं गार्हपत्योऽनुशशासे'त्यादिना अग्निविद्या । फलान्तरं च सर्वायुःप्राप्त्यादिकं पृथगग्निविद्यायाः श्रूयते । तत्पूर्वप्रस्तुतस्य सुखविशिष्टस्य परस्य ब्रह्मणो नात्र प्रसङ्गः । नैतत् । अग्निविद्यया न ब्रह्मविद्या समुपक्रान्ताऽन्तरिता । सा हि आचार्येण अग्निभिरुपदिष्टां ब्रह्मविद्यां पुनरुपदिशतैव परिसमाप्यते । उपदिष्टाऽस्माभिर्ब्रह्मविद्या, अथात्रोपदेश्यं विशेषमाचार्यस्ते उपदेक्ष्यति । आचार्यमुखतः समागतैव विद्या प्रतिष्ठिता भवतीत्यभिप्रेत्य प्राहुरग्नयः— 'उपदिष्टा अस्मद्विद्या आत्मविद्या च, आचार्यस्तु ते गतिं वक्ता' इति । गतिशब्दोऽत्र अवशिष्टोपदेष्टव्यांशपरः । इयं चाग्निविद्या ब्रह्मविद्याङ्गभूतेति व्यक्तमवगम्यते । अस्मद्विद्या आत्मविद्या चेति समुच्चयात् । यं प्रत्येष उपदेशः स चोपकोसलो भवभयाभितप्तो निर्विण्णः, एनमधिकृत्य ब्रह्मविद्यातो बहिर्भूतायाः विद्याया नोपदेशो युज्यते । यदपि पूर्णायुःप्राप्त्यादिफलमुच्यते तत् मुमुक्षोरधिकारिणोऽविरोध्येवेति न काचित् क्षतिः, यावत्ब्रह्मोपासननिष्पत्ति हि आयुरनुवर्तमानमुपकारकमेव । आन्तरालिकफलमप्यनाकाङ्क्षितं सम्पद्यत इत्युच्यते 'नास्यावरे'त्यादिना । 'अपहते च पापकृत्या'मिति उपासनविरोधि-

---

### सुखविशिष्टाभिधानादेव च । १ । २ । १५ ॥

'कं ब्रह्म खं ब्रह्मे'ति पूर्वमुपक्रान्तस्य निरतिशयसुखविशिष्टस्योपास्यस्य स्थानविशेषविधानार्थं संयद्वामत्वादिगुणविशेषविधानार्थं च 'य एषोऽक्षिणी'त्यभिधानादेव चायमक्ष्याधारतया श्रूयमाणः परमात्मेति सिद्ध्यति ॥ १५ ॥

पापप्रणाशनलक्षणमङ्गकार्यमेवोच्यते । 'लोकीभवती'ति ब्रह्मलोकावाप्तिरूपमङ्गिफलम् । आचार्यश्च प्राह–'अहं तु ते तद्वक्ष्यामि' इति । यदग्निभिरुपदिष्टं तदेव ते सविशेषं वक्ष्यामीति तदर्थः । तदयमक्ष्याधारो निरवधिकसुखविशिष्टः परमात्मैव ॥ १५ ॥

ननु 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मे'त्यत्र प्राणादिषु ब्रह्मदृष्टिर्विधीयते, तस्मात् प्रसिद्धः प्राणः प्रसिद्धं सुखं प्रसिद्धमाकाशं चोच्यते तेन तेन शब्देन, तस्मान्न तत्र परंब्रह्म प्रकृतम्, येनाक्ष्यन्तः श्रूयमाणस्य परमपुरुषत्वमवधार्येत । इत्याशङ्कायामाह—

## अत एव च स ब्रह्म ॥ १ । २ । १६ ॥

सः–खमितिशब्देन प्रतिपाद्यमान आकाशः परब्रह्मैव, न भूताकाशः । कुतोऽवगम्यते एतत् । अत एव–यतो 'यदेव कं तदेव ख'मिति सुखाकाशयोः सामानाधिकरण्यनिर्देशेन सुखविशिष्टमाकाशमित्यभिहितम् । अत एव वैपुल्यगुणयोगेनाकाशसधर्मत्वादिह खमितिशब्देन निर्देशः । वैपुल्यं चापरिच्छिन्नत्वम् । 'यद्वाव कं तदेव खं यदेव खं तदेव कम्' इति मिथः कखयोर्विशेष्यविशेषणभावनिरूपणादिदमवगम्यते ब्रह्मणः स्वरूपमपरिच्छिन्नसुखरूपमिति । 'प्राणो ब्रह्मे'त्यनेन तु प्राणशरीरकत्वमवबोध्यते । तस्मादयमक्षिणि दृश्यमानतयाऽभिहितः परमपुरुष एव ॥ १६ ॥

---

ननु–'कं ब्रह्म खं ब्रह्म' इत्यनेन प्रसिद्धे आकाशे सुखे च ब्रह्मदृष्टिर्विधीयते, न तु ब्रह्मैव तत्र प्रतिपाद्यते इत्यत्राह—

### अत एव च स ब्रह्म । १ । २ । १६ ॥

'यदेव कं तदेव ख'मिति कखयोर्मिथो विशेष्यविशेषणभावावबोधनेन खशब्दस्य वैपुल्यलक्षकतया निरतिशयसुखरूपं ब्रह्मेत्यर्थलाभात् स अक्ष्याधारतया श्रूयमाणः पुरुषो ब्रह्मैव ॥ १६ ॥

इतश्चायमक्षिपुरुषः परमात्मैव–

## श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १ । २ । १७ ॥

श्रुता उपनिषत् आत्मस्वरूपयाथात्म्यं यैः, ते श्रुतोपनिषत्काः, अधिगतात्मस्वरूपयाथात्म्याः, तैरनुसन्धेया या गतिः श्रुत्यन्तरे श्रूयमाणा अर्चिरादिका, तस्याश्च इहाभिधानात्–'तेऽर्चिषमभिसम्भवन्ति, अर्चिषोऽहः अह्न आपूर्यमाणपक्ष'मित्यारभ्य 'चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति एष देवपथो ब्रह्मपथ' इति उपकोसलं प्रत्यभिधानात् ॥ १७ ॥

## अनवस्थितेरसम्भवाच्च नेतरः ॥ १ । २ । १८ ॥

अक्षिणि दृश्यमानतया श्रूयमाणः पुरुषः नेतरः–न प्रतिबिम्बात्मा न जीवो न देवताविशेषो वा, अनवस्थितेरसम्भवाच्च–नहि तेषां चक्षुषि नियमेनावस्थितिः । प्रतिबिम्बात्मनस्तु पुरः पुरुषे सन्निहिते एव, जीवस्य तु हृदय एव, आदित्यस्य तु न साक्षात्, अपि तु रश्मिद्वारैव । ये च निरुपाधिकामृतत्वादयो गुणा उक्तास्तेषां तेष्वसम्भवाच्च ॥ १८ ॥

---

इतश्चायमक्ष्याधारः परमात्मैव—

### श्रुतोपनिषत्कगत्यभिधानाच्च । १ । २ । १७ ॥

ये श्रुतोपनिषत्काः श्रुतवेदान्ताः, ब्रह्मोपासननिष्ठा इत्येतत्, तेषां अनुचिन्तनीयतयाऽन्यत्र श्रूयमाणा या गतिरर्चिरादिका तस्या अत्र 'यदु चैवास्मिन् शव्यं कुर्वन्ति यदि च न अर्चिषमेवाभिसंभवन्ती'त्यादिना अक्षिपुरुषविद्यानिष्ठानामभिधानात् अयमक्ष्याधारः परमात्मैव ॥ १७ ॥

### अनवस्थितेरसम्भवाच्च नेतरः । १ । २ । १८ ॥

छायापुरुषस्य जीवस्य अक्ष्यभिमानिदेवताविशेषस्य वा चक्षुषि नियमेनानवस्थानम् । यतः–प्रतिबिम्बात्मनश्छायापुरुषस्य पुरतः सन्निहित एवान्यस्मिन् चक्षुषि स्फुरणम् । जीवस्य तु हृत्प्रदेश एव चावस्थानम् । देवताविशेषस्य तु सूर्यस्य रश्मिद्वारेणैव चक्षुषि सन्निधिः न साक्षात् । अतः परमात्मन इतरः छायापुरुषो जीवो देवताविशेषो वा नेह प्रतिपाद्यते । अमृतत्वादीनामिह श्रूयमाणानां धर्माणां तेष्वसम्भवाच्च ॥ १८ ॥

इति प्रदीपे अन्तराधिकरणम् ॥ ३ ॥

(अ०स०) विचार्यते स पुरुषः य एषोऽक्षिणि दृश्यते ।
आह स प्रतिबिम्बात्मा जीवो वाऽऽदित्य एव वा ॥ १ ॥
दृश्यते प्रतिबिम्बात्मा पुरुषः पुरतः स्थितः ।
जीवसत्तां शङ्कमानैर्जीवश्चक्षुषि दृश्यते ॥ २ ॥
आदित्यो वा स पुरुषो रश्मिभिर्योऽक्षिणि स्थितः ।

सिद्धान्तः--

अत्रोच्यतेऽक्षिपुरुषः पुरुषोत्तम एव सः ॥ ३ ॥
अस्मिन्नेवोपपद्यन्ते ह्यमृतत्वादयो गुणाः ।
अन्तर्यामितयाऽस्यैव ननु स्थित्यादि चक्षुषि ॥ ४ ॥
श्रूयते, दृश्यते चायं योगोन्मीलितलोचनैः । ( मानसैः )
कं ब्रह्मेत्यादिवाक्येनापरिच्छिन्नसुखात्मकम् ॥ ५ ॥
यदेव पूर्वं प्रकृतं तदेवात्राभिधीयते ।
यदेव कं तत्खमेव खं यदेव तदेव कम् ॥ ६ ॥
इति च व्यपदेशेनापरिच्छिन्नसुखात्मकम् ।
ब्रह्मैव पूर्वं प्रकृतं इत्येतदवगम्यते ॥ ७ ॥
श्रुतात्मनां गतिः सेयं श्रूयते चार्चिरादिका ।
अवस्थानं चेतरेषां नियमेन न चक्षुषि ॥ ८ ॥
न चामृतत्वादिकानां गुणानां तेषु सम्भवः ।
तथा च पुरुषः सोऽयं परमात्मेति सुस्थितम् ॥ ९ ॥

इति भाष्ये अन्तराधिकरणम् ॥ ३ ॥

---

पूर्वस्मिन्नधिकरणे य एषोऽक्षिणि पुरुषो दृश्यते स चक्षुष्यन्तर्या-

---

ननु काण्वानां माध्यन्दिनानां च शाखासु श्रूयते—'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति एष ते आत्माऽन्तर्याम्यमृत' इत्यादिना अधिदैवम्, 'यो भूतेषु तिष्ठ'न्नित्यादिनाऽधिभूतम्, 'यः प्राणेषु तिष्ठ'न्नित्यादिना अध्यात्मं, 'यः

मितयाऽवस्थितः परमात्मैवेति समर्थितम् । इदानीं तस्य सैवान्तर्यामितयाऽवस्थितिश्चिन्त्यते—

## अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् ॥ १ । २ । १९ ॥

अधिदैवम्, अधिलोकम्, अधिभूतं चान्तर्यामी श्रूयते । तत्राधिदैवं 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष ते आत्माऽन्तर्याम्यमृतः' इत्यादिना श्रूयते । अधिलोकं 'सर्वेषु लोकेष्वि'त्यादिना । अधिभूतं च 'सर्वभूतेषु तिष्ठ'न्नित्यादिना । तत्र 'यो विज्ञाने तिष्ठ'न्निति स्थाने 'य आत्मनि तिष्ठ'न्निति च पर्यायः । अत्र संशयः—अयमन्तर्यामितया श्रूयमाणः किं जीवः परमात्मा वेति । अत्राह—जीव एवेति । वाक्यशेषे द्रष्टा श्रोतेति द्रष्टृत्वं श्रोतृत्वं च जीवधर्मौ हि श्रूयते । चक्षुरायत्तं विज्ञानं हि दर्शनम् । श्रवणं च श्रोत्रायत्तं विज्ञानम् । न च परस्य ब्रह्मणश्चक्षुरादीनि करणानि । 'अचक्षुःश्रोत्रं तदपाणिपाद'मिति तत्र तत्प्रतिषेधात् । अत्रोच्यते—अन्तर्याम्यधिदैवाधिलोकादिषु—अधिदैवाधि-

---

सर्वेषु लोकेषु तिष्ठन्नि'त्यारभ्य अधिलोकं चान्तर्यामी । उत्तरत्र—'द्रष्टा श्रोता मन्ता विज्ञाता' इति द्रष्टृत्वादिश्रवणात् स जीवो भवितुमर्हतीत्यत्राह—

**अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात्।१।२।१९॥**

'इत्यधिदैवतम्' 'इत्यधिलोकं' 'इत्यधिभूतम्' 'इत्यध्यात्मम्' इति अधिदैवादिपदचिह्नितेषु तेषु तेषु वाक्येषु अन्तर्यामितया प्रतिपाद्यमानः परमात्मा नारायण एव । तदसाधारणधर्माणामेव तत्र कीर्तनात् । प्रतिपर्यायं 'एष ते आत्मा अन्तर्याम्यमृत' इति हि अमृत्वमन्तर्यामिणः श्रूयते । तथा उपक्रमे प्रश्नस्त्वेषः—'य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति तमन्तर्यामिणं ब्रूही'ति । प्रश्नानुगुणमुत्तरं च सर्वान्तर्यामित्वोपपादकम् । न च सर्वत्रान्तःप्रविश्य नियमनं जीवस्योपपद्यते । परमात्मन एव चायमसाधारणो धर्मः ॥ १९ ॥

लोकादिपदघटितेषु वाक्येष्वन्तर्यामितया श्रूयमाणः परमात्मैव, तद्-साधारणधर्मस्यामृतत्वादेर्व्यपदेशात् । कर्मोपार्जितस्वस्वशरीरमात्रं चेष्टयतः परिमितज्ञानशक्तेः पृथिव्यादिसकलवस्तुष्वन्तर्यामिताऽन्तः-प्रविश्य नियन्तृत्वलक्षणा कथं नाम घटेत । पृथिव्यादिषु प्रतिपर्यायं 'अन्तर्याम्यमृत' इति च श्रूयते । निरुपाधिकममृतत्वमानन्दमयस्यात्मैव । अन्यत्र चेदमेवान्तर्यामित्वं श्रावयन्ती श्रुतिः—'नैवेह किञ्च-नाग्र आसीत् अमूलमनाधारमिमाः प्रजाः जायन्ते दिव्यो देव एको नारायणः' इत्यारभ्य 'यस्य पृथिवी शरीरं यः पृथिवीमन्तरे सञ्चरन् यं पृथिवी न वेद यस्यापः शरीरम्' 'यस्य मृत्युः शरीरं यो मृत्युमन्तरे सञ्चरन् यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण' इति नारायणस्यैव तत् श्रावयति। तथाऽन्यत्र च—'अन्तः प्रविष्टः शास्ता जनानां' इति । ननु सूत्रे अधिलोकेत्यधिकम् । अधि-दैवादिष्वित्यादिपदेनैव तत्सङ्ग्रहसम्भवात् । सत्यम् । काण्वमाध्यन्दि-नयोः पाठभेदमभिप्रेत्य तयोः सङ्ग्रहाय तथोक्तिः । अधिलोकपदघटि-तानि वाक्यानि न काण्वे, किन्तु माध्यन्दिने एव। एतदुक्तं भवति—प्रथममेष प्रश्नः प्रवर्तते 'वेत्थ नु त्वं काप्य तमन्तर्यामिणं य इमं लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति' इति । प्रश्नश्चायं सकलमिदं चेतनाचेतनजातमन्तः प्रविश्य यो नियमयति स एक इति जिज्ञासया । इदं चात्रोत्तरम्—'यः पृथिव्यां तिष्ठन्नित्यादि ××× एष ते आत्माऽन्तर्याम्यमृत इत्यधिदैवतम्' । 'अथाधिभूतम्—यः सर्वेषु भूतेषु तिष्ठन् × × × एष ते आत्मान्तर्याम्यमृत इत्यधिभूतम्' । 'अथाध्या-त्मम्—यः प्राणे तिष्ठन् × × × × एष ते आत्माऽन्तर्याम्यमृतः' इत्य-न्तम् । अनेन अधिदैवं पृथिवीजलाग्न्यन्तरिक्षवाय्वादित्यदिक्चन्द्र-तारकाकाशतमःस्वन्तः प्रविश्य नियमनेन तत्तच्छरीरकत्वम्, अधि-भूतं सर्वभूतेष्वन्तः प्रविश्य नियन्तृत्वम्, अथाध्यात्मं प्राणवाक्चक्षुः-श्रोत्रादिषु अन्तः प्रविश्य नियन्तृत्वं चैश्वर्यं विस्तरेण प्रतिपाद्यते ।

तत्र प्रतिपर्यायं 'एष ते आत्माऽन्तर्याम्यमृत' इति निर्देशेन तत्र तत्र प्रविश्य नियमयतोऽप्यस्य तत्तद्गतदोषैरनालिप्तत्वं निरुपाधिकभोग्यत्वं चावगम्यते । स एष एव तवाप्यन्तर्यामीत्यनेन स्वतन्त्रात्मभ्रमोऽपि निरस्यते । अधिलोकं चान्तर्यामिता माध्यन्दिनपाठे श्राव्यते । तन्नात्र कर्मवश्यस्य जीवस्य प्रसङ्गः । 'द्रष्टा श्रोते'त्येतत्परमात्मनः सर्वज्ञस्योपपद्यते एव । न च चक्षुरादिकरणसापेक्षं दर्शनाद्यस्य विरुद्धमिति वाच्यम् । नहि करणायत्तमिहोच्यते । दर्शनं हि रूपसाक्षात्कारः श्रवणं च शब्दसाक्षात्कारः, सच जीवस्य करणायत्तः, अस्य तु स्वतः सर्वं युगपत्साक्षात्कुर्वतो न तदपेक्षा । 'अदृष्टो द्रष्टा अश्रुतः श्रोते'ति च विशेष्यते । ईदृशो द्रष्टा ईदृशः श्रोता नेतोऽन्य इति तु प्रतिषिध्यते । तद्युक्तमन्तर्याम्यधिदैवादिषु परमात्मा नारायण एवेति ॥१९॥

## न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च ॥ १ । २ । २० ॥

स्मार्तम्—कापिलस्मृत्युक्तं प्रधानम् । दृष्टान्तार्थमेतद्ग्रहणम् । अन्तर्यामित्वेन प्रतिपाद्यमानं यथा प्रधानं नैव भवति, तस्मिन्नसम्भावितानां धर्माणामिहाभिलापात्, तथा शारीरश्च-जीवश्च नैव भवति । अतद्धर्माभिलापात्, अतद्धर्माणाम्—तस्मिन्नसम्भावितानां धर्माणां स्वतः सर्वद्रष्टृत्वसर्वनियन्तृत्वसर्वात्मत्वनिरुपाधिकामृतत्वादीनामभिलापात् । एते धर्माः पूर्वसूत्रे परमात्मन्युपपद्यन्ते इत्युक्तम् । अस्मिन् सूत्रेऽन्यस्मिन्न सम्भाव्यन्ते इत्युच्यत इति विशेषः ॥ २० ॥

---

### न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च ॥ १।२।२० ॥

अन्तर्यामितया श्रूयमाणः कपिलस्मृत्युक्तं प्रधानं शारीरो जीवो वा भवितुं नार्हति । यथा प्रधानं नैव भवति तथा जीवोऽपि न भवति, कस्मात्? अतद्धर्माभिलापात्—तद्विरुद्धो योऽमृतत्वादिधर्मस्तस्याभिलापात । 'शारीरः' इति निर्देशेन उपचितपुण्यविशेषः समधिकप्रज्ञाशक्तिसंपन्नो हिरण्यगर्भोऽपि नान्तर्यामी भवितुमर्हति, कर्मवश्यत्वादिति गम्यते ॥ २० ॥

इतश्च नान्तर्यामी जीवः—

## उभयेऽपि हि भेदेनैनमधीयते ॥ १ । २ । २१ ॥

काण्वा माध्यन्दिनाश्च एनं शारीरं जीवं नियाम्यतया अन्तर्यामिणो भेदेन भिन्नत्वेनाधीयते । 'य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति' इति माध्यन्दिनाः, 'यो विज्ञाने तिष्ठन्' इति काण्वाः । विज्ञानैकघनतया जीवात्मनो विज्ञानशब्देन निर्देशः ॥ २१ ॥

(अ.स.)—अधिदैवाधिलोकेषु योऽन्तर्यामितया श्रुतः ।
स जीवः परमात्मा वेत्येतदत्र विचार्यते ॥ १ ॥

**पूर्वपक्षः—**

स्यादेष जीवो द्रष्टृत्वं श्रोतृत्वं श्रूयते यतः ।
तच्चक्षुरादिसापेक्षं तस्यैव ह्युपपद्यते ॥ २ ॥

**सिद्धान्तः—**

अत्रोच्यते स्वतः सर्वं पश्यतः शृण्वतः स्वतः ।
रूपादिग्रहणं नाक्षसापेक्षं परमात्मनः ॥ ३ ॥

---

इतश्च जीवो नान्तर्यामी—

**उभयेऽपि हि भेदेनैनमधीयते ॥ १ । २ । २१ ॥**

काण्वा माध्यन्दिनाश्चैनमन्तर्यामिणं भेदेन-जीवात्मनो भिन्नत्वेनाधीयते । तथा हि—काण्वा 'यो विज्ञाने तिष्ठ'न्नित्यादि, माध्यन्दिना 'य आत्मनि तिष्ठ'-न्नि'त्यादि । **विज्ञान**शब्दस्थाने **आत्म**शब्दप्रयोगाद्विज्ञानमात्मेति सिद्धयति । तथा चाभ्यां जीवात्मपरमात्मनोर्नियाम्यनियामकभावलक्षणभेदस्य कथना-दन्तर्यामी परमात्मैवेति सिद्धम् । यच्च द्रष्टृत्वादि श्रूयते तत्तु न जीवसाधा-रणम्, 'अदृष्टो द्रष्टा अश्रुतः श्रोता अमतो मन्ता' इति हि विशेषः श्रूयते । तैस्तैर्व्याप्यभूतैः पृथिव्यादिभिर्जीवात्मभिश्चायमदृष्टः स स्वयं तेषां द्रष्टा इति हि गम्यते ॥ २१ ॥

इति प्रदीपे अन्तर्याम्यधिकरणम् ॥ ४ ॥

प्रविश्यान्तर्नियन्तृत्वं सर्वत्र श्रूयते तु यत् ।
यच्च सर्वशरीरत्वममृतत्वादिकं च यत् ॥ ४ ॥
अस्यैव ह्युपपद्यन्ते न जीवेऽन्यत्र वा क्वचित् ।
काण्वा माध्यन्दिनाश्चासाङ्क्षेदेनैनमधीयते ॥ ५ ॥

इति भाष्ये अन्तर्याम्यधिकरणम् ॥ ४ ॥

---

## अदृश्यत्वादिगुणको धर्मोक्तेः । १ । २ । २२ ॥

इदमाम्नायते मुण्डके–'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं × × × × यद्भूतयोनिं परिपश्यन्ति धीराः' इति, 'अक्षरात्परतः परः' इति च । आभ्यां प्रकृतिपुरुषावुच्येते उत उभाभ्यामपि परमात्मैवेति संशयः । अत्राह—दृश्यत्वादयो विशेषाः पृथिव्यादिषु विकारेषु वर्तमानाः प्रतिषिध्यमानाः विकारसजातीयं सर्वविकाराणां मूलभूतमुक्तविशेषशून्यं सर्वतः सूक्ष्मं प्रधानमेवोपस्थापयन्ति प्रतिषेधाश्रयतया । 'अक्षरात्परतः परः' इति च परतोऽक्षरात्–विकारेभ्यः परतः प्रधानात् यः परः पुरुषस्तमुपस्थापयति । ननु–'यथोर्णनाभिः सृजते गृह्णते चे'ति दृष्टान्तग्रहणं विरुध्यते । प्रधानं विश्वमिदं स्वतः प्रसूते इति ह्यभिमतं परैः । अयं दृष्टान्तस्तु चेत-

---

मुण्डके श्रूयते–'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्र'मिति । तथा 'अक्षरात्परतः पर' इति च । अत्र अदृश्यत्वादिगुणविशिष्टतया श्रूयमाणं प्रधानमेव, उत्तरत्र च परतः– महदादिभ्यो विशेषेभ्यो यत्परमक्षरं ततोऽपि यः पुरुषः परः समष्टिरूपः स एवोच्यते । इत्यत्राह—

**अदृश्यत्वादिगुणको धर्मोक्तेः ॥ १ । २ । २२ ॥**

अदृश्यत्वादिगुणविशिष्टतया श्रूयमाणः परमात्मैव, उत्तरत्र 'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः' इत्यादिना परमात्मासाधारणधर्मस्य सर्वज्ञत्वादेरुक्तेः । दृश्यत्वादयश्च प्राकृतधर्मास्तस्मिन्निषिध्यन्ते । अक्षरात् परतो जीवात्मनोऽपि परः परमात्मेत्येवोत्तरत्राप्युच्यते ॥ २२ ॥

नाधिष्ठितमवगमयति । नैवम् । 'यथा पृथिव्यामोषधयः सम्भवन्ती'-त्ययं दृष्टान्तश्चेतनानधिष्ठितत्वे स्वरसः । 'यथा सतः पुरुषात् केशलो-मानी'ति दृष्टान्तः पुरुषसन्निधिमात्रसापेक्षतायां स्वरसः । तत् दृष्टान्त-द्वयानुरोधेनैव प्रथमदृष्टान्तोऽपि नेयः । अविवक्षितं चेतनाधिष्ठितत्वम् । आस्तां नाम समष्टिपुरुषाधिष्ठितं प्रधानमेव वा भूतयोन्यक्षरशब्दवाच्य-मिह, नतु परमात्मा ।

अत्रोच्यते—अदृश्यत्वादिगुणकः परमात्मैव । कुतः?—ध-र्मोक्तेः । परमात्मनो येऽसाधारणाधर्मास्तेषामिहोक्तेः । 'यद्भूतयोनिं परिपश्यन्ति धीरा' इति भूतयोनित्वमक्षरे श्रावितमुपपादयन्ती श्रुति'र्यथोर्णनाभि'रित्यादिना 'तथाक्षरात्सम्भवतीह विश्व'मित्यन्तेन निदर्शनपूर्वकमुपपाद्य तदेवाक्षरं विशिनष्टि सर्वज्ञत्वादिभिर्गुणैः 'यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः । तस्मादेतत् ब्रह्म नाम रूपमन्नं च जायते' इति । तद्भूतयोन्यक्षरं न प्रधानम् । 'अक्षरात्परतः पर' इत्यत्रा-क्षरशब्देन तु भूतयोन्यक्षरं न निर्दिश्यते । तद्धि सर्वज्ञं सर्वशक्तं सकल-भूतयोनिः । न ततः परं किमपि । तन्महदादिविकारप्रकृतिभूतं प्रधा-नमेवाक्षरं तत्रोच्यते । तदानीं क्षरणावस्थाराहित्यात् । ततः परो यः पुरुषः जीवात्मा ततोऽप्येष परमात्मा पर इति यावत् ॥ २२ ॥

## विशेषणभेदव्यपदेशाभ्यां च नेतरौ ।१।२।२३॥

इतरौ प्रधानं पुरुषश्चेत्येतौ नात्र प्रतिपाद्येते । विशेषणात्—ताभ्या-

---

**विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ १ । २ । २३ ॥**

नात्र परमात्मन इतरौ प्रधानपुरुषौ प्रतिपाद्येते । विशेषणात् भेदव्यपदे-शाच्च । उपक्रम एव हि विशेषणं व्यावर्तकं श्रूयते 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवती'ति । अनेन प्रश्नेन 'अथ परा यया तदक्षरमधिगम्यते' इत्यनेन वक्ष्यमाणायाः अक्षरविद्याया ब्रह्मविद्यात्वमवगम्यते । नहि प्रधान-ज्ञानात्सर्वज्ञानम् । न च प्रधानं परविद्यावेद्यम् । तथोत्तरत्र 'अक्षरात् परतः परः' अक्षरात्प्रधानाद्यः परो जीवः ततोऽपि पर इति भेदव्यपदेशश्च ॥ २३ ॥

मस्य भूतयोन्यक्षरस्य व्यावर्तनात् । व्यावर्तयति हि प्रकरणम् । विद्यायामाभिमुख्यमुत्पादयितुं गुरुपरम्परां श्रावयन्ती श्रुतिः प्राह—'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह' इति । अनेन श्रावयिष्यमाणविद्या ब्रह्मविद्या, सा च सर्वविद्याप्रतिष्ठेति । तां विद्यामुपदिशन्ती श्रुतिः श्रावयति शिष्यस्य जिज्ञासां शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवती'ति । ब्रह्मविद्यायाः सर्वविद्याप्रतिष्ठात्वमेकविज्ञानेन सर्वविज्ञानोपपत्तेः । यस्यैकस्य विज्ञानेन सर्वं विज्ञातं स्यात् तेन तु सर्वभूतयोनिनैव भाव्यम्, तच्चाक्षरम्, तच्च सर्वज्ञं सर्वशक्तं च, तत एव ब्रह्मशब्दितं प्रधानं नामरूपविभक्तविविधभोग्यात्मना भवतीति 'तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते' इति श्राव्यते । यया तदक्षरमधिगम्यते तां परां विद्यामाह । यद्यदृश्यत्वादिगुणकमक्षरं प्रधानं स्यात्, यया तदधिगम्यते सा परा विद्या कथं भवितुमर्हति । 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्या'मित्यग्रे श्रूयते । आरम्भे 'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठा'मिति या ब्रह्मविद्या प्रस्तुता सैवात्र 'प्रोवाच तां तत्त्वतो ब्रह्मविद्या'मित्यत्रोच्यते । पूर्वमक्षरं ब्रह्म भूतयोनिर्निर्दिष्टम्, इह तदेवाक्षरं पुरुषमिति विशेष्यते । एवं 'तथाऽक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ती'ति श्रूयते । अनन्तरं च 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः' इति । अत्र स इति तच्छब्देन सर्वभूतजन्मलयस्थानतयोक्तमक्षरं परामृश्य स एव 'दिव्यो ह्यमूर्तः पुरुष' इति परमपुरुष इति चोच्यते । 'अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः' इति च प्रधानात् यः परः समष्टिजीवः, ततोऽप्ययं पर इति भूतयोन्यक्षरमेवोच्यते । तथा च प्रकरणाद्विशेषणात् भेदव्यपदेशाच्च नात्र प्रधानपुरुषौ प्रतिपाद्येते ॥ २३ ॥

इतश्चात्र परमात्मैव प्रतिपाद्यते—

## रूपोपन्यासाच्च ॥ १ । २ । २४ ॥

'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा' इति । सर्वभूतान्तरात्मनः परमात्मनो रूपमिदमिहोपन्यस्यते । तस्मादयं परमात्मैव ॥ २४ ॥

(अ.स.) श्रूयतेऽथर्वशाखायामदृश्यत्वादिधर्मकम् ।
यदक्षरं, यः पुरुषोऽप्यक्षरात्परतः परः ॥ १ ॥
प्रधानं पुरुषस्तौ किं परमात्मैव वाऽथ तौ ।

**पूर्वपक्षः—**

आह–प्रधानमेवेदमदृश्यत्वादिधर्मकम् ॥ २ ॥
पृथिव्यादिविकाराणां दृश्यानां प्रकृतिस्तु सा ।
प्रधाने त्रिगुणे तस्मिन् युक्ता सा भूतयोनिता ॥ ३ ॥
व्यावर्तमानं दृश्येभ्यः तत्सजातीयमेव हि ।
विकारधर्मदृश्यत्वग्राह्यत्वादिविवर्जितम् ॥ ४ ॥
प्रधानं त्रिगुणं सूक्ष्ममदृश्यत्वादि बोधयेत् ।
प्रधानं यद्विकारेभ्यः परं तस्मात्परस्तु यः ॥ ५ ॥
पुरुषः श्रूयते सोऽयमक्षरात्परतः परः ।
तथा च न परं ब्रह्म श्रूयतेऽत्रेति कश्चन ॥ ६ ॥

---

## रूपोपन्यासाच्च ॥ १ । २ । २४ ॥

'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी'ति अक्षरस्य भूतयोनित्वमुपपाद्य पश्चात तस्य रूपमुपन्यस्यति श्रुतिः— 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा' इति । इदं च द्युलोकाद्यवयवकं रूपं सर्वान्तरस्य परमपुरुषस्यैव नेतरयोः ॥ २४ ॥

इति प्रदीपे अदृश्यत्वादिगुणकाधिकरणम् ॥ ५ ॥

**सिद्धान्तः—**

अत्रोच्यते परं ब्रह्मैवात्र तद्धर्मवर्णनात् ।
भूतयोन्यक्षरं मूलप्रकृतेः परतः परम् ॥ ७ ॥
समस्तभूतयोनित्वमस्मिन्नेव हि युज्यते ।
सर्वज्ञत्वादयो धर्माः श्रुतास्तदुपपादकाः ॥ ८ ॥
विशिनष्टि प्रकरणं परमात्मानमक्षरम् ।
उपक्रमत आरभ्य यावदेवोपसंहृतिम् ॥ ९ ॥
विचार्यमाणे ब्रह्मैव नेतराविति सिध्यति ।
सर्वविद्याप्रतिष्ठेयं ब्रह्मविद्येत्युपक्रमे ॥ १० ॥
प्रश्नश्च कस्मिन् विज्ञाते सर्वं स्यात् ज्ञातमित्यपि ।
पराविद्येति सा प्रोक्ता प्राप्यते तद्ययाऽक्षरम् ॥ ११ ॥
ब्रह्मविद्यामुपदिशेत् निर्विण्णाय मुमुक्षवे ।
यया वेदाक्षरं सत्यं पुरुषं चेति गद्यते ॥ १२ ॥
तथा भेदश्च ताभ्यां तु व्यक्तमस्यावगम्यते ।
पुरुषस्याक्षरस्यास्य सर्वभूतान्तरात्मनः ॥ १३ ॥
'अग्निर्मूर्धे'ति वाक्येन त्रिलोकीरूपमुच्यते ।
अतश्च परमात्मैव वेद्यमक्षरमुच्यते ॥ १४ ॥

इति भाष्ये अदृश्यत्वादिगुणकाधिकरणम् ॥ ५ ॥

---

## वैश्वानरः साधारणशब्दविशेषात् ॥ १ । २ । २५ ॥

छान्दोग्ये श्रूयते—'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इति । **अत्र संशयः**—अयं वैश्वानरः परमात्मेति

---

**वैश्वानरः साधारणशब्दविशेषात् । १ । २ । २५ ॥**

छान्दोग्ये—'आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूही'त्युपक्रम्य श्रूयते 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इत्यादि । अत्र श्रूयमाणो **वैश्वानर**शब्दः जाठराग्निमहाभूततृतीयदेवताविशेषादि-साधारणोऽपि विशेषात्— विशेषितत्वात् परमात्मपर एव । विशेष्यते चात्म-

निश्चेतुं शक्यते उत नेति । अत्राह—न शक्यते, अग्न्यादिसाधारणो ह्येष वैश्वानरशब्दः । श्रूयते हि–'विश्वात्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्' इत्यग्नौ । तथा 'अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति' इति जाठराग्नौ । तथा 'वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः' इति देवताविशेषे । तथा 'स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते' इति परमात्मनि च । तदेवमग्न्याद्यनेकसाधारणोऽयं वैश्वानरशब्दः कथमिह परमात्मपर इति निश्चेतुं शक्येतेति । अत्रोच्यते–वैश्वानरोऽत्र परमात्मैव । अनेकार्थसाधारणस्याप्यस्य शब्दस्य परमात्मासाधारणधर्मावबोधकैः शब्दैः विशेष्यमाणत्वात् अर्थविशेषपरत्वावधारणात् । तथाहि श्रूयते–उपक्रमे औपमन्यवादयः पञ्च महर्षयः सम्भूय 'को न आत्मा किं ब्रह्म' अस्माकमन्तरात्मभूतं ब्रह्मतत्त्वं किमिति विचारयन्तः 'उद्दालको ह वै भगवन्तोऽयमारुणिः सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छामे'ति विचिन्त्य प्राप्योद्दालकं 'अश्वपतिर्वै भगवन्तोऽयं केकयः सम्प्रतीममात्मानं वैश्वानरं वेत्ति तं हन्ताभ्यागच्छामे'ति वदता तेनोद्दालकेन सह तमश्वपतिमभ्याजग्मुः । अभ्यागतेभ्यः स वैश्वानरस्तेनोपदिष्टः । अतो विज्ञायते वैश्वानरः सर्वात्मभूतः परमात्मैवेति । यद्विजिज्ञासया ये समुपसन्नास्तेभ्यस्तदेव ह्युपदेष्टव्यम् । श्रूयते च वैश्वानरविद्यानिष्ठस्य फलम् 'स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ती'ति । इदं च फलं ब्रह्मविद्याया एव । नायं कर्मवशग इव लोकतः प्रसिद्धमन्नमत्ति, किन्तु सर्वेषु भूतेषु सर्वेष्वात्मस्वनुवर्तमानं सर्वान्तरमानन्दमयं

---

शब्देन ब्रह्मशब्देन च । उपक्रमे हि 'को न आत्मा किं ब्रह्म' 'संप्रतीममात्मानमध्येति' 'आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूही'ति आत्मशब्देन वैश्वानरो विशेष्यते ब्रह्मशब्देन च । प्रश्नश्च ब्रह्मजिज्ञासयेति गम्यते । उपक्रम इव मध्ये उपसंहारे च वैश्वानरोऽयमात्मशब्देन विशेष्यते । तदयं वैश्वानरः परमात्मैव ॥ २५ ॥

निरुपाधिकभोग्यभूतमन्नमत्ति । 'को न आत्मा किं ब्रह्मे'त्युपक्रमे ब्रह्मशब्देन प्रस्तुतमेव 'आत्मा वैश्वानर' इति वैश्वानरशब्देन निर्दिश्यमानतया वैश्वानर इति च प्रयुज्यते । विश्वान्नरानेषोऽन्तर्यामितया नयति, तदयं वैश्वानर उच्यते । आहुश्च व्यासार्याः—'यथा निराहुः—वैश्वानरः । कस्मात्? विश्वान्नरान्नयति विश्व एनं नरा नयन्तीति वा विश्वानर एव वैश्वानरः । राक्षसा वायसा इतिवत् । रक्ष एव हि राक्षसः वय एव हि वायसः इतिवत्' इति ॥ २५ ॥

इतश्च वैश्वानरः परमात्मैव—

## स्मर्यमाणमनुमानं स्यादिति ॥ १ । २ । २६ ॥

'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा' 'द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे । दिशः श्रोत्रे विद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता' इति श्रुतिस्मृतिभिर्यत्त्रैलोक्यशरीरं प्रतिपाद्यते तदेवेतीहापि स्मर्यमाणं—प्रत्यभिज्ञायमानं स्यात् वैश्वानरस्य परमात्मत्वे अनुमानम्—लिङ्गम् । अग्निः—द्युलोकः । इह हि

---

### स्मर्यमाणमनुमानं स्यादिति । १ । २ । २६ ॥

किं च—इह वैश्वानरस्यात्मनोऽस्य द्युलोकादिपृथिव्यन्तमूर्धादिपादान्तत्वेन शरीरावयवविशेषतया श्रूयते । अन्यत्र च श्रुतौ स्मृतौ परस्य ब्रह्मणो रूपतया द्युलोकादिकं श्रूयते । यथा 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा' 'द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे । दिशः श्रोत्रे विद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता' इति श्रुतिस्मृती किल द्युलोकादिपृथिव्यन्तं परमात्मनो रूपतया आचक्षाते । तत् इह श्रूयमाणं तदेवेदमिति स्मर्यमाणं—प्रत्यभिज्ञायमानमस्य वैश्वानरस्य परमात्मत्वे अनुमानं लिङ्गं स्यात् ॥ २६ ॥

'कं त्वमात्मानमुपास्से' इति केकयेन पृष्टैरौपमन्यवप्रभृतिभिः क्रमशः स्वेन स्वेनोपास्यतया प्रतिपादिताः द्युलोकादित्यवाय्वाकाशाप्पृथिवीः क्रमात् वैश्वानरस्य मूर्धचक्षुःप्राणमध्यकायवस्तिपादलक्षणावयवविशेषरूपतया स केकयस्तान् प्रत्याह—'मूर्धा त्वेष आत्मनः' 'चक्षुस्त्वेतदात्मनः' 'प्राणस्त्वेष आत्मनः' 'सन्देहस्त्वेष आत्मनः'। 'वस्तिस्त्वेष आत्मनः' 'पादौ त्वेतावात्मनः' इति । सन्देहो मध्यकायः ॥ २६ ॥

पुनराशङ्क्य परिह्रियते—

**शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते ॥१।२।२७॥**

परमात्मा वैश्वानर इति न शक्यते निर्णेतुम् । श्रूयते हि वैश्वानरविद्याप्रकरणे 'एषोऽग्निर्वैश्वानर' इति वैश्वानरशब्दसमानाधिकरणतयाऽग्नि-

---

पुनराशङ्क्य परिह्रियते—

**शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते । १ । २ । २७ ॥**

**ननु** परमात्मैवायं वैश्वानर इति न निर्णेतुं शक्यम्, कुतः? शब्दादिभ्यः—श्रूयते तावत् वाजिनां शाखासु 'स एषोऽग्निर्वैश्वानर' इति अग्निशब्दसमानाधिकरणो वैश्वानरशब्दः । तथाऽत्रैव श्रूयते 'हृदयं गार्हपत्यं मनोऽन्वाहार्यपचनः आस्यमाहवनीयः' इति अग्नित्रयपरिकल्पनम् । तथा 'तद्यद्भक्तं प्रथममागच्छेत्तां जुहुयात् प्राणाय स्वाहे'ति इत्यादिना प्राणाहुत्याधारत्वं च । तदेतैर्लिङ्गैरयं जाठराग्निरिति । तथा—शरीरान्तःप्रतिष्ठानं चात्र श्रूयते—'स यो ह वैतमेवमग्निं पुरुषविधं पुरुषोऽन्तःप्रतिष्ठितं वेद' इति । इदमपि जाठराग्नावेव स्वरसम् । इति चेन्न । तथादृष्ट्युपदेशात्— त्रैलोक्यशरीरस्यैव परमात्मनस्तथा दृष्टिः— जाठराग्निशरीरकत्वेन तद्विशिष्टतयोपासनं यत्, तस्यात्रोपदेशात् । अत्र श्रूयमाणस्य त्रैलोक्यशरीरत्वस्य जाठरेऽग्नावसंभवात् । वाजिन एनं 'य एषोऽग्निर्वैश्वानरो यत्पुरुषः' इति पुरुषमधीयते । तदयं वैश्वानरः परमात्मैव ॥ २७ ॥

शब्दः । अयं चाग्निर्जाठरः । इह च क्रियतेऽग्नित्रयपरिकल्पनम् 'हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीय' इति । 'तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयं, स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहे'ति इत्यादिना प्राणाहुत्याधारता च वैश्वानरस्य श्रूयते । अतश्चायं वैश्वानरो जाठराग्निरिति स्पष्टमवगम्यते । अन्तःप्रतिष्ठानाच्चायं जाठराग्निरेव । श्रूयते ह्यन्तः शरीरे प्रतिष्ठितिः 'पुरुषेऽन्तःप्रतिष्ठितं वेदे'ति । शङ्कां परिहरति नेति । तथा दृष्ट्युपदेशात्—तथा जाठराग्नितया जाठराग्निशरीरकतया दृष्टिः उपासनमुपदिश्यते । केवलजाठराग्नेः त्रैलोक्यशरीरकत्वस्यासम्भवात् । स्मर्यते च—

'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥' इति ।

एनं वैश्वानरं पुरुषमप्यधीयते—पुरुषात्मना केचिदधीयते 'एषोऽग्निर्वैश्वानरो यत्पुरुष' इति ॥ २७ ॥

## अत एव न देवता भूतं च ॥ १ । २ । २८ ॥

पूर्वसूत्रे प्रसिद्धोऽयं जाठराग्निरित्याशङ्का परिहृता । अस्मिन् सूत्रे देवताविशेषभूततृतीयत्वाशङ्का परिह्रियते । अतएव पूर्वोक्तादेव हेतोः न देवताविशेषः न वा भूततृतीयं तेजः । यद्यपि कथञ्चित् देवताविशेषस्याधिष्ठातृतया द्युलोकादिव्याप्त्या महाभूततृतीयस्य तेजसस्त्रिवृत्प्रक्रियया सर्वभूतेषु व्याप्त्या च त्रैलोक्यशरीरत्वं रूप्येत । अथापि ये आत्मब्रह्मपुरुषशब्दाः सर्वेषु लोकेष्वित्यादिनोक्ताऽसङ्कुचितफलावाप्तिः सर्वपाप्मप्रहाणादयश्च हेतवः ते नैतयोः सम्भवन्ति । अतोऽयं वैश्वानरः परमात्मैव ॥ २८ ॥

---

**अत एव न देवता भूतं च । १ । २ । २८ ॥**

पूर्वोक्तेभ्यो हेतुभ्य एव अत्र श्रूयमाणो वैश्वानरो न देवताविशेषः, न च महाभूतं तृतीयम् ॥ २८ ॥

## साक्षादप्यविरोधं जैमिनिः ॥ १ । २ । २९ ॥

जैमिनिराचार्यो मन्यते साक्षादप्यविरोधं—परमात्मन्यग्निशब्दस्य समन्वयम् । वैश्वानरशब्दसमानाधिकरणतया प्रयुज्यमानोऽयमग्निशब्दः विनैवाग्निशरीरकत्वविवक्षां परमात्मनि साक्षादेवाव्यवधानेनैव अवयवार्थयोगेनैव समन्वेतीति जैमिनिराचार्यो मन्यते । अग्रं नयतीत्यग्निः, स्वोपासकानेष परमात्मा ऊर्ध्वमुन्नयत्यतोऽग्निरुच्यते इति भावः । विनाऽपर्यवसानवृत्तिमित्येतत् ॥ २९ ॥

नन्वपरिच्छिन्नस्य कथं प्रदेशविशेषैः द्युप्रभृतिपृथिव्यन्तैः परिच्छेद इत्याशङ्कायामाह—

## अभिव्यक्तेरित्याश्मरथ्यः ॥ १ । २ । ३० ॥

यत्तत्प्रादेशमात्रत्वं द्युलोकादिभिः प्रदेशैः परिमितत्वं तदभिव्यक्तेर्हेतोः उपासकानामभिव्यक्त्यर्थं बुद्धिसौकर्यार्थमाश्मरथ्य आचार्यो मन्यते । अयं भावः—यद्यप्ययं वैश्वानरः परमात्मा अभितो व्याप्तो विगतमानश्च । अथापि उपासकानामुपासनपथेऽपरिमितस्यावतरणं दुःशकम् , अतः प्रदेशविशेषैर्मात्रया परिमितता विभाव्यते । श्रूयते च—'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्त' इति॥३०॥

---

### साक्षादप्यविरोधं जैमिनिः । १ । २ । २९ ॥

अग्निशब्दस्याग्रनयनगुणयोगात् वैश्वानरशब्दस्य समस्तनरनेतृत्वगुणयोगेनैव साक्षादपि ब्रह्मपरत्वमत्रोपपद्यते इति अविरोधम्—समन्वयं जैमिनिराचार्यो मन्यते ॥ २९ ॥

ननु—अपरिच्छिन्नस्य परमात्मनः द्युलोकादिपृथिव्यन्तप्रदेशपरिच्छिन्नत्वोक्तिः कथमुपपद्यते, तत्राह—

### अभिव्यक्तेरित्याश्मरथ्यः ॥ १ । २ । ३० ॥

आश्मरथ्य आचार्यो मन्यते अभिव्यक्तेरिति, अपरिच्छिन्नस्य परमात्मनः उपासकानां चेतसि अभिव्यक्तेरिति । अभिव्यक्त्यर्थमिति यावत् । विना परिच्छेदं दुरारोहं हि चेतसि परंब्रह्म ॥ ३० ॥

ननु—मूर्धादिपरिकल्पनं किमर्थमित्यत्राह—

**अनुस्मृतेर्बादरिः ॥ १ । २ । ३१ ॥**

अनुस्मृतिरुपासनं ध्यानम् । तथाऽनुस्मृतिः—द्युमूर्धाद्यवयवयोगेन पुरुषाकारेणोपासनम्, तस्य हेतोः—तदर्थमिति बादरिर्मन्यते । फलं चास्य ब्रह्मप्राप्तिः ॥ ३१ ॥

यदि नायं वैश्वानरो जाठराग्निः, तर्हि उरःप्रभृतीनां वेद्यादित्वोपदेशः कथमुपपद्येतेत्यत्राह—

**सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति ॥ १ । २ । ३२ ॥**

वैश्वानरविद्यानिष्ठेन प्रत्यहं क्रियमाणायां प्राणाहुतावग्निहोत्रत्वं विभाव्यमित्युपदिश्यते 'तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहेति' इति । तदिदं प्राणाहुतेरग्निहोत्रत्वं वेद्यादिकल्पनं विना न सम्पद्यते । अतस्तत्सम्पत्त्यर्थं वेद्यादिकल्पनमिति जैमिनिर्मन्यते । तथाहि श्रुतिर्दर्शयति—'स यदिदमविद्वानग्निहोत्रं जुहोति यथाऽङ्गारानपोह्य भस्मनि जुहुयात् तादृक्

---

ननु द्युप्रभृतीनां मूर्धाद्यवयवविशेषतया निरूपणं किमर्थं तत्राह—

**अनुस्मृतेर्बादरिः ॥ १ । २ । ३१ ॥**

बादरिराचार्या मन्यते अनुस्मृतेः—अनुस्मरणमुपासनम्, ततो हेतोः । पुरुषाकृतित्वेनोपासनार्थमिति । ईदृशपुरुषाकारतया परमात्मन उपासनाविशेषोऽयम् ॥ ३१ ॥

ननु—उरःप्रभृतीनां वेद्यादित्वकल्पनं कथमुपपद्यते तत्राह—

**सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ १ । २ । ३२ ॥**

प्राणाहुतेरग्निहोत्रत्वसंपत्तये इति जैमिनिः । वैश्वानरविद्याङ्गभूतं हीदं प्राणाग्निहोत्रम् । तथाहि दर्शयति श्रुतिः । अन्वहं क्रियमाणायां प्राणाहुतौ वैश्वानरस्य द्युलोकादिशरीरकस्य प्रीणनाय वैश्वानरविद्यानिष्ठैरग्निहोत्रदृष्टिं कर्तव्यतया विदधती श्रुतिर्दर्शयति अनेन प्रकारेणाग्निहोत्रसंपत्तिम् 'अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवती'ति । अत्र तत्तदाचार्यनामग्रहणं संवादाय । तदेतत्त्रयं स्वमतमेव ॥ ३२ ॥

तत् स्यात्' 'अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तत्सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति' 'तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति ॥ ३२ ॥

## आमनन्ति चैनमस्मिन् ॥ १ । २ । ३३ ॥

एनं—द्युमूर्धाद्यवयवविभागेन सम्पन्नो यो वैश्वानरस्तमेनं तेनैवावयवविभागेनास्मिन्नुपासकशरीरे सन्निहितमामनन्ति 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजा' इत्यादिना । **अयमर्थः**—अस्योपासकस्य मूर्धैव तस्यैतस्य वैश्वानरस्य मूर्धा सुतेजा नाम द्यौः । अस्योपासकस्य चक्षुरेव विश्वरूपो नामादित्यः, यो वैश्वानरस्य चक्षुरिति पूर्वमुक्तः । 'प्राणः पृथग्वर्त्मा' अस्योपासकस्य प्राण एव पृथग्वर्त्मसंज्ञको वायुः, यो वैश्वानरस्य प्राणो रूपितः । 'सन्देहो बहुलः' उपासकस्य मध्यकाय एव बहुलसंज्ञक आकाशः, यो वैश्वानरस्य मध्यकायतया निरूपितः । 'वस्तिरेव रयिः' अस्योपासकस्य वस्तिरेव रयिसंज्ञका आपः, या वैश्वानरस्य वस्तित्वेन रूपिताः । 'पृथिव्येव पादौ' अस्योपासकस्य पादावेव पृथिवी, या वैश्वानरस्य पादत्वेनोक्ता । तदेवमुपासको वैश्वानरं स्वशरीरे द्युलोकाद्यवयवविभागेन सन्निहितं विभावयेत् । अथैवं विभाव्य स्वीयान्येवोरःप्रभृतीनि प्राणाहुत्याधारस्य वैश्वानरस्य वेद्यादितया परिकल्प्य प्राणाहुतेश्चाग्निहोत्रत्वं विभाव्य एवम्भूतेन प्राणाग्निहोत्रेण वैश्वानरं परमात्मानमनुदिनमाराधयेदिति ।

---

ननु—कथं त्रैलोक्यशरीरकस्येदं प्रीणनाय स्यात् । अत्राह—

### आमनन्ति चैनमस्मिन् ॥ १ । २ । ३३ ॥

एनं त्रैलोक्यशरीरतया पुरुषविधमस्मिन्नुपासकशरीरेऽपि तत्तन्मूर्धचक्षुःप्रभृत्यवयवे द्युलोकादितत्तदवयवसंपत्त्या पुरुषविधं प्राणाहुतिवेलायामनुसन्धेयत्वाय सन्निहितमामनन्ति श्रुतयः 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूप' इत्यादिना ॥ ३३ ॥

**इति प्रदीपे वैश्वानराधिकरणम् ॥ ६ ॥**

**इति ब्रह्मसूत्रार्थप्रदीपे प्रथमस्याध्यायस्य द्वितीयः पादः ॥ २ ॥**

तदिदं वैश्वानरविद्याङ्गभूतं प्राणाग्निहोत्रम् । प्राणाग्निहोत्रसम्पत्त्यर्थमेनमस्मिन्नामनन्ति च । तथा च वैश्वानरः परमात्मेति सुस्थितम् ॥३३॥

पूर्वपक्षः—

(अ.स.)—य एतमेवं प्रादेशमात्रमित्यादिवाक्यतः ।
वैश्वानर उपास्यो यः छान्दोग्ये श्रूयते स कः ॥ १ ॥
अग्न्याद्यनेकार्थकत्वात् परमात्मेत्यनिश्चितम् ।

सिद्धान्तः—

आत्मशब्दब्रह्मशब्दसामानाधिकरण्यतः ॥ २ ॥
वैश्वानरपदस्यार्थः परमात्मेति सिद्ध्यति ।
द्युमूर्धत्वादिकं रूपं यच्छ्रुतं परमात्मनः ॥ ३ ॥
तदेव रूपमत्रापि प्रत्यभिज्ञायते यतः ।
वैश्वानरः स एषोऽग्निरिति शब्दविशेषतः ॥ ४ ॥
गार्हपत्यादिकाद्यग्नित्रयादिपरिकल्पनात् ।
पुरुषेऽन्तः प्रतिष्ठानात् जाठरोऽग्निरिति त्वसत् ॥ ५ ॥
द्युलोकादिपृथिव्यन्तशरीरानुपपत्तितः ।
जाठराग्निशरीरत्वेनोपास्यत्वमिहोच्यते ॥ ६ ॥
अधीयते च पुरुषं एनं वैश्वानरं ननु ।
द्युमूर्धत्वादिनैवायं न भूतं न च देवता ॥ ७ ॥
समन्वेत्यग्निशब्दोऽयं साक्षादिति तु जैमिनिः ।
अग्रं नयति यः सोऽयमग्निरित्यर्थयोगतः ॥ ८ ॥
विश्वान्नरानेष नयत्यतो वैश्वानरो यथा ।
द्युलोकादिपृथिव्यन्तैः प्रदेशैर्या परिच्छिदा ॥ ९ ॥
स्वतो विगतमानस्याप्यभिव्यक्त्यर्थमुच्यते ।
अनुध्यानाय मूर्धादिपादान्तपरिकल्पनम् ॥ १० ॥
विद्याङ्गभूतप्राणाग्निहोत्रसम्पत्तये तु तत् ।
श्रूयमाणमिदं तावत् वेद्यादिपरिकल्पनम् ॥ ११ ॥
द्युमूर्धादिकमेवं चाप्यामनन्ति ह्युपासके ।
तस्माद्वैश्वानरः सोऽयं परमात्मेति सुस्थितम् ॥ १२ ॥

इति भाष्ये वैश्वानराधिकरणम् ॥ ६ ॥

॥ इति ब्रह्ममीमांसाभाष्ये प्रथमाध्यायस्य द्वितीयः पादः ॥ २ ॥

## द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ । ३ । १ ॥

पूर्वस्मिन् पादे अस्पष्टजीवलिङ्गकानि वाक्यानि विचारितानि । तृतीये पादे स्पष्टजीवलिङ्गकानि विचार्यन्ते । आथर्वणे श्रूयते—'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वै'रिति । अत्र संशयः—द्युपृथिव्यादीनामायतनत्वेन श्रूयमाणः किं जीव उत परमात्मेति । अत्राह—जीव एवायम्, 'मनः सह प्राणैश्च सर्वै'रिति मनः-प्राणयोगो हि श्रूयते । अनुपदं 'अरा इव रथनाभौ संहता यत्र नाड्यः स एषोऽन्तश्चरते बहुधा जायमानः' इति नाडीसंबन्धो देवमनुष्यादि-रूपेण बहुधाजननं च श्रूयते । द्युभ्वन्तरिक्षायतनत्वं च भोक्तुरर्थायै-वेदमिति कथञ्चिदुन्नेयम् । मनःप्राणादिसंबन्धरूपात् जीवलिङ्गात् स्पष्टात् । अत्रोच्यते—द्युभ्वादीनामायतनं परमात्मैव, स्वशब्दात् । स्वस्य परमात्मनो योऽयमसाधारणः शब्दः, तस्यात्र श्रवणात् । 'अमृतस्यैष सेतु'रिति हि श्रूयते । सेतुत्वं चात्र प्रापकत्वम् । प्रापयति हि सेतुः परं तीरं पुरुषम् । तथैवायं परमात्मा संसारसागरतः परं तीरममृतं मोक्षं प्रापयति पुरुषमुपासकम् । अमृतप्रापकत्वं

---

### द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ । ३ । १ ॥

मुण्डके श्रूयते—'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैस्तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतु'रिति । अत्र द्युपृथिव्यादीनामायतनतया—आधारतया श्रूयमाणः परमात्मैव । कुतः ?, स्वशब्दात्—स्वस्य परमात्मनः असाधारणात् 'अमृतस्यैष सेतुरि'ति शब्दात् । नहि जीवस्य अमृतप्रापकत्वं संभवति । 'अमृत'मिति मोक्ष उच्यते । उत्त-रत्र श्रूयमाणाः सर्वज्ञत्वादयश्चास्यैवासाधारणा धर्माः । यश्चायमात्मशब्दोऽत्र श्रूयते सोऽपि 'आप्नोतीत्यात्मे'ति व्युत्पत्त्या सर्वं शरीरितया व्याप्य वर्तमाने परमात्मनि मुख्य एव । अनुपदं 'अरा इव रथनाभौ संहता यत्र नाड्यः स एषोऽन्तश्चरते बहुधा जायमानः' इति श्रूयमाणं नाड्याधारत्वाद्यप्यस्यान्तर्या-मिणः हृदयकमले सन्निहितस्य च युज्यत एवेति ॥ १ ॥

चास्यैव श्रूयते तत्र तत्र 'नान्यः पन्था अयनाय विद्यते' इति । 'तमेवैकं जानथात्मान'मिति निरुपाधिकात्मत्वप्रतिपादक आत्मशब्दश्च। आप्नोत्यखिलमेव चेतनाचेतनजातमन्तर्यामितयेत्ययमात्मा । अत्रैवोत्तरत्र सर्वज्ञत्वादयः परमात्मासाधारणा धर्माः श्रूयन्ते 'यः सर्वज्ञः सर्ववि'दिति । यच्च नाड्याधारत्वं श्रूयते तदपि परमात्मन एव सर्वान्तर्यामिणः सर्वाधारस्योपपद्यते । श्रूयते च 'सन्ततं सिराभिस्तु लंबत्याकोशसन्निभम्' इत्यारभ्य 'तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः' इति । बहुधा जायमानत्वं चास्य स्वेच्छया प्रभवत उपपद्यते । "अजायमानो बहुधा विजायते" इति हि श्रूयते । 'अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् । प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायये'ति स्मर्यते च ॥ १ ॥

इतश्च परमात्मैवायम्—

## मुक्तोपसृप्यव्यपदेशाच्च ॥ १ । ३ । २ ॥

व्यपदिश्यते चैष मुक्तैरुपसृप्यतया । 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्य मुपैति' इति, 'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इति च ॥ २ ॥

---

## मुक्तोपसृप्यव्यपदेशाच्च ॥ १ । ३ । २ ॥

'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' 'यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इति उत्तरत्र मुक्तोपसृप्यत्वं च द्युभ्वाद्याधारस्य व्यपदिश्यते । ततश्चायं परमात्मैव ॥ २ ॥

## नानुमानमतच्छब्दात् प्राणभृच्च ॥ १ । ३ । ३ ॥

स्वशब्दात् अयं परमात्मैवेति समर्थितम् । जीववाचिनः शब्दस्याभावान्नायं जीव इति समर्थ्यतेऽस्मिन्सूत्रे । अतच्छब्दात् यथा नानुमानम्, तथा अतच्छब्दान्न प्राणभृच्च । प्रधानबोधकशब्दाभावात् यथा प्रधानं न, तथैव जीवबोधकशब्दाभावान्न जीवोऽयम् ॥ ३ ॥

इतश्च न जीवोऽयम्—

## भेदव्यपदेशात् ॥ १ । ३ । ४ ॥

जीवात् भेदेनात्रैवास्य व्यपदेशात् । 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥' इति । एकस्मिन् शरीराख्ये वृक्षे द्वौ पुरुषौ स्तः, तत्रैको निमग्नोऽस्मिन्—नितरां मग्नः, स्वात्मानमपि वृक्षाद्विविक्तं नैव शक्नोति विज्ञातुम् । अनीशया—कर्मवशगतया मुह्यमानः शोचति च । अन्यश्च परमपुरुषः ईशः—न कर्मवशगः, जुष्टश्चायं सदैव । तथाभूतमेनमीशं यदा पश्यति योगदृष्ट्या, तदैष वीतशोकस्तस्य महिमानं परमसाम्यापत्तिलक्षणं प्राप्नोति । तदेवं भेदेन व्यपदेशादयं परमपुरुष एव ॥४॥

## प्रकरणात् ॥ १ । ३ । ५ ॥

प्रकरणं चेदं परमात्मनः । तदेतददृश्यत्वादिगुणकाधिकरणे 'विशे-

---

**नानुमानमतच्छब्दात् प्राणभृच्च ॥ १ । ३ । ३ ॥**

अस्मिन् प्रकरणे आनुमानप्रधानपरस्येव प्राणभृज्जीवपरस्यापि शब्दस्यैकस्याप्यभावात् आनुमानमिव जीवोऽपि नेह प्रतिपाद्यते ॥ ३ ॥

**भेदव्यपदेशात् ॥ १ । ३ । ४ ॥**

'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशं' इति जीवात् भेदस्यात्र व्यपदेशाच्च नायं जीवो भवितुमर्हति ॥४॥

**प्रकरणात् ॥ १ । ३ । ५ ॥**

प्रकरणं चेदं परब्रह्मण एव । 'अथ परा यया तदक्षरमधिगम्यते' इत्यारम्भे परविद्यागम्यतया यत्प्रस्तुतं तदेव हि उत्तरेणानेन प्रतिपाद्यते । अतः प्रकरणाच्चायं परमात्मैवेति सिद्ध्यति ॥ ५ ॥

षणभेदव्यपदेशाभ्यां च नेतरा'विति सूत्रविवरणावसरे निरूपितमिति- नेह वितन्यते । ननु तेनैवाधिकरणेन गतार्थताऽस्या । न । नाडीसंबन्धादिश्रवणेन प्रकरणविच्छेदाशङ्कयैतदधिकरणप्रवृत्तेः ॥५॥

## स्थित्यदनाभ्यां च ॥ १ । ३ । ६ ॥

श्रूयमाणाभ्यां स्थित्यदनाभ्यां च विज्ञायते भेदः । 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति' इति एकस्मिन्वृक्षे शरीररूपे पक्षिवदवस्थित- योर्द्वयोर्मध्ये एकः कर्मफलं भोग्यभूतमत्ति, अपरस्तु अकर्मवश्यो- ऽनश्नंस्तत् केवलं तत्र वर्तमानः प्रकाशतेऽभितः, इति जीवात्मपर- मात्मनोर्भेदोऽवगम्यते । तदवगम्यते योऽनश्नन् समन्ततो दीप्यते स एष एव सर्वज्ञो द्युभ्वाद्यायतनमात्मा भवितुमर्हति, नेतरः कर्मवशगः कर्मफलभोक्ता ॥ ६ ॥

(अ.स.) यस्मिन् द्यौः पृथिवी चेति योऽसावाथर्वणे श्रुतः ।
द्युभ्वाद्यायतनत्वेन स क इत्यत्र चिन्त्यते ॥ १ ॥

पूर्वपक्षः-

अत्राह जीव एवायं नाड्याद्याधारताश्रुतेः ।
अन्तश्चरश्च बहुधा जायमान इति श्रुतेः ॥ २ ॥

सिद्धान्तः-

अत्रोच्यते न जीवोऽयं परमात्मैव किन्त्वयम् ।
सर्वज्ञत्वादयो धर्माः श्रूयन्ते परमात्मनः ॥ ३ ॥

---

## स्थित्यदनाभ्यां च ॥ १ । ३ । ६ ॥

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति' इति जीवस्य कर्मफलभोगः परमात्मनः नियन्तृतया स्थितिमात्रं चोच्यते । अतो भेदात् परमात्मैवायम् ॥ ६ ॥

इति प्रदीपे द्युभ्वाद्यधिकरणम् ॥ १ ॥

नाड्याद्याधारता चापि परमात्मनि विश्रुता ।
अजायमानो बहुधा स्वेच्छया स विजायते ॥ ४ ॥
मुक्तोपसृप्यता चास्मिन् श्रूयमाणोपपद्यते ।
वृक्षे निमग्नः पुरुषो मुह्यमानस्तु शोचति ॥ ५ ॥
यदा पश्यत्यन्यमीशं वीतशोको भवत्यसौ ।
इति जीवाद्भिभेदोऽस्य श्रूयते तु विशेषतः ॥ ६ ॥
तथा प्रकरणं चेदं तस्यैव परमात्मनः ।
भेदः स्थित्यदनाभ्यां चानश्नन्नश्नन्निति श्रुतः ॥ ७ ॥
इति भाष्ये द्युभ्वाद्यधिकरणम् ॥ १ ॥

---

उक्तं मुक्तप्राप्यत्वं परमात्मनः पूर्वस्मिन्नधिकरणे, मुक्तप्राप्यस्य तस्य निरवधिकसुखरूपत्वमस्मिन्नधिकरणे निरूप्यते—

## भूमा संप्रसादादध्युपदेशात् ॥ १ । ३ । ७ ॥

छान्दोग्ये श्रूयते–'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इति । अत्र भूमा क इति विचार्यते । भूमशब्दोऽयं

---

## भूमा संप्रसादादध्युपदेशात् ॥ १ । ३ । ७ ॥

छान्दोग्ये श्रूयते 'यत्र नान्यत् पश्यति नान्यत् शृणोति नान्यद्विजानाति स भूमा' इति । अत्र यस्मिन् दृष्टे नान्यत्पश्यति यस्मिन् श्रुते नान्यत् शृणोति यस्मिन्विज्ञाते नान्यद्विजानाति स भूमा परमात्मैव । संप्रसादादधि-जीवादधिकतया उपदेशात् । 'सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित् श्रुतं ह्येव भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मां भगवान् शोकस्य पारं तारयतु' इति सर्वतो निर्विण्णायात्मजिज्ञासयोपसन्नाय नारदाय सनत्कुमारो नामादिक्रमेणोत्तरं भूयः समुपदिशन् 'सुखं त्वेव सर्वतो भूयः' 'सुखं त्वेव विजिज्ञासितव्य'मित्युपदिश्य तच्च सुखं यदनल्पं तदेव विज्ञासितव्यमित्याशयेन 'नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य' इति भूमानमुपदिशति । तं भूमानमेव व्याचष्टे—'यत्र नान्यत्पश्यती'त्यादिना । अत्र भूमशब्देन

बहुशब्दादिमनचि 'बहोर्लोप' इति सूत्रेण प्रकृतिप्रत्ययविकारे प्राप्ते निष्पन्नो बहुत्ववाचकः । बहुत्वं चात्र न सङ्ख्यारूपं किन्तु वैपुल्यम्, अनल्पता । 'यत्रान्यत्पश्यति अन्यच्छृणोत्यन्यद्विजानाति तदल्पमि'ति भूमप्रतियोगितयाऽल्पस्य निर्देशात् । 'अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः' इति अनल्पे बहुशब्दः स्मर्यते च । श्रूयते चात्रैव सङ्ख्याधिक्येऽप्यल्पशब्दः 'यदल्पं तन्मर्त्य'मिति । सङ्ख्याधिक्यहीनेष्वपि वागादिषु 'वाग्वा नाम्नो भूयसी'ति श्रूयते भूयःशब्दः । सोऽपि हि बहुशब्दान्निष्पन्नः । अयं च भूमशब्दोऽत्र धर्मिपरः, 'यत्रान्यत्पश्यति तदल्प'मिति भूमप्रतियोगिनो धर्मिपरतया निर्देशात् । 'भूमा त्वेव सुख'मिति धर्मिनिर्देशाच्च ।

अत्र संशयः—अयं भूमशब्दाभिलप्यः किं जीवो ब्रह्म वेति । अत्राह—जीव इति । कस्मात् ? । प्रकरणात् । यः प्रागात्मस्वरूपविविदिषया समुपसन्नाय नामादिभ्यः प्रकृष्टतया समुपदिष्टः प्राणः स एव हि तस्य सुखस्वरूपताज्ञापनाय भूमेत्युपदिश्यते । नामादिषूपदिश्यमानेषु तत्र तत्र 'अस्ति भगवो नाम्नो वा भूयः, अस्ति भगवो वाचो वा भूय' इत्यादयः प्रश्नाः प्रवर्तन्ते । प्रतिवचनानि च—'अस्ति नाम्नो वाव भूयसी, अस्ति वाचो वाव भूयः' इति । प्राणे उपदिष्टे न ततोऽस्ति प्राणाद्वरीयसः प्रश्नः प्रतिवचनं वा । ततो विज्ञायते प्राण एष सर्वतो गरीयानात्मेति । प्राणशब्दश्चायं जीवमेव लक्षयति साहचर्यात् । प्राणसहचारी हि जीवः । 'प्राणो ह पिता प्राणो ह माते'त्यादिनिर्देशाच्च जीव एवायमिति व्यक्तं विज्ञायते । 'प्राणे सर्वं प्रतिष्ठित'

विवक्षितं निरतिशयसुखरूपम् । सोऽयं भूमा किं जीवस्ततोऽन्यः परमात्मा वेति विचारे सूत्रमिदं प्रवृत्तम् । भूमा परमात्मैव जीवादधिकस्योपदेशादिति । पूर्वं 'यथा वा अरा नाभौ समर्पिता एवमेवास्मिन् प्राणे सर्वं समर्पित'मित्यादिना 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति' इत्यन्तेन जीवं निरूप्य ततोऽधिकः 'एष तु वा अतिवदति यः सत्येनातिवदती'त्यादिना परमात्मा प्रस्तुतः । स एवायं निरतिशयसुखस्वरूप इह भूमशब्देनोच्यते इति ॥ ७ ॥

मित्येतत्तु भोग्यभोगोपकरणाद्यात्मना परिणतस्याचेतनवर्गस्य भोक्तृ-जीवायत्तस्थितित्वमभिप्रेत्य प्रवृत्तम् । जीवस्यास्य विशुद्धं स्वरूपं सुखैकतानमित्युपास्यत्वं युज्यते । 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति' इति श्रूयमाणं प्राणेनोपास्येनातिवदनमपि सूपपद्यते । अस्यैव प्राणोपासकस्य सत्येनातिवदनं प्राणोपासनाङ्गभूतमुपदिश्यते 'एष तु वा अतिवदति यः सत्येनातिवदती'ति । तदयं भूमप्राणशब्दनिर्दिष्टो जीव एव ।

अत्रोच्यते—भूमा परमात्मैव, संप्रसादात् जीवात् प्राणशब्द-निर्दिष्टात् अधि—अधिकत्वेन भूम्नो निर्देशात् । 'एष तु अतिवदती'ति तुशब्देन प्राणातिवादिनोऽन्योऽयं यः सत्येनातिवदतीति विज्ञायते । सत्यम्—ब्रह्म, यः स्वोपास्येन ब्रह्मणाऽतिवदति स एष प्राणातिवादिनो विलक्षणः । एतदेव सत्यशब्दवाच्यं ब्रह्म भूमशब्देन निर्दिश्यते । भूम्नश्च लक्षणं 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इत्यनेनोच्यते । सोऽयं सत्यशब्दनिर्दिष्टो भूमा परमात्मा सर्वान्तरात्मतया निरुपधिकात्मशब्देनोपसंह्रियते 'अथात आत्मादेश' इत्यादिना । 'एष तु वे' त्यादिना प्राणातिवादिनः प्राणोपासनाङ्गभूतं सत्यवदनमुपदिश्यते इति तु न । 'एष त्वि'ति तुशब्देन पूर्वोक्त-प्राणातिवादिनो वैलक्षण्यज्ञापनात् ।

ननु—'अस्ति भगवः प्राणाद्भाव भूया'निति प्रश्नो न श्रूयते । तत् प्राण एव प्रकृष्टस्योपदेशः परिसमाप्यते । नैतदेवम् । प्रश्नाभावेऽपि स्वयमाचार्यः प्राणात् प्रकृष्टमुपदिशन्नात्मविद्यामुपसंहरति । तत् भूमा परमात्मा प्राणशब्दवाच्यात् जीवादन्य एव । सत्यादवरोऽपि प्राणो जडाद्विकारभूतान्नामादितश्चेतनत्वेनाविकारित्वेन च प्रकृष्ट इति तदुपासकस्यातिवादित्वं च युक्तमेव । सत्यपि चेतनाचेतनप्रपञ्चभेदे, तस्य ब्रह्मणोऽपृथक्सिद्धप्रकारतया ब्रह्मानुभवन् तत्त्वदर्शी तदन्तर्भूततयैवानुभवति, न पृथक् । अतो 'नान्यत्पश्यती'त्यादि युज्यते । यथा कुसुमफलपलाशपरिपूर्णं वृक्षं पश्यन् कुसुमादिकं न पृथक्पश्यति वृक्षो-

ऽयमित्येव पश्यति। तथा ब्रह्मैवेदमखिलमिति पश्यति। उपनिषद्विवरणे विशेषत एतदर्थो बोध्यः। किमन्यदितः सुखं प्रकृष्टम्, यस्मै स्पृहयेत्। भूमा हि निरवधिकसुखम्। तस्मिन्नस्मिन् निमग्नो नान्यत्पश्यति नान्यच्छृणोतीत्यप्यपरे योजयन्ति ॥ ७ ॥

## धर्मोपपत्तेश्च ॥ १ । ३ । ८ ॥

'तदमृतम्' 'स्वे महिम्नि' इत्यादिना श्राव्यमाणा ये अमृतत्व-स्वमहिमप्रतिष्ठितत्वसर्वकारणत्वसर्वात्मत्वादयो धर्माः, तेषामस्मिन् भूम्नि परब्रह्मण्येवोपपत्तेः। नहि परमात्मनोऽन्यस्मिन् अमृतत्वादयो धर्मा उपपद्येरन्। 'स्वे महिम्नि प्रतिष्ठित' इत्यनेनानन्याधारत्वं विवक्षितम्। इदमेवानबोधयति 'यदि वा न महिम्नी' त्यादिना। भेद-सापेक्षा हि प्रतिष्ठा; अन्यो ह्यन्यस्मिन् प्रतिष्ठितः, यो यत्र प्रतिष्ठितः तौ मिथो भिन्नौ हि। ब्रह्मैवेदमखिलमिति ब्रह्म क्व प्रतिष्ठितं भवेत्, यदध-स्ताद्यदुपरिष्टात् सर्वं हि स एव भूमा। तदिदं श्रावयति श्रुतिः—'स एवाध-स्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेदं सर्वम्' इति। स्वेतरसमस्तचिदचित्प्रकारं ब्रह्मैव सर्वान्तरात्मभूतं विशिष्टमेकं तत्त्वमिति नेतोऽन्यत्, तदेवंविधस्य ब्रह्मणः प्रतिष्ठाभूतं किमिह स्यात्, तदयं भूमा अनन्याधारतया स्वे महिम्नि प्रतिष्ठित इत्युक्तम्। 'स्वयं दासास्तपस्विन' इति वत्। दशसु दिक्षु विद्यमानं यदि-दमखिलमिदंप्रहास्पदमचेतनम्, यश्चाहंप्रत्ययगोचर आत्मा, सर्वं स एव भूमा सर्वान्तरात्मा परमात्मेत्येतत् 'स एवाधस्तात्' 'अथातोऽहं-

---

## धर्मोपपत्तेश्च ॥ १ । ३ । ८ ॥

'स भगवः क्व प्रतिष्ठितः इति स्वे महिम्नि' इति यदनन्याधारत्वमुच्यते, 'स एवाधस्ता'दित्यादिना च यत् सर्वात्मत्वम्, तथाऽमृतत्वादिकं च त एते धर्मास्तस्मिन्नेवोपपद्यन्ते न जीवात्मनि ॥ ८ ॥

इति प्रदीपे भूमाधिकरणम् ॥ २ ॥

कासदेशः' अथात आत्मादेश' इत्येतैरवबोध्यते । इत्थं च सत्यपि चेतनाचेतनेश्वरभेदे अभदेवचांस्येतान्यव्याहतान्येव ॥ ८ ॥

(अ०स०) यत्रानुभूयमानेऽन्यन्न शृणोति न पश्यति ।
स भूमा सर्वतो भूयान् कोऽयमित्यद्य चिन्त्यते ॥ १ ॥

पूर्वपक्षः—

नामाद्याशान्ततो भूयान् यः प्राणः प्रस्तुतः पुरा ।
स हि जीवः पिता माता भ्रातेति व्यपदेशतः ॥ २ ॥
स विशुद्धः प्रत्यगात्मा भूमेति व्यपदिश्यते ।
प्राणात् भूयानस्ति वेति न च प्रश्नोऽनुवर्तते ॥ ३ ॥
आत्मोपदेशः प्रक्रान्तः प्राणे परिसमाप्यते ।
प्राणेनोपास्यमानेन श्रूयते चातिवादिता ॥ ४ ॥
यत्सत्येनातिवादित्वं प्राणविद्याङ्गमेव तत् ।
तत् भूमा जीव एवायमिति चेदत्र कथ्यते ॥ ५ ॥

सिद्धान्तः—

एष भूमा संप्रसादादधिको व्यपदिश्यते ।
प्राणातिवादिनस्तस्मादस्मिन् सत्यातिवादिनि ॥ ६ ॥
एष त्विति तुशब्देन वैलक्षण्यं हि गम्यते ।
प्रवृत्तिः सत्यशब्दस्य श्रुतौ ब्रह्मणि विश्रुता ॥ ७ ॥
जीवेऽनुभूयमाने च नान्यादर्शनसंभवः ।
अमृतत्वादयो धर्मा ये श्रुताः ब्रह्मणस्तु ते ॥ ८ ॥

इति भाष्ये भूमाधिकरणम् ॥ २ ॥

---

## अक्षरमम्बरान्तधृतेः ॥ १ । ३ । ९ ॥

इदमाम्नायते बृहदारण्यके—'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभि-

---

**अक्षरमम्बरान्तधृतेः ॥ १ । ३ । ९ ॥**

बृहदारण्यके श्रूयते—'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनणु अह्रस्वमदीर्घ'मित्यादि । अत्र श्रूयमाणमस्थूलत्वादिगुणकं ब्रह्मैव, अम्बरान्त-

वदन्त्यस्थूलमनणु अह्रस्वमदीर्घमलोहितमस्नेहमच्छाय' मिति । अत्र संशयः—अक्षरशब्दवाच्यं किं प्रधानं किं वा जीवः किं वा परमात्मेति । अत्राह—प्रधानं जीवो वा स्यादक्षरम् । स्थूलत्वादयो विकारधर्माः प्रतिषिध्यमानाः सर्वविकारस्य प्रकृतिभूतं प्रधानमेव प्रत्यासत्तेरवगमयन्ति । स्थूलत्वादयो देहधर्माः प्रतिषिध्यमाना देहिनं जीवमेव वा । कारणावस्थायां क्षरणराहित्यादक्षरमुच्यते प्रधानम् । जीवः स्वरूपतः क्षरणराहित्यात् अक्षरमुच्यते । रूढिरेव वोभयत्र । अस्ति चोभयत्राक्षरशब्दप्रयोगः । 'अक्षरात्परतः पर' इत्यत्राक्षरशब्दो हि प्रधाने प्रवर्तते । तथा—'पुरुषोऽक्षरमुच्यते' इति जीवे ।

प्रणवो जीवो वेत्यपरं[1] आह—वर्णसामान्यवाचकोऽप्यक्षरशब्दो वर्णविशेषे ओङ्कारेऽत्र वर्तते इति । स्थूलत्वादीनां द्रव्यधर्माणां वर्णेऽप्रसङ्गात् तन्निषेधो न घटेतास्मिन् पक्षे । प्रसक्तस्यैव प्रतिषेध इति । अत्राह—नायं नियमः प्रसक्तस्यैव प्रतिषेधः कार्य इति ।

अत्रोच्यते—तदिदमक्षरं परंब्रह्मैव । अम्बरान्तधृतेः । अक्षरे श्रूयमाणा अम्बरान्तविधृतिः परमात्मनोऽन्यत्र नैवोपपद्येत । तदक्षरं परंब्रह्मैव । श्रूयते हि विधृतिरम्बरान्तस्य—'यदूर्ध्वं गार्गि दिवो यदर्वाक्

---

धृतेः । अम्बरान्तस्य—यदिदं प्रसिद्धं वायुमदम्बरं भूतपञ्चकेषु प्रथमं तस्य योऽन्तः अवसानस्थानं अव्याकृतं सर्वस्य गुणमयस्यास्य मूलभूतं तस्य धृतेः—विधरणस्य श्रवणात् । तद्विधरणे च परस्यैव ब्रह्मणः सामर्थ्यम् । श्रूयते चास्याम्बरान्तविधरणम् । तथाहि—वाचक्नव्या 'यदूर्ध्वं दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतं चे'ति पृष्टो याज्ञवल्क्यः प्राह 'आकाशे' इति । पुनश्च 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चे'ति पृष्टः प्राह—'एतद्वै तदक्षर'मित्यादि । अयं चाकाशः न भूताकाशः, भूतभवद्भविष्यतां तत्रौतप्रोतत्वानुपपत्तेः, अपितु तस्याप्यन्तमव्याकृतमेव; तच्च परब्रह्मणैव धार्यते इति अक्षरं परंब्रह्मैव ॥ ९ ॥

---

टिप्प०—१ अपरः—नीलकण्ठाचार्यः ।

पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते आकाश एव तदोतं च प्रोतं च' 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' 'एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे'ति । सर्वस्य विकारजातस्याधारतया श्रूयमाणोऽयमाकाशो न भूताकाशो भवितुमर्हति, अपि तु सर्वविकारप्रकृतिभूतं प्रधानम् । विकाराणां प्रकृतिः प्रतिष्ठेति त्वविगीतम् । तदाकाश एव ओतं च प्रोतं चेति सुसंगतम् । स चाकाशः—प्रधानमक्षरे ओतं च प्रोतं चेति श्रूयमाणमिदमम्बरान्तविधरणं प्रधाने जीवेऽपि नोपपद्यते । तत् परमात्मैवाक्षरमिहोच्यते"। अम्बरस्य—वायुमदम्बरस्य भूताकाशस्यान्तः पारभूतं प्रधानं सौत्रेनाम्बरान्तशब्देनोच्यते । कार्यस्यान्तः पारभूतं कारणावस्थमेव । कार्यं हि विलीनं कारणस्वरूपं भवति ।

अपरः प्राह—भूतभविष्यदादीनामाकाशान्तानां विधरणमिहाम्बरान्तधृतिशब्देन विवक्षितम् । ननु—'एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे' त्याकाशमात्रविधृतिरक्षरे श्रूयते । भूतभविष्यदादीनां तु आकाशे ओतप्रोतता । सत्यम् । अथापि तद्विधरणमप्यक्षरे एवोक्तं भवति । जलपूर्णं कुम्भं वहतो जलवहनं कुम्भद्वारा प्राप्तमेव हि । स चाकाशश्चिदाकाश इति ॥ ९ ॥

## सा च प्रशासनात् ॥ १ । ३ । १० ॥

प्रकृष्टं शासनं प्रशासनम् । प्रकर्षश्चाप्रतिहतता । सा चाम्बरान्तविधृतिर्न स्तम्भादेरिव, न वा प्रभोरिव कस्यचित् । किन्तु अप्रतिहतशासनायत्ता । श्रूयते हि—'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्यादिना । तदिदमैश्वर्यं परमात्मन एवासाधारणो धर्मः ॥ १० ॥

---

### सा च प्रशासनात् ॥ १ । ३ । १० ॥

तच्च विधरणं प्रशासनकृतम्, न केवलं भूतलादेरिव । तथा च श्रूयते—'एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत' इत्यादि ॥१०॥

## अन्यभावव्यावृत्तेश्च ॥ १ । ३ । ११ ॥

अक्षरस्य परमात्मनोऽन्यभावः—अन्यत्वं व्यावर्त्यते च । श्रूयते हि 'एतद्वाऽक्षरं गार्गि अदृष्टं द्रष्टृ अश्रुतं श्रोतृ अमतं मन्तृ अविज्ञातं विज्ञातृ' इति । प्रधानं न द्रष्टृ, द्रष्टाऽपि जीवो नादृष्टः, स्वान्तर्यामिणा परमात्मना दृष्टो हि सः । तस्मादक्षरशब्देन परमात्मैवात्रोच्यते इति सुस्थितम् ॥ ११ ॥

(अ. स.) अस्थूलत्वादिगुणकं श्रूयते तु यदक्षरम् ।
तत्किं प्रधानं जीवो वा ब्रह्म वेति विचार्यते ॥ १ ॥
आह प्रधानं जीवो वा स्थूलत्वादिनिषेधतः ।
ते हि धर्मा विकाराणां प्रधानं गम्यते ततः ॥ २ ॥
देहादन्यः स जीवो वा देहधर्मनिषेधतः ।
यद्वाऽक्षरः स्यादोङ्कारः सर्वस्य प्रभवो हि सः ॥ ३ ॥
उच्यते तत्परंब्रह्म त्वम्बरान्तधृतिश्रुतेः ।
सा च प्रशासनादन्यभावो व्यावर्त्यतेऽपि च ॥ ४ ॥
भूतं भवद्भविष्यच्च द्युपृथिव्यादिकं च यत् ।
ओतं प्रोतमिदं सर्वमाकाशे सोऽपि चाक्षरे ॥ ५ ॥
अम्बरान्तधृतिः सेयं नान्यस्मिन्नुपपद्यते ।
प्रशासनेनाक्षरस्य सूर्याचन्द्रमसोर्धृतिः ॥ ६ ॥
द्युपृथिव्यादिकानां च श्रूयते सा प्रशासनात् ।
अदृष्टं द्रष्टृ चेत्येष विशेषः श्रूयतेऽपि च ॥ ७ ॥

इति भाष्ये अक्षराधिकरणम् ॥ ३ ॥

---

## अन्यभावव्यावृत्तेश्च ॥ १ । ३ । ११ ॥

उत्तरत्र 'तद्वा एतदक्षरमदृष्टं द्रष्टृ अश्रुतं श्रोतृ' इति अदृष्टत्वे सति द्रष्टृत्वविशेषणात् अन्यभावः—परमात्मनोऽन्यभावः जीवादिभावो यः स व्यावर्त्यते । सर्वैरदृष्टत्वे सति सर्वद्रष्टृत्वस्य तेष्वसंभवात् । योऽन्तर्यामी परमात्मा स एव तथाविधः । स हि व्याप्येनादृष्टः तं पश्यत्येवेति ॥ ११ ॥

इति प्रदीपे अक्षराधिकरणम् ॥ ३ ॥

## ईक्षतिकर्म व्यपदेशात् सः ॥ १ । ३ । १२ ॥

इदमाम्नायते प्रश्नोपनिषदि—'यः पुनरेतं त्रिमात्रेण ओमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नः यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' इति । अत्र संशयः कोऽयं पुरुष ईक्षतिकर्मतया व्यपदिष्टः ? किं जीवः उत परमेव ब्रह्मेति । अत्राह– जीवविशेष एवायम्, यः समष्टिपुरुषो हिरण्यगर्भः । 'स सामभिरुन्नीयते ब्रह्मलोक'मिति हि श्रूयते । स च लोको ब्रह्मणो हिरण्यगर्भस्य । 'स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसंपद्यते तमृचो मनुष्यलोकमुपनयन्ते स तत्र तपसा ब्रह्मचर्येण श्रद्धया संपन्नो महिमानमनुभवत्यथ यो द्विमात्रेण मनसि संपद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकं स सोमलोके विभूतिमनुभूय पुनरावर्तते' इति एकमात्रप्रणवोपासकस्य मनुष्यलोकावाप्तिर्द्विमात्रप्रणवोपासकस्य चाऽन्तरिक्षलोकावाप्तिः पूर्वं

---

### ईक्षतिकर्म व्यपदेशात् सः ॥ १ । ३ । १२ ॥

प्रश्नोपनिषदि श्रूयते—'यः पुनरेतं त्रिमात्रेण ओमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नः यथा पदोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' इति । अत्र य ईक्षतिकर्मतया श्रूयमाणः सः परमात्मैव, न हिरण्यगर्भः । व्यपदेशात्—परमात्मासाधारणधर्मव्यपदेशात् । उत्तरत्र 'तमोङ्कारेणायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभय'मिति अजरत्वामृतत्वादिकं हि श्रूयते । अत्रैव 'स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुष'मिति च ईक्षतिकर्म व्यपदिश्यते । व्यष्टिजीववर्गात् यः परो हिरण्यगर्भः ततोऽपि परः पुरिशयः हृदयगुहाशयः इति च तदर्थः । स च परमात्मैव ॥ १२ ॥

इति प्रदीपे ईक्षतिकर्माधिकरणम् ॥ ४ ॥

---

फलतया श्रुता । त्रिमात्रप्रणवोपासकस्य फलतया श्रूयते सेयं ब्रह्मलोकावाप्तिः । मानुषलोकादुपरितनोऽन्तरिक्षलोकः । तत उपरितनश्च लोको हिरण्यगर्भस्यैवेति क्रमाच्चावगम्यते ।

परत्वं चास्य हिरण्यगर्भस्य मानुषलोके विद्यमानादेतस्माज्जीवघनादुपपन्नं नाम । अचित्परिणतिविशेषदेहात्परत्वं च जीवघनेऽस्त्येव । पुरि स्वहृदयगुहायां शेते च । तत् अयमीक्षतिकर्मतया निर्दिष्टो हिरण्यगर्भ एवेति ।

**अत्रोच्यते**— ईक्षतिकर्मतया निर्दिष्टः स एव—परमात्मैव । यस्य परमात्मन उपासनविधित्सया उपक्रमे 'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेती'ति श्रावितं स परमात्मैव । व्यपदेशात्—परमात्मासाधारणधर्मव्यपदेशात् । 'तमोङ्कारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परं चे'ति शान्तत्वामृतत्वादिस्तदसाधारणधर्मो हि व्यपदिश्यते । **अयं भावः**—'स यो ह वैतद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वा व स तेन लोकं जयती'ति सत्यकामेन पृष्टः पिप्पलादः प्रणवालम्बनोपासनस्य परापरब्रह्मप्राप्तिसाधनतां वदन् उपक्रमे प्रणवं प्रशंसति—'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदयमोङ्कारः, तस्मादेतद्विद्वानेतेनैवायतनेनैकतरमन्वेती'ति । परापरब्रह्मप्राप्तिसाधनतया ओङ्कार एव परं चापरं च ब्रह्म । साधने साध्योपचारः । एतेनैवोपासनालम्बनभूतेन परमपरं वा ब्रह्मान्वेति । एवं परापरब्रह्मप्राप्तिहेतुतां प्रणवालम्बनोपासनस्य प्रतिश्रुत्य तत्र त्रिमात्रप्रणवालम्बनपरब्रह्मोपासनफलं पश्चान्निरूपयिष्यन्, प्रथममपरब्रह्मोपासनलक्षणयोः एकमात्रद्विमात्रप्रणवालम्बनोपासनयोर्मात्रावैगुण्येऽप्यालम्बनभूतप्रणवमहिम्ना मानुषलोकतदूर्ध्वलोकप्राप्तिसाधनतां निरूप्याथ 'यः पुनरेतं त्रिमात्रेणे'त्यादिना परब्रह्मप्राप्तिफलकपरब्रह्मोपासनां निरूपयति । उपक्रमे ब्रह्मविशेषणतया श्रूयमाणं परशब्दं प्रत्यभिज्ञापयति अभिध्यानकर्मणि ईक्षतिकर्मणि च पुरुषे विशेषणतया श्रूयमाणः परशब्दः । व्यपदिश्यते

चोपसंहारे शान्तत्वामृतत्वादयो धर्माः । सर्वपापप्रक्षयश्च 'यथा पादोदरस्त्वचे'ति श्रूयते । इममेव ब्रह्मलोकमधिकृत्य श्रूयते–'यत्तत्कवयो वेदयन्ते' इति । अन्यत्र च श्रूयते–'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' इति । तदवगम्यते परस्य ब्रह्मणो विष्णोरेवायं लोक इति । जीवलोके यः परः समष्टिपुरुषस्तस्मादप्येष परमात्मैव तु परः, नेतरः । पुरि हृदयगुहायां पुरुषोऽन्यः शेते नाम, अथापि स न परः । स हि कर्मफलमत्ति । अनश्नन्नेषः अभितश्चकास्ते । तदयमीक्षतिकर्मतया निर्दिष्टः पुरुषोत्तमो नारायणः परंब्रह्मेति स्थितम् ॥ १२ ॥

(अ. स.) ओङ्कारेण त्रिमात्रेण ध्यायेद्यः पुरुषं परम् ।
स समेत्य ब्रह्मलोकं परं पुरुषमीक्षते ॥ १ ॥
इति प्रश्नोपनिषदि श्रूयते पुरुषः स कः ।
हिरण्यगर्भः किंवाऽयं परमात्मेति संशये ॥ २ ॥
उच्यते परमात्मा स तद्धर्मव्यपदेशतः ।
श्रूयन्ते खलु ते यत्तच्छान्तमित्यादिवाक्यतः ॥ ३ ॥
यत् परं ब्रह्म सोऽयं तु पुरुषः पर उच्यते ।
'कवयो वेदयन्ते' स लोकश्चेति विशेष्यते ॥ ४ ॥
तस्मादीक्षतिकर्मत्वं परमात्मनि सुस्थितम् ।
'स पाप्मना विनिर्मुक्त' इत्यपि श्रूयते यतः ॥ ५ ॥

इति भाष्ये ईक्षतिकर्माधिकरणम् ॥ ४ ॥

---

## दहर उत्तरेभ्यः ॥ १ । ३ । १३ ॥

इदमाम्नायते छान्दोग्ये–'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्' इति ।

---

दहर उत्तरेभ्यः ॥ १ । ३ । १३ ॥

छान्दोग्ये श्रूयते–'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' इति ।

अत्र संशयः—दहरे पुण्डरीकवेश्मन्यन्तः सन्निहितोऽयमाकाशः किं भूताकाश उत जीव आहोस्वित् परमात्मा वेति । अत्राह—प्रसिद्धिप्रकर्षात् भूताकाश एवायम्, जीवो वा । सहि स्वरूपतोऽणुः, दहरत्वमस्यैव सङ्गच्छते । विज्ञानमयत्वेन प्रकाशस्वभावतया चायमाकाश उच्यते । 'स वा एष आत्मे'ति निर्देशश्चास्मिन् स्वरस इति ।

अत्रोच्यते—दहरः—दहरपुण्डरीके सन्निहितोऽयं दहराकाशः परमात्मैव, उत्तरेभ्यः—उत्तरत्र श्रूयमाणेभ्यो हेतुभ्यः । श्रूयते हि 'एष आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प' इति निरुपाधिकमात्मत्वं स्वतोऽपहतपाप्मत्वादिकं च । न चेदं परमात्मनोऽन्यत्रोपपद्येत । तथा—'यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ' इति दहराकाशस्य बाह्यभूताकाशेन साम्यं द्यावापृथिव्याद्याधारत्वं च श्रूयते । दहराकाशस्य भूताकाशत्वे नोपपद्येत साम्यश्रवणम् । अनन्यत्वात् । द्यावापृथिव्याद्याधारत्वं च हृदयपरिमिते आकाशे जीवे च नोपपद्येत । हृदयपुण्डरीकान्तर्वर्तित्वश्रवणेन परमात्मनः प्रसक्तालपत्वाशङ्कानिवारणाय केवलं 'यावान्वायमाकाशस्तावानेष' इति निर्देशः । ननु 'तस्मिन् यदन्तस्तदन्वेष्टव्य'मिति दहराकाशान्तर्वर्तिन एवान्वेष्टव्यता श्रूयते, न तु दहराकाशस्य । न । यो दहराकाशः, यच्च तस्मिंस्तदुभयमन्वेष्टव्यमित्येव तु

---

अत्र श्रूयमाणो दहराकाशः परमात्मैव न भूताकाशः प्रत्यगात्मा वा । उत्तरेभ्यः—'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प' इति उत्तरत्र श्रूयमाणेभ्यो वाक्येभ्यः । तद्वाक्यगतेभ्यो हेतुभ्यः । अपहतपाप्मत्वसत्यकामत्वादिकं नैसर्गिकं नित्यसिद्धं परमात्मन एव । श्रुतेश्चायमर्थः—यदिदं दृश्यते पुरुषस्य शरीरं तद्धि ब्रह्मपुरम्, ब्रह्मणः पुरमिव पुरं तन्निवासस्थानत्वात् । तस्मिन् दहरं सूक्ष्मं पुण्डरीकं हृदयकमलम् । दहरोऽस्मिन्नन्तर आकाशः, अस्मिन् पुण्डरीकवेश्मनि सूक्ष्मः कश्चिदाकाशः, सः, तस्मिन् यदन्तः कल्याणगुणगणः, तदुभयमन्वेष्टव्यमिति ॥ १३ ॥

तदर्थः। अत एव 'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहित'मिति निरतिशयभोग्यत्वं दहराकाशस्य श्रूयमाणमुपपद्यते । अस्योपासकस्य भोग्यमिह यत् लभ्येत यच्च न लभ्येत सर्वं दहराकाशे लभ्यते । स ह्यानन्दमयः । अस्यैवानन्दस्य मात्रामुपजीवन्त्यन्ये आनन्दाः । समुद्रे गोष्पदवत् सर्वमपि भोग्यमस्मिन् वर्तते इति च तदाशयः ।

ननु–'यदन्तस्तदन्वेष्टव्यमि'त्यत्र तच्छब्देन कथमुभयपरामर्शः । यो दहराकाशः यच्च तदन्तः इति यच्छब्दाध्याहारेण योजनया तल्लाभात् । ननु–नपुंसकैकवचनान्तस्य तच्छब्दस्य यच्छब्दार्थद्वयगोचरता कथम् । स च तच्चेति नपुंसकानपुंसकयोः समासाश्रयणात्तदुपपत्तेः । ननु सर्वनाम्न्येकशेषः 'त्यदादीनि सर्वैर्नित्य'मित्यनेनैव सिद्ध्यति । एकवद्भावस्तु 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्या'मिति सूत्रतः प्राप्तैकशेष एव । अस्येति विशेषविधानात् । तत् कथमत्रैकवद्भावः । सत्यमेकवद्भावो 'नपुंसकमनपुंसकेने'ति सूत्रप्राप्तैकशेष एव । नपुंसकानपुंसकयोः सर्वनाम्नोः स च तच्चेत्यनयोर्नपुंसकैकशेषोऽपि तेनैव कुतो न स्यात्? येनैकवद्भावोऽपि सिद्ध्येत् । अत एव महाभाष्ये–'शुक्लश्च कंबलः शुक्ला च बृहतिका शुक्लं च वस्त्रं तदिदं शुक्ल'मिति नपुंसकैकवचनान्तः तदिति प्रयोगः नपुंसकसूत्रोदरणे कृत उपपद्यते । एवम्–चित्रेष्टिविधिवाक्ये 'दधि मधु घृतं धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्य'मित्यत्र प्रत्येकद्रव्यकयागगणसिद्धये तच्छब्दस्य दध्याद्यनेकद्रव्यपरत्वं नपुंसकैकशेषैकवद्भावाश्रयणेनोपपाद्यते । अत्र परे[1] प्राहुः–अन्वेष्टव्यमित्यत्र 'नपुंसकमनपुंसकेने'त्येकशेषे सति तत्रैकस्मिन्नर्थ इवैकवचनरूपं कार्यं भवत् तद्विशेषणे नपुंसकसूत्रकृतैकशेषशब्दोक्तार्थवर्तिनि[2] तदिति सर्वनाम्न्यपि भवति, यथा 'अस्मदोर्द्वयोश्च'ति सूत्रेणास्मदर्थस्यैकत्वे द्वित्वे च बहुष्वर्थेष्विव बहुवचनं भवत् अस्मदर्थवर्तिनि क्रियापदेऽपि भवति वयं ब्रूम इति । शुक्लश्च शुक्ला च

टिप्प०—१ दीक्षिताः । २ तदर्थवर्तित्वं तदर्थबोधकत्वम् । तत्पदसमानाधिकरणत्वमिति यावत् ।

शुक्लं च वर्तते इति क्रियापदेऽप्येकवचनं दृश्यते एव । तद्वत् सर्वनाम्न्यपि भवितुमर्हति । अत एव महाभाष्ये शुक्लश्च कम्बलः शुक्ला च बृहतिका तदिदं शुक्लं, शुक्लं च वस्त्रं तानीमानि शुक्लानीति द्विविधे नपुंसकसूत्रोदाहरणे कृतैकवद्भावमेव तदितिपदं प्रथमोदाहरणविशेषणं कृतम् । एवं चित्रेष्टिवाक्येऽपि प्राजपत्यशब्दे नपुंसकसूत्रप्रवृत्तौ तदर्थवर्तिनि तदिति पदेऽपि नपुंसकैकवचनं भवतीति ।

ननु–किं तदन्तः यदन्वेष्टव्यम्? श्रुतिरेवाह–'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्, तदेतत् सत्यं ब्रह्मपुरम्, अस्मिन् कामाः समाहिताः' इति । ब्रह्मैव पुरं ब्रह्मपुरम् । काम्यन्त इति कामाः कल्याणगुणाः । तथा–'तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवती'ति च श्रूयते । दहराकाशशब्दवाच्यं परमात्मानं तन्निष्ठांश्च सत्यान् कामाननुविद्य (उपास्य) व्रजन्ति–प्रयन्ति ये, तेषां मुक्तानां सर्वेषु लोकेषु कामचारो भवति इति तदर्थः ॥ १३ ॥

## गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॥ १ । ३ । १४ ॥

इतश्च दहराकाशः परंब्रह्म । अहरहः सर्वासां प्रजानां दहराकाशे गतिर्गमनं श्रूयते–'तद्यथा हिरण्यनिधिमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुः एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' इति । इयं हि गतिरन्वहं सुषुप्तिसमये जीवानां ब्रह्मणि

---

**गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॥ १ । ३ । १४ ॥**

उत्तरत्र 'तद्यथा हिरण्यनिधिमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ती'ति श्रूयमाणा अहरहर्गतिः, ब्रह्मलोकमिति च यः शब्दः ताभ्यां दहराकाशः परमात्मैवेति सिद्ध्यति । तथा ह्यन्यत्र श्रुतावपि दृष्टमहरहर्ब्रह्मणि गमनं शब्दविशेषश्च । यथा–'एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः' 'एष ब्रह्मलोकः सम्राट्' इति । श्रूयमाणं चैतदत्रास्य दहराकाशस्य परमात्मत्वे लिङ्गम्– प्रत्यभिज्ञापकम् ॥ १४ ॥

संपत्तिलक्षणा। सेयं गतिर्गन्तव्यस्य दहराकाशस्य परमात्मतां गमयति । तथा शब्दश्च । गन्तव्ये दहराकाशे ब्रह्मलोकशब्दो हि प्रयुज्यते । ब्रह्मैव लोको ब्रह्मलोकः । शब्दश्चायं दहराकाशस्य परब्रह्मतां गमयति । तथाहि दृष्टम्—सुषुप्तिसमये जीवानां ब्रह्मणि गमनं ब्रह्मणि ब्रह्मलोकशब्दश्चान्यत्रापि हि दृश्यते । 'एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपत्स्यामहे इति सत आगम्य न विदुः सत आगच्छामहे इति' इति, 'एष ब्रह्मलोकः सम्राडि'ति च । किं श्रुत्यन्तरदर्शनेन । इहैव श्रूयमाणं गमनं शब्दविशेषश्च दहराकाशस्य परमात्मत्वे पर्याप्तं लिङ्गमिति भावः ॥ १४ ॥

## धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १ । ३ । १५ ॥

अस्य परमात्मनो यो महिमा सर्वलोकविधरणलक्षणस्तस्यास्मिन् दहराकाशे उपलब्धेरयं दहराकाशः परंब्रह्मैव । श्रूयते हि—'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाये'ति । पूर्वं यो दहराकाशः प्रस्तुतः स एव तु 'य आत्मे'त्यात्मशब्देन निर्दिश्यते । तदेतत् सर्वलोकविधरणं परमात्मन एव महिमेत्यन्यत्र व्यक्तम्—'एष सर्वेश्वर एष सर्वभूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाये'त्यादिश्रुतेः॥१५॥

## प्रसिद्धेश्च ॥ १ । ३ । १६ ॥

प्रसिद्धश्चाकाशशब्दो ब्रह्मणि । तथा च श्रूयते—'को ह्येवान्यात् कः प्राण्याद्यदेष आकाश आनन्दो न स्यात् ।' 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ती'त्यादि ॥ १६ ॥

---

### धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १ । ३ । १५ ॥

अस्य परमात्मनः यो महिमा सर्वलोकविधरणलक्षणा धृतिस्तस्याः 'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय' इत्युत्तरत्र अस्मिन् दहराकाशशब्दवाच्ये उपलब्धेः ॥ १५ ॥

### प्रसिद्धेश्च ॥ १ । ३ । १६ ॥

आकाशशब्दस्य परमात्मनि श्रुतिषु प्रसिद्धेः 'यदेष आकाश आनन्दो न स्यात्' 'आकाशाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यादिषु ॥ १६ ॥

अथ दहराकाशशब्दस्य जीवपरत्वशङ्कामनूद्य प्रतिक्षिपति—

## इतरपरामर्शात् स इति चेन्नासम्भवात्॥ १ । ३ । १७॥

ननु–'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' 'एष आत्मेति होवाचे'ति वाक्यशेषे एष संप्रसादः, एष आत्मेति जीवो हि परामृश्यते, तदयं दहराकाशः प्रत्यगात्मैव भवितुमर्हति। इति चेन्न। असम्भवात्–स्वतोऽपहतपाप्मत्वादीनां तस्मिन्नसम्भवात् नायं प्रत्यगात्मा। 'एष आत्मेति होवाचे'त्यत्रात्मशब्दः उपसंपदनीयो यः परज्योतिःशब्दवाच्यः परमात्मा तमाचष्टे ॥ १७॥

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १ । ३ । १८ ॥

ननु–उत्तरात् प्रजापतिवाक्यात् प्रत्यगात्मनोऽप्यपहतपाप्मत्वादयो गुणा विज्ञायन्ते। श्रूयते हि–'य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्य' इति। तस्यास्यावस्थात्रयं जाग्रदादि च जीवलक्षणं "य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचे"त्यादिना श्रूयते। तदयं दहराकाशो जीवो भवितुमर्हति। इति चेन्न। आविर्भूतस्वरूपस्तु। तु शब्दो वैलक्षण्ये। अयं दहराकाशः स्वतोऽपहतपा-

---

### इतरपरामर्शात् स इति चेन्नासम्भवात् ॥ १ । ३ । १७ ॥

ननूत्तरत्र 'य एष संप्रसादोऽस्मात् शरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति इतरस्य जीवस्य परामर्शात् स एवायं दहराकाश इति चेन्नासम्भवात् । अपहतपाप्मत्वादीनां श्रूयमाणानामस्मिन्नसम्भवात् ॥ १७ ॥

### उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १ । ३ । १८ ॥

उत्तरात्प्रजापतिवाक्यात् प्रत्यगात्मैवापहतपाप्माऽवगम्यत इति चेत्, स तु परमात्मनो भिन्नः एतदुपासनया आविर्भूतस्वरूपः। उपसंपदनीयोऽयम्, स तूपसंपत्ता। अयं सर्वदाऽतिरोहितापहतपाप्मत्वादिदिव्यकल्याणगुणः, स तु अनादेः कालात् तिरोहितस्वरूपः ॥ १८ ॥

प्मत्वादिगुणविशिष्टः । स तु कर्मपरवशः पुण्यपापोपश्लिष्टः परमात्मोपासनया प्राप्य परंज्योतिःशब्दितं परमात्मानं पश्चादाविर्भूतस्वरूपः । तस्याप्यसंभवनीयाः सेतुत्वादयो ह्यस्मिन् श्रूयन्ते, तदयं दहराकाशो न जीवः ॥ १८ ॥

## अन्यार्थश्च परामर्शः ॥ १ । ३ । १९ ॥

ननु–दहराकाशश्चेत् परमेव ब्रह्म किमित्यस्मिन् सन्दर्भे एष संप्रसाद इति जीवः परामृश्यते । प्रजापतिवाक्येनैव तु सङ्गतिः समुचिता तस्येत्यत्राह–अन्यार्थश्च तस्य परामर्शः । जीवस्वरूपनिरूपणायात्र जीवस्य न प्रसङ्गः । अपि तु परस्य ब्रह्मणो यो महिमा जीवानां स्वाभाविकरूपप्रापकत्वरूपः, तत्ख्यापनार्थमेव । एष जीवो हि परं ज्योतिः प्राप्य स्वेन रूपेणाभिनिष्पद्यते । तत् ईदृशमहिमशाली दहराकाशः परमात्मा । मुमुक्षोरधिकारिणः स्वस्वरूपविज्ञानं च ब्रह्मविद्याङ्गभूतमवश्यापेक्षितमिति तद्विज्ञानस्यापि ब्रह्मविद्याफलमेव फलम् ॥१९॥

## अल्पश्रुतेरिति चेत्तदुक्तम् ॥ १ । ३ । २० ॥

ननु–'दहरोऽस्मिन्नन्तर आकाश' इत्याकाशस्याल्पत्वश्रुतेरयमाकाशो जीव एव भवितुमर्हति । स ह्यणुरल्पपरिमाणः । ज्ञानमयत्वात् प्रकाश-

---

### अन्यार्थश्च परामर्शः ॥ १ । ३ । १९ ॥

ननु– दहरविद्यावाक्ये 'एष संप्रसाद' इत्यादिना जीवस्य परामर्शः किमर्थ इति चेदुच्यते । अन्यार्थः–अन्योऽर्थः प्रयोजनं यस्य सोऽन्यार्थः, अस्ति प्रयोजनमन्यत्– जीवात्मनो यत्तिरोहितं स्वरूपं स्वोपसंपत्त्या तत्प्रादुर्भावहेतुत्वरूपं यत्परमात्मन ऐश्वर्यं तदवबोधनम् । ननु–प्रजापतिवाक्ये प्रतिपादितं अन्यदेव मुक्तस्य स्वरूपं, दहरविद्यायां च यद्यन्यदेव ततः परब्रह्मस्वरूपं, कथं तर्हि तत्र तस्योपास्यत्वकथनम् । दहरविद्याङ्गतया तद्विधानमिति ॥ १९ ॥

### अल्पश्रुतेरिति चेत्तदुक्तम् ॥ १ । ३ । २० ॥

ननु 'दहरोऽन्तर आकाश' इति दहराकाशस्याल्पताश्रुतिः कथमुपपद्यते इति चेत्तदुक्तं प्रागेव 'निचाय्यत्वादेवं व्योमवच्चे'ति ॥ २० ॥

स्वभावतया च आकाश इति व्यपदेशमर्हति । तस्मिन्यदन्तोऽपहत-पाप्मत्वादि तस्यान्वेष्टव्यताऽपि समुचितैव । इति चेन्न । अल्पत्वश्रुतौ समाधानमुक्तमेव प्राक् 'व्योमवच्चेति' । तदयं दहराकाशो हेयप्रत्यनीककल्याणैकतानः पुरुषोत्तम एव । न कर्मविवशः परंज्योतिरुपसंपद्य पश्चादाविर्भूतस्वरूपः प्रत्यगात्मा ॥ २० ॥

## अनुकृतेस्तस्य च ॥ १ । ३ । २१ ॥

तस्य दहराकाशस्य परस्य ब्रह्मण अनुकरणं गुणानुकरणं हि तदुपसन्नस्य जीवस्यास्य श्रूयते । 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्यादिना सत्यसङ्कल्पतया साम्यं हि निरूप्यते । तथा 'एतं सेतुं तीर्त्वा अन्धः सन्ननन्धो भवति विद्धः सन् अविद्धो भवति उपतापी सन्ननुपतापी भवती'ति अनन्धत्वादिगुणानुकरणम् । तदनुकर्तुः संप्रसादात् जीवादनुक्रियमाणो दहराकाशोऽन्य एव । अन्यत्रापि श्रूयते तदेतत् साम्यम् 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति ॥ २१ ॥

## अपि स्मर्यते ॥ १ । ३ । २२ ॥

अनुकरणं साम्यं स्मर्यते च—'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' इति ॥ २२ ॥

---

### अनुकृतेस्तस्य च ॥ १ । ३ । २१ ॥

प्रजापतिवाक्ये यदपहतपाप्मत्वादिकं प्रत्यगात्मनः श्रूयते तत्तु दहराकाशस्य परमात्मनोऽनुकृतेः—अनुकरणात् परमसाम्यात् । श्रूयते च 'निरञ्जनः परमं साम्यमुपैति' इति परमात्मसंपत्त्या तत्साम्यम् ॥ २१ ॥

### अपि स्मर्यते ॥ १ । ३ । २२ ॥

परमात्मप्राप्त्या परमसाम्यापत्तिः स्मर्यतेऽपि 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥' इति ॥२२॥

इति प्रदीपे दहराधिकरणम् ॥ ५ ॥

(अ. स.) दहरं पुण्डरीकं यद्वेश्मास्मिन् ब्रह्मणः पुरे ।
दहरोऽस्यान्तराकाशः तस्मिन्नन्तर्यदस्ति तत् ॥ १ ॥
अन्वेष्टव्यमितीदं तु छान्दोग्योपनिषच्छ्रुतम् ।
श्रूयमाणः स चाकाशः क इत्यत्र विचार्यते ॥ २ ॥
भूताकाशोऽथ जीवो वा ब्रह्म वेत्यत्र संशयः ।
प्रसिद्ध्यतिशयात् सोऽयं भूताकाश इति त्वसत् ॥ ३ ॥
तस्मिन् बाह्यमहाकाशसाम्यादीनामसम्भवात् ।
यावान्वा अयमाकाश इत्यादि श्रूयते ननु ॥ ४ ॥
नित्याविर्भूतनिर्धूतपाप्मत्वादिगुणाष्टकम् ।
श्रूयमाणं न चाकाशे न जीवे वाऽपि सम्भवेत् ॥ ५ ॥
अस्मिन् किमन्तरस्तीति पृष्ट्वा प्राह स्वयं श्रुतिः ।
यच्चास्येहास्ति यन्नास्ति सर्वमस्मिन् समाहितम् ॥ ६ ॥
द्युपृथिव्यादिकं सर्वमस्मिन्नेव समाहितम् ।
अस्मिन् सर्वेऽपि कल्याणगुणाः कामाः समाहिताः ॥ ७ ॥
यश्चैष दहराकाशस्तत्कल्याणगुणाश्च ये ।
अन्वेष्टव्यं तदुभयमित्येतत् सुव्यवस्थितम् ॥ ८ ॥
इतश्च दहराकाशः परमात्मेति सिद्ध्यति ।
सुषुप्तौ दहराकाशे प्रजानामन्वहं गतेः ॥ ९ ॥
शब्दश्च दहराकाशे ब्रह्मलोक इति श्रुतः ।
ब्रह्मैव लोको मुक्तानां सर्वभोगास्पदत्वतः ॥ १० ॥
किंवाऽऽनन्दमयात् तस्मात् भोग्यं लोके विशिष्यते ।
सेयं गतिश्च शब्दश्च दृष्टौ श्रुत्यन्तरेऽपि च ॥ ११ ॥
पर्याप्तमिदमेवैकं लिङ्गमत्र तु यच्छ्रुतम् ।
आत्मा स सेतुर्विधृतिरित्यस्मिन् महिमाऽपि च ॥ १२ ॥
श्रूयते ब्रह्मणः सर्वलोकधारणलक्षणः ।
तत्र तत्रायमाकाशशब्दो ब्रह्मणि विश्रुतः ॥ १३ ॥

नन्वयं दहराकाशो जीवान्नैवातिरिच्यते ।
उत्तरत्राप्यपहतपाप्मत्वादिगुणाश्रयः ॥ १४ ॥
श्रूयते स च यश्चायं जाग्रदादिदशान्वितः ।
सत्यं जीवः परंज्योतिः प्राप्य तस्य प्रसादतः ॥ १५ ॥
प्रादुर्भूतस्वरूपस्तु प्रोच्यते दहरस्त्वयम् ।
नित्याविर्भूतमहिमगणो ज्योतिः परं श्रुतः ॥ १६ ॥
अङ्गं दहरविद्यायाः स्वस्वरूपावबोधनम् ।
तद्युज्यते ब्रह्मविद्याफलेनैवोपसंहृतिः ॥ १७ ॥
य एष संप्रसादोऽस्मादिति जीवस्य कीर्तनम् ।
जीवस्य यद्विशुद्धं स्वं स्वरूपं प्राक् तिरोहितम् ॥ १८ ॥
तदस्य ब्रह्मणः प्राप्त्या प्रादुर्भवति नान्यथा ।
इत्यैश्वर्यख्यापनार्थमस्यैव परमात्मनः ॥ १९ ॥
दहरत्वं च महतो व्योमवत्तूक्तमेव तत् ।
परं ज्योतिः प्राप्तवतो जीवस्यास्य विशुद्धितः ॥ २० ॥
तेन साधर्म्यमात्रं तु श्रूयते स्मर्यतेऽपि च ।
तदयं दहराकाशः परमात्मेति सुस्थितम् ॥ २१ ॥

इति भाष्ये दहराधिकरणम् ॥ ५ ॥

---

## शब्दादेव प्रमितः ॥ १ । ३ । २३ ॥

श्रूयते कठवल्ल्याम्—'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य न ततो विजुगुप्सते । अङ्गुष्ठमात्रः पुरुषो ज्योति-

---

**शब्दादेव प्रमितः ॥ १ । ३ । २३ ॥**

'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य न ततो विजुगुप्सते' इति कठवल्ल्यां श्रूयते । अयमङ्गुष्ठपरिमाणेन प्रमितः न परमात्मा भवितुमर्हतीति चेन्न । परमात्मैव तु सः । शब्दादेवेदं गम्यते 'ईशानो भूतभव्यस्ये'ति । न हि भूतभव्येशानत्वं परमात्मनोऽन्यस्य ॥ २३ ॥

रिवाधूमकः । ईशानो भूतभव्यस्य स एवाद्य स उ श्वः । अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । तं स्वाच्छरीरात् प्रवृहेत् मुञ्जादिवेषीकां धैर्येण । तं विद्यात् शुक्रममृत'मिति । अङ्गुष्ठ-प्रमितोऽयं जीवो वा परमात्मा वेति संशयः । आह—जीव एवायम् । 'मध्य आत्मनी'ति देहस्थितिश्रवणात् । स्वात् शरीरादिति देहदेहि-भावश्रवणाच्चेति । जीवस्याङ्गुष्ठप्रमितताऽन्यत्रापि श्रुता 'प्राणाधिपः सञ्चरति स्वकर्मभिः अङ्गुष्ठमात्रो रवितुल्यरूपः सङ्कल्पाहङ्कारसमन्वितो यः' । इति । अत्रोच्यते—नायं जीवः । किन्तु सर्वेश्वरः परमात्मैव । 'भूतभव्यस्येशान' इति ईशितृत्वबोधकशब्दादेव । भूतभव्यस्येशानत्वश्रवणादिति यावत् । 'ज्योतिरिवाधूमक' इति अधूमकशब्दाच्च । जीवो ह्यनीशः, कर्मफलसुखदुःखवेष्टितः सधूमकज्योतिरिव । अयं तु अधूमकज्योतिरिव । शब्दादेवेत्येवकारेण ईशान इत्ययं शब्द एवेतरनिरपेक्षः परमात्मत्वे लिङ्गमिति गम्यते । कर्मवश्यत्वाद-नीशो जीवः, अतद्वशगत्वाच्चायं परमात्मा भवतीशानः । अयमर्थः श्रूयते च—'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीश'मिति । शरीरमध्ये द्वौ पुरुषौ तिष्ठतः । तत्रैक ईशः । अपरस्त्वनीशः ॥ २३ ॥

ननु कथं व्यापकस्याङ्गुष्ठप्रमितता, तत्राह—

## हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ १ । ३ । २४ ॥

अपरिच्छिन्नस्वरूपोऽप्येष परमात्मा उपासकानामनुग्रहाय उपासकहृदयकमले सन्निधत्ते । तत् हृदयपरिमाणापेक्षयाऽङ्गुष्ठप्रमितत्व-

---

ननु सर्वव्यापिनोऽस्याङ्गुष्ठप्रमितता कथम्? । तत्राह—

**हृद्यपेक्षया तु मनुष्याधिकारत्वात्** ॥ १ । ३ । २४ ॥

उपासनाशास्त्रं हि मनुष्यानधिकृत्य प्रवर्तते । तदुपासनस्य मनुष्याधिकारत्वात् मनुष्याणां हृदयस्याङ्गुष्ठपरिमितत्वात् स्थानानुगुण्येन उपासकानुग्रहाय हृदये सन्निहितस्य परमात्मनस्तथा प्रमितत्वमुपपद्यते ॥ २४ ॥

**इति प्रदीपे प्रमिताधिकरणम् ॥ ६ ॥**

मुपपद्यते । यद्यपि गजादीनां हृदयमङ्गुष्ठतोऽप्यधिकपरिमाणम् । अथाप्युपासनस्य मनुष्याधिकारत्वादेतदुपपद्यते इति ॥ २४ ॥

( अधिकरणत्रयं मध्येऽत्र, तत्र देवताधिकरणम् आद्यम् )

## तदुपर्यपि बादरायणः सम्भवात् ॥ १ । ३ । २५ ॥

मनुष्याधिकारत्वादित्युक्तम्, तत्प्रसङ्गादिदमद्य विचार्यते केषामधिकारः केषां नेति । यत्प्रमितमधिकृत्य वक्तव्यमवशिष्टं तत्परस्ताद्वक्ष्यते । तत्रायं संशयः–देवानां ब्रह्मोपासनेऽधिकारोऽस्ति न वेति । अत्राह–नास्तीति । कस्मात् ? अर्थित्वसामर्थ्ययोस्तेषामसम्भवात् । तापत्रयातुरस्य ह्यर्थिता, सा च शरीरयोग एव । सामर्थ्यमपि तद्योग एव । अशरीरस्य ध्यानाद्यनिष्पत्तेः । देवानां च न तद्योगः, तदनुपलम्भात् तत्र प्रमाणानुपलम्भाच्च । न च मन्त्रार्थवादौ तत्र प्रमाणम् । विधिशेषतया स्वार्थेऽप्रामाण्यात् । उद्देश्यकारकत्वमात्रेणापि विधिशेषतया निर्वाहात् । अत्रोच्यते । तदुपर्यपि–मनुष्याणामुपर्यपि देवानामप्यधिकारोऽस्ति । बादरायण एवमेव मन्यते । स्वस्य नाम्ना निर्देश उक्तार्थदार्ढ्याय । सम्भवात्–अर्थित्वसामर्थ्ययोस्तेषामपि सम्भवात् । यस्मात्तेषामप्यस्त्येव देहयोगः । सृज्यत्वाविशेषात् । सर्गगोचरता च तद्योगेनैव चेतनानाम् । नापि मन्त्रार्थवादयोर्विधिशेषता स्वार्थप्रहाणेन घटेत । न च स्वार्थबाधकं किमपि । स्तुतिर्वा स्वार्थपरित्यागे कथमुपपद्यते । श्रूयते चेन्द्रादेर्गुरूपसदनम्–'इन्द्रो ह वै देवानामभिप्रवव्राज विरोचनोऽसुराणां तौ ह असंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः; तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुः' इति । तस्माद्देवानामप्यस्त्येव ब्रह्मोपासनेऽधिकार इति बादरायणो मन्यते ॥२५॥

---

ननु–यदि मनुष्याधिकारिकं परमात्मोपासनं तर्हि देवानामुपासनं ततो मुक्तिश्चेति नोपपद्येत, तत्राह–

**तदुपर्यपि बादरायणः सम्भवात् ॥ १ । ३ । २५ ॥**

तदुपर्यपीति । मनुष्याणामुपर्यपि उपासने अधिकारोऽस्त्येव, अर्थित्वसामर्थ्ययोस्तेष्वपि सम्भवात् ॥ २५ ॥

## विरोधः कर्मणीति चेन्नानेकप्रतिपत्ते-र्दर्शनात् ॥ १ । ३ । २६ ॥

ननु—देवानां शरीराभ्युपगमे यागे ऋत्विजामिवेन्द्रादीनां देवानामपि हविर्भागादानाय सन्निधानापेक्षया युगपद्बहुषु यागेषु सन्निधानस्याशक्यतया एकदेवताकेषु देशभेदेन पुरुषभेदेन क्रियमाणेषु कर्मसु विरोधः स्यात्, इति चेन्न । अणिमाद्यैश्वर्यशालिनां देवानां युगपदनेकशरीरप्रतिपत्तेर्दर्शनात् । इन्द्रादयो देवताः प्रकृष्टैश्वर्याः युगपदनेकशरीरपरिग्रहे समर्थाः, युगपदनेकेषु यागेष्वदृश्येन शरीरेण सन्निधानं नानुपपन्नमिति भावः । यद्वा—देवानां सशरीरत्वे विरोधः कर्मणीत्येषा मन्दानां शङ्का, न हि द्रव्याणामिव देवानां दानादानादिक्रियाप्रतिसम्बन्धितया यागेऽङ्गभावः, अपि तूद्देश्यतामात्रेण, सा च प्रतिपत्तिविशेषः । युगपदनेकेषामेकस्मिन् सा प्रतिपत्तिरविरुद्धा दृष्टा । स्थिरासनस्थमेकं बहवो हि दूरात्प्रणिपतन्ति, तेषां तस्मिन् पूज्यताप्रतिपत्तिर्युगपद्भवति । तन्न कर्मणि विरोधः ॥ २६ ॥

## शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानु-मानाभ्याम् ॥ १ । ३ । २७ ॥

विरोध—इत्यनुवर्तते । देवानां शरीराभ्युपगमे मास्तु कर्मणि

---

**विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ १ । ३ । २६ ॥**

ननु उपासने नास्ति देवानां सामर्थ्यम् । तद्धि शरीरेन्द्रियसापेक्षम् । न च तेषां शरीरम् । सति तस्मिन् कर्मणि विरोधः स्यात् । युगपदनेकदेशेष्वनेककर्तृकेषु यज्ञादिषु तत्तद्देवतानामिन्द्रादीनां सन्निधानानुपपत्तेः । शरीरिणां हि न युगपदनेकदेशेषु सन्निधानं घटेत । तत् कर्मणि विरोधापातात् अशरीराणां तेषां सामर्थ्यं दुर्घटमिति चेन्न । अनेकप्रतिपत्तेर्दर्शनात्—तैर्युगपदनेकशरीरपरिग्रहोपपत्तेः । सौभर्यादीनामप्यनेकशरीरप्रतिपत्तिर्हि दृष्टा ॥ २६ ॥

**शब्द इति चेन्नातःप्रभवात् प्रत्यक्षानुमानाभ्याम् ॥१।३।२७॥**

विरोध इत्यनुवर्तते । मास्तु कर्मणि विरोधः, शब्दे तु विरोधः स्यात् । शब्दे—

विरोधः । शब्दे तु वैदिकेऽस्त्येव विरोधः । स ह्यपौरुषेयो नित्य इष्टः, तत्र भवति विरोधः । इन्द्रादिशब्दानां योऽर्थः स चेत्सशरीरः, तस्य जननमरणावश्यम्भावेन जननात्प्रागर्थविधुरः प्रयोगपथं नावतरेत् । देवदत्तादिशब्दवत् । जननादनन्तरमेव अयं देवदत्तोऽयं यज्ञदत्तोऽयं डित्थ इति सङ्केतः क्रियते । तदनन्तरमेव स शब्दो लोके प्रवर्तते । तथैव कस्यचिद्देवजातीयस्य जननानन्तरमेव इन्द्र इति सङ्केतः पिण्डविशेषे प्रवर्तते । तस्मात्ततः पूर्वमिन्द्रशब्दस्य प्रवृत्तिरेव नेति । वेदे प्रयुज्यमानानामिन्द्रादिशब्दानामर्थोपस्थितिमूलकत्वेन सादित्वादपौरुषेयत्वमनादित्वं च न स्यात् इति चेन्न । अतः प्रभवात् । अतः— वैदिकादेवेन्द्रादिशब्दादिन्द्राद्यर्थस्य प्रभवात् । अयं भावः—इन्द्रादिशब्दो न देवदत्तादिशब्दवद्व्यक्तिवाची । अपितु गवादिशब्दवदाकृतिवाची । गवादेर्जननात्प्राक् मरणानन्तरं च व्यक्तिविलयेऽपि जातेरविलयादनपेतार्थ एव सः । तथैवेन्द्रादिशब्दा न केवलं व्यक्तिवाचिनः ।

---

वेदवचने । प्रलये सर्वेषां प्राणिनां विलयेन देवानामपि मनुष्यादिवत् शरीरित्वे प्रलये विनाशावश्यंभावेन अनादिनिधने वेदे इन्द्रादिदेवतावबोधकशब्दश्रवणानुपपत्तेः । तथाविधशब्दश्रवणे च तस्यानित्यत्वापातात् । इति चेन्न । अतः प्रभवात्—न तावता वेदस्यानित्यत्वप्रसङ्गः । अत एव—वेदात् नित्यादेव इन्द्रादीनां प्रभवात् । **अयमर्थः**—इन्द्रादिशब्दा न देवदत्तादिवत् व्यक्तिवाचकाः । अपि तु गवादिशब्दवदाकृतिवाचकाः । इन्द्रादयो ह्याधिकारिकपुरुषाः । तेषां[1] शब्दानामिवैतेषामपि शब्दानां वेदे श्रवणमात्रेण न तस्यानित्यत्वप्रसङ्गः, प्रत्युत आनुकूल्यमेव । यतस्तानेवाकृतिवाचकान् शब्दान् वेदे श्रूयमाणान् विधाता सर्गादौ पर्यालोच्य पूर्वपूर्वसमाननामरूपान् सृजति । इदं च प्रत्यक्षानुमानाभ्यां—श्रुतिस्मृतिभ्यामवगम्यते । तथा हि 'वेदेन नामरूपे व्याकरोत् सतासती' 'स भूरिति व्याहरत् स भुवमसृजत स भुवरिति व्याहरत् सोऽन्तरिक्षमसृजत ।' 'अनादिनिधना ह्येषा वागुत्सृष्टा स्वयंभुवा । आदौ वेदमयी दिव्या यतः सर्वाः प्रसूतयः' इति ॥ २७ ॥

---

**टिप्प०**—१ गवादिशब्दानामिव ।

अपि तु जातिवाचिनः । अतो धाता वैदिकानेवेन्द्रादिशब्दान् स्मृत्वा तदर्थांश्चावधार्य प्रतिकल्पं पूर्वपूर्वसजातीयानिन्द्रादिकान् सृजति । तद्वैदिकानामिन्द्रादिशब्दानां नार्थविधुरता, नाप्यनादित्वभङ्गः । तत्सुस्थितं तावदपौरुषेयत्वम् । तदिदं प्रत्यक्षानुमानाभ्यां व्यक्तमवगम्यते । प्रत्यक्षं श्रुतिः, अनुमानं स्मृतिः । तथा च श्रूयते—'स भूरिति व्याहरत्, भूमिमसृजत', 'वेदेन रूपे व्याकरोत् सतासती' इत्यादिका । स्मर्यते च—'सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् । वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे' इति ॥ २७ ॥

## अत एव च नित्यत्वम् ॥ १ । ३ । २८ ॥

अत एव—इन्द्रवसिष्ठविश्वामित्रादिशब्दानामाकृतिवाचित्वादेव वेदस्य नित्यत्वमप्युपपद्यते । अयं भावः—यद्यपि 'मन्त्रकृतो वृणीते' 'नम ऋषिभ्यो मन्त्रकृद्भ्यः' 'अयं सोऽग्निरिति विश्वामित्रस्य सूक्तं भवति' इत्यादिभिर्वसिष्ठादीनां मन्त्रकृत्त्वं प्रतीयते । अथाप्यनादित्वे न विरोधः । यद्विधाता एतैरेव 'मन्त्रकृतो वृणीते' इत्यादिभिर्वैदिकैः शब्दैर्मन्त्रप्रवर्तकानां वसिष्ठादीनामाकृतिं स्मृत्वा, कल्पादौ पूर्वपूर्वाकृतिकान् मन्त्रप्रकाशनज्ञानशक्तिविशेषयुक्तान् सृजति, ते च तांस्तान् मन्त्रविशेषान् स्मृत्वा स्मृत्वा प्रवर्तयन्ति, अतो वेदस्य नानित्यत्वम् ॥ २८ ॥

ननु—कल्पे कल्पे प्रजापतिस्तथाविधान् मन्त्रकृतः सृजतीत्युपपन्नं नाम । महाप्रलये तत्तदर्थस्मृतिपूर्वकसृष्टिसम्प्रदायप्रवर्तकस्य तस्याप्यभावेन शब्दस्य चाभावात् कथं नित्यत्वमित्यत्राह—**समानेति**—

---

**अत एव च नित्यत्वम्** ॥ १ । ३ । २८ ॥

यत एवेन्द्रवसिष्ठादिशब्दानामाकृतिवाचकत्वं, प्रतिकल्पं वेदशब्देभ्य एव तत्तन्नामरूपांस्तानवबुध्य विधातुस्तत्तत्स्रष्टृत्वं च, तत एव 'मन्त्रकृतो वृणीते' 'नम ऋषिभ्यो मन्त्रकृद्भ्यः' 'विश्वामित्रस्य सूक्तं भवती' त्यादिश्रवणेऽपि वेदस्य नित्यत्वमुपपद्यते । ते च विश्वामित्रादय आधिकारिकाः पुरुषास्तानि तानि सूक्तानि समवलोक्यार्षया दृष्ट्या श्रावयन्तीति मन्त्रकृत्त्वं तेषाम् ॥ २८ ॥

## समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शना-त्स्मृतेश्च ॥ १ । ३ । २९ ॥

आवृत्तावपि–सर्गस्यावृत्तावपि महाप्रलयानन्तरं पुनः सर्गेऽपि, अविरोधः–वैदिकशब्दस्य नित्यत्वे न कश्चिद्विरोधः । कस्मात्? समाननामरूपत्वादेव । कल्पादाविव सर्गादावपि सृज्यानां समाननामरूपत्वादेव । स्रष्टा सर्वेश्वरोऽपि पूर्वपूर्वनामरूपादीन् प्रजापतिप्रभृतीन् संस्कारनिरपेक्षं वेदार्थान् अनुसन्दधानः सृजति । उपदिशति च वेदं समानानुपूर्वीकम् । अतो नानित्यत्वप्रसङ्गः । इदमेव च वेदस्य नित्यत्वं यत् एकानुपूर्वीकत्वम् । श्रुतेः स्मृतेश्चेदमवगम्यते । श्रुतिश्चेयम्–'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति । स्मृतिश्च–"आसीदिदं तमोभूतं × × × × सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः" इत्यादिः ॥ २९ ॥

इति भाष्ये देवताधिकरणम् ॥ ७ ॥

---

## समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ १ । ३ । २९ ॥

ननु–नाम नैमित्तिकप्रलये तदिदमुपपद्यताम्, प्राकृतप्रलये विधातुः प्रजापतेरपि विनाशात् शब्दमात्रस्य च नाशात् वेदनित्यत्वविरोधः स्यादेवेति चेन्नेत्याह–**समाने**ति । आवृत्तावपि–प्राकृतसर्गावृत्तावपि हिरण्यगर्भादीनामपि सृज्यानां समाननामरूपत्वात् । परमात्मा भगवान् सर्वेश्वरः प्रकृतौ विलीनं जगदखिलं पुनः सृजन् तमेव वेदं तत्तदानुपूर्वीकं पुनः संस्मरन् तेषां तेषां सृज्यानां नामरूपे च तेभ्य एव स्मृतेभ्यः समवधार्य सृजति । सृष्ट्वा च महदादि हिरण्यगर्भान्तं तस्मै हिरण्यगर्भाय तं वेदमुपदिशति, ततश्च स देवादीन् तांस्तानाधिकारिकांश्चेन्द्रादीन् सृजति । तथा च श्रुतिस्मृती 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' 'आसीदिदं तमोभूतं ××× सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्यमपासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः' इति ॥ २९ ॥

**इति प्रदीपे देवताधिकरणम् ॥ ७ ॥**

देवानामपि विद्यास्वधिकारोऽस्तीत्युक्तम् । अथ विद्याविशेषे देवानामधिकारो नास्तीत्येतन्निराक्रियते—

**मध्वादिष्वसम्भवादनधिकारं जैमिनिः॥ १ । ३ । ३० ॥**

श्रूयते छान्दोग्ये मधुविद्या—'असौ वा आदित्यो देवमधु' इत्यारभ्य 'तद्यत्प्रथमममृतं तद्वसव उपजीवन्ति × × × × एतदेवामृतं दृष्ट्वा तृप्यन्ति स य एतदमृतमेवं वेद वसूनामेवैको भूत्वाऽग्निना मुखेनैतदेवामृतं दृष्ट्वा तृप्यती'त्यादिना । तत्रादित्यगतानां रोहितादिरूपात्मकानाममृतानां पञ्चानां क्रमात् वस्वादिदेवगणभोग्यत्वेनोपासना, वस्वादिपदप्राप्तेः फलत्वं चोक्तम् । अस्यां विद्यायां वस्वादीनां देवानां नाधिकारः । नहि कर्मकर्तृभाव एकस्य घटेत । उपास्यकोटौ हि वस्वादीनामनुप्रवेशोऽस्यां श्रूयते । फलं च श्रूयमाणं नोपपद्यते । नहि वस्वादीनामेव सतां वस्वादिपदप्राप्तिरुद्देश्या भवितुमर्हति । तन्न तस्यां विद्यायां वस्वादीनामधिकार इति जैमिनिर्मन्यते ॥ ३० ॥

**ज्योतिषि भावाच्च ॥ १ । ३ । ३१ ॥**

ज्योतिषि—ज्योतिषां ज्योतिषि परब्रह्मणि, भावात्—उपासनसद्भा-

---

**मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ १ । ३ । ३० ॥**

नन्वस्तु एवमर्थित्वसामर्थ्ययोर्देवेष्वपि संभवात् ब्रह्मविद्यायामधिकारः । किन्तु न सर्वासु विद्यासु इत्याशयेनाशङ्कते—**मध्वादि**ष्विति । श्रूयते छान्दोग्ये—वस्वादीनामुपास्यता 'असौ वा आदित्यो देवमधु' इत्युपक्रम्य 'तद्यत्प्रथममम‍ृतं तद्वसव उपजीवन्ति ××× 'स एतदमृतमेवं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यती'ति । न तेषां तासु विद्यास्वाधिकारः, स्वतो वस्वादीनां सतां वस्वाद्युपासनानुपपत्तेः । फलस्य चानन्वयात् । वस्वादिपदप्राप्तिः वस्वादिभ्योऽन्येषां हि फलं भवितुमर्हतीति । तदेतज्जैमिनेर्मतम् ॥ ३० ॥

**ज्योतिषि भावाच्च ॥ १ । ३ । ३१ ॥**

ज्योतिषि—परज्योतिषि परब्रह्मण्येव तेषामुपासनसद्भावाच्च श्रूयमाणान्नास्त्यस्यां विद्यायामधिकारः । तथा च श्रूयते—'तं देवा ज्योतिषां ज्योतिरायुर्होपासते' इति ॥ ३१ ॥

वात् श्रूयमाणात् । अयं भावः—अर्थित्वसामर्थ्याभ्यां सामान्यतो ब्रह्मविद्यायां देवानामप्यधिकारे सिद्धेऽपि 'तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृत'मिति विशेषतः श्रवणं देवा ज्योतिषां ज्योतिरेवोपासते इति परिसंख्यां गमयति । तन्मधुविद्यादिषु नाधिकारो देवानामिति भावः ॥ ३१ ॥

अथ स्वमतं बादरायणः प्राह—

## भावं तु बादरायणोऽस्ति हि ॥ १ । ३ । ३२ ॥

मध्वादिषु देवानामप्यधिकारसद्भावं बादरायणो मन्यते । अस्ति हि वस्वादीनामेव सतामपि उपासककोटावन्वयः, फलान्वयश्च । अयमाशयः—इयं मधुविद्या ब्रह्मविद्यैव 'य एतामेवं ब्रह्मोपनिषदं वेदे'ति उपसंहारे श्रवणात् । 'न ह वा असा उदेति न निम्लोचति सकृद्दिवा हैवास्मै भवति' इति ब्रह्मविद्याफलश्रवणाच्च । देवमधुत्वेनेह आदित्यशरीरकं ब्रह्मैवोपदिश्यते । तच्च देवमधु कार्यावस्थं कारणावस्थं चोपास्यतया विधीयते । तत्र 'असौ वा आदित्यो देवमधु' इत्यारभ्य 'अथ तत ऊर्ध्व उदेत्य नैवोदेता' इत्यतः प्राक् कार्यावस्थादित्यशरीरकब्रह्मोपासनम् 'अथ तत' इत्यादिना कारणावस्थादित्यशरीरकब्रह्मोपासनमुपदिश्यते । एवं उभयधा देवमधुभूतब्रह्मोपासकानां वस्वादिपद-

---

**भावं तु बादरायणोऽस्ति हि ॥ १ । ३ । ३२ ॥**

अत्रोच्यते—अस्ति हि तेषामपि तासु विद्यास्वधिकारः, मधुविद्याऽपि ब्रह्मविद्यैव हि, 'य एतामेवं ब्रह्मोपनिषदं वेदे'ति ह्युत्तरत्र श्रूयते । ननु वसूनां सतां वसूनामन्यतमत्वावाप्तिः फलं कथम् ? । कल्पान्तरेऽपि वस्त्वादिपदप्राप्तिपूर्वकब्रह्मावाप्तिः फलं भवितुमर्हति । आदित्यवस्वादिशरीरकतया परब्रह्मण एवोपास्यत्वे तात्पर्यात् वस्वादीनामपि सतां स्वशरीरकब्रह्मोपासने न काप्यनुपपत्तिः । तत् अधिकारसद्भावं बादरायणो मन्यते । अस्यैव पक्षस्य सिद्धान्तत्वं ज्ञापयितुं स्वनाम्नो निर्देशः ॥ ३२ ॥

इति प्रदीपे मध्वधिकरणम् ॥ ८ ॥

प्राप्तिपूर्वकब्रह्मप्राप्तिः फलम् । वस्वादीनां सतामपि कल्पान्तरे पुनर्वस्वादिभावो नानुपपन्नः । कल्पान्तरेऽपि वस्वादिपदमनुभूयान्ते ब्रह्म प्राप्नोतीत्येतत् । तथा वस्वादीनां सतामपि स्वात्मभूततया ब्रह्मण उपास्यत्वसम्भवेन कर्मकर्तृभावोऽप्यविरुद्धः । अस्या मधुविद्यायाः शब्दार्थ उपनिषद्विवरणे बोध्यः ॥ ३२ ॥

॥ इति भाष्ये मध्वधिकरणम् ॥ ८ ॥

## शुगस्य तदनादरश्रवणात् तदाद्रवणात्सूच्यते हि ॥ १ । ३ । ३३ ॥

मनुष्याणामुपर्यप्यधिकार उक्तः । अथ मनुष्येषु केषाञ्चिदनधिकार उच्यते । ननु—ब्रह्मविद्यायां शूद्रस्याप्यस्ति अधिकारः । अर्थित्वं सामर्थ्यं च तस्यापि हि साधारणमेव । तापत्रयाभिघातादर्थित्वम्, शरीरयोगाच्च सामर्थ्यम् । नन्वग्नावनधिकारात् ब्रह्मविद्याङ्गभूतकर्मानुष्ठानानुपपत्तेर्न ब्रह्मविद्यासम्भवः । नैवम् । अग्निसाध्यकर्मानुष्ठाना-

---

## शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥ १ । ३ । ३३ ॥

शूद्रस्य वेदे अनधिकारश्रवणात् औपनिषदब्रह्मविद्यायामनधिकारं आशङ्कानिरसनमुखेन द्रढयति—'**शुगि**'ति । ननु 'आजहारेमाः शूद्र अनेनैव मुखेनालापयिष्यथा' इति शूद्रं प्रत्युपदेशे रैक्वस्य प्रवृत्तिः श्रूयते इति चेन्न । शूद्रेति संबोधनं नेह जातियोगमभिप्रेत्य, किन्तु हंसोक्तानादरवाक्यश्रवणजनितं शोकोद्रेकयोगं प्रवृत्तिनिमित्तमभिप्रेत्य । जानश्रुतिर्हि धार्मिकोऽपि नायं ब्रह्मवित् किमेनं रैक्वमिव मन्यसे ? यस्यातिक्रमणेन स्यादस्माकमपराधः, इति हंसवाक्यं श्रुत्वा निर्विण्णः सपद्येव उपायनहस्तो रैक्वस्य समीपं समागतवान् । तदस्य शोकोद्रेकं ब्रह्मविद्योपदेशे पात्रताप्रदर्शकं महर्षिरालक्ष्य तेनैव गुणेन संबोधयति शूद्रेति । **शोचतीति शूद्रः** । सूत्रार्थस्तु—अस्य जानश्रुतेस्तदनादरश्रवणात्—तस्य हंसस्यानादरवाक्यश्रवणात् शुक्—शोकः समजनि, शोकश्चास्य तदाद्रवणात्—रैक्वं प्रत्याद्रवणात् सूच्यते—गम्यते हि इति ॥ ३३ ॥

सम्भवेऽपि स्ववर्णोचितब्राह्मणसेवादिलक्षणकर्मानुष्ठानसम्भवात् । सर्वत्र स्ववर्णोचितकर्मणामेव ह्यङ्गता । ननु वेदेऽनधिकारात् ब्रह्मस्वरूपविज्ञानासम्भवेन ब्रह्मोपासनं तस्य दुःशकम् । नैवम् । इतिहासपुराणेषु श्रवणाधिकारात्तन्निष्पत्तेः । विदुरादयश्च ब्रह्मनिष्ठाः स्मर्यन्ते । श्रूयते च ब्रह्मविद्यायामधिकारः शूद्रस्य—'आजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथा' इति शूद्रं सम्बोध्य ब्रह्मविद्याया उपदेशात् ।

अत्रोच्यते—शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हीति । श्रुतौ शूद्रेति पदं न जातियोगमभिप्रेत्य प्रवृत्तम् । किन्तु शोकयोगलक्षणमवयवार्थमभिप्रेत्य । शोचतीति शूद्र इति तु व्युत्पत्तिः । 'शुचेर्दश्चेति' चकारस्य दकारादेशे चेत्यनेन प्रकरणसिद्धे रक्प्रत्यये समाकृष्टे पूर्वसूत्राद्दीर्घश्चेत्यंशानुवृत्त्या दीर्घे च सिद्धे शूद्र इति सिध्यति । केचित् नैरुक्तप्रक्रियया शूद्रशब्दनिष्पत्तिं वर्णयन्ति । अस्य जानश्रुतेः शोकः—विद्याभावप्रयुक्तनिर्वेदलक्षणः गुरूपसदनहेतुभूतो यः, तमालक्ष्य रैक्वः शूद्रेत्येनं संबोधितवान् । स चास्यास्तीति तदनादरश्रवणात् तदाद्रवणाच्चावगम्यते । तस्य हंसस्य येयमनादरोक्तिः तच्छ्रवणात्, अनादरादरोक्तिश्रवणसमनन्तरं सपदि रैक्वस्य समीपं प्रति आद्रवणाच्चावगम्यते । तथाहि जानश्रुतेर्धर्मनिष्ठतामालक्ष्य प्रसन्नौ द्वौ तस्य ब्रह्मविद्यायां श्रद्धां शुश्रूषां चोत्पादयितुं परिगृहीतहंसवेषौ निशि शयानस्य तस्योपरि विहायसि पतन्तौ स यथा शृणुयात्तथा मिथ इदमूचतुः, तत्रैकः प्राह—'भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीः, तत्त्वा मा प्रधाक्षीदि'ति परः प्रत्युवाच—'कम्वरे एनमेतत्सन्तं सयुग्वानमिव रैक्वमात्थ × × × यथा कृतायविजितायाधरेऽयाः संयन्त्येवमेनं सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त' इति । तदिदं तयोरुक्तिप्रत्युक्तिरूपं वचनं ब्रह्मविद्यातदभावनिबन्धनादरानादरोत्कर्षापकर्षावबोधकं श्रुतवतो जानश्रुतेर्धर्मनिष्ठया शुद्धान्तःकरणस्य निर्वेदलक्षणः शोकः समजायत । तेन शोकेन सपदि रैक्वमभिदुद्राव ।

तदस्य शुक्—शोकः निर्वेदः अनादरश्रवणात् कारणादाद्रवणाच्च कार्यादवगम्यते । तमिमं शोकं स्वोपसदनेऽधिकारं समालक्ष्य सम्बोधयति रैक्कः 'शूद्र' इति । न जातियोगमभिप्रेत्य । एतेनान्यासु ब्रह्मविद्यास्वनधिकारेऽपि शूद्रशब्दश्रवणात् अस्यामेकस्यामधिकारोऽस्त्येवेति शङ्का निरस्ता । ननूपासनस्य मनोवृत्तिसाध्यत्वात् कुतो नाधिकारः शूद्रस्य ? । सामर्थ्याभावात् । विद्या ह्येषा औपनिषदी । उपनिषदध्ययने च नाधिकारस्तेषाम् । अध्ययनगृहीततदर्थावगम एव चाङ्गं ब्रह्मविद्यायाः । इतिहासपुराणयोर्वेदार्थावगमे उपकारकतामात्रम् । इतिहासपुराणश्रवणादभ्यनुज्ञातादस्य पापप्रक्षयमात्रम् । तदस्यां ब्रह्मविद्यायां औपनिषद्यां नाधिकारः शूद्रस्य ॥ ३३ ॥

ननु योगाद्रूढिर्बलीयसी, बलीयस्याः परित्यागे को हेतुः ? तत् विशिष्य शूद्रशब्दश्रवणादस्यामेकस्यामधिकारः कल्प्य इत्यत्राह—

## क्षत्रियत्वगतेश्च ॥ १ । ३ । ३४ ॥

रूढ्यर्थस्वीकारे बाधकमेतत्, यदिहास्य जानश्रुतेः क्षत्रियत्वं दानपतित्वपक्वान्नप्रदत्वक्षत्तृप्रेषणजनपदाधिपत्यैः श्रूयमाणैर्व्यक्तं गम्यते । तथा च श्रूयते—'श्रद्धादेयो बहुदायी बहुपाक्य आस स ह सर्वत आवसथान्मापयाञ्चक्रे सर्वत एवमेतदन्नमत्स्यन्ती'ति 'स ह सञ्जिहान एव क्षत्तारमुवाच' इति च ॥ ३४ ॥

---

### क्षत्रियत्वगतेश्च ॥ १ । ३ । ३४ ॥

शूद्रजातियोगे विरोधिलिङ्गमप्यस्ति, क्षत्रियत्वं ह्यस्यावगम्यते । तथा च श्रूयते—'जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस स हि सर्वत आवसथान् मापयाञ्चक्रे सर्वत एव मे····अत्स्यन्ती'ति । तथा 'इयं जायाऽयं ग्रामः' इति । तदिदं पक्वान्नदातृत्वं ग्रामादिवितरणं च क्षत्रियत्वव्यञ्जकम् ॥ ३४ ॥

उक्तमुपक्रमावगतं लिङ्गम् । अथोपसंहारगतं लिङ्गमाह—

**उत्तरत्र चैत्ररथेन लिङ्गात् ॥ १ । ३ । ३५ ॥**

उत्तरत्र 'अथ ह शौनकं कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे' इत्यादिना काचिदाख्यायिका श्रूयते । तथा चास्यां विद्यायां कापेयाभिप्रतारिणोर्ब्रह्मचारिणश्च सम्बन्धोऽवगम्यते । तेषु परिविष्यमाणयोर्द्वयोर्भिक्षणाल्लिङ्गात्त्रैवर्णिकत्वमर्थसिद्धम् । तत्राभिप्रतारिणश्चैत्ररथत्वं क्षत्रियत्वं च कापेयसाहचर्याल्लिङ्गादवगम्यते । ननु कापेयसाहचर्यश्रवणात् कथं तदवगमः? अन्यत्र 'एतेन ह वै चैत्ररथं कापेया अयाजयन्' 'तस्माच्चैत्ररथो नामैकः क्षत्रपतिरजायत' इति हि चैत्ररथस्य क्षत्रियत्वं कापेयपुरोहितकत्वं चावगम्यते । तदेवमुत्तरत्र संवर्गविद्यायामस्यां ब्राह्मणक्षत्रिययोः सम्बन्धे गम्यमाने आदावपि तयोरेव सम्बन्धश्रवणं न्याय्यमिति जानश्रुतिना क्षत्रियेणैव भाव्यमिति भावः ॥ ३५ ॥

शूद्रस्याधिकारशङ्काप्रतिक्षेपेणानधिकारः समर्थितः । सोऽयमनधिकारः श्रुतिस्मृतिसमनुग्रहीत इत्याह—

---

**उत्तरत्र चैत्ररथेन लिङ्गात् ॥ १ । ३ । ३५ ॥**

अस्यामेवोपदिश्यमानायां संवर्गविद्यायामुत्तरत्र 'अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे' इति श्रूयते । तत्र योऽभिप्रतारी स चैत्ररथ इति कापेयसाहचर्याल्लिङ्गादवगम्यते । ननु कथमिदं चैत्ररथत्वे लिङ्गम् । अन्यत्र 'चैत्ररथं कापेया अयाजयन्' इति याज्ययाजकभावसंबन्धस्य चैत्ररथकापेययोरवगमात् । चैत्ररथश्च क्षत्रिय इति 'चैत्ररथो नामैकः क्षत्रपतिरजायत' इति श्रवणादवगम्यते । इत्थं च संवर्गविद्यायां ब्राह्मणक्षत्रिययोः संबन्धावगमात् रैक्केन ब्रह्मर्षिणा सहचरितेन जानश्रुतिना क्षत्रियेणैव भाव्यमित्यवगम्यते ॥ ३५ ॥

**संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ १ । ३ । ३६ ॥**

ब्रह्मविद्योपदेशप्रकरणे तत्र तत्र 'उपत्वानेष्ये' 'तं होपनिन्ये' इत्युपनयन-

## संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ १।३।३६ ॥

ब्रह्मविद्याप्रकरणे तु 'उपत्वानेष्ये' 'तं होपनिन्ये' इत्युपनयनसंस्कारो विद्याङ्गतया परामृश्यते । उपनयनाभावश्च शूद्रस्य स्मर्यते–'न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति' 'चतुर्थो वर्ण एकजातिर्न च संस्कारमर्हति' इत्यादिना ॥ ३६ ॥

## तदभावनिर्धारणे च प्रवृत्तेः ॥ १ । ३ । ३७ ॥

जाबालस्य विद्याग्रहणाय स्वसमीपमुपगतस्य विद्योपदेशात् प्राक् शूद्रत्वाभावमवधार्यैव विद्योपदेशे गुरुः प्रावर्तत । तथा हि श्रूयते–'नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहर उपत्वानेष्ये'इति ॥३७॥

## श्रवणाध्ययनार्थप्रतिषेधात् ॥ १ । ३ । ३८ ॥

'तस्मात् शूद्रसमीपे नाध्येतव्य'मिति वेदश्रवणतदध्ययनतदर्थावगमानां प्रतिषेधात् न शूद्रस्य ब्रह्मविद्यायामधिकारः, समीप एव चेदध्ययनं प्रतिषिद्धं क सम्भवः श्रवणादेः ॥ ३८ ॥

## स्मृतेश्च ॥ १ । ३ । ३९ ॥

स्मर्यते च शूद्रस्य वेदश्रवणादौ दण्डः–'अथ हास्य वेदमुपशृण्वतस्त्र-

---

संस्कारपरामर्शात् शूद्रस्य 'न च संस्कारमर्हति' इति स्मृतिषु तदभावाभिलापाच्च न जानश्रुतिः शूद्रः ॥ ३६ ॥

### तदभावनिर्धारणे च प्रवृत्तेः ॥ १ । ३ । ३७ ॥

ब्रह्मविविदिषयोपसन्नानां यस्तदभावः–शूद्रत्वाभावः, तस्य निर्धारणे गुरूणां प्रवृत्तेश्च । तथा च श्रूयते—'तं होवाच किंगोत्रो नु सोम्यासी' त्यादिना सा प्रवृत्तिर्गुरोर्गौतमस्य ॥ ३७ ॥

### श्रवणाध्ययनार्थप्रतिषेधात् ॥ १ । ३ । ३८ ॥

शूद्रस्य वेदश्रवणतदध्ययनतदर्थानुष्ठानप्रतिषेधाच्च । तथा च श्रूयते 'पद्यु ह वा एतत् श्मशानं यच्छूद्रः तस्मात् शूद्रसमीपे नाध्येतव्यम्' इति ॥ ३८ ॥

### स्मृतेश्च ॥ १ । ३ । ३९ ॥

स्मरन्ति च महर्षयो वेदश्रवणतदध्ययनादिष्वनधिकारं शूद्रस्य ॥ ३९ ॥

इति प्रदीपे अपशूद्राधिकरणम् ॥ ९ ॥

पुजतुभ्यां श्रोत्रप्रतिपूरणं उदाहरणे जिह्वाच्छेदः धारणे शरीरभेदः' इति ॥ ३९ ॥

इति भाष्ये अपशूद्राधिकरणम् ॥ ९ ॥

---

(प्रमिताधिकरणशेषः)

## कम्पनात् ॥ १ । ३ । ४० ॥

प्रासङ्गिकीमधिकारानधिकारकथां परिसमाप्य प्रकृतमङ्गुष्ठप्रमितं विचारयति । इतश्चाङ्गुष्ठप्रमितः परमात्मैव, कम्पनात् । श्रूयते हि 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा' इत्यनयोर्वाक्ययोर्मध्ये 'यदिदं किञ्च जगत् सर्वं प्राण एजति निःसृतम् । महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ती'ति । प्राणात् सर्वस्य प्राणनहेतुभूतादस्मादङ्गुष्ठप्रमितान्निः सृतं तस्मिन्नेव स्थितं कृत्स्नं जगदुद्यतात् महतो भयाद्वज्रादिव यतो भीत्या एजति–कम्पते स्वस्वकार्ये प्रवर्तते इति च तदर्थः । 'भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चम' इति च । तदयमङ्गुष्ठप्रमितः परमात्मैव ।

अस्य सूत्रस्याधिकरणान्तरपरतया व्याख्यानं तु नोचितम् । प्राणशब्दस्य परमात्मपरत्वमनेकाधिकरणसिद्धमेवेति तत्र सन्देहानवतारात् ॥ ४० ॥

---

प्रसक्तं अधिकारिविचारं परिसमाप्य प्रमिताधिकारणविचारशेषं प्रवर्तयति ।

### कम्पनात् ॥ १ । ३ । ४० ॥

योऽयमङ्गुष्ठप्रमितः स परमात्मैव । कम्पनात्–'यदिदं किञ्च जगत् सर्वं पाण एजति निःसृतम् । महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ती'ति अङ्गुष्ठप्रमितात्तस्मात् तत्प्रशासनवशगस्य सर्वस्य जगतः कम्पनश्रवणात् ॥४०॥

## ज्योतिर्दर्शनात् ॥ १ । ३ । ४१ ॥

इतश्चाङ्गुष्ठप्रमितः परमात्मैव, अङ्गुष्ठप्रमितप्रकरणे ज्योतिषः परमात्मासाधारणदीप्तिविशेषस्य दर्शनात् । श्रूयते हि–'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति ।

सूत्रमिदं 'य एष सम्प्रसादोऽस्मात् शरीरात् समुत्थाय परं ज्योतिरूपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति वाक्यस्थज्योतिःशब्दार्थविचाररूपाधिकरणान्तरतया केचिद्व्याचक्षते । 'उत्तराच्चेदाविर्भूतस्वरूपस्त्वि'ति सूत्रेणैव तदर्थोऽवधारित इति नेह तत्प्रसङ्गः । ज्योतिःशब्दस्यादित्यपरत्वशङ्कामुखेन महाभूततृतीयपरत्वशङ्कामुखेन वा पूर्वपक्षश्च नैवोदेतुमर्हति । नहि तं तद्वा प्राप्य जीव आविर्भूतस्वरूपो भवेत् । तत् तेनैव सूत्रेण ज्योतिःशब्दार्थोऽवधारित एव । तदर्थेऽनवधारिते आविर्भूतस्वरूपत्वमप्यनवधारितमेवेति तत्सूत्रसमनन्तरमेवास्य सूत्रस्यावतरणं न्याय्यम् । एतेन श्रीकण्ठाचार्यस्याधिकरणान्तरपरतया व्याख्यानमपि प्रतिक्षिप्तम् ॥ ४१ ॥

---

इतश्चाङ्गुष्ठप्रमितः परं ब्रह्म—

## ज्योतिर्दर्शनात् ॥ १ । ३ । ४१ ॥

अस्मिन्नेवाङ्गुष्ठप्रमितप्रकरणे अङ्गुष्ठप्रमितस्य यो ज्योतिर्विशेषः, यस्य सर्वतेजोऽभिभावकत्वं यमनु सूर्यादितेजसां प्रकाशनम्, तस्य दर्शनात्–श्रवणात् अङ्गुष्ठप्रमितः परमात्मैव । तथा हि श्रूयते–'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति ॥ ४१ ॥

इति प्रदीपे प्रमिताधिकरणशेषः ॥

---

(अ. सं.) अङ्गुष्ठप्रमितो योऽसौ कठवल्लीषु विश्रुतः ।
स जीवः परमात्मा वेत्येतदत्र विचार्यते ॥ १ ॥

पूर्वपक्षः—

अत्राह जीव एवायं स हि देही मितो मतः ।
अङ्गुष्ठप्रमितत्वं च श्रूयते स्मर्यतेऽस्य तु ॥ २ ॥
ईशानत्वं श्रूयमाणमापेक्षिकमुपेयताम् ।
निश्चिते जीवभावेऽस्य देहमध्यस्थितेरपि ॥ ३ ॥

सिद्धान्तः—

अत्र ब्रूमः परात्माऽसावङ्गुष्ठप्रमितः श्रुतः ।
ईशानत्वं श्रूयमाणं तस्यैव हि समञ्जसम् ॥ ४ ॥
यस्य कस्यचिदीशत्वं न ह्यत्र श्रूयतेऽपि तु ।
त्रैकालिकस्य सर्वस्य नियन्तृत्वं च विश्रुतम् ॥ ५ ॥
ईशानत्वं सर्वभूतभयानकमिदं श्रुतम् ।
ज्योतिश्चास्य परं सर्वज्योतिषां छादकं श्रुतम् ॥ ६ ॥
परात्मनोऽपि देहान्तःस्थितिरस्त्येव जीववत् ।
अङ्गुष्ठमानकत्वाच्च मनुष्यहृदयस्य तु ॥ ७ ॥
अङ्गुष्ठप्रमितत्वं च श्रूयते परमात्मनः ।
उपासकानां हृदये सन्निधानाद्विशेषतः ॥ ८ ॥

इति भाष्ये प्रमिताधिकरणम् ॥ ६ ॥

---

उपासने मनुष्याणामधिकारस्य वर्णनात् ।
देवादीनामस्ति न वा स इत्यत्र विचार्यते ॥ १ ॥

पूर्वपक्षः—

देवानां विग्रहाभावादसामर्थ्यादुपासने ।
न तेषां ब्रह्मविद्यायामधिकार इतीतरे ॥ २ ॥

सिद्धान्तः—

अस्ति तेषामपीत्याह सम्भवाद्बादरायणः ।
तेषामप्यविशिष्टा हि देहयोगेन सृज्यता ॥ ३ ॥

स्तुतिश्च श्रूयते तेषां गुणरूपादियोगतः ।
सतैव सोपपद्येत नासता स्तुतिसम्भवः ॥ ४ ॥
इन्द्रादेः श्रूयते चापि गुरूपसदनादिकम् ।
देहभृत्त्वेऽपि देवानां प्रकृष्टैश्वर्यशालिनाम् ॥ ५ ॥
अनेकरूपसम्पत्तेः न विरोधश्च कर्मसु ।
द्रव्यवन्नापि देवानां सन्निधानमपेक्ष्यते ॥ ६ ॥
उद्देश्यतामात्रतस्तु देवतानां मताङ्गता ।
विरोधो वैदिके शब्दे न च कश्चित्प्रसज्यते ॥ ७ ॥
इन्द्रशब्दादयो ये हि ते स्युराकृतिवाचकाः ।
तेभ्य एव जगत्सर्ग ईश्वरेण विरच्यते ॥ ८ ॥
अत एव च वेदस्य नित्यत्वमपि सुस्थितम् ।
पूर्वपूर्वसरूपैव रूपादिव्याक्रियाऽपि च ॥ ९ ॥

इति भाष्ये देवताधिकरणार्थसङ्ग्रहः ॥ ७ ॥

पूर्वपक्षः—

विद्याविशेषे देवानामधिकारोऽत्र चिन्त्यते ।
उपास्तौ कर्मभूतस्य कर्तृत्वानुपपत्तितः ॥ १ ॥
प्राप्ततत्पदयोगस्य तत्पदस्याफलत्वतः ।
तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ॥ २ ॥
इति सामान्यसिद्धस्य विशेषेण विधानतः ।
ब्रह्मैवोपासते नान्यदित्येवमवधारणात् ॥ ३ ॥
वस्वादीनां नाधिकारो मध्वादिष्विति जैमिनिः ।

सिद्धान्तः—

वस्वादीनां सतां स्वात्मब्रह्मोपासनसम्भवात् ॥ ४ ॥
कल्पान्तरे च वस्वादिभावस्याप्युपपत्तितः ।
ब्रह्मप्राप्तेः मुख्यफलात् प्राक्तत्पदफलान्वयात् ॥ ५ ॥
उपासनानुगुण्येन फलयोगस्य सम्भवात् ।
अन्ते च मधुविद्यायां ब्रह्मविद्याफलश्रुतेः ॥ ६ ॥

आदित्यस्यान्तरात्मा यः तस्य देवमधुत्वतः ।
उदयास्तमयाभ्यां च तदभावेन च स्थितेः ॥ ७ ॥
अवस्थाद्वययोगेन तस्यैवोपास्यताश्रुतेः ।
तेषां तत्राधिकारोऽस्तीत्याचार्यो बादरायणः ॥ ८ ॥

इति भाष्ये मध्वधिकरणार्थसङ्ग्रहः ॥ ८ ॥

शूद्रस्य ब्रह्मविद्यायामधिकारो न सिध्यति ।
अग्नावनधिकारेण कर्मस्वनधिकारतः ॥ १ ॥
कर्म च ब्रह्मविद्याङ्गमग्निसाध्यं च तत्पुनः ।
त्रय्यां च नाधिकारोऽस्य न चोपनयनादिकम् ॥ २ ॥

पूर्वपक्षः—

ननु स्ववर्णतः प्राप्तं कर्मैवाङ्गत्वमश्नुते ।
तच्चास्य द्विजसेवादि ज्ञानं सदुपदेशतः ॥ ३ ॥
इतिहासपुराणादिश्रवणेऽधिकृतस्त्वसौ ।
शूद्रस्यापि ब्रह्मविद्योपदेशः श्रूयतेऽपि च ॥ ४ ॥
शूद्रेऽत्यामन्त्रणाज्जानश्रुतिः शूद्रोऽवगम्यते ।

सिद्धान्तः—

नैवं, जानश्रुतिस्तावन्न शूद्रः क्षत्रियस्त्वसौ ॥ ५ ॥
बह्वन्नदानप्रभृतिलिङ्गैरेतत्तु गम्यते ।
शूद्रेत्यामन्त्रणं चात्र शोचितृत्वेन वर्तते ॥ ६ ॥
हंसानादरवाक्यस्य श्रवणात् गम्यतेऽस्य शुक् ।
रैक्वं प्रत्यस्य सपदि समभिद्रवणादपि ॥ ७ ॥
उत्तरत्र श्रूयमाणः कापेयसहयोगतः ।
क्षत्रजातिः चैत्ररथोऽभिप्रतारीति गम्यते ॥ ८ ॥
कापेयचैत्ररथयोः श्रुते याजकयाज्यते ।
कश्चित् क्षत्रपतिश्चैत्ररथो नामेति च श्रुतिः ॥ ९ ॥
अन्वयावगमादेवमन्ते क्षत्रियविप्रयोः ।
जानश्रुती रैक्वशिष्यः क्षत्रियस्त्विति गम्यते ॥ १० ॥

पूर्वोत्तराख्यायिकयोरानुरूप्यं हि युज्यते ।
उपसन्नस्योपदेष्टुं संस्कारो हि विमृश्यते ॥ ११ ॥
संस्कारेऽनधिकारश्च शूद्रस्य त्वभिलप्यते ।
प्रवर्तन्ते च गुरवस्तद्भावावधारणे ॥ १२ ॥
दण्डश्च स्मर्यते तस्य वेदस्य श्रवणादिषु ।
नाधिकारस्ततस्तस्य त्रयीविद्यास्विति स्थितम् ॥ १३ ॥

इति भाष्येऽपशूद्राधिकरणार्थसङ्ग्रहः ॥ ९ ॥

---

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ १ । ३ । ४२ ॥

दहराकाशविचारे या प्राप्ता अल्पत्वाशङ्का सा 'अल्पश्रुतेरिति चेत्तदुक्त'मित्यनेन परिहृता । अल्पत्वप्रसङ्गेन बुद्धिपथमधिरूढोऽङ्गुष्ठप्रमितो विचारितः । तत् प्रसङ्गेऽधिकार्यनधिकारिचिन्ता व्यरचि । अथ दहरविद्यासमनन्तरं श्रूयमाणं 'आकाशो ह वै नामरूपयोर्निर्वहिते'ति वाक्यं विचार्यते ।

छान्दोग्ये श्रूयते 'आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तत् ब्रह्मे'ति । अत्र विचार्यते—कोऽयमाकाशः यो नामरूपयोर्निर्वोढा । अत्राह—जीव एवायम् । एष हि वहति कर्मनियन्त्रितो देवादिनामरूपाणि । ते नामरूपे, अन्तरा विना, यन्नामरूपविनिर्मुक्तं

---

### आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ १ । ३ । ४२ ॥

छान्दोग्ये श्रूयते—'आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा' इति । अयमाकाशशब्दवाच्यः परं ब्रह्मैव, न जीवो मुक्तावस्थः । यद्यप्यविद्यानिवृत्त्या आसमन्तात्प्रसृतया ज्ञानप्रभया प्रकाशते नाम । तथाऽपि स न निर्वोढा नामरूपयोः । नामरूपनिर्वोढत्वं हि जीवादर्थान्तरत्वं गमयति । न हि तस्य मुक्तस्यापि नामरूपनिर्वहणकर्तृत्वम् । तद्धि 'नामरूपे व्याकरवाणी'ति श्रुत्या परमात्मन एवासाधारणो धर्म इति गम्यते । एवं 'तद्ब्रह्म तदमृत'मिति श्रूयमाणं ब्रह्मत्वममृतत्वं च परस्मिन्नेव ब्रह्मणि संभवतः ॥ ४२ ॥

विशुद्धं मुक्त्यवस्थम्, तद्ब्रह्म। सोऽयं ज्ञानघनः प्रकाशगुणयोगादाकाश उच्यते। समनन्तरपूर्ववाक्ये 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य। धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानी'ति स एव प्रस्तुतः। स्ववाक्ये श्रूयमाणं विविधनामरूपवहनं चास्यैव युज्यते। न त्वयं भूताकाशः। स्ववाक्यस्थलिङ्गेनोपरोधात्। अवकाशप्रदानेन नामरूपविशेषवतोऽस्य स्थावरजङ्गमसाधारत्वेऽपि नाकाशः स्वयं विविधनामरूपवहनकर्ता। 'आकाशस्तल्लिङ्गा'दित्यत्रैव भूताकाशः प्रतिक्षिप्त इति न पुनरिह तमधिकृत्य शङ्का समुत्तिष्ठेत। **अपरस्त्वाह**— अत्राकाशशब्दाभिलप्यो हिरण्यगर्भः, स हि प्रकृष्टज्ञानप्रकाशः व्यष्टिसर्गगोचराणां देवादीनां नामरूपाणि निर्वहति। निर्वहणं व्याकरणम्। तच्चास्य व्यष्टिसृष्ट्यपेक्षया सूपपादम्। ते नामरूपे अन्तरा यत्—तयोर्नामरूपयोर्मध्ये यद्ब्रह्मेति प्रपञ्चमध्यान्तर्वर्तित्वेन ब्रह्मोपासनमुच्यते, नामरूपव्याकरणकर्तृत्वेन हिरण्यगर्भोपासनं च तदङ्गमिति। **अत्रोच्यते**—आकाशः परमात्मैव, न जीवः। न वा जीवविशेषः। जीवादर्थान्तरत्वस्य स्ववाक्ये नामरूपयोर्निर्वहितेति व्यक्तं व्यपदेशात्। हिरण्यगर्भप्रभृतयः सर्वेऽपि परमेश्वरनिर्वाह्यनामरूपाः। न च निर्वाह्याणां निर्वाहकर्तृत्वम्। निर्वहितेत्येव हि श्रूयते, न केवलं वहितेति। निरित्युपसर्गयोगात् व्याकरणमेव बोध्यते; नतु कर्मफलनामरूपसम्पत्तिमात्रम्। असङ्कोचाच्च सृज्यमात्रमपेक्ष्य नामरूपव्याकरणमेवावबोध्यते। 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी'ति नामरूपव्याकरणकर्तृत्वं च परमात्मन एवासाधारणं श्रूयते। इदमेव व्याकरणकर्तृत्वमत्र 'नामरूपयोर्निर्वहिते'ति श्रूयते। तस्यास्य स्वयं नामरूपनिर्वाहकस्य नामरूपाभ्यामसंस्पृष्टत्वं 'ते यदन्तरा तद्ब्रह्मे'त्यनेनोच्यते। तदिदमैश्वर्यमर्थान्तरत्वेऽसाधारणं लिङ्गम्। तथाऽमृतत्वं च।

ननु—'धूत्वा शरीरमकृतं कृतात्मे'ति जीवात्मा खलु प्राक् प्रस्तुतः। सत्यम्। न स एव, किन्त्वभिसम्भाव्योऽपि। अभिसम्भाव्यस्तु ततोऽन्यः ब्रह्मलोकः। ब्रह्मैव लोकः। स एव समनन्तरं 'आकाशो ह वा' इत्यादिना श्रूयते॥ ४२॥

ननु-मुक्तावस्थावतः प्रत्यगात्मनो नार्थान्तरं ब्रह्म । स एवावस्था-द्वययुक्तः 'नामरूपयोर्निर्वहिता' 'ते यदन्तरा' इति चोक्तः । तत्राह—

**सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ १ । ३ । ४३ ॥**

व्यपदेशादित्यनुवर्तते । सुषुप्तावुत्क्रान्तौ च प्रत्यगात्मनो भेदेन परस्य ब्रह्मणो व्यपदेशात् । तथा च श्रूयते बृहदारण्यके—'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' 'प्राज्ञेनात्मनान्वारूढः उत्सर्जन् याती'ति च । सुषुप्तौ यत्परिष्वङ्गात् न बाह्यं किञ्चन वेद स प्राज्ञः परमात्मा, तेन परिष्वक्तो यो न वेद किञ्चित्सोऽयमल्पज्ञः क्षेत्रज्ञः । शरीरमिदमुत्सृजन् येन प्राज्ञेनात्मनान्वारूढः स प्राज्ञः परमात्मा । तेनान्वारूढो यथाकर्म यो याति सत्वल्पज्ञः क्षेत्रज्ञः । तदेवमुभयोर्भेदेन व्यपदेशाज्जीवादनर्थान्तरं ब्रह्मेत्यनर्थं वचः । अद्वैत-श्रुतीनां गतिस्तु अब्रह्मात्मकद्वितीयवस्त्वभावादिति ॥ ४३ ॥

**पत्यादिशब्देभ्यः ॥ १ । ३ । ४४ ॥**

उत्तरत्र श्रूयमाणैः पत्यादिशब्दैः परिष्वञ्जकः परमात्मा परिष्वक्ता-

---

**सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ १ । ३ । ४३ ॥**

ननु परं ब्रह्म न मुक्तात्मस्वरूपादन्यत् । मैवम् । अन्यदेव परं ब्रह्म, सुषुप्ता-वुत्क्रान्तौ च भेदेन व्यपदेशात् । तथा हि श्रूयते—'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' 'प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन्याती'ति ॥ ४३ ॥

इतश्चायमर्थान्तरभूतः—

**पत्यादिशब्देभ्यः ॥ १ । ३ । ४४ ॥**

उत्तरत्र 'सर्वस्याधिपतिः सर्वस्य वशी सर्वस्येशानः' 'स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्' 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपालः एष सेतुर्विधरण एषां लोकानामसंभेदाय' इति श्रूयमाणेभ्यः पत्यादिशब्देभ्यश्चाय-मर्थान्तरभूत एवेति व्यक्तमवगम्यते ॥ ४४ ॥

**इति प्रदीपेऽर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ १० ॥**

**इति ब्रह्मसूत्रार्थप्रदीपे प्रथमस्याध्यायस्य तृतीयः पादः ।**

---

दन्य इति व्यक्तं विज्ञायते । तथा ह्युत्तरत्र श्रूयते–'सर्वस्याधिपतिः सर्वस्य वशी सर्वस्येशानः' 'स न साधुना कर्मणा भूयान् नो एव असाधुना कनीयान्' 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय' इति । तथा च सिद्धं परमात्मा जीवात्मनोऽन्य एवेति ॥ ४४ ॥

(अ. सं.) आकाशः श्रूयते योऽसौ निर्वोढा नामरूपयोः ।
छान्दोग्ये स क इत्यत्र विचारः सम्प्रवर्तते ॥ १ ॥

पूर्वपक्षः—

मुक्तः स्यादयमित्याह स हि प्राङ् नामरूपभाक् ।
मुक्तौ च रहितस्ताभ्यां श्रूयते ते यदन्तरा ॥ २ ॥
निवृत्तावरणत्वेन प्रकाशाच्च समन्ततः ।
आकाशशब्दवाच्यत्वमस्मिन् समुपपद्यते ॥ ३ ॥
मुक्तादर्थान्तरं ब्रह्म नास्त्यन्यद्वै यतस्ततः ।
ब्रह्मत्वादि श्रूयमाणमस्मिन्नेव समन्वितम् ॥ ४ ॥

सिद्धान्तः—

निर्वोढृत्वं श्रूयमाणं यत्तज्जीवे न सम्भवेत् ।
यतः कर्मवशस्तत्तदनिच्छन्नपि विन्दते ॥ ५ ॥
तत्तत्कर्मानुसारेण नामरूपे सृजन्नतः ।
आकाशः परमात्मैव ब्रह्मत्वादिश्रुतेरपि ॥ ६ ॥
स्वापादौ ब्रह्मभेदश्च श्रूयते तत्र तत्र हि ।
मुक्तौ च शेषशेषित्वं मुख्यो भेदो ननु श्रुतः ॥ ७ ॥
मुक्तस्यापि जगत्सर्गव्यापारो नेति वक्ष्यते ।
अतो निरस्तनिखिलदोषः सर्वेश्वरो हरिः ॥ ८ ॥
स्वाभाविकानन्तदिव्यशक्तिः शुभगुणाश्रयः ।
परमात्मैव जन्मादिहेतुर्ब्रह्मेति सुस्थितम् ॥ ९ ॥

इति भाष्ये अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ १० ॥

इति ब्रह्ममीमांसाभाष्ये प्रथमस्याध्यायस्य तृतीयः पादः ॥

प्रथमे पादे प्रधानादेः कारणत्वाशङ्काप्रतिक्षेपमुखेन ब्रह्मण एव कारणत्वं समर्थितम् । ( लक्षणस्यायोगव्यवच्छेदः कृत इति यावत् ) द्वितीये अस्पष्टजीवादिलिङ्गानि विचारितानि । तृतीये स्पष्टतल्लिङ्गकानि । अथ चतुर्थे अब्रह्मात्मकप्रधानपुरुषप्रतिपादनच्छायानुसारीणि वाक्यानि विचार्यन्ते ।

## आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ । ४ । १ ॥

कठवल्लीष्वाम्नायते—'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।

---

## आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ । ४ । १ ॥

ननु—एकेषां शाखिनां शाखासु आम्नायते—'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसश्च परा बुद्धिर्बुद्धेरात्मा महान् परः । महतः परमव्यक्तमव्यक्तात् पुरुषः परः । पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गति'रिति । अत्र चानुमानिकम्—अनुमानगम्यं प्रधानमेव अव्यक्तशब्देन प्रतिपाद्यते । तदस्यां शाखायां तन्त्रसिद्धा प्रकृतिपुरुषप्रक्रियैव प्रत्यभिज्ञायते इति चेन्न । तद्धि प्रकरणमुपासनापयुक्तेस्येन्द्रियनिग्रहस्यावश्यापेक्षिततां निरूपयितुं प्रवृत्तम् । तदर्थं शरीरादीनां रथादित्वेन निरूपणं क्रियते 'आत्मानं रथिन' मित्यादिना । तत्र पूर्वं रथत्वेन रूपितं यत् शरीरं तस्याव्यक्तशब्देन परिग्रहः 'महतः पर'मित्यनेन क्रियते । न तु महत्तत्वात् परमव्यक्तं प्रधानमित्यभिप्रायेण तस्य वाक्यस्य प्रवृत्तिः । योऽयमात्मा पूर्वं रथित्वेन रूपितः 'आत्मा महान् पर' इति निर्दिष्टः, स एव महत इति विशेषणतो निर्दिश्यते । दर्शयति च विवक्षितमिन्द्रियनिग्रहप्रकारं 'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः । यच्छेत् वाङ्मनसी प्राज्ञस्तद्यच्छेत ज्ञानमात्मनि । ज्ञानमात्मनि महति नियच्छेत् तद्यच्छेत् शान्त आत्मनि' इति ॥ १ ॥

---

टिप्प०—१ सन्धिश्छान्दसः ।

मनसश्च परा बुद्धिः बुद्धेरात्मा महान् परः ॥ महतः परमव्यक्तं अव्यक्तात्पुरुषः परः । पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥' इति । अत्र 'महतः परमव्यक्तमि'ति श्रूयमाणमव्यक्तं किमिति विचार्यते । अत्राह—कापिलाभिमतं प्रधानमेव । तदेव त्रिगुणात्मकं स्वतन्त्रं प्रधानं महदात्मना व्यक्तीभवति । तदिदमव्यक्तमुच्यते 'कारणमस्त्यव्यक्त'मिति कापिलैः, व्यक्तान्महतः परं च । इन्द्रियादयो महदन्ता विशेषाः, सामान्यं चाव्यक्तम् । ततः पुरुषः पर इति च प्रकृतिपुरुषविवेकः कापिलाभिमतः प्रत्यभिज्ञायते । तत्कापिलाभिमतमानुमानिकमव्यक्तमेवौपनिषदमपीति ।

**अत्रोच्यते**—एकेषां शाखासु आनुमानिकं प्रधानमेव प्रतिपाद्यत इति चेन्न । शरीररूपकविन्यस्तगृहीतेः । 'आत्मानं रथिनं विद्धि शरीरं रथमेव च । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ॥' इति पूर्वं रथिरथादिरूपकप्रकरणे यद्रूपकविन्यस्तं रथत्वेन रूपितं शरीरं तस्यात्र अव्यक्तशब्देन ग्रहणात् । **अयमाशयः**—नात्र कापिलं प्रत्यभिज्ञायते । प्रकरणं चेदं भवाध्वनः पारप्राप्त्युपायनिरूपणस्य । वशीकृतैरिन्द्रियमनोबुद्धिभिर्भवाध्वनः पारं सुखेनाधिगच्छतीत्येतत्सुखेनावगमयितुं रथिरथादिभावेन रूपणं क्रियते । तत्र प्राप्ता जीवो रथित्वेन, शरीरं रथत्वेन, इन्द्रियाणि हयत्वेन, अर्था विविधमार्गत्वेन, बुद्धिः सारथित्वेन, मनः प्रग्रहत्वेन च रूप्यन्ते । तेषामेषां रथहयादीनां वशीकरणे संसाराध्वनः पारमाप्नोति, अन्यथा संसारगर्ते पततीति च 'यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥' इत्यादिना प्रतिपाद्यते । तत्र वशीकार्येषु यानि येभ्यः पराणि—प्रधानानि, तानि निरूप्यन्ते 'इन्द्रियेभ्यः' इत्यादिना । तत्र पूर्वं ये हयादित्वेन रूपिता इन्द्रियमनोबुद्ध्यात्मानः; ते स्वशब्दैरिह गृहीताः । आत्मा भोक्ता इन्द्रियाद्यधिष्ठातृत्वात् महानिति विशेषितः । अवशिष्टं तु रथत्वेन रूपितं शरीरम्, तदिहाव्यक्तशब्देन निर्दिश्यते । 'महतः परमव्य-

क्तमि'ति श्रवणमात्रेण कथमानुमानिमौपनिषदं भवेत् । आत्मा महानिति हि विशेष्यते । न च महद्बुद्धेरर्थान्तरं कापिलानाम् । बुद्धेः पर इति चात्र श्रूयते । इन्द्रियेभ्यः परत्वमर्थानामर्थेभ्यः परत्वं मनसश्च कथं कापिलानां घटेत । न हि तेषु पूर्वपूर्वप्रकृतित्वमुत्तरोत्तरस्य । तत् तन्त्रप्रक्रिया नेह प्रत्यभिज्ञायते । आत्मनः परमव्यक्तमिति निर्देष्टव्ये महतः परमिति निर्देशः विशेषणेन भवति विशेष्यनिर्देश इति अभिप्रेत्य । देवदत्ताद्यज्ञदत्तः शीघ्रगतिर्योऽयमश्वारूढः, अश्वारूढात् विष्णुमित्रः शीघ्रगतिः, इतिवत् । तदिह रूपकविन्यस्तानामेव ग्रहणम् । दर्शयति च श्रुतिरिममर्थं–'एष सर्वेषु भूतेषु गूढोऽऽत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ यच्छेद्वाङ्मनसी प्राज्ञः तद्यच्छेत् ज्ञान आत्मनि । ज्ञानमात्मनि महति नियच्छेत् तद्यच्छेत् शान्त आत्मनि' । इति । अत्रोपनिषदर्थः विवरणे बोध्यः ॥ १ ॥

ननु–शरीरमिदं व्यक्तं, कथमुच्यते अव्यक्तमिति ? तत्राह–

## सूक्ष्मं तु तदर्हत्वात् ॥ १ । ४ । २ ॥

वपुरिदं स्थूलं यद्यपि । इदमेव कारणावस्थायां सूक्ष्ममिति कार्यस्य कारणेनोपचारात्तथा निर्देशः । तदर्हत्वात्–स्थूलवपुरात्मना परिणामार्हत्वात् प्रधानस्य ॥ २ ॥

ननु–स्थूलस्यास्य सूक्ष्मं रूपं कारणमव्यक्तमिति चेदिष्यते, तर्हि प्राप्तं कापिलमव्यक्तमानुमानिकमौपनिषदमित्यपि । तत्राह–

## तदधीनत्वादर्थवत् ॥ १ । ४ । ३ ॥

उपनिषन्मितमव्यक्तं न स्वतन्त्रम् , किन्तु तदधीनत्वात्–परमा-

---

**सूक्ष्मं तु तदर्हत्वात् ॥ १ । ४ । २ ॥**

यत् भूतसूक्ष्ममव्यक्तं तदेव शरीरात्मना परिणतं तस्य रथादिवत् गतिसाधनभावार्हं भवतीति रथत्वेन रूपितं शरीरमव्यक्तशब्देन निर्देशमर्हति । परिणामस्याप्यव्यक्ततत्वात् ॥ २ ॥

---

टिप्प०—१ सन्धिश्छान्दसः ।

त्माधीनत्वात्, अर्थवत्–कार्याधायकम्। अयं भावः–वयमव्यक्तं सर्वथा नैवेति न प्रतिक्षिपामः, परमात्माधीनं तदात्मकं तु स्वीकुर्मः। अस्मिन् वाक्ये न तद्विवक्षितम्, अपि तु शरीरमेव तत्परिणतिलक्षणं प्रकरणाद्विवक्षितमिति ब्रूम इति ॥ ३ ॥

## ज्ञेयत्वावचनाच्च ॥ १ । ४ । ४ ॥

अव्यक्तस्यास्य ज्ञेयत्वमिह नोक्तम्, अतो नात्राव्यक्तशब्देन कापिलाभिमतं प्रधानं प्रतिपिपादयिषितम्। कापिला हि पुरुषस्येव प्रकृतेरपि ज्ञेयत्वं वदन्ति ॥ ४ ॥

## वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ १ । ४ । ५ ॥

ननु–'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्। अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥' इति श्रुतिरियं सर्वस्य प्रकृतिं प्रधानं ज्ञेयतया वदति। शब्दादयो हि विकृ-

---

### तदधीनत्वादर्थवत् ॥ १ । ४ । ३ ॥

यत्तु–कापिलाभिमतमव्यक्तं तन्न कार्याधायकम्। चेतनानधिष्ठितस्य कार्यकरत्वानुपपत्तेः। अस्मदभिमतं भूतसूक्ष्ममेव तु तदधीनत्वात् परमात्माधिष्ठितत्वात् अर्थवत् कार्याधायकं भवति ॥ ३ ॥

### ज्ञेयत्वावचनाच्च ॥ १ । ४ । ४ ॥

यदि कापिलं प्रधानमिह विवक्षितं स्यात्, तदा ज्ञेयत्वमिह वक्तव्यं स्यात्। कापिला हि प्रकृतिपुरुषविवेकादेव निःश्रेयसं वदन्तो ज्ञेयत्वं प्रधानस्याप्याहुः। न चेह तस्य ज्ञेयत्वमुच्यते, अतो न कापिलप्रक्रियाया इह प्रसङ्गलेशोऽपि ॥४॥

### वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ १ । ४ । ५ ॥

ननु–'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्। अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥' इति उत्तरत्र तस्य ज्ञेयत्वमुच्यत इति चेन्न। प्राज्ञः–परमात्मा ह्यत्रोच्यते, प्रकरणात्। 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' 'पुरुषान्न परं किंचित् सा काष्ठा सा परा गति'रिति परमात्मनो हि प्रकरणमिदम् ॥ ५ ॥

तिधर्मास्तत्र प्रतिषिध्यन्ते । इति चेन्न । अनेन वाक्येन प्राज्ञो हि प्रतिपाद्यते । प्रकरणात्—प्रकरणं हि परमात्मनः । 'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान् नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥' 'एष सर्वेषु भूतेषु गूढोऽऽत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥' इति यः प्रकृतः स एवाशब्दमित्यादिनोच्यते । अन्यत्रापि श्रूयते 'अद्रेश्यमग्राह्य'मित्यादि । यो महानात्मा उक्तः, ततः परत्वं परमात्मन्यत्रोच्यते, न महत्तत्त्वतः परत्वम् ॥ ५ ॥

## त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ १ । ४ । ६ ॥

किञ्च—अस्मिन् प्रकरणे त्रयाणामेव—प्राप्यप्राप्तृप्रापकाणां त्रयाणामेवोपन्यासः, प्रश्नश्चैतत्त्रितयविषयक एव दृश्यते । तथाहि—'येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः ॥' इति नचिकेतसा मोक्षस्वरूपं जिज्ञासमानेन प्रार्थितो मृत्युः 'देवैरत्रापी'त्यादिना परीक्ष्य 'अन्यच्छ्रेयोऽन्यदुतैव प्रेय' इत्यादिना तमभिनन्द्य 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥' इति मुमुक्षुणा ज्ञातव्यं प्रास्तौषीत् । **अयमर्थः**—प्रेते नायमस्तीत्येतदसाधु । अस्त्येवायम् । इदानीं तु संसारसागरनिमग्नोऽनुक्षणं समुत्पतद्भिर्हर्षशोकतरङ्गैरभिहन्यमानो वर्तते । मुक्तौ हर्षशोकौ जहाति । स्वेन रूपेणाभिनिष्पद्यते । किं तत्र साधनम्? देवं

---

प्रकरणविशेषमेव व्यक्तीकरोति—

**त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ १ । ४ । ६ ॥**

यः प्राप्यः यच्च प्राप्तिसाधनं यश्च प्राप्ता तेषां त्रयाणामेवेहोपन्यासः, प्रश्नश्च तद्विषय एव इह दृश्यते । तथा हि श्रूयते 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' 'अन्यत्र धर्मादन्यत्राधर्मात् अन्यत्रास्मात् कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद' इत्यादि ॥ ६ ॥

मत्वा– योऽयं द्योतमानः सदेव, स हि दुर्दर्शः गुहाहितो हि सः– हृदयगुहाहितः। तत्र यः प्रविष्टो जीवस्तमनुप्रविष्टोऽयं तस्य गतिं विदन्। न चास्य गतिं स वेद। गूढमनुप्रविष्टो ह्येषः। गुहायामपि गह्वरे स्थितः। पुराणश्चायम्–न च नवनव इव भवति। तस्यास्य दुर्दर्शस्य दर्शनं तु अध्यात्मयोगाधिगमेन भवति। योऽयं प्रत्यगात्मा इदानीं हर्षशोकाविलः, मुक्तौ हर्षशोकौ जहाति, तस्यास्य प्राप्तुः ब्रह्मात्मक-शुद्धस्वरूपध्यानलक्षणयोगेन तस्याप्यन्तरवस्थितं देवं मत्वा हर्षशोकौ जहाति इति यावत्। तदेवं सङ्क्षेपेण ज्ञातव्ये प्रस्तुते विशिष्य जिज्ञासया पुनः पप्रच्छ नचिकेताः 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रासात् कृता-कृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद' इति। अत्र च प्रश्नास्त्रयः क्रमात् प्रवर्तन्ते–उपायस्य उपेतुः उपेयस्य च। अस्मिन् हि संसारे अनवरतमनुवर्त्तमानहर्षशोकचक्रके द्वे एव संसरणबीजे विश्रुते धर्मश्चाधर्मश्च, याभ्यामेव पुण्यपापलक्षणाभ्यां हर्षशोकौ, ताभ्या-मन्यत्र यत्साधनं पश्यसि तद्वद। देवं मत्वेत्यनेन तत् त्वया प्रस्तुतम्, तद्विस्तरेण वदेत्येतत्। यश्चायं धर्माधर्मफलभोक्ता जीवघनः कर्ता भोक्तेति सर्वैरनुभूयमानः स तु कृताकृतः। न स्वयमेष भोक्ता, यत् आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः, तत् स्वेन रूपेण नित्यतया-ऽकृतोऽपि भोक्तृत्वावस्थायां आत्मेन्द्रियादिभोगोपकरणविशिष्टः सन् देवादिरूपेण कृत इव भवतीति कृताकृत उच्यते। तस्मादस्मादन्यत्र–कार्यकारणयोगावस्थातोऽन्यत्रोपेतृरूपं यत्तत्पश्यसि तद्वद, यत्त्वं सूचि-तवानसि अध्यात्मयोधिगमेनेति। यत्तु प्राप्यते तैस्तैः साधनैः सर्वमेव कालतः परिच्छिन्नम्–किञ्चित् भूतम्, किञ्चित् भावि, परेण पूर्वेण वा कालेन तत् परिच्छिन्नम्, ताभ्यामन्यत्र यत्पश्यसि कालत्रयेऽप्यनु-वर्तमानं प्राप्यं तद्वद। 'स मोदते मोदनीयं हि लब्ध्वे'त्यनेन यत्सूचितवानसि। एवं त्रयाणामेवेह प्रश्नः। तथा तेषामेव चोपन्यासः 'न जायते म्रियते वा विपश्चिन्नायं कुतश्चि'दित्यादिना प्राप्तुः प्रत्यगा-

टिप्प—१ आत्मा-शरीरम्. २ उपन्यासः-प्रतिवचनम्, निरूपणमिति यावत्.

त्मनः स्वरूपं 'अणोरणीयानि'त्यादिना प्राप्यस्य परमात्मनः स्वरूपम्, 'नायमात्मे'त्यादिना उपायस्य भक्तियोगस्य स्वरूपं चोपन्यस्तम् । तदस्मिन् प्रश्नप्रतिवचनप्रकरणे कापिलप्रक्रियायाः प्रसङ्ग एव नास्ति ॥६॥

## महद्वच्च ॥ १ । ४ । ७ ॥

यथा "बुद्धेरात्मा महान् पर" इत्यत्र न महत्तत्त्वस्य ग्रहणम्, आत्मशब्दसाहचर्यात् । तथा 'महतः परमव्यक्त'मित्यत्रापि अव्यक्तस्य प्रधानस्य न ग्रहणावसरः । आत्मनः परत्वासंभवात् । महत्तत्त्वस्य प्रागग्रहणाच्च ॥ ७ ॥

### पूर्वपक्षः

(अ. सं.) महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चिदिति तावत्कठश्रुतिः ॥ १ ॥
कापिलप्रक्रिया स्पष्टमत्र वाक्ये प्रतीयते ।
अतः स्वनिष्ठप्रकृतेर्हेतुत्वं स्याद्विवक्षितम् ॥ २ ॥

### सिद्धान्तः

अत्र ब्रूमो नात्र वाक्ये कारणत्वनिबन्धनम् ।
परत्वमुच्यते किन्तु वशीकार्यत्व एव तत् ॥ ३ ॥
योगो येषां वशीकारात् सिध्येत् खादीनि तानि तु ।
निर्दिश्यन्तेऽत्र वाक्ये च परत्वेन यथोत्तरम् ॥ ४ ॥
शरीरमव्यक्तमिति निर्दिष्टं परिशेषतः ।
महान् बुद्धेः परत्वेन चात्मत्वेन विशेषणात् ॥ ५ ॥
यथा न तु महत्तत्त्वं कापिलं तद्वदेव च ।
अव्यक्तमिति निर्दिष्टं कापिलं नेति गृह्यताम् ॥ ६ ॥

इति भाष्ये आनुमानिकाधिकरणम् ॥ १ ॥

---

## महद्वच्च ॥ १ । ४ । ७ ॥

यथा—'बुद्धेरात्मा महान् परः' इति वाक्ये आत्मविशेषणीभूतो महच्छब्दो न महत्तत्त्वपरः, तथा महतस्तस्मात्परं प्रतिपादयन्नयमव्यक्तशब्दोऽपि न कापिलाभिमतप्रधानपरः ॥ ७ ॥

इति प्रदीपे आनुमानिकाधिकरणम् ॥ १ ॥

## चमसवदविशेषात् ॥ १ । ४ । ८ ॥

ननु—कठानां शाखासु मास्त्वानुमानिकस्य श्रवणम्, श्वेताश्वतरे त्वस्त्येव । तथा हि श्रूयते—'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' इति । न जायते इत्यजा मूलप्रकृतिरविकृतिः, सेयमजोच्यते । लोहितशुक्लकृष्णामिति विशेषणात् सत्वरजस्तमःसमुदायात्मता तस्या बोध्यते । सरूपाः प्रजाः बह्वीः सृजमानामित्यनेन सरूपमहदादिसकलविकारमूलता बोध्यते । तत् कापिलतन्त्रसिद्धा मूलप्रकृतिरुपनिषदि श्रूयत एवेति चेन्न । अजात्वश्रवणमात्रात् कापिलतन्त्रसिद्धा प्रकृतिरिति न निर्धारयितुं शक्यते । अविशेषात्—विशेषावधारकेन केनचिद्विशेषणेनाविशेषितत्वात् । यथा 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्न' इत्यस्मिन् मन्त्रे चमसस्यावयवव्युत्पत्त्या भक्षणसाधनतया प्रतीतस्य 'यथेदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न' इति विशेषावधारणेन शिरस्त्वावधारणं, नेह तथा अजायाः स्वतन्त्रप्रधानत्वावधारणं संभवति । न च सर्वथा प्रतिक्षिप्यते प्रकृतिरस्माभिः । अब्रह्मात्मिका स्वतन्त्रा सा प्रतिक्षिप्यते । अजेत्यादयः शब्दास्तु साधारणाः ॥ ८ ॥

## ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ १ । ४ । ९ ॥

येयं त्रिगुणा मूलप्रकृतिः सा ज्योतिरुपक्रमा । ज्योतिः परंब्रह्म, तदुपक्रमा तु, न स्वतन्त्रा । तथा ह्यधीयते एके—तैत्तिरीयशाखिनः

---

**चमसवदविशेषात् ॥ १ । ४ । ८ ॥**

ननु श्वेताश्वतरे श्रूयते—'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' इति । इयं श्रुतिः कापिलाभिमतां गुणत्रयीलक्षणां प्रकृतिमभिप्रेत्य प्रवर्तते । न चेयं व्यावर्त्यते । यथा 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्न' इति मन्त्रे चमसः सामान्यशब्देन प्रतिपाद्यमानोऽपि, अन्यत्र 'यथेदं तच्छिर' इति विशेष्यते, तद्वद्विशेषाश्रवणात ॥ ८ ॥

तैत्तिरीयके हि–'अणोरणीयान् महतो महीयान् आत्मा गुहायां निहितोऽस्य जन्तोः । तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानं ईशम् ॥' 'सप्त प्राणाः प्रभवन्ति तस्मा' दित्यारभ्य 'अजामेका'मित्यन्तं श्रूयते । तथाऽन्यत्र–'विकारजननीमज्ञामष्टरूपामजां ध्रुवाम् । ध्यायते ध्यायिता तेन तन्यते प्रेर्यते पुनः ॥ सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत्'' इत्यादि ॥ ९ ॥

ननु–यद्येषा ज्योतिरुपक्रमा तर्हि कथमियमजा । अत्राह—

## कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १ । ४ १० ॥

कल्पनायाः–सृष्टेः जगत्सृष्टेः, उपदेशात् । उपदिश्यते हि सा 'अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः । मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्' इति । **अयमर्थः**—यस्य माया गुणमयी वशे स मायी सर्वेश्वरः, अस्मात्–त्रिगुणलक्षणात् प्रधानात् विश्वमिदं सृजतीति । **अयमाशयः** । अनेन सृष्ट्युपदेशवाक्येन परमेश्वराधिष्ठिता मायाशब्दवाच्या गुणमयी प्रकृतिः

---

अत्राह—

**ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ १ । ४ । ९ ॥**

इह श्रूयमाणा अजा ज्योतिरुपक्रमा—ज्योतिः–परं ब्रह्म तदुपक्रमा, तन्मूलिका । तुशब्दः पूर्वपक्षं व्यावर्तयति । तथा हि एके शाखिनस्तैत्तिरीया अधीयते—'अणोरणीयान् महतो महीयानात्मा गुहायां निहितोऽस्य जन्तो' रित्युपास्यं ब्रह्म प्रक्रम्य 'सप्त प्राणाः प्रभवन्ति तस्मात्' इत्यादिना सर्वस्य तत उत्पत्तिमभिधाय 'अजामेका'मिति । अनेन येयमजा गुणत्रयलक्षणा तद्विकृतिभूतस्य सर्वस्य परब्रह्मप्रभवत्वकथनात् सा प्रकृतिरप्येतदधिष्ठिता एतदात्मिकेति ज्योतिरुपक्रमत्वमवगम्यते । वाक्यशेषाच्चमसे विशेषावधारणवत्, शाखान्तरतश्च विशेषावधारणमिहेति भावः ॥ ९ ॥

**कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १ । ४ । १० ॥**

अजा ज्योतिरुपक्रमा चेति विरुद्धमिति शङ्कां परिहरन्नाह—कल्पना–सृष्टिः ।

कार्यकारणोभयावस्थापन्ना कारणदशायां सूक्ष्मरूपेण एका सती कार्यावस्थायां स्थूलरूपेण बहुधा च सती वर्तते इति ज्ञायते । तत्कारणावस्थायां अजात्वं एकत्वं चाविरुद्धमिति । **इदमभिहितं भवति**—प्रलये त्रिगुणेयं प्रकृतिः परमेश्वरेणाविभागं प्राप्ता नामरूपविभागराहित्येन एका अव्यक्ता अजेति च निर्देशमर्हति । सैव सर्गादौ तत्सङ्कल्पादेव ततो विभक्ता—व्यक्ता महदहङ्कारादिनामरूपापन्ना बह्वी च भवति । तत् अजा ज्योतिरुपक्रमेति चाविरुद्धम् । मध्वादिवत् । यथा आदित्यस्य कारणावस्थायामुदयास्तमयादिराहित्यमेकलत्वम्, तस्यैव कार्यावस्थायामुदयास्तमयादिभेदो वस्वादिभोग्यमधुत्वं च मधुविद्योक्तमविरुद्धं तथेति ॥ १० ॥

पूर्वपक्षः—

(अ. स.) श्वेताश्वतरके मन्त्रो ह्यजामेकामिति श्रुतः ।
तत्राजत्वं स्वनिष्ठत्वं प्रकृतेस्तु व्यनक्ति भोः ॥ १ ॥
सविकारं प्रधानं च बद्धो मुक्त इति त्रयम् ।
साङ्ख्यप्रसिद्धमेवात्र वर्ण्यते न परं बृहत् ॥ २ ॥
तस्मात् साङ्ख्यं कारणत्वं श्रौतं स्यादिति चेन्न तत् ।

---

'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' इति हि श्रूयते 'अस्मान् मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः' इति परब्रह्मणा सृज्यत्वोपदेशात अजात्वश्रुतेश्च, प्रकृतेस्त्रिगुणायाः कारणावस्था कार्यावस्था चेत्यवस्थाद्वयमभ्युपगम्य तदुभयनिर्वाहः कार्यः । 'अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते तमः परे देवे एकीभवती'ति श्रुत्यन्तरोक्तप्रकारेण या सूक्ष्मावस्था नामरूपविभागानर्हतालक्षणा, तामभिप्रेत्याजात्वम्, या च महदादिना परिणतिभेदेन नामरूपविभागार्हस्थितिः तामपेक्ष्य ज्योतिरुपक्रमात्वमिति । इदं च मध्वादिवत्—यथा मधुविद्यायां आदित्यस्य कार्यावस्थया मधुत्वं कारणावस्थया च तदभावः ॥ १० ॥

इति प्रदीपे चमसाधिकरणम् ॥ २ ॥

**सिद्धान्तः-**

न विशेषोऽजत्वमात्रं ब्रह्मनिष्ठेऽपि सम्भवात् ॥ ३ ॥
यथा चमसवाक्ये हि वाक्यशेषाद्विनिर्णयः ।
शिरश्चमस इत्येवं तथा शाखान्तरात्पुनः ॥ ४ ॥
ब्रह्मात्मकत्वनिर्णीतिः प्रकृतेः पुरुषस्य च ।
ब्रह्मप्रकरणे तैत्तिरीयेऽप्येवं हि पठ्यते ॥ ५ ॥
ब्रह्मकारणकत्वं च स्थूलावस्थान्वयाद्भवेत् ।
स्वरूपतस्त्वजत्वं च मध्वादेरिव सम्भवेत् ॥ ६ ॥

इति भाष्ये चमसाधिकरणम् ॥ २ ॥

## न सङ्ख्योपसङ्ग्रहादपि नानाभावा-दतिरेकाच्च ॥ १ । ४ । ११ ॥

वाजसनेयिनां शाखासु श्रूयते 'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेवं मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्' इति । अत्र पञ्च पञ्चजना इत्यनेन निर्देशेन कपिलमततन्त्रप्रक्रिया प्रतिपाद्यते, पञ्चविंशतिसङ्ख्योपसङ्ग्रहात् । 'पञ्चजना' इति तु समाहारः । तच्च तत्त्वपञ्चकम् । पञ्चेतिविशेषणात् पञ्चविंशतितत्त्वानीति गम्यते ।

---

**न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॥ १ । ४ । ११ ॥**

वाजसनेयिनां शाखासु श्रूयते—'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः' इति । अत्र पञ्चपञ्चेति पञ्चविंशतिसङ्ख्याया ग्रहणात् कापिलाभिमततत्त्वप्रक्रिया प्रतिपाद्यते इति विज्ञायते इति चेन्न । नानाभावात्—तेभ्यः पञ्चविंशतितत्त्वेभ्यस्तदाधारभूतस्य भेदात् गम्यमानात् । 'यस्मिन् प्रतिष्ठित' इति हि तेषां प्रतिष्ठितत्वं परमात्मनि श्रूयते । अतिरेकाच्च—'आकाशश्चे'ति पञ्चपञ्चजना इति निर्दिष्टेभ्योऽधिकस्य प्रतिपादनाच्च न कापिलप्रक्रियाया इह प्रत्यभिज्ञानम् । सङ्ख्योपसङ्ग्रहं पराभिमतमभ्युपगम्येदं समाधानमुक्तम् । पराभिमतसङ्ख्योपसङ्ग्रहो नैवात्र क्रियते इत्येव तु स्वहार्दम् । तदिदमपिशब्देन गम्यते ॥ ११ ॥

तानि च महाभूतपञ्चकम्, तन्मात्रपञ्चकम्, ज्ञानेन्द्रियपञ्चकम्, कर्मेन्द्रियपञ्चकम्, उभयात्मकं मनः प्रकृतिमहदहङ्काराः पुरुषश्चेति पञ्चकम्, तान्येतानि 'पञ्च पञ्चजना' इति निर्दिश्यन्ते इति चेन्न। कस्मात्? । नानाभावात्—कापिलादिमतेभ्योऽत्र निर्दिश्यमानानां पृथग्भावात् । इह तत्त्वानां 'पञ्च पञ्चजना आकाशश्च यस्मिन् प्रतिष्ठित' इत्यन्यत्र प्रतिष्ठा हि श्रूयते। न च कापिलैः पञ्चविंशतितत्त्वप्रतिष्ठाभूतः षड्विंश इष्यते । अतिरेकाच्च—सङ्ख्याधिक्याच्च । 'यस्मि'न्निति निर्दिष्ट एकः, 'आकाश' इति निर्दिष्टोऽन्यस्ताभ्यामाधिक्यात् । ननु नाधिक्यम्, पञ्चविंशतितत्त्वान्येव प्रकारान्तरेण सप्तविंशतिसंख्याकानि भवन्ति । प्रकृतिर्हि सत्त्वरजस्तमसां त्रिकम् । सत्त्वादीनि च द्रव्याणि महद्-हङ्कारश्चेति पञ्च, वायुतेजोजलपृथिवीघ्राणाः पञ्च, पञ्चतन्मात्राणि, चक्षुःश्रोत्ररसनात्वङ्मनांसि पञ्च, एते पञ्च पञ्चजना आकाशश्च यस्मिन्[1] प्रतिष्ठिता इत्यर्थात् । नैतद्युक्तम् । पञ्चस्वनुगतोपाधेर्दुर्वचत्वात् । अनुगतोपाधिना हि भवति पञ्चकमिति निर्देशः । यथा—भूतपञ्चक तन्मात्रपञ्चकं ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकमिति । उक्तविभागे एवंविधोपाधिर्न कश्चित् ॥ ११ ॥

ननु—तर्हि 'पञ्च पञ्चजना' इत्यनेन किं विवक्षितम्? तत्राह—

## प्राणादयो वाक्यशेषात् ॥ १ । ४ । १२ ॥

'पञ्च पञ्चजना' इति प्राणादयः पञ्चोच्यन्ते । अत्र 'पञ्चजना'

---

तर्हि 'पञ्च पञ्चजना' इति किमुच्यते—

### प्राणादयो वाक्यशेषात् ॥ १ । ४ । १२ ॥

'प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः' इत्यस्मात् वाक्यशेषात् पञ्च पञ्चजना इत्यनेन प्राणादय एव प्रगृह्यन्ते इति विज्ञायते । ते च त्वगादीनीन्द्रियाणि । प्राणोऽत्र त्वगुच्यते । 'अन्न'मिति च घ्राणरसने तन्त्रेण गृह्येते । पञ्च पञ्चजना इति सप्त सप्तर्षय इतिवत् निर्देशः ॥ १२ ॥

---

टिप्प०—1 यस्मिन्निति निर्दिष्टः पुरुषः ।

इति न समाहारः, किन्तु 'दिक्सङ्ख्ये संज्ञाया'मिति संज्ञाविषयोऽयं समासः । ते च पञ्चेति विशेष्यन्ते 'सप्त सप्तर्षय' इतिवत् । ते च प्राणादय इति कस्मादवगम्यते । वाक्यशेषात्–'प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रं अन्नस्यान्नं मनसो ये मनो विदु'रिति च वाक्यशेषः । अन्नमिह घ्राणम् । प्राणः स्पार्शनेन्द्रियम् ॥ १२ ॥

ननु–काण्वानामप्ययं[1] मन्त्रः समानः । तत्र वाक्यशेषे 'अन्नस्यान्न'-मित्ययं पाठो नास्ति । तत् तत्र श्रूयमाणस्य 'पञ्च पञ्चजना' इत्यस्येन्द्रि-यपरत्वं निश्चेतुं न शक्यते । तदत्रापि तन्निर्णयो न शक्यः । इत्यत्राह—

## ज्योतिषैकेषामसत्यन्ने ॥ १ । ४ । १३ ॥

एकेषां काण्वानां पाठे–अन्ने–अन्नपर्याये असत्यपि 'यस्मिन् पञ्च पञ्चजना' इत्यस्मात् प्राक् श्रूयमाणेन 'ज्योतिषां ज्योतिरायुर्होपा-सतेऽमृतम्' इत्येतद्वाक्यगतेन ज्योतिश्शब्देन पञ्च पञ्चजना इन्द्रि-याणीत्यवगम्यन्ते । परस्य ब्रह्मणो ज्योतिषां ज्योतिष्ट्वोक्त्या परेण ज्योतिषा प्रकाश्यमानानि ज्योतींषि प्रकाशकानि शब्दादिविषय-प्रकाशकानि इन्द्रियाणीति हि व्यक्तमवगम्यते ॥ १३ ॥

### पूर्वपक्षः–

( अ. स. ) पञ्चपञ्चेति वाक्ये हि पञ्चविंशतिरेव तु ।
तत्वान्युक्तानि तानि स्युः कापिलाभिमतानि वै ॥ १ ॥

---

ननु–काण्वानां शाखासु एतत्समानार्थकप्रकरणे अन्नस्याग्रहणात् पञ्चजना इत्यस्येन्द्रियपरता नोपपद्यते इत्याशङ्कायामाह—

ज्योतिषैकेषामसत्यन्ने ॥ १ । ४ । १३ ॥

एकेषां शाखासु अन्ने असत्यपि पञ्चजना इत्यस्येन्द्रियपरता ततः पूर्वस्मिन् वाक्ये 'तं देवा ज्योतिषां ज्योतिः' इति ज्योतिश्शब्दनिर्देशाद्विज्ञायते ॥ १३ ॥

इति प्रदीपे सङ्ख्योपसङ्ग्रहाधिकरणम् ॥ ३ ॥

---

१ यस्मिन्नित्यादिः ।

## सिद्धान्तः–

मैवं तु तत्वसङ्ख्यायामाधिक्यं ननु गम्यते ।
यस्मिन्निति च निर्दिष्टमाकाशश्चातिरिच्यते ॥ २ ॥
ब्रह्माधारकता चैषां यस्मिन्निति हि गम्यते ।
वस्तुतो नात्र सङ्ख्यायाः प्रसङ्गः पञ्चविंशतेः ॥ ३ ॥
ज्ञानेन्द्रियाणां पञ्चानां पञ्च पञ्चजना इति ।
निर्देश आकाश इति भूतानामुपलक्षकम् ॥ ४ ॥
सर्वात्मब्रह्मविज्ञानादमृतत्वं च वर्ण्यते ।
कापिलप्रक्रिया तस्मात् लेशतोऽप्यत्र नेष्यते ॥ ५ ॥

इति भाष्ये सङ्ख्योपसङ्ग्रहाधिकरणम् ॥ ३ ॥

## कारणत्वेन चाकाशादिषु यथा-व्यपदिष्टोक्तेः ॥ १ । ४ । १४ ॥

**ननु**–वेदान्तैर्ब्रह्मकारणकत्वं जगतो निश्चेतुं न शक्यते । क्वचित् सदेवेति, क्वचिदसदेवेदमग्र आसीदिति च विविधं श्रवणात् । श्रूयते च–

**कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १।४।१४ ॥**

ननु—'तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत' इति अव्याकृतस्य कापिलाभिमतप्रधानस्य व्यक्तं जगत्कारणत्वं प्रतीयते । 'सदेव सोम्येदमग्र आसीत्' 'असद्वा इदमग्र आसीत्' 'असदेवेमग्र आसीत् तत्सदासीत् तत्सदभवत्' इति श्रूयमाणानां कारणवाक्यानां हि प्रधानकारणपरत्व एव उपपत्तिर्भवति । अव्याकृतावस्थापरतयाऽसदिति निर्देशः, सदिति च विशेषावस्थारहितसन्मात्रपरतयेति । तत ब्रह्मकारणकत्वं न वेदान्तसिद्धमिति । अत्राह–**कारणत्वेन चे**ति । यथाव्यपदिष्टस्य–तत्र तत्र सदसदादिसामान्यशब्दैर्यथाव्यपदिष्टस्यैव **आत्म**शब्देन आकाशादिषु कारणत्वेनोक्तेः न प्रधानकारणत्वं वेदान्ताभिमतं, किन्तु ब्रह्मकारणत्वमेव । तथाच श्रूयते 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी'ति । ब्रह्मण्यपि सदसदादि शब्दानां विवक्षाभेदेन समन्वयात् ॥ १४ ॥

'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत' इति अव्याकृतं तु अव्यक्तं कापिलाभिमतमेव, तथा सति 'सदेव' 'असदेवे'ति निर्देशयोरविरोधः । सदेवेति सत्कारणवादो गम्यते, असदेवेत्यव्याकृतावस्थमुच्यते इति । अत्राह—

**कारणत्वेन चेति** । चस्त्वर्थे । प्रसक्ताशङ्कानिवृत्तिर्द्योत्यते । 'आत्मन आकाशः संभूत' इत्यादिविशेषावधारणेन यथाव्यपदिष्टस्यैव सर्वकारणवाक्येष्वप्युक्तेः । सदसच्छब्दौ हि सामान्यवाचिनौ । विशेषवाक्येनैव तु तदर्थावधारणं कार्यम् । विशेषशब्दश्च ब्रह्मकारणत्वमेव गमयति । 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्युपक्रम्य 'तस्माद्वा एतस्मादात्मन आकाशः संभूत' इति । एवं 'तदैक्षते'ति निर्दिष्टमीक्षणगुणयोग्येव 'तत्तेजोऽसृजते'त्यत्र श्रुतम् । तन्न प्रधानकारणवादस्यात्र प्रसङ्गः ॥१४॥

ननु—असद्वेतिवाक्येन नामरूपविभागरहितं सूक्ष्ममव्यक्तमेव कारणमित्यवगम्यते इत्यत्राह—

## समाकर्षात् ॥ १ । ४ । १५ ॥

पूर्वं योऽयमात्मा परब्रह्मभूतः आकाशादिकारणत्वेनोक्तः, स एवानन्दमयः 'सोऽकामयते'त्युक्तः 'असद्वे'त्यनेन समाकृष्यते । तत्र पूर्ववाक्यपर्यालोचनया नामरूपविभागरहितसूक्ष्मावस्थचिदचिच्छरीरकः परमात्मैवासद्वेत्यनेन निर्दिश्यते इति सिद्धम् । एवमसदेवेत्यत्रापि, तथा 'तद्धेदं तर्ह्यव्याकृतमासी'दित्यत्रापि बोध्यम् ॥ १५ ॥

---

### समाकर्षात् ॥ १ । ४ । १५ ॥

यत्तु—'असद्वा इदमग्र आसीत्' इति श्रूयते तत्र पूर्वमाकाशादिषु कारणतयोक्तस्यात्मनः समाकर्षात्—अनुवृत्तेः । 'आत्मन आकाशः संभूत' इति यः आत्मा कारणत्वेन प्रस्तुतः स एवानन्दमयोऽन्तरात्मेत्युक्त्वा तमेवानन्दमयमधिकृत्य प्रवृत्ता श्रुतिः 'तदप्येष श्लोको भवति' 'असद्वा इदमग्र आसी'दिति । तन्नाव्याकृतप्रधानकारणवादः श्रुत्यन्ताभिमतः ॥ १५ ॥

इति प्रदीपे कारणत्वाधिकरणम् ॥ ४ ॥

### पूर्वपक्षः

(अ. सं.) नानाशाखासु नानैव निर्देशः कारणस्य तु ।
अव्याकृतमसत् सच्चेत्येवं हि श्रूयते ननु ॥ १ ॥
नैकरूपं भवेद्ब्रह्म त्वसदादिपदास्पदम् ।
जडं प्रधानं तु तथा विकारित्वाद्धवेदतः ॥ २ ॥
प्रधानस्यैव हेतुत्वं जगतः प्रतिपाद्यते ।

### सिद्धान्तः

वेदान्तेष्विति चेदत्र ब्रूमो ब्रह्मैव कारणम् ॥ ३ ॥
सर्वज्ञत्वादिगुणकं वर्ण्यते तु समन्वयात् ।
सत्त्वासत्त्वादिनिर्देशो विवक्षाभेदतो भवेत् ॥ ४ ॥
असदित्युच्यते पूर्वं स्थूलावस्थावियोगतः ।
सूक्ष्मावस्थस्य सद्भावात् सदिति व्यपदिश्यते ॥ ५ ॥
सदैकरूपमपि तत् स्थूलसूक्ष्मदशान्वयि ।
भवेद्विशेषणीभूतचिदचिद्द्वारतस्तु वै ॥ ६ ॥

इति भाष्ये कारणत्वाधिकरणम् ॥ ४ ॥

---

## जगद्वाचित्वात् ॥ १ । ४ । १६ ॥

कौषीतकीब्राह्मणे बालाक्यजातशत्रुसंवादे श्रूयते—'यो वै बालाके एतेषां पुरुषाणां कर्ता, यस्य वैतत् कर्म' इति । अत्र वेदितव्यतया श्रूयमाणः किं क्षेत्रज्ञ उत सर्वेश्वरः । अत्राह—क्षेत्रज्ञ एवायम्, 'यस्य वैतत् कर्म' इति कर्मशब्दात् । कर्मशब्दः पुण्यपापयोः प्रसिद्धः । जीवोऽदृष्टद्वारा पुरुषाणामेतेषां कर्ता च भवति । भोग्यभोगोपकरणभूताः पुरुषविशेषाः एतस्यादृष्टेन हि जायन्ते । वेदितव्यं वेदितुमुपसन्नं बालाकिं प्रति तद्बुबोधयिषया अजातशत्रुः सुप्तं पुरुषं समुपगम्य यष्टिक्षेपेण तमुद्बोध्य 'क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत् कुत एतदागात्' इति प्रश्नपूर्वकं स्वयमेव प्रतिवदति 'हिता नाम

नाड्यः'''तासु तदा सुप्तो भवति, यदा सुप्तः स्वप्नं न कथञ्चन पश्यति अथास्मिन् प्राण एव एकधा भवति तथैनं वाक् सर्वैर्नामभिः सहाऽप्येति । श्रोत्रं सर्वैः शब्दैः सहाप्येति ××× स यदा प्रतिबुध्यते यथाऽग्नेर्ज्वलतो विस्फुलिङ्गा विप्रतिष्ठेरन् एवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते' इति । अत्र–अस्मिन् प्राणे इति जीवो निर्दिश्यते । प्राणभृत्त्वात् प्राण इत्युपचारः । एकधा भवनं दर्शनश्रवणादिविविधव्यापाररराहित्येनावस्थानम् । अस्मिन् जीवे वर्तमाने प्राणे मुख्यप्राण इति वार्थः । अत्र सुषुप्त्याश्रयत्वश्रवणात् प्रबोधवेलायां वागादीनां उद्गमनावधित्ववर्णनाच्च सुषुप्त्याद्यवस्थात्रयसंबन्धावगमादयं वेदितव्यतया प्रस्तुतो जीव एव । वेदितव्यता चास्य स्वेन रूपेण । तथाऽस्य भोक्तृता च उत्तरत्र श्रूयते 'तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्ति एवमेवैष प्राज्ञ आत्मा एतैरात्मभिर्भुङ्क्ते' इत्यादिना ।

अत्रोच्यते—वेदितव्यतया प्रस्तुतः सर्वेश्वर एव । कर्मशब्दस्य जगद्वाचित्वात् । क्रियते इति कर्म । एतद्विश्वमिदमतिविचित्रं यस्य कर्म–यत्कृतम् । एषां पुरुषाणां आदित्यादीनां च यः कर्ता स एव वेदितव्य इति तदर्थात् । एतच्छब्दो हि प्रत्यक्षपरिदृष्टं सन्निहिततरमाचष्टे । विचित्रमिदं परिदृश्यमानं जगदेव तु तत् । एतेषां पुरुषाणां कर्तेत्यनेन ये त्वया निर्दिष्टा आदित्यादयो न तेषामन्यतमोऽपि ब्रह्म,

---

**जगद्वाचित्वात् ॥ १ । ४ । १६ ॥**

कौषीतकीब्राह्मणे बालाक्यजातशत्रुसंवादे 'ब्रह्म ते ब्रवाणी'त्युपक्रम्य श्रूयते–'यो वै बालाके एषां पुरुषाणां कर्ता यस्य वैतत् कर्म स वै वेदितव्यः' इति । अत्र यस्य वैतत् कर्मेति पुण्यपापलक्षणकर्मसंबन्धश्रवणात् वेदितव्यतयोपदिश्यमानः भोक्तृवर्गेष्वन्यतम एव भवितुमर्हतीत्यत्रोच्यते, भोक्तृवर्गतो बहिर्भूतः अन्य एवापहतपाप्मा सत्यसङ्कल्पः सर्वेश्वरो यस्येति निर्दिश्यते । कर्मशब्दश्चात्र क्रियते इति कर्मेति व्युत्पत्त्या कार्यभूतजगद्वाचक एवेति न भोक्तुर्वेदितव्यतेहोच्यते ॥ १६ ॥

परं एतेषां यः कर्ता । किं बहुना यश्चाखिलस्यास्य कर्ता स वै वेदितव्य इति तु तदाशयः । उपक्रमानुगुण्याच्च वेदितव्यतया प्रस्तुतः परमात्मैव । उपक्रमे हि बालाकिर्ब्रह्मज्ञंमन्यः अजातशत्रुं प्राप्य 'ब्रह्म ते ब्रवाणी'त्युपक्रम्य आदित्यपुरुषादिषु ब्रह्मबुद्ध्या बहुधाऽवदत् । तदा तमन्ते अजातशत्रुः 'मृषा वै किल मा संवादयिष्ठाः' इति प्रतिषिध्य स्वयं तस्मै ब्रह्म बोधयति 'यो वै बालाके' इत्यादिना ॥ १६ ॥

## जीवमुख्यप्राणलिङ्गान्नेति चेत् तद्व्याख्यातम् ॥ १ । ४ । १७ ॥

ननु—वेदितव्यतयोक्तः कथमीश्वरः, श्रूयते हि जीवस्य लिङ्गं भोक्तृत्वम्, 'तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्त्येवमेष प्राज्ञ आत्मा एतैरात्मभिर्भुङ्क्ते' इति । तथा श्रूयते च 'अथास्मिन् प्राण एव एकधा भवती'ति प्राणस्य प्राणो—मुख्यः प्राणः येनायं जीवति । इति चेन्न । अत्र यद्वक्तव्यं तत् प्रतर्दनविद्यायामेवोक्तम् । यथा प्रतर्दनविद्यायां पौर्वापर्यपर्यालोचनयाऽर्थो निर्णीतः तथेहापि उपक्रमोपसंहारपर्यालोचनया तदनुगुण एवार्थो निर्णेयः । अत्र हि उपक्रमे 'ब्रह्म ते ब्रवाणी'ति समुपस्थितं बालाकिमेष ब्रह्मविदिति प्रहृष्टः प्राह अजातशत्रुः 'सहस्रं दद्मस्ते एतस्यां वाचि जनको जनक इति वा उ जना धावन्ती'ति । अथ बालाकिना आदित्यादिपुरुषेषु उपदिष्टेषु भ्रान्तोऽयं ब्रह्मणीत्यवगम्य 'मृषा वै किल मा संवादयिष्ठा' इति तं प्रत्याचख्यौ । तेनावगम्यते जीवादत्यन्तविलक्षणं परंब्रह्मैवात्र प्रतिपिपादयिषितमिति ।

---

**जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥ १।४।१७ ॥**

'एवमेष प्राज्ञ आत्मा एतैरात्मभिर्भुङ्क्ते' इति भोक्तृत्वं जीवलिङ्गं श्रूयते, तथा 'अथास्मिन् प्राण एवैकधा भवती'ति मुख्यप्राणलिङ्गं चेति चेन्न तदेतत् प्रतर्दनविद्याविचारे एव (इन्द्रप्राणाधिकरणे) उपासात्रैविध्यादित्यनेन व्याख्यातम् ॥ १७ ॥

तथा उपसंहारे च श्रूयते—'सर्वान् पाप्मनोऽपहाये'त्यादिना ब्रह्मविद्याफलम् । तत् नात्र जीवो विवक्षितः ॥ १७ ॥

ननु श्रूयमाणानां जीवलिङ्गानां कथं निर्वाहः ? तत्राह—

**अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १ । ४ । १८ ॥**

तुशब्दः शङ्काव्यावृत्तये । यज्जीवलिङ्गमिह श्रूयते तदन्यार्थम्—जीवातिरिक्तब्रह्मस्वरूपप्रतिबोधनार्थम् । कुत इदमवगम्यते ? प्रश्नव्याख्यानाभ्याम् । व्याख्यानं प्रतिवचनम् । तथाहि—प्रश्नस्तावत् 'क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत् कुत एतदागात्' इति । प्रश्नश्चायं प्रसुप्तस्य आमन्त्रणयष्टिघातोत्थापनादिना प्रतिबोधनानन्तरं प्रवर्तते । तत्रामन्त्रणं 'बृहन्पाण्डरवासाः सोमराजन्' इति प्राणनामभिः । 'प्राणो वाव ज्येष्ठश्च श्रेष्ठश्चे'ति श्रूयमाणज्यैष्ठ्यश्रैष्ठ्यलक्षणबृहत्त्वयोगात् बृहन्निति । पाण्डर इत्यापो लक्ष्यन्ते, अपां प्राणवासस्त्वं चान्यत्र श्रुतम्, तत् पाण्डरवासोयोगात् पाण्डरवासा इति । 'अथास्य

---

**अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १ । ४ । १८ ॥**

जैमिनिः प्राह—यष्टिघातोत्थापनादिना यत्तत्र जीवस्वरूपावबोधनं तदन्यार्थं ततोऽन्यस्य परमात्मन अवबोधनार्थम्, प्रश्नप्रतिवचनाभ्यां चैतदवगम्यते । प्रश्नस्तावत्—'क्वैष एतत् बालाके पुरुषोऽशयिष्ट, क्व वा एतदभूत् कुत एतदागात्' इति । प्रतिवचनं तावत्—'यदा सुप्तः स्वप्नं न कथञ्चन पश्यति तदाऽस्मिन्' प्राण एवैकधा भवति एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः' इति । सुषुप्त्यवस्थायामेष पुरुषः क्व तिष्ठति प्रबुध्यन् कस्मात्प्रत्यागच्छतीति प्रश्नार्थः । प्राणे—सर्वप्राणनहेतुभूते परमात्मनि तिष्ठति, ततः

---

टिप्प०—सूत्रस्थव्याख्यानशब्दविवरणं प्रतिवचनशब्देन ।

प्राणस्यापः शरीरं ज्योतीरूपमसौ चन्द्र' इति श्रवणादुपचारतः सोम-राजन्निति च प्राणस्य संबोधनम्। एवं प्राणनामभिः संबोधितोऽप्येष प्राणः उच्छ्वासनिःश्वासलक्षणव्यापारेण जाग्रन्नेव यतो न प्रतिबुद्धवान् अतोऽयं देह इवाचेतनः, ततोऽन्य एव तु जीवो यो यष्टिघातेन प्रति-बुद्धवानित्यवबोध्य जीवादप्यन्यो वेदितव्यः परमात्मेति ज्ञापनार्थ-मयं प्रश्नः प्रतिवचनं च। तत्र 'क्वैष बालाके पुरुषोऽशयिष्ट'ति स्वप्नस्था-नप्रश्नः, 'कुत एतदभू'दिति सुषुप्तिस्थानप्रश्नः, कुत एतदागात्–प्रबोध-वेलायां कुतः प्रत्यागत इत्यपि तस्यैव प्रश्नः। तत्र प्रतिवचनं 'हिता नाम हृदयस्य नाड्यो हृदयात्पुरीततमभिप्रतन्वन्ति ××× तासु तदा भवती'ति स्वप्नस्थाननिरूपणम् 'यदा स्वप्नं न कश्चन पश्यति अथा-ऽस्मिन् प्राण एवैकधा भवति । तथैनं वाक् सर्वैर्नामभिः सहाप्येति चक्षुः सर्वै रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वै-र्ध्यानैः सहाप्येति। स ह यदा प्रतिबुध्यते यथाऽग्नेर्ज्वलतो विस्फुलिङ्गा विप्रतिष्ठेरन् एवमेवैतस्मात् आत्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोका' इति सुषुप्तिस्थाननिरूपणम्। अत्र प्राणः परमात्मा, तस्मिन्नस्य जीवस्य एकधाभावश्च तत्तत्करणद्वारकनाना-विधज्ञानप्रसराभावः। परमात्मन एव स्वापस्थानत्वमन्यत्रापि श्रूयते– 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' 'सता सोम्य तदा संपन्नो भवति' इति । सुषुप्तिसमये परमात्मन्येकधा स्थितस्य प्रबोधसमये ततो निर्गमनं एतस्मादात्मनः प्राणा यथायतन-

---

प्रत्यागच्छतीति च प्रतिवचनार्थः। अपिच एके शाखिनः माध्यंदिनाः एव-मेव प्रश्नप्रतिवचने पठन्ति । 'यत्रैष एतत्सुप्तोऽभूत् य एष विज्ञानमयः पुरुषः क्वैष तदाऽभूत् कुत एतदागात्' इति प्रश्नः; 'तदेतेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते' इति प्रतिवचनम्। अन्तर्हृदये वर्तमान आकाशः परमात्मा इति दहरविद्यादिषु स्पष्टम् ॥ १८ ॥

**इति प्रदीपे जगद्वाचित्वाधिकरणम् ॥ ५ ॥**

मित्यादिनोच्यते । इत्थं चात्र जाग्रत्स्वप्नसुषुप्तिलक्षणावस्थात्रयविशिष्टात् जीवात् सुषुप्तजीवाश्रयभूतः परमात्मा विलक्षणः, स वै वेदितव्य इति ज्ञापनार्थं जीवपरामर्शः । जैमिनेरप्यभिमतमेतत् । **अपि चैवमेके ।** एके—वाजसनेयिनश्च एवमेवामनन्ति—सुषुप्तात् जीवात् भिन्नं सुषुप्तजीवाश्रयभूतं परमात्मानं व्यक्तमामनन्ति 'य एष विज्ञानमयः पुरुषः क्वैष तदाऽभूत् कुत एतदागात्' 'यत्रैष एतत्सुप्तोऽभूत् य एष विज्ञानमयः तदैतेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते' इति । अयं चाकाशः परमात्मा । तस्मात् सिद्धमत्र परमात्मैव वेदितव्यतया उच्यते इति ॥ १८ ॥

## पूर्वपक्षः—

(अ. स.) अजातशत्रुणा योऽयं ज्ञातव्य इति कीर्तितः ।
स किं जीवः परो वेति विशये समुपस्थिते ॥ १ ॥
आह जीवविशेषोऽयं कर्मसम्बन्धबोधनात् ।
सच सर्वस्य सूर्यादेः स्रष्टा ब्रह्मेति साम्प्रतम् ॥ २ ॥

## सिद्धान्तः—

अत्र ब्रूमः परात्मैव स्रष्टृत्वेन प्रकीर्तितः ।
क्रियमाणं जगत् सर्वं कर्मेति परिकीर्तितम् ॥ ३ ॥
सूर्यादिदेवतानां च प्रपञ्चस्यापि कार्त्स्न्यतः ।
स्रष्टा जीवो भवेन्नैव कार्यकोटिनिवेशितः ॥ ४ ॥
यथा प्राणाद्विविक्तात्मबुद्धये प्राणकीर्तनम् ।
तथा जीवाद्विविक्तस्य ब्रह्मणः प्रतिपत्तये ॥ ५ ॥
स्वापावस्थस्य जीवस्य वर्णनं जैमिनेर्मतम् ।
स्वापे जीवस्याश्रयश्च परमात्मैव विश्रुतः ॥ ६ ॥
परप्रकरणे जीवलिङ्गादेः श्रवणे सति ।
तत्तद्विशिष्टवेषेण ब्रह्मणः स्यादुपास्यता ॥ ७ ॥

इति भाष्ये जगद्वाचित्वाधिकरणम् ॥ ५ ॥

## वाक्यान्वयात् ॥ १ । ४ । १९ ॥

बृहदारण्यके श्रूयते–'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति । अत्र द्रष्टव्यत्वादिना श्रूयमाणः क इति विचार्यते । अत्राह–कापिलतन्त्रसिद्धः पुरुष एवायमात्मेति निर्दिश्यते । पूर्वं 'न वाऽरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवति' इत्यादिना पतिजायादिसंबन्धः श्रूयते । तत् विज्ञायते अयमात्मा पुरुषान्नातिरिच्यते इति । अयं भावः–लोके पतिः जायायाः प्रियो भवति, जाया पत्युः प्रिया भवति, एवं ते ते तस्य तस्य प्रिया भवन्ति, कस्यार्थे प्रिया भवन्ति, न तेषामर्थे, किन्तु स्वस्य स्वस्यार्थे, तस्मात् यस्यार्थे सर्वं प्रियं भवति स क इति स्वस्य स्वरूपं हि श्रोतव्यं मन्तव्यं निदिध्यासितव्यं द्रष्टव्यम् । आत्मानं

---

### वाक्यान्वयात् ॥ १ । ४ । १९ ॥

बृहदारण्यके श्रूयते–'न वाऽरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति' 'न वाऽरे जायायाः कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति × × × आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति । अत्र द्रष्टव्यतया श्रूयमाण आत्मा जीवात्मनो नातिरिच्यते; पतिजायादिप्रियनिरूपणादित्यत्राह–अयमात्मा परमात्मैव, वाक्यान्वयात्–अन्यथा तत्र श्रूयमाणानि वाक्यान्यनन्वितानि स्युः । उपक्रमे 'अमृतत्वस्य तु नाशास्ति वित्तेन' 'येनाहं नामृता स्यां किमहं तेन कुर्याम्' इति । अनेन च अमृतत्वप्राप्तिसाधनं यत् तदेव विजिज्ञासितमिति विज्ञायते । प्रतिवचने च 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितं भवति' 'इदं ब्रह्म इदं क्षत्रं इमे लोकाः इमे देवा इमानि भूतानि इदं सर्वं यदयमात्मा' इति । अनेन एकविज्ञानेन सर्वविज्ञानं सकलचेतनाचेतनात्मता च गम्यते । तदेषां वाक्यानां परमात्मपरत्व एव समन्वयो भवेत् । 'आत्मनस्तु कामाये'त्यादिवाक्यार्थस्तु भाष्यतोऽवगन्तव्यः । आत्मशब्दश्च सर्वमन्तरात्मतया व्याप्नोतीति व्युत्पत्त्या सर्वात्मनि परमात्मनि मुख्य एव ॥ १९ ॥

यथावदविदित्वा परिभ्रमति परित इदं प्रियमिदं प्रियमिति । तद्वि-चार्यं स्वस्य स्वरूपमिति । तथा च तन्त्रसिद्धात् पुरुषात् अतिरिक्तो न कश्चित् परमात्मा सर्वेश्वर इति । मध्ये च श्रूयते–'विज्ञानघन एवै-तेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यती'ति जननमरणयोगः। अयं च पुरुषमेव ज्ञापयति । ननु अमृतत्वमिच्छन्त्यै मैत्रेय्यै अयमुपदेशः प्रवर्तते । पुरुषेण जीवेनानेन विदितेन कथममृतत्वम् ? । उच्यते–प्रकृतिपुरुषविवेकाग्रहादेव हि संसारः, पुरुषो हि पुष्करपलाशवन्निर्लेपः, तस्मिन् प्रकृतिधर्माध्यासेन भवति रागादिदोषः, तस्मात् पुरुषो विशुद्धो द्रष्टव्य उच्यते । पुरुषाणां प्रतिक्षेत्रं भेदे सत्यपि स्वतोऽविषमतया देवादिभेदस्य प्रकृतिगततया आत्मनः स्वरूपे यथावत् श्रुते मते सर्व-मेव श्रुतं मतं भवति पुरुषेष्वविशेषादित्युच्यते । तस्मान्नात्र तन्त्रसिद्धात् पुरुषादस्माज्जीवादतिरिक्तः परमात्मोच्यते इति ।

अत्रोच्यते–वाक्यान्वयात्–अस्मिन् याज्ञवल्क्यमैत्रेयीसंवादरूपे प्रकरणे विद्यमानानां सर्वेषां वाक्यानां परमात्मपरत्व एव समन्वयात्, परमात्मैवात्र प्रतिपाद्यते । तथा हि–उपक्रमे श्रूयते मैत्रेय्या विरक्ति-र्वित्तादौ अमृतत्वे चेच्छा, 'सा होवाच मैत्रेयी येनाहं नामृता स्यां किं तेन कुर्यां, यदेव भगवान् वेद तदेव मे ब्रवीत्वि'ति । तदयमुपदेशः अमृतत्वोपायोपदेश एव, यद्वेदनममृतत्वोपायभूतं स एवात्र 'द्रष्टव्यः श्रोतव्यो मन्तव्य' इत्युपदिश्यते इति वक्तव्यम् । स च सर्वेश्वर एव । 'तमेवं विद्वानमृत इह भवति नान्यः पन्था' इति परमात्मवेदनस्यैवा-मृतत्वसाधनत्वमन्यत्रापि श्रूयते । प्रकृतिपुरुषविवेकस्तु परमात्मवेदने अङ्गभूतः । 'आत्मनि खल्वरे दृष्टे श्रुते मते' इत्यादिना श्रूयमाणं एक-विज्ञानेन सर्वविज्ञानं तन्त्रसिद्धपुरुषपरत्वे नैवोपपद्यते, प्रकृतिपुरुष-योरत्यन्तभेदात् पुरुषाणां च मिथो भेदात् । न च सर्वस्यास्य एक आत्माऽभ्युपगम्यते, येनैकात्म्येन एकविज्ञानेन सर्वविज्ञानमुपपद्येत । यत्तूक्तं पुरुषाणामवैषम्यात् एकस्मिन् दृष्टे सर्वं दृष्टं भवतीति, तन्नोप-

पद्यते । पुरुषाणामविषमत्वेऽपि प्रकृतिपरिणतेरचिदंशस्यात्यन्तभिन्नतया तद्दर्शनासंभवात् सर्वं दृष्टं भवतीत्येतदनुपपन्नमेव । 'इदं ब्रह्मेदं क्षत्र'मित्युपक्रम्य 'इदं सर्वं यदयमात्मे'ति हि श्रूयते । परमात्मना सर्वान्तरेणैकात्मकतया इदं सर्वं यदयमात्मा इति तु सूपपन्नम् । एवं प्रथमे मैत्रेयीब्राह्मणे 'महद्भूतमनन्तमपार'मित्यादिना श्रूयमाणाः महत्त्वादयो गुणाः परमात्मन एवोपपद्यन्ते । ननु–पतिजायाद्यन्वयः श्रूयमाणः परमात्मपरत्वे कथमुपपद्यते? कथं वा जीवात्मपरत्वे उपपद्यते? ननु जीवान्नातिरिक्तः परमात्मा, यस्यायं पतिजायादिकं प्रियं सोऽयमात्मा श्रोतव्यो मन्तव्यो निदिध्यासितव्यो द्रष्टव्य इत्युच्यते । यस्येदं प्रियं स आत्मा द्रष्टव्य इति द्रष्टव्यस्यात्मनो विशेषनिर्देशः कस्मै? । श्रोतव्यत्वतोपयोगितया हि स विशेषः । न च पत्यादीनां प्रियत्वमात्मनः श्रोतव्यत्वे उपयुज्येत । यत् प्रियं तदेव हि श्रोतव्यम् । न च प्रियवियुक्तं स्वरूपमन्वेष्टव्यमित्यत्र प्रियप्रतिसंबन्धित्वनिरूपणमुपयुज्यते । प्रियप्रतिसंबन्धिता च न स्वेन विशुद्धेन रूपेण । ननु किमनया प्रतिबन्द्या, अनुगुणोऽर्थस्तु वक्तव्यः । उच्यते । पत्नीपुत्रवित्तादयः कस्यचित्प्रिया भवन्ति, कस्मात्? अहमस्य प्रियः स्यामिति स्वसङ्कल्पान्न प्रिया भवन्ति, किन्तु आत्मनः-परमात्मनः कामाय-स्वाराधकप्रियप्रापणरूपमिष्टं निर्वर्तयितुम्, यथाराधनं यः प्रियं प्रापयति तस्य परमात्मनः सङ्कल्पादिति यावत् ।

'आत्मनस्तु कामाय सर्वं प्रियं भवती'त्यन्तमात्मशब्देन जीव एवाभिधीयताम् । 'आत्मा वा अरे द्रष्टव्य' इति द्रष्टव्यतया श्रूयमाणस्तु परमात्मैवेत्यप्यपरे । अयमाशयः–काम्यते इति कामः–सुखम् । जायापुत्रादिकं यद्यत्प्रियं भवति, तदात्मनः स्वस्य सुखाय प्रियं भवति । तत्र तत्र प्रीतिः स्वसुखाय, सुखसाधनत्वात्तस्य तस्य । यत् सुखसाधनं तदेव जातु दुःखायापि भवति, तत् सुखार्थिना यदेव निरतिशयसुखैकरूपं तदेव श्रोतव्यं इत्याशयेन 'आत्मा वारे' इत्युच्यते, सच स्वाभाविकानवधिकातिशयानन्दस्वरूपः परमात्मैवेति ॥ १९ ॥

ननु श्रोतव्यतया श्रूयमाणः जीवातिरिक्तः परमात्मा चेत् उत्तरत्र 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविश्यती'ति जीवशब्देन निर्देशः कथमुपपद्यते इति चेत् तत्र मतान्तरेण समाधानमाह—

## प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ १ । ४ । २० ॥

"आत्मनि खल्वरे दृष्टे श्रुते मते इदं सर्वं विदितं भवती'ति या एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा तस्याः सिद्धेः लिङ्गमिदं यत् जीवावबोधकशब्देन परमात्मनोऽभिधानम् । ब्रह्मकार्यत्वात् जीवस्यानन्यत्वं ब्रह्मणोऽभिप्रेत्य जीवशब्देनाभिधानं ब्रह्मणः, इत्याश्मरथ्य आचार्यो मन्यते ॥ २० ॥

## उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ १।४।२१॥

औडुलोमिस्तु मन्यते—न ब्रह्मकार्यत्वं जीवस्य, 'न जायते म्रियते वे' त्यादिश्रुतिशतविरोधात् । किन्तु-उत्क्रमिष्यत एवंभावात्—इतः

---

आत्मशब्देन परमात्मनो निर्देशे मतान्तरमाह—

### प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ १ । ४ । २० ॥

आश्मरथ्य आचार्यो मन्यते—प्रतिज्ञासिद्धेर्लिङ्गमिदम्, यज्जीववाचिनाऽऽत्मशब्देन परमात्मनोऽभिधानम् । 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितं भवती'त्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञा जीवात्मनोऽपि तत्कार्यत्वेनानन्यत्वेन हि सिद्ध्यति, तदिदमनन्यत्वमभिप्रेत्य जीवात्मवाचिशब्देन परमात्मनो निर्देश इति ॥ २० ॥

### उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ १ । ४ । २१ ॥

औडुलोमिराचार्यो मन्यते—उत्क्रमिष्यतः—इतः संसृतेरुत्क्रमिष्यत एवंभावात्—परब्रह्मभावात्, परस्मिन् ब्रह्मणि विलयेन तत्स्वरूपापत्त्या तदभेदसंपत्तेः जीवात्मवाचिशब्देन तन्निर्देश इति ॥ २१ ॥

प्रेतस्य मुक्तौ ब्रह्मभावात्। श्रूयते हि मुक्तौ जीवस्य ब्रह्मभावः—'एष संप्रसादोऽस्मात् शरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति अयं भावः—भेदोऽयं जीवब्रह्मणोरौपाधिकः। अभेद एव तु स्वाभाविकः। अनाद्यविद्योपाधिसंवलितो जीव उच्यते, तदपगमे च ब्रह्मैव भवतीति ॥ २१ ॥

## अवस्थितेरिति काशकृत्स्नः ॥ १ । ४ । २२ ॥

अन्तर्यामितया परमात्मनःसर्वत्रावस्थितेः सर्वमिदं चेतनाचेतनात्मकं वस्तुजातं ब्रह्मात्मकमेवेति जीवशब्देन ब्रह्माभिधानमिति काशकृत्स्नः **अयमाशयः**—यस्मादेष सर्वस्यान्तरात्मतयावस्थितः स्वशरीरभूतैः तैस्तैश्चेतनाचेतनैर्विशिष्टः, स्वेतरसमस्तवस्तुप्रकारकोऽवस्थितः, तस्मात्—प्रकारभूतजीववाचिना शब्देन परमात्माऽयमभिधीयते इति। इदमेव तु स्वमतम्। मतद्वयं प्रथमत उपन्यस्यान्ते उपन्यासात्। उत्तरोत्तरमतानुसरणं पूर्वपूर्वमते अरुचिं हि सूचयति। आश्मरथ्याभिमतः ब्रह्मस्वरूपपरिणामवादः उत्पादविनाशप्रतिषेधकश्रुतिशतविरुद्धः। यश्चायमौडुलोम्यभिमत औपाधिकजीवभेदवादः, स च जीवब्रह्मणोः स्वाभाविकभेदप्रतिपादकश्रुतिशतविरुद्धः, उपपत्तिपराहतश्च। काशकृत्स्नाभिमतात्पक्षात् अन्यः पक्षो नोपन्यस्त इत्ययमेव पक्षोऽनवद्य इति सिद्धम्।

अत्राध्यासवादिभिः स्वरूपपरिणामवादौपाधिकजीवभेदवादिनोः पक्षौ स्वानभिमतौ क्रमान्निरूप्य स्वाभिमतं काशकृत्स्नपक्षं तृतीय-

---

**अवस्थितेरिति काशकृत्स्नः ॥ १ । ४ । २२ ॥**

काशकृत्स्न आचार्यस्तु मन्यते—अवस्थितेः—सर्वत्रान्तर्यामितयाऽवस्थितेः सर्वस्य तदात्मकत्वेन शरीरवाचिशब्देन शरीरिणो निर्देशः समुचित इति। इदमेव तु सूत्रकारस्य मतम् ॥ २२ ॥

इति प्रदीपे वाक्यान्वयाधिकरणम् ॥ ६ ॥

सूत्रेण प्रदर्शयतीति व्याख्यातम् । तत्र तृतीयसूत्रस्य यद्व्याख्यानं 'विज्ञानात्मना ब्रह्मण एवावस्थिते'रिति न तत्सूत्राक्षरानुगुणम् । अव-पूर्वकस्थाधातुना निर्देशः 'यः पृथिव्यां तिष्ठन्नि'त्यादिना निर्दिश्य-मानं सर्वत्रावस्थानं प्रत्यभिज्ञापयति । असङ्कोचन्यायेन सर्वत्रावस्थिति-रेव तु स्वरसतो गम्येत । विज्ञानात्मना भावमात्रं तु ब्रह्मणो वक्तव्यं भवता । विज्ञानात्मनेति च सूत्राद्बाह्यम् । किञ्च—'उत्क्रमिष्यत एवं-भावा'दित्यनेनानुत्क्रमिष्यतः अनेवंभाव औडुलोमेरभिमत इति गम्यते । काशकृत्स्नस्य चेदनुत्क्रमिष्यतः अनेवंभावो नाभिमतः, काशकृत्स्नमतं प्रदर्शयता 'एवमेवभावा'दित्येव सूत्रं कर्तव्यम् । अयमेव हि विशेषस्ततोऽभिमन्यते स्वपक्षेऽध्यासवादिना । किञ्च— पारमार्थिकोपाधिकृतजीवभाववादः केषांश्चित्, केषांश्चिदपारमार्थिको-पाधिकृतजीवभाववादः, इत्येव विशेषः, उभयोरप्युपाधित उत्क्रमि-ष्यत एवंभाववादः समानः । औडुलोमिमतोपन्यासादेव तदुभयसङ्ग्रह-संभवात् ताभ्यां भिन्न एव पक्षः काशकृत्स्नस्येति च गम्यते । तत् अस्माभिर्व्याख्यातमनवद्यम् ॥ २२ ॥

(अ. सं.) मैत्रेयीब्राह्मणे योऽयं द्रष्टव्यत्वादिना श्रुतः ।
आत्मा स किं जीव एव परो वेत्यत्र चिन्त्यते ॥ १ ॥

पूर्वपक्षः—

जीव एव भवेदात्मा जायापुत्रप्रियान्वयात् ।
विज्ञानघन एवायं तान्येवानुविनश्यति ॥ २ ॥
भूतेभ्य एभ्य उत्थाय संज्ञा प्रेत्य न चास्ति वै ।
इत्यादि श्रवणं तस्मिन्नुपपन्नमतोऽस्य च ॥ ३ ॥
स्वरूपं शुद्धमेवात्र द्रष्टव्यत्वेन कीर्तितम् ।
स एव च परं ब्रह्म शुद्धरूपो न चेतरः ॥ ४ ॥

सिद्धान्तः—

अत्र ब्रूमोऽत्र वाक्यानां ब्रह्मण्येव समन्वयः ।
तज्ज्ञानादेव सर्वार्थविज्ञानं सम्भवेन्ननु ॥ ५ ॥

सर्वं च तन्निष्ठमेव न स्वनिष्ठं कदाचन ।
नामरूपप्रपञ्चस्य जनिरप्यत एव तु ॥ ६ ॥
किञ्चामृतत्वप्रार्थिन्यै मैत्रेय्यै कथितो ह्ययम् ।
आत्मा स पर एव स्यात् नान्यः पन्था हि विद्यते ॥ ७ ॥
यस्यानुकूलसङ्कल्पाज्ञायादि भवति प्रियम् ।
जीवस्य स हि संसेव्यः सर्वकामार्थसिद्धये ॥ ८ ॥
जीवशब्देन निर्देशो ब्रह्मणो घटतेऽपि च ।
अन्तरात्मतया जीवेऽवस्थानात् परमात्मनः ॥ ९ ॥

इति भाष्ये वाक्यान्वयाधिकरणम् ॥ ९ ॥

---

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ १।४।२३ ॥

एतावता निरीश्वरसाङ्ख्यस्य नोपनिषत्पथे अवकाश इति निरूपितम् । अथ सेश्वरसाङ्ख्यपक्षस्यापि नावकाश इत्येतन्निरूप्यते–'प्रकृतिश्चेति । अत्राहुः— न वयं चेतनानधिष्ठिता प्रकृतिर्जगतः कारणमिति वदामः, किन्तु सर्वज्ञपरमेश्वराधिष्ठिता प्रकृतिरेव तु कारणमिति । निमित्तकारणमात्रं तु सः । श्रूयते च तथा–'ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः । सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत्' 'विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्' 'अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः' इति । नोपपद्यते च ब्रह्मण उपादानत्वमपरिणामित्वात्, निमित्तोपादनयोर्भेदनियमाच्च । न हि घटं प्रति

---

**प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्** ॥ १ । ४ । २३ ॥

ननु चेतनानधिष्ठितं स्वतन्त्रं प्रधानं जगतो नोपादानम्, अपि तु परब्रह्मणाधिष्ठितमेव तु तत् । निमित्तमात्रं तु परं ब्रह्मेत्यत्राह–**प्रकृतिश्च**–जगतः प्रकृतिश्च–उपादानं च ब्रह्मैव, प्रतिज्ञादृष्टान्तानुपरोधात्–'स्तब्धोऽस्युत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञात'मिति या एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा, यश्च 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं

कुलाल एव निमित्तमुपादानं च भवितुमर्हति । उपादानस्य विकारित्व-नियमात् निमित्तस्य च अतथात्वात् ।

अत्रोच्यते–प्रकृतिश्च–परं ब्रह्मोपादानं च भवति । न केवलं निमित्तम्, उपादानं चेत्यर्थः । कस्मात्? प्रतिज्ञादृष्टान्तानुपरोधात् । 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञात'मिति येयमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञा, यश्च 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्या'दिति दृष्टान्तः, तयोरनुपरोधात्, अनुरोधादित्येतत् । यदि नोपादानं ब्रह्म तर्हि तयोरुपरोधः स्यात् । ताभ्यां हि कार्यकारणयोरनन्यत्वं ज्ञाप्यते । कार्यानन्यभूतेन हि कारणेनोपादानेनैव भाव्यम् । न च निमित्तकारणविज्ञानात् कार्यस्य भवति विज्ञानम् । यदेवोपादानं ब्रह्म तदेव निमित्तं चेत्यनयैव प्रतिज्ञया सिद्ध्यति । यदि निमित्तमन्यदितः स्यात् उपरुध्येतैवेयं प्रतिज्ञा, विज्ञातेऽप्युपादानेऽनभिज्ञानात् द्वितीयस्य । 'उत तमादेशमप्राक्ष्य' इत्यत्र आदेशशब्दाच्च निमित्तत्वमवगम्यते । आङ्पूर्वकदिशिधातोः प्रशासनार्थकतया; यः सर्वस्यास्य प्रशासकः स किं त्वया पृष्ट इत्यर्थात् । प्रशासकेन हि निमित्तेन

---

स्यादि'ति दृष्टान्तः, तयोरनुपरोधात् । अन्यथा तयोरुपरोधः स्यात् । सर्वस्यास्य चेतनाचेतनप्रपञ्चस्य मृत्पिण्डविज्ञानेन मृण्मयस्येव यद्विज्ञानेन विज्ञातता तेन हि तदुपादानेन भाव्यम् । स्वभावतः स्वरूपतोऽत्यन्तविलक्षणं चिदचिदीश्वर-तत्त्वत्रयमभ्युपगच्छतामयमुपादानोपादेयभावः कथं घटत इति तु वेदान्त-हार्दमजानतां चोद्यम् । मिथः स्वरूपस्वभाववैलक्षण्येऽपि विशिष्टं तत्त्वमेकमेव तु । यदिदं चिदचिदुभयं न दण्डकुण्डलादिवत् स्वतन्त्रम्, अपि तु जाति-गुणवत् परमात्मनः अपृथक्सिद्धप्रकारभूतम् । अन्तर्यामिब्राह्मणोक्तशरीरशरी-रिभावेन तस्य तथात्वं व्यक्तम् । तथा च परंब्रह्मैव स्वेतरसमस्तचिदचिद्वस्तु-विशिष्टं स्वतनुभूतचेतनाचेतनस्थौल्यसौक्ष्म्याभ्यां कार्यकारणभावौपायिकमव-स्थाभेदं प्राप्नोतीति एकमेव परंब्रह्म बहुधा भवतीति नेह दुर्घटं किमपि । भाष्ये विशेषो बोध्यः ॥ २३ ॥

भाव्यम् । तथोत्तरत्र 'एकमेवाद्वितीय'मित्यधिष्ठात्रन्तरप्रतिषेधात् 'तदैक्षत बहु स्या'मिति ईक्षणश्रवणाच्च । तदेवमभिन्ननिमित्तोपादानत्व-प्रतिपादकश्रुत्यनुरोधात् परं ब्रह्म प्रकृतिश्च ॥ २३ ॥

## अभिध्योपदेशाच्च ॥ १ । ४ । २४ ॥

अभिध्या—सङ्कल्पः; तस्योपदेशात् । 'सोऽकामयत बहु स्यां प्रजायेय' 'तदैक्षत बहु स्यां प्रजायेये'ति स्वस्यैव बहुभवनसङ्कल्पश्रुतेः ब्रह्मैव निमित्तमुपादानं च ॥ २४ ॥

## साक्षाच्चोभयाम्नानात् ॥ १ । ४ । २५ ॥

किञ्च-निमित्तत्वमुपादानत्वं च साक्षात् कण्ठरवेणाम्नायते— 'किंस्विद्वनं क उ स वृक्ष आसीत् यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा पृच्छतेदुतद्यदध्यतिष्ठद्भुवनानि धारयन्' 'ब्रह्म वनं ब्रह्म स उ वृक्ष आसीत्...मनीषिणो मनसा प्रब्रवीमि वः ब्रह्माध्यतिष्ठत् भुवनानि धारयन्' इति । आभ्यां प्रश्नोत्तराभ्यां वनवृक्षदृष्टान्त-मुखेनोपादानत्वादि ब्रह्मण एवेति गम्यते । तत्र प्रश्ने रथकारो वनाद्वृक्षमादाय वास्यादिकमधिष्ठाय रथादिकमिव द्यावापृथिव्यादि सृजन्नयं सर्वेश्वरः कस्मात् वनस्थानीयात् प्रदेशात् वृक्षस्थानीयं किमु करणमधिष्ठाय द्यावापृथिव्यादिकमिदं निष्टतक्षेति उपादानोपकरणादिकं पृष्टम्, तत्रोत्तरं ब्रह्मैवोपादानमधिकरणमुपकरणं कर्तृ चेति ॥ २५ ॥

---

### अभिध्योपदेशाच्च ॥ १ । ४ । २४ ॥

उत्तरत्र कार्यकारणभावनिरूपणप्रकरणे 'तदैक्षत बहु स्यां प्रजायेये'ति परस्य ब्रह्मणो बहुभवनसङ्कल्पोपदेशाच्चोपादानं परं ब्रह्मेति विज्ञायते । अभिध्या च सङ्कल्पः ॥ २४ ॥

### साक्षाच्चोभयाम्नानात् ॥ १ । ४ । २५ ॥

न केवलं लिङ्गम्, साक्षात् उभयम्—निमित्तत्वमुपादानत्वं चेत्युभयमाम्नायते च । 'ब्रह्म वनं ब्रह्म स वृक्ष आसीत् यतो द्यावापृथिवी निष्टतक्षुः । × × × ब्रह्माध्यतिष्ठत् भुवनानि धारयन्' इति ॥ २५ ॥

## आत्मकृतेः ॥ १ । ४ । २६ ॥

'तदात्मानं स्वयमकुरुते'ति स्वस्यैव विचित्रजगदाकारेण करणश्रुतेः निमित्तमुपादानं च ब्रह्मैव ॥ २६ ॥

ननु ब्रह्म स्वयं स्वात्मानं बहुधा करोतीति कथम् ?

## परिणामात् ॥ १ । ४ । २७ ॥

स्वयमेव बहुधा परिणमति ब्रह्म । न त्वैन्द्रजालिक इव बहुधा करोति । ननु ब्रह्म निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्, बहुधा परिणमति च स्वयमेवेत्यनुपपन्नम्, स्वरूपोपमर्दप्रसङ्गात् । नैवम् । परिणतिरवस्थान्तरापत्तिमात्रम् । अनुपमृदितस्वस्वरूपस्यापि ब्रह्मणः सेयमुपपद्यते । कथमेतत् ? । ब्रह्मस्वरूपमजानतः सेयमाशङ्का । ब्रह्म हि विशिष्टमेकं तत्त्वम् । यश्चेतनवर्गो यश्चाचेतनवर्गः यश्चायं परमात्मा तदेतत्त्रयं न जातु विश्लिष्टम् । संश्लिष्टमेव तु सदा । तेषु चेतनवर्गः अचेतनवर्गश्च परमात्मनः शरीरम्, अन्तः प्रविश्यात्मतया नियमयन्नेष तयोः शरीरी । तदिदमन्तर्यामिब्राह्मणे श्रुतम् । शरीरं च शरीरिणः अपृथक्सिद्धप्रकारभूतम् । तथा च समस्तवस्तुप्रकारः परमात्मेत्येकमेव तु स्वतन्त्रं तत्त्वम् । स चायं स्वप्रकारभूतचिदचिद्वस्तुनी

---

### आत्मकृतेः ॥ १ । ४ । २६ ॥

'सोऽकामयत बहु स्यां प्रजायेयेति × × × तदात्मानं स्वयमकुरुते'ति आत्मन एव बहुधाकरणं च श्रूयते ॥ २६ ॥

प्रकृतित्वं चास्य नाध्यासाधिष्ठानतयौपचारिकम्, किन्तु मुख्यमेव—

### परिणामात् ॥ १ । ४ । २७ ॥

सकलचेतनाचेतनशरीरकं परंब्रह्मैव प्रलयावस्थायां नामरूपविभागानर्हसूक्ष्मचेतनाचेतनशरीरकं सत् बहु स्यामिति सङ्कल्प्य नामरूपविभागार्हस्थूलचेतनाचेतनशरीरकतया परिणमति । परिणामो ह्यवस्थाभेदः । श्रूयते चात्र निदर्शनमनुरूपं 'यथोर्णनाभिः सृजते गृह्णते चे'ति ॥ २७ ॥

सूक्ष्मयन् स्थूलयंश्च अवस्थाभेदमापद्यते। अतः सूक्ष्मावस्थचिदचिच्छरीरकः कारणावस्थः,स्थूलावस्थचिदचिच्छरीरकः कार्यावस्थश्च भवति। अयं चावस्थाभेदः स्वरूपे विकारं नावहति। परिणामः क्वचिद्विकृतिलक्षणः, क्वचिदवस्थान्तरापत्तिमात्रलक्षणः। यथा दुग्धस्य दध्यात्मना विकृतिः, यथा सर्पस्य कुण्डलीभावः। सोऽयं परिणामविशेष इह विवक्षितः। इहेदं निदर्शनम्—यथाऽविभक्ततन्तुकस्योर्णनाभेर्विभक्ततन्तुकतया भवनम्। यथा ग्रीष्मेऽविभक्तविविधौषधिकायाः पृथिव्या वर्षासु विभक्तविविधौषधिकतया भवनम्। पृथिवी विविधौषधिमय्येव सदा। यथा चाविभक्तकेशलोमादिकः पिण्डविशेषलक्षणः पुरुषो विभक्तकेशलोमादिको जातु भवति।

ये पुनरध्यासवादिनस्तान् पृच्छामः कथं जगतः प्रकृतिर्ब्रह्म, कथं वा प्रतिज्ञादृष्टान्तानुपरोधः, कथं वाऽऽत्मकृतिः, कथं वा परिणामः। यस्मिन्नध्यस्यते तदध्यस्यमानस्य कथमिव प्रकृतिर्भवितुमर्हति। असत्यस्य सत्यं प्रकृतिरिति व्याहतम्। आपणस्थस्य रजतस्य शुक्त्यारोप्यमाणस्य कथं प्रकृतिः शुक्तिः?। तस्मिन्नेवाधिष्ठाने सदसद्विलक्षणस्योत्पत्त्यभ्युपगमेऽपि तत्तादात्म्यमधिष्ठाने आरोप्यते इत्यवर्जनीयम्। तथा च तदधिष्ठानं तस्य प्रकृतिरिति कथं घटेत?। सामान्यरूपेण सदसद्विलक्षणेन केनचित् प्रकृत्या भाव्यम्। प्रक्रियते यतः सा प्रकृतिः। कर्त्रा पुरुषेण यतो मृत्पिण्डात् सामान्यात् प्रकर्षेण जलाहरणाद्यर्हतालक्षणेनातिशयेन घटादिवस्तु क्रियते स मृत्पिण्डः प्रकृतिः। परिभाषा चेयं एकस्मिन् वस्तुनि सामान्यरूपेण स्थित्या प्रकृतिरिति विशेषरूपेण स्थित्या विकृतिरिति च। आरोपे तु विवर्तोपादाने अधिष्ठानमिति आरोप्यमाणे चाध्यस्तमिति च भवति प्रामाणिकानां परिभाषाभेदः। कार्यमात्रमारोपितं वदता स्वगोष्ठीनिष्ठः समयविशेष एवं प्रकाश्यते। प्रतिज्ञादृष्टान्तयोरुपरोध एव। न हि सत्ये अधिष्ठाने विज्ञाते असत्यमध्यस्तं विज्ञातं भवति। असत्यं तु निवर्तते ततः। अधिष्ठानस्वरूपातिरेकेण

वस्तुनोऽभावात् विदितं भवतीति च केवलं लाक्षणिकं वचः । मृत्पिण्डादिदृष्टान्तश्च कार्यकारणयोः सतोरेवानन्यत्वज्ञापनेनैकविज्ञानेन सर्वविज्ञानं निदर्शयति । यस्तु 'मृत्तिकेत्येव सत्य'मिति सत्यपदश्रवणात् कार्यमात्रस्याध्यस्तत्वं श्रौतमिति वादः । स च स्वेनैवोत्प्रेक्षितः । तथा हि—नन्वेकेनैव मृत्पिण्डेन सर्वं मृण्मयं घटशरावादि कथं विज्ञातं स्यात् । अर्थभेदात् । अर्थभेदेनैव हि सर्वो व्यवहारभेदः । यो घटशरावादिना व्यवहारः स मृत्पिण्डेन न भवति, तत् व्यवहारभेदेऽर्थभेदः प्रयोजकः; तमनु शब्दभेदश्च । अत्राह—वाचारम्भणं विकारो नामधेयम्—वाक्—व्यवहारः योऽयं भिन्नभिन्नो व्यवहारः, तस्यारम्भणं आलम्बनं प्रयोजकं तु विकारः—विकृतिभेदः, असत्यपि द्रव्यभेदे कम्बुग्रीवाद्यवस्थालक्षणो विकृतिभेदस्तु अस्त्येव, तमनु नामधेयं च भिन्नभिन्नम् । तत् कारणे विज्ञाते कार्यं स्वरूपतो विज्ञातं भवत्येव । ननु—कालभेदादिना कार्यं कारणादन्यदेवेत्यभ्युपगन्तव्यम् । प्रत्यक्षेण बाधितं ह्येतत् । घटशरावादिसकलमपि कार्यजातं मृत्तिकेत्येव हि सत्यम्—प्रत्यक्षप्रमाणसिद्धम् । गृह्यमाणो घटो मृदित्येव गृह्यते । मृण्मयोऽयं घट इत्येव हि भवति प्रत्यक्षम् । न तु नायं सर्पो रज्जुरेवेतिवत् नायं घटो मृदेवेति । तदेवं कार्यस्य मिथ्यात्वं न श्रौतम् । आत्मकृतिश्चात्मन्यविद्याकृताध्यासवादे नोपपद्येत । विपश्चिति बहुधा भवनसमर्थे तु 'आत्मानं स्वयमकुरुते'ति शोभेत । परिणामश्च निर्विशेषे न घटेत । अध्यासपरिणामयोरनर्थान्तरत्वं च व्याहतम् । तदिदमधिकरणमध्यासवादिनां पक्षे दुरुपपादम् ॥ २७ ॥

## योनिश्च हि गीयते ॥ १ । ४ । २८ ॥

उपादानकारणवाचिना योनिशब्देन हि ब्रह्म तत्र तत्र गीयते, श्रूयते

---

**योनिश्च हि गीयते ॥ १ । ४ । २८ ॥**

'यद्भूतयोनिं परिपश्यन्ति धीरा' इति परविद्यैकगम्यस्य परस्य ब्रह्मणः सर्वभूतयोनित्वं श्रूयते हि । अतश्चोपादानं ब्रह्मेति ।

**इति प्रदीपे प्रकृत्यधिकरणम् ॥ ७ ॥**

तद्यथा—'यद्भूतयोनिं परिपश्यन्ति धीराः' 'कर्त्तारमीशं पुरुषं ब्रह्मयोनिम्' इत्यादि । तदुपादानमपि ब्रह्मैवेति ॥ २८ ॥

( अ. स. ) वेदान्तेषु श्रुतं ब्रह्म जगत्कारणमव्ययम् ।
अस्तु तत्कारणत्वं किंरूपमित्यत्र चिन्त्यते ॥ १ ॥

पूर्वपक्षः—

नोपादानत्वं ब्रह्मणस्तु सम्भवेदविकारिणः ।
अतो निमित्तमात्रत्वमिति चेदत्र कथ्यते ॥ २ ॥

सिद्धान्तः—

उपादानं निमित्तं च भवेद्ब्रह्म जगत् प्रति ।
ब्रह्मविज्ञानतः कृत्स्नविज्ञानप्रतिपादनात् ॥ ३ ॥
तस्योपपादनार्थं च मृत्तत्कार्यनिदर्शनात् ।
सर्गसङ्कल्पनाद्ब्रह्म भवेत्कर्तृ जगत् प्रति ॥ ४ ॥
स्वस्यैव बहुधा भावादुपादानं च तद्भवेत् ।
सर्वप्रकारहेतुत्वं ब्रह्मणः श्रूयतेऽपि च ॥ ५ ॥
परिणामः श्रुतश्चास्य निर्विकारत्वमेव च ।
अतो विशिष्टवेषेण कार्यकारणरूपता ॥ ६ ॥
स्वरूपनिर्विकारत्वमपि चैवं सुरक्षितम् ।
ऊर्णनाभ्यादिदृष्टान्तो भूतयोनेश्च विश्रुतः ॥ ७ ॥

इति भाष्ये प्रकृत्यधिकरणम् ॥ ७ ॥

---

## एतेन सर्वे व्याख्याता व्याख्याताः ॥ १।४।२९ ॥

एतेन—'जन्माद्यस्य यत' इत्यादिना निरूपितेन न्यायेन सर्वे

---

**एतेन सर्वे व्याख्याता व्याख्याताः ॥ १ । ४ । २९ ॥**

एतेन 'जन्माद्यस्य यत' इत्यादिना परब्रह्मणः कारणत्वसमर्थनेन सर्वे

जगत्कारणत्वप्रतिपादका वाक्यविशेषा व्याख्याता भवन्ति। द्विरुक्ति-रध्यायपरिसमाप्तौ ॥ ३ ॥

असम्भवातिप्रसङ्गनिराकरणपूर्वकम् ।
ब्रह्मणः सर्वहेतुत्वं वाक्यतर्कैर्विनिश्चितम् ॥ १ ॥
अविचारितवाक्येषु कारणत्वपरेषु च ।
जीवादिपरताऽऽपातप्रतीतेषु विनिर्णयः ॥ २ ॥
कार्यो निरुक्तरीत्यैव सर्वत्रेत्याह सूत्रकृत् ।
ब्रह्मैककारणत्वं तु श्रौतमित्थमसूत्रयत् ॥ ३ ॥

इतिभाष्ये सर्वव्याख्यानाधिकरणम् ॥ ८ ॥

इति श्रीभगवत्सहजानन्दस्वामिसेवापरायणपरमसद्गुरु-
श्रीमुक्तानन्दमहामुनिविरचिते ब्रह्ममीमांसाभाष्ये
प्रथमस्याध्यायस्य चतुर्थः पादः ।
समाप्तश्च प्रथमाध्यायः ॥

---

कारणत्वप्रतिपादकवेदान्तवाक्यविशेषा व्याख्याताः ब्रह्मपरतया । व्याख्याता व्याख्याता इति द्विरुक्तिरध्यायसमाप्तिं द्योतयति ॥ २९ ॥

इति प्रदीपे सर्वव्याख्यानाधिकरणम् ॥ ८ ॥
इति ब्रह्मसूत्रार्थप्रदीपे प्रथमस्याध्यायस्य चतुर्थः पादः ।
इति श्रीभगवत्सहजानन्दस्वामिचरणकमलपरायणयोगिराज-
सद्गुरुवर्यश्रीगोपालानन्दस्वामिप्रणीते ब्रह्मसूत्रार्थप्रदीपे
प्रथमाध्यायः समाप्तः ।

## द्वितीयोऽध्यायः ।

### स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ २ । १ । १ ॥

प्रथमेनाध्यायेन ब्रह्मणो यज्जगत्कारणत्वं लक्षणमुक्तम्, तस्यायोगव्यवच्छेदान्ययोगव्यवच्छेदनिरूपणमुखेन समन्वयः कृतः । अथ द्वितीयेनाध्यायेन कृतस्य समन्वयस्य दार्ढ्याय तर्कविरोधाशङ्का प्रतिक्षिप्यते । तत्रादौ कापिलस्मृतिविरुद्धेऽर्थे वेदान्तानां नयनमसङ्गतमित्याशङ्का प्रतिक्षिप्यते ।

ननु—ब्रह्मणो जगत्कारणत्वसमन्वये कापिलस्मृतेरनवकाशदोषः प्रसजति। **अयमर्थः**—वेदान्तानामुपबृंहणं स्मृतिभिरेव कार्यम्। स्मृतिषु कपिलः सर्वज्ञः तत्वदर्शी प्रथितः। 'ऋषिं प्रसूतं कपिल'मिति च कपिलः स्तूयते । ब्रह्मणः परमपुरुषस्य जगत्कारणत्वं तत्स्मृतिविरुद्धम् । न च श्रुतिविरुद्धा स्मृतिरनादरणीयेति कापिलस्मृतिविरोधो वेदान्तार्थं चालयितुं न प्रभवतीति वाच्यम् । या श्रुतिः स्पष्टार्था तदर्थनिर्णये

---

प्रथमाध्यायेन सकलजगन्निमित्तोपादानं परं ब्रह्म वेदान्ताः प्रतिपादयन्तीत्येतत् समर्थितम्। अथ स एवार्थो दृढीक्रियते द्वितीयेन। तत्र प्रथमं उक्तार्थस्य कापिलस्मृतिविरुद्धतया वेदान्तवाक्यानामुक्तार्थपरत्वं नोचितमित्याशङ्का निराक्रियते—

**स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ २ । १ । १ ॥**

ननु वेदान्ता निगूढार्थाः, तदर्थावधारणं स्मृतिभिरेव संपाद्यम्, स्मृतिषु च कपिलस्मृतिरेव तत्वनिर्णयपरतया प्रवृत्ता । सा च स्मृतिर्ब्रह्मकारणत्ववादे नावकाशं लभते । तत् वेदान्तवाक्यस्य ब्रह्मोपादानकत्वपरत्वे कापिलस्मृत्यनवकाशाख्यो दोषः प्रसजतीति चेन्न । यदि कापिलस्मृतेरवकाशो दीयेत तर्हि मन्वादिस्मृतीनामनवकाशो दोषः प्रसजेत् । तन्मन्वादिमहर्षिस्मृत्यनुरोधेन वेदान्तार्थावधारणमेव युक्तम् ॥ १ ॥

उपबृंहणनैरपेक्ष्यात् श्रुतिविरुद्धा स्मृतिरनादरणीया । यथा 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति श्रुतिः, 'औदुम्बरी सर्वा वेष्टयितव्या' इति तु स्मृतिः, अत्र श्रुतेरर्थो व्यक्तः, न विप्रतिपत्त्यवसरः । अतो 'विरोधे त्वनपेक्षं स्या'दिति श्रुतिविरुद्धा स्मृतिरनादरणीया । वेदान्तानामतिगहनतया अर्थे विप्रतिपत्तिसम्भवात् स्मृतिभिरुपबृंहणस्यावश्यापेक्षितत्वात् स्मर्तृषु च कपिलस्य तत्त्वविदामग्रेसरतया प्रसिद्धत्वात् तत्स्मृतिविरुद्धमर्थं वेदान्ता न बोधयितुं प्रभवन्तीति चेन्न । कापिलस्मृत्यनुरोधेन वेदान्तार्थनिर्णये कार्ये अन्यस्मृतीनां—मन्वादिस्मृतीनामनवकाशदोषप्रसङ्गात् । **अयमाशयः**—मन्वादिस्मृतयो हि 'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥ ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम् । महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः ॥ योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः । सर्वभूतमयोऽचिन्त्यः स एष स्वयमुद्बभौ ॥ सोऽभिध्याय शरीरात् स्वात् सिसृक्षुः विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्यमपासृजत् ॥ तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ।' इति जगतः ब्रह्मकारणकतां वदन्ति । तथा स्मरति भगवान् 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' इति च । तथा महाभारते 'कुतः सृष्टमिदं सर्वं जगत् स्थावरजङ्गमम् । प्रलये च कमभ्येति तन्मे ब्रूहि पितामह' 'नारायणो जगन्मूर्तिरनन्तात्मा सनातनः' 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' 'अव्यक्तं पुरुषे ब्रह्मन् निष्क्रिये सम्प्रलीयते' इति । विष्णुपुराणे–'विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम् । स्थितिसंयमकर्ताऽसौ जगतोऽस्य जगच्च सः' इति । आपस्तम्बश्चाह—'पूः प्राणिनः सर्वगुहाशयस्याहन्यमानस्य विकल्मषस्य तस्मात्कायाः प्रभवन्ति सर्वे स मूलं शाश्वतिकस्तु नित्य' इति । तेषामेषां स्मृतिवाक्यानां अनवकाशो दोषः कापिलस्मृत्यनुसरणे समापतेत् । उपबृंहणं नाम श्रुत्या प्रतीयमानस्यार्थस्य तदनुकूलस्मृतिभिर्विशदीकरणम् । मन्वादयश्च विशदीकुर्वन्ति वेदान्तावगतब्रह्मकारणताम् । तत् श्रुतिविरुद्धा कापिलस्मृतिरनादरणीयैव ॥ १ ॥

## इतरेषां चानुपलब्धेः ॥ २ । १ । २ ॥

यत् कपिलेन दृष्टं प्रधानकारणकत्वं तदन्यैर्मन्वादिभिरदृष्टम् । मन्वादयो हि बहवो महर्षयः स्वयोगमहिमसाक्षात्कृतसकलतत्वाः, तैरदृष्टं प्रधानकारणकत्वं कपिलेनैकेन दृष्टमिति कस्तन्मतेन वेदान्तार्थं विनिश्चेतुं प्रभवेत् ॥ २ ॥

(अ. सं.) आद्ये समन्वयाध्याये ब्रह्मणः प्रतिपाद्यते ।
जगज्जन्मादिहेतुत्वं वेदान्तेष्विति निश्चितम् ॥ १ ॥
युक्त्यादिभिर्विरोधोऽत्र क्षिप्यते समनन्तरम् ।
तत्रादौ कापिलस्मृत्या विरोधः प्रतिषिध्यते ॥ २ ॥

पूर्वपक्षः—

ननु वेदान्तवाक्यानां गूढानामर्थनिर्णये ।
स्मृत्योपबृंहणं कार्यमिति प्रामाणिकस्थितिः ॥ ३ ॥
ब्रह्मोपादानतापक्षे विरोधः कापिलस्मृतेः ।
तस्मात्तदनुरोधेन व्याख्येयाः श्रुतयोऽपि हि ॥ ४ ॥

सिद्धान्तः—

अत्रोच्यते कापिली चेत् स्मृतिराद्रियते तदा ।
मन्वादीनां महर्षीणां बाध्येरन् स्मृतयोऽखिलाः ॥ ५ ॥
मन्वादयस्त्वाप्ततमाः ग्राह्याः श्रुत्यर्थनिर्णये ।
उपादाननिमित्तत्वं ब्रह्मणस्तैश्च संस्मृतम् ॥ ६ ॥
श्रुतेः स कथमर्थः स्यात् दृष्टोऽर्थः कपिलेन यः ।
मन्वादिभिरदृष्टो वा वेदान्तार्थः कथं भवेत् ॥ ७ ॥

इति भाष्ये स्मृत्यधिकरणम् ॥ १ ॥

---

## इतरेषां चानुपलब्धेः ॥ २ । १ । २ ॥

आप्ततमानां मन्वादीनां महर्षीणां कपिलदृष्टप्रकारेण तत्त्वानामनुपलब्धेर्भवेत् कापिलोपलब्धिर्भ्रान्तिः । तथा च कापिलस्मृतिर्न वेदान्तानामुपबृंहणं भवितुमर्हति ॥ २ ॥

इति प्रदीपे स्मृत्यधिकरणम् ॥ १ ॥

## एतेन योगः प्रत्युक्तः ॥ २ । १ । ३ ॥

एतेन—कपिलस्मृतिनिरसनेन योगोऽपि प्रत्युक्तः—हैरण्यगर्भस्मृतिरपि 'विरोधे त्वनपेक्षं स्या'दिति न्यायेन निरस्ता। ननु—केयमधिका शङ्का यन्निरसनायेदं पृथगधिकरणमारभ्यते। उच्यते। चतुर्मुखो हि वेदस्य प्रथमप्रवर्तकतयाऽऽदरणीयः, ईश्वरोऽप्यभ्युपगतः तेन, योगश्चेश्वरोपासनोपयुक्तो निरूप्यत इति स आप्ततमः स्यादिति ॥३॥

**पूर्वपक्षः—**

(अ. स.) स्मृतिर्हिरण्यगर्भस्य वेदान्तार्थोपबृंहणम् ।
भवेदेवं निमित्तत्वमात्रं ब्रह्मणि मन्यताम् ॥ १ ॥
अन्यथात्वप्रमाणत्वं तत्स्मृतेः संप्रसज्यते ।

**सिद्धान्तः—**

वेदान्तार्थो ब्रह्मणस्तूपादानत्वमपि श्रुतम् ॥ २ ॥
बहुस्मृत्यनुरोधेन मन्यते तत्त्वदर्शिभिः ।
वेदान्तार्थाविरुद्धार्थे कापिलादेः प्रमाणता ॥ ३ ॥
स्मृतिर्हिरण्यगर्भस्य योगसाधननिर्णये ।
प्रमाणमपि न ग्राह्या जगत्कारणनिर्णये ॥ ४ ॥

इति भाष्ये योगप्रत्युक्त्यधिकरणम् ॥ २ ॥

---

## एतेन योगः प्रत्युक्तः ॥ २ । १ । ३ ॥

योगः—हिरण्यगर्भस्मृतिः कापिलस्मृतिरिव जगत्कारणविचारे हिरण्यगर्भस्मृतिरप्यनादरणीयैव। परमात्मध्याननिष्पत्तये केवलं तत्प्रदर्शितो योगमार्गस्त्वादरणीयः ॥ ३ ॥

इति प्रदीपे योगप्रत्युक्त्यधिकरणम् ॥ २ ॥

कापिलस्मृत्या वेदान्तार्थो नान्यथा नेतुं शक्यत इत्युक्तम् । अथ तदीयस्तर्कविरोधाक्षेपोऽनूद्य निरस्यते—

## न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ २ । १ । ४ ॥

न—जगतो ब्रह्मोपादानकत्वं नोपपद्यते, विलक्षणत्वादस्य जगतः, वैलक्षण्यं प्रत्यक्षत एव सिद्धम् । शब्दाच्च वैलक्षण्यमवगम्यते । तथा च शब्दः—'विज्ञानं चाविज्ञानं च' 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः' 'अनीशश्चात्मा बध्यते भोक्तृभावात्' इति । परब्रह्म तु सत्यं ज्ञानमनन्तम्, तदेवं जगद्ब्रह्मणोर्विलक्षणत्वात् कथं तयोरुपादानोपादेयभावः । ननु—सालक्षण्ये सत्येवोपादानोपादेयभाव इति कोऽयं नियमः । दर्शनात् । मृत्पिण्डकार्येषु घटशरावादिषु मृत्त्वमनुवर्तमानं दृष्टम् । सुवर्णकार्येषु च कटकमुकुटादिषु सुवर्णत्वमनुवर्तमानं दृष्टम् । तत्तर्कोपहतेऽर्थे श्रुतिर्न प्रभवति । 'यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः' । प्रमाणतः प्रमेयनिर्णये प्रत्यक्षादावप्यस्ति तर्कापेक्षा । ज्वालैक्ये प्रत्यक्षेणापाततो गम्यमानेऽप्यर्थे तत्वनिर्णये हि तर्कस्यापेक्षा । येयं ज्वालायाः सामग्री, सा किमेका उत नैका, इति सामग्रीविचारेण च तदवधारणं भवतीति । शब्दादलौकिकार्थनिर्णये तु विशेषतस्तदपेक्षा । ननु चेतनारब्धतया श्रूयमाणतया पृथिव्यादिषु चैतन्यमनुवर्तते, परं तत्र तदभिभूतम् । नैतत् । सर्वदाऽनुपलम्भोऽसत्त्वमेवावगमयेत् न त्वभिभवम् ॥ ४ ॥

---

अथ कापिलास्तर्कमवलम्ब्य प्रत्यवतिष्ठन्ते—

### न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ २ । १ । ४ ॥

अस्य प्रपञ्चस्य परमात्मापेक्षयाऽत्यन्तविलक्षणत्वेन तदुपादानकत्वं न संभवति । अस्य तथात्वं च शब्दादेवावगम्यते 'विज्ञानं चाविज्ञानं चे'ति 'ज्ञाज्ञौ' इति च ॥ ४ ॥

ननु 'तं पृथिव्यब्रवीत्' 'आपो वाऽकामयन्त' इत्यादिना श्रुतिर्वदति पृथिव्यादीनामपि चैतन्ययोगमिति चेत्तत्राह—

**अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥२।१।५॥**

'तं पृथिव्यब्रवी'दित्येष चेतनाकार्यनिर्देशः न पृथिव्यादेश्चैतन्ययोगनिबन्धनः । किन्तु—अभिमानिव्यपदेशः—तत्तदभिमानिदेवताविशेषमभिप्रेत्यैष व्यपदेशः । अन्यत्र पृथिव्यादिभूतानां देवताविशेषैर्विशेषः—विशेषणं व्यावर्तनं श्रूयते 'इमास्तिस्रो देवता' इति । देवताविशेषाधिष्ठितत्वात् देवता इति तेजोऽबन्नानि विशेष्यन्ते । तथा 'ते देवाः प्राणे निःश्रेयसं विदित्वे'ति च । वागादीनि इन्द्रियाणि अग्न्यादिदेवताविशेषाधिष्ठितत्वात् 'ते देवा' इति व्यपदिश्यन्ते । तथा देवानां तत्र तत्राऽनुगतिः—अनुप्रवेशश्च श्रूयते 'अग्निर्वाग्भूत्वा मुखं प्राविश'दित्यादिना । तस्मात् अत्यन्तविलक्षणयोर्जगद्ब्रह्मणोः कार्यकारणभावोऽनुपपन्न इति ॥ ५ ॥

अत्रोच्यते—

**दृश्यते तु ॥ २ । १ । ६ ॥**

विलक्षणयोरपि उपादानोपादेयभावो दृश्यते तु । तुशब्दः शङ्का-

---

ननु अविलक्षणमेवेदम्, सर्वत्र चैतन्ययोगात्, तथा च श्रूयते—'तं पृथिव्यब्रवीत्, 'आपो वाऽकामयन्त' इति । अत्राह—

**अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ २ । १ । ५ ॥**

'तं पृथिव्यब्रवी'दित्यादिनिर्देशस्तत्तदभिमानिदेवताविशेषनिमित्तकः, विशेषानुगतिभ्यां चेदमवगम्यते । विशेषो विशेषणम्, 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मना' इति तेजःप्रभृति देवताशब्देन विशेष्यते हि । 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' इति देवताविशेषाणामनुप्रवेशोऽपि श्रूयते । तदयमभिमानिव्यपदेश एव ॥ ५ ॥

अत्रोच्यते—

**दृश्यते तु ॥ २ । १ । ६ ॥**

विलक्षणयोरपि कार्यकारणभावो दृश्यते तु लोके—यथा माक्षिकादिभ्यः क्रिम्यादिजनिर्दृश्यते ॥ ६ ॥

निवृत्तौ । अचेतनाद्गोमयाद्वृश्चिकश्चेतनो ह्युत्पद्यते, चेतनाच्च पुरुषात् केशलोमादीन्यचेतनानि । ननु गोमयादचेतनाज्जायमानं वृश्चिकशरीरमेव, तत्कार्यकारणयोर्जडत्वेन न सारूप्यभङ्गः । सत्यम् । अथाप्यस्ति संस्थाने महद्वैलक्षण्यम् । किञ्चिदाकारेण साजात्यं तु जगद्ब्रह्मणोरपि अस्त्येव ॥ ६ ॥

## असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ २ । १ । ७ ॥

यद्येवं कार्यमुत्पत्तेः प्रागसदापद्येत । वैलक्षण्यात् । कार्यकारणयोः भेदादिति यावत् । तथा सत्यसत्कार्यवाद एवापतेत् इति चेन्न । प्रतिषेधमात्रत्वात् । सति वैलक्षण्ये नोपादानोपादेयभावो घटतेत्येतस्य प्रतिषेधमात्रं दृश्यते त्वित्यनेन प्रदर्शितम् । न तु भिन्नद्रव्ययोरप्युपादानोपादेयभावः । अयं भावः—कार्यमुत्पत्तेः प्राक् कारणात्मना वर्तमानमवस्थाभेदप्राप्त्या भवति नवमिव । पिण्डत्वावस्थाप्रहाणेन कम्बुग्रीवादिविलक्षणावस्थायोग एव केवलम् । मृद्द्रव्यमेव तु घटाद्यपि, एवमेव बीजाङ्कुरादौ गोमयवृश्चिकादावपि, वैलक्षण्यं चेदं तरतमभावेन वर्तते । यदि वैलक्षण्यं न स्यात् कार्यकारणभाव एव न स्यात् । एवं ब्रह्मैव चिदचिद्विशिष्टं स्वतनुभूतचिदचितोः स्थौल्यसौक्ष्म्याभ्यां कार्यं कारणं च भवति । वैलक्षण्यं चास्त्येवावस्थाभेदादिति ॥ ७ ॥

शङ्कते—

## अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ २ । १ । ८ ॥

यदि कार्यकारणयोरनन्यद्रव्यता, अपीतौ—अप्यये ब्रह्मणो नित्य-

---

**असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ २ । १ । ७ ॥**

नन्वेवं कार्यं कारणेऽसदिति असत्कार्यवादप्रसङ्गः स्यादिति चेत् न, विलक्षणयोरपि कार्यकारणभावप्रदर्शनस्य प्रतिषेधमात्रत्वात्—उपादानोपादेययोः सर्वांशतः सालक्षण्यनियमप्रतिषेधमात्रत्वात् । कार्यकारणयोरनन्यवस्तुता च प्रकृत्यधिकरणे समर्थितैव ॥ ७ ॥

निर्दोषस्य निखिलमङ्गलगुणाकरस्य तद्वत्सकलदोषाकरप्रपञ्चवत्प्रसङ्गात् दोषास्पदत्वप्रसङ्गान्महदसमञ्जसम् । नन्वपीतावित्यधिकम्, सदैवानन्यत्वात् । सत्यम् । अपीताविति सर्गस्थित्योरुपलक्षकम् । अप्ययपूर्वकत्वात्सृष्टेरप्ययग्रहणम् । केचित्तु-इदानीं जगद्रूपेण स्थित्या ब्रह्मणः जगद्गतदोषप्रसङ्गेऽपि प्रलये जगद्भावापगमात्स्वयं निर्दोषमेवेति निर्दोषश्रुतीनां तत्समयपरतेति नासमञ्जस्यावकाश इत्येतन्निरसनायाऽह-अपीताविति । अपीतावपि तत्प्रसङ्गात् । अप्ययोद्भवयोरनादितया भाव्युद्भवानुरोधेन जीवानां पुण्यपापबीजसंवलितानामेवाप्ययेऽवश्यम्भावेन तदानीमपि तत्प्रसङ्गादस्त्येवासामञ्जस्यमिति ॥ ८ ॥

परिहरति—

## न तु दृष्टान्तभावात् ॥ २ । १ । ९ ॥

नतु-नैवासामञ्जस्यम् । दृष्टान्तभावात्-दृष्टो हि लोके बालो युवा स्थविरोऽयं जात इति पुरुषे व्यवहारः । तत्र बालत्वादिकं शरीरिणि विशिष्टे व्यवह्रियमाणं न जीवं कलङ्कयति । अपि तु शरीर-

---

### अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ २ । १ । ८ ॥

अपीतिरप्ययः प्रलयः, प्रलयपूर्वकत्वनियमेन सृष्टेः सृष्टिरिह विवक्षिता । ब्रह्मण एवोपादानत्वे तदभेदेनास्य प्रपञ्चस्य तद्वत् प्रपञ्चवदेव ब्रह्मणोऽपि विकारित्वसुखादिदोषप्रसङ्गादसमञ्जसम् ॥ ८ ॥

### न तु दृष्टान्तभावात् ॥ २ । १ । ९ ॥

न तद्वत्प्रसङ्गः । दृष्टान्तभावात् । प्रसिद्धमस्ति निदर्शनम् । पुरुषो हि बाल्यकौमारयौवनवार्धकावस्थाभेदैर्युज्यते । तदा च शरीर एव सर्वे तत्तदवस्थानुरूपा विकाराः, आत्मनि न ते । शरीरी तु स्वयमविकृत एव । यश्च ज्ञानसुखाद्यन्वयस्तस्य, न ते शरीरे । एवमेव सर्वशरीरः परमात्मा स्वयं सङ्कल्प्य महाभूतादिभेदेन देवादिभेदेन च बहुधा भवन्नपि निर्दोष एव। न तत्तत्स्वभावस्य तत्तच्छरीरिणि परमात्मनि प्रसङ्गः ॥ ९ ॥

मेव । एवं विशिष्टं ब्रह्म कारणावस्थं च कार्यावस्थं भवदपि निर्दोषमेव । विकृतिसुखदुःखादयो दोषा न परमात्मनः, अपि तु तच्छरीरभूतचिदचिदंशयोरेव । ननु दृष्टान्तोऽयं विषमः । जीवो हि शरीरी, अयं त्वशरीरः, 'अपाणिपाद' इति श्रुतेः । न च चिदचितोरेनं प्रति शरीरत्वम् । भोगायतनं हि शरीरम् । न चास्य भोगः । अकर्मवशगो ह्येषः । अनश्नन्नन्योऽभिचाकशीति । नैतत् । नहि शरीरस्यैतल्लक्षणं भोगायतनमिति । गृहक्षेत्रादिकं पुरुषभोगास्पदमपि न तद्वोक्तुः पुरुषस्य शरीरं भवति । यत्रैव वर्तमानो भुङ्क्ते तत्तस्य शरीरमित्यपि न लक्षणम् । स्थावरेष्वव्याप्तेः । स्थावराण्यपि पापिनां शरीराणि हि स्मर्यन्ते श्रुत्यननुगुणं चैतल्लक्षणम् । श्रावयति हि श्रुतिरन्तर्यामिब्राह्मणे पृथिव्यादीनां परमात्मनः शरीरत्वम् 'यः पृथिव्यां तिष्ठन्नि'त्यादिना । तथा सुबालोपनिषदि च–'यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरम् ××× एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इति । स्मर्यते च 'जगत्सर्वं शरीरं ते' 'तत्सर्वं वै हरेस्तनुः' 'तानि सर्वाणि तद्वपुः' इत्यादि । तल्लोकवेदव्यवहारसाधारणमेव तु शरीरलक्षणं वक्तव्यम् । तच्च 'यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यं तत्तस्य शरीरमिति । तथा च परमात्मनः सकलचेतनाचेतनशरीरकत्वमुपपन्नम् ॥ ९ ॥

न ब्रह्मकारणवादे तर्कविरोधः, किन्तु प्रधानकारणवाद एव तु स इत्याह —

## स्वपक्षदोषाच्च ॥ २ । १ । १० ॥

यश्चास्य स्वपक्षः–पुरुषसन्निधानात्प्रकृतौ तच्छायापत्तिः, अन्योन्यधर्माध्यासः, तेनायं संसार इति । सोऽयमन्योन्यधर्माध्यासो नोप-

---

**स्वपक्षदोषाच्च ॥ २ । १ । १० ॥**

ब्रह्मोपादानकजगद्वादमौपनिषदमाक्षिपन्नयमानुमानिकप्रधानवादी स्वपक्षे दोषमसमाधेयं नानुपश्यति । अयं च तत्पक्षे दोषः सर्गानुपपत्तिरिति ।

पद्यते । किं प्रकृतिः पुरुषधर्ममात्मन्यध्यस्यति, किं वा पुरुषः प्रकृतिधर्मम् । प्रकृतेर्जडत्वेन नास्याः स्यादध्यासोऽनुसन्धानरूपः । न च पुरुषस्य । स ह्यविकृतिः पुष्करपलाशवन्निर्लेपश्च ॥ १० ॥

## तर्काप्रतिष्ठानादपि ॥ २ । १ । ११ ॥

केवलतर्कमूलकः प्रधानकारणवादः सर्वथा त्याज्यः । तर्को ह्यप्रतिष्ठितः । बहवो हि कणादाक्षपादप्रभृतयः परेषां तर्कान् प्रतिहत्य तर्केण स्वस्वमतं प्रतिष्ठापयन्ति, तत्कापिलकाणादाक्षपादादीनां स्वस्वपक्षस्थापकास्तर्का मिथस्तर्कैः प्रतिहन्यमाना अप्रतिष्ठिता भवन्ति । तत् श्रुतिमूलको ब्रह्मकारणवाद एव सत्तर्कैरुपबृंहितः परिग्राह्यः ॥ ११ ॥

## अन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥ २ । १ । १२ ॥

ननु—ये प्रधानानुमाने विरोधिनस्तर्का उपन्यस्ताः तेषां येन प्रकारेण न प्रसरावसरस्तेन प्रकारेण नवैस्तर्कैर्वयं साधयामः प्रधानमिति

---

प्रकृतिपुरुषयोरन्योन्यधर्माध्यासः सर्गे निमित्तमिति वदता स चाध्यासः कस्मादित्येतद्दुर्निरूपम् । प्रकृतेर्जडत्वात् न तत्र तदध्यासः, पुरुषस्य च निर्विकारत्वान्न तत्रापि तत्संभवः । किञ्च अयमध्यासः प्रकृतिपुरुषसन्निधानाच्चेत् स सन्निधिर्विभुत्वात्प्रकृतिपुरुषयोः नित्य इति सर्गप्रतिसर्गभेदव्यवस्थापि न सिध्येत् इति ॥ १० ॥

### तर्काप्रतिष्ठानादपि ॥ २ । १ । ११ ॥

यस्तु केवलेन तर्केण स्वपक्षं प्रतिष्ठापयितुं प्रवर्तते, अप्रतिष्ठ एव तत्पक्षः, तर्कस्याप्रतिष्ठानात् ॥ ११ ॥

### अन्यथाऽनुमेयमिति चेत् एवमप्यनिर्मोक्षप्रसङ्गः ॥२।१।१२॥

परैः समुद्भावितानां दोषाणां यथा नावकाशस्तथा तर्केणानुमीयते प्रधानमिति चेत् एवमपि प्रतितर्केभ्यो निर्मोक्षोऽस्य नैव सिध्येत । तर्को हि

चेदेवमपि प्रतितर्केभ्यो विरोधिभ्योऽनिर्मोक्षप्रसङ्गो दुष्परिहर एव। तर्ककौशल्यं हि नैकस्य। उपर्युपरि तर्कतरङ्गाः पुरुषबुद्धिप्रकर्षनिबन्धनाः समुत्पतेयुरेव। यावन्तः तर्काः नवनवाः सम्पद्यन्ते, ते सर्वे पुनरन्यैः प्रकृष्टबुद्धिभिः प्रतिहन्येरन्नेव। तद्विरोधितर्केभ्योऽनिर्मोक्ष एव। तथा च श्रुतिमूलको ब्रह्मकारणवाद एवाश्रयणीय इति ॥ १२ ॥

पूर्वपक्षः—

( अ. स. ) विलक्षणस्य जगतो ब्रह्मोपादानता कथम्।
तयोर्विलक्षणत्वं च शब्दादेवावगम्यते ॥ १ ॥

सिद्धान्तः—

उपादेयमुपादानात् जायते तु विलक्षणम्।
दृष्टो हि वृश्चिकादीनामुत्पादो गोमयादितः ॥ २ ॥
न चान्यतः समुत्पादो न तत् द्रव्यान्तरं यतः।
विलक्षणस्याप्रभवः प्रतिषिद्धस्तु केवलम् ॥ ३ ॥
ब्रह्मण्यपीतौ जगतः तद्भावो न चापतेत्।
क्रमाद्बालो युवा वृद्धः पुमानेष भवन्नपि ॥ ४ ॥
बाल्यादिधर्मैः शारीरैः यथा नात्मोपलिप्यते।
तथाऽयं परमात्माऽपि समस्तचिदचिद्वपुः ॥ ५ ॥
बहुधा चैकधा चापि प्रभवन्नप्ययन्नपि।
स्थौल्यसौक्ष्म्यादिभिर्धर्मैः शारीरैर्नोपलिप्यते ॥ ६ ॥
अप्रतिष्ठिततर्कैकशरणः किञ्च कापिलः।
प्रतितर्कशराघातान्नैव जात्वपि मोक्ष्यते ॥ ७ ॥
अन्योन्यधर्माध्यासो यः संसृतेर्मूलमिष्यते।
अचेतनायां प्रकृतौ निष्क्रिये पुरुषेऽपि वा ॥ ८ ॥

---

पुरुषमेधामूलकः, पुरुषास्तु कालदेशानन्त्येन उत्तरोत्तरं समधिकमेधाशालिनः स्युरेव, अतः प्रतितर्काः परस्सहस्रं समुद्भवेयुः, तत् स्वपक्षप्रतिष्ठा दुरुपपादैव ॥ १२ ॥

इति प्रदीपे विलक्षणत्वाधिकरणम् ॥ ३ ॥

नोपपद्यत इत्येष दोषोऽयं सुमहांस्तव ।
श्रुत्यन्तशरणस्तस्माद्भव तत्त्वविनिर्णये ॥ ९ ॥
इति भाष्ये विलक्षणत्वाधिकरणम् ॥ ३ ॥

---

## एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥२।१।१३॥

एतेन—कापिलतर्कस्याप्रतिष्ठितत्वोक्त्या ये शिष्टा अवशिष्टा अपरिग्रहा वैदिकपरिग्रहशून्याः कणभक्षाक्षचरणादितर्कास्तेऽपि निरस्ता वेदितव्याः । ब्रह्मकारणवादे औपनिषदे कापिलतर्कविरोध इव कणभक्षादितर्कविरोधोऽपि न क्षोभमावहतीति भावः ॥ १३ ॥

(अ. स.) एतेन शिष्टा ये वेदपरिग्रहविवर्जिताः ।
कणभक्षाक्षपादादिपक्षास्तेऽपि निराकृताः ॥ १ ॥
युक्त्यैकमूलकत्वेन नानात्वेनाव्यवस्थिताः ।
तद्विरोधो नैव दोषो वेदान्तार्थे विनिश्चिते ॥ २ ॥
इति भाष्ये शिष्टापरिग्रहाधिकरणम् ॥ ४ ॥

---

## भोक्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ २ । १ । १४ ॥

ननु—ब्रह्मैव विशिष्टं चेतनाचेतनशरीरं कार्यकारणात्मना चेदवतिष्ठते, जीववदस्यापि शरीरित्वेन भोक्तृतापत्तेर्जीवात्परब्रह्मणोऽविभागा-

---

### एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ २ । १ । १३ ॥

एतेन प्रधानकारणवादनिरसनेन परब्रह्मोपादानकजगद्वादिनो ये शिष्टास्तैरपरिगृहीताः, शिष्टा अवशिष्टाः अपरिग्रहा वैदिकपरिग्रहरहिताः पक्षा अपि निरसनीयतया व्याख्याता भवन्ति ॥ १३ ॥

इति प्रदीपे शिष्टापरिग्रहाधिकरणम् ॥ ४ ॥

---

### भोक्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥ २ । १ । १४ ॥

ननु परब्रह्मण एवोक्तप्रकारेण बहुधाभवनस्वीकारे जीववदस्यापि भोक्तृत्वापत्तिः सकलशरीरयोगात् । तस्मात् तस्यैव भोक्तृभोग्यात्मना बहुधाभवनं

पत्तिः अवैलक्षण्यापत्तिः। स्वभाववैलक्षण्यं व्याहन्येत। श्रूयते च 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ती'ति, इति चेत्। न। स्याल्लोकवत्। स्यादेव विभागः स्वभावभेदः। अत्र निदर्शनम्-लोकवदिति। राजा यद्यपि सशरीरः, अथापि प्रजानामिव सशरीरत्वमात्रेण न शासनातिलङ्घनकृतनिग्रहपात्रता। अशासनवशगो हि सः। एवमेव जीवः कर्मवशगो भुङ्क्ते सुखदुःखे, अतद्वशगः परमात्मा तु न भुङ्क्ते इति विशेषः। श्रूयते चाकर्मवशगानां मुक्तानामपि शरीरयोगः 'स एकधा भवति त्रिधा भवती'ति। यद्यपि 'सम्भोगप्राप्तिरिति चेन्न वैशेष्या'दिति पूर्वमेवोक्तम्। अथापि तत्रोपासकहृदयकमले सन्निधानकृता शङ्का परिहृता। इह तु सकलचेतनाचेतनशरीरकत्वेन प्रसक्ता परिह्रियत इति विशेषः॥ १४॥

पूर्वपक्षः—

(अ. सं.) परमात्मा कारणं चेत् समस्तचिदचिद्वपुः।
तस्यापि भोक्तृतापत्तेः स्याज्जीवादविशिष्टता॥ १॥

सिद्धान्तः—

अत्रोच्यते शरीरित्वं न प्रियाप्रियसञ्ज्ञकम्।
किन्तु कर्म न तत्तस्य स्वतन्त्रः स प्रशासिता॥ २॥
प्रशासितुः प्रशास्येन सहैकत्र सतोऽपि हि।
प्रशास्यवर्गाद्भूयांस्तु भेदो लोकेऽपि दृश्यते॥ ३॥

इति भाष्ये भोक्त्रापत्त्यधिकरणम्॥ ५॥

---

नोपपद्यते। इति चेन्न। लोकवत् स्यात्—यथा लोके राजशासनानुवर्तिनां तदतिवर्तिनां च राजानुग्रहनिग्रहपात्रतया सुखदुःखान्वयः, राज्ञस्तु न, तथा जीवलोकस्यास्य तदाज्ञानुवर्तनातिवर्तनाभ्यां तदनुग्रहनिग्रहलक्षणपुण्यपापसंबन्धन सुखदुःखान्वयः, न सर्वेश्वरस्य। राजदण्डेन कारागृहनिबद्धो दुःखी भवति। राजाताननुपालयन् कारागृहं प्रविशन्नपि न श्लिष्यते दुःखेन। तदेवं लोकनिदर्शनेनैव दोषोद्भावनं दूरीक्रियते॥ १४॥

इति प्रदीपे भोक्त्रापत्त्यधिकरणम्॥ ५॥

## तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ २ । १ । १५ ॥

यदनन्यत्वं ब्रह्मणः कारणवादिवाक्यसिद्धं तदनुपपन्नमित्याशङ्क्य परिह्रियते । अनन्यदेव कार्यं कारणात् । ननु नैतदुपपद्यते । कारणादन्यदेव तु कार्यम् । व्यवहारभेदात् नामभेदात् कालभेदात् सङ्ख्याभेदाच्च । जलाहरणादिलक्षणो हि व्यवहारो घटेन भवति न कपालेन । घट इति च नामान्तरम्, कपालः पूर्वकालसम्बद्धः, घटस्तु न तथा । अनन्यत्वे कारकव्यापारवैयर्थ्यं च । निष्पन्ने कार्ये किं कारकव्यापारेण । ननु न निष्पन्नं कार्यम्, तर्ह्यपूर्वमेव तदित्यन्यदेव कार्यमिति सिद्धम् । सदपि कार्यमनभिव्यक्तमिति तदभिव्यक्तये कारकव्यापारश्चेत् मृत्पिण्डकार्यभूतानां घटशरावादीनां सर्वेषामेव मृत्पिण्डे प्रागपि सत्ताया आवश्यकतया घटाभिव्यञ्जकेन कारकव्यापारेण शरावादी-

---

### तदन्यत्वमारम्भणशब्दादिभ्यः ॥ २ । १ । १५ ॥

तस्मात् परब्रह्मणोऽनन्यत्वम्-अनतिरिक्तत्वम्, तदुपपादकेभ्य आरम्भणशब्दादिभ्यः, आरम्भणशब्दादिघटितेभ्यो वाक्येभ्यः अवगम्यते । कार्यकारणयोरनन्यत्वमभिप्रेत्य प्रवृत्ता एकविज्ञानेन सर्वविज्ञानप्रतिज्ञामुपपादयन्ती 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इतीयं श्रुतिः ब्रह्मणोऽनन्यतामस्य प्रपञ्चस्य समर्थयति । एवं हि समर्थयति–मृण्मयमखिलं घटशरावादि मृत्तिकेत्येव हि सत्यम्– अबाधितप्रत्यक्षगम्यम् । एवं मृत्पिण्डघटशरावादीनामभेदे अबाधितप्रत्यक्षगम्ये सति उपादानोपादेयाभ्यां भिन्नाभ्यामेव भाव्यमित्यसत्कार्यवादस्य कावसरः । नन्वर्थैक्ये व्यवहारभेदः कथम्, जलाहरणं घटेनैव भवति न मृत्पिण्डेन । तथा व्यवहरति च जलार्थी 'घटेन जलमाहरे'ति न मृत्पिण्डेनेति । **उच्यते**–विकारवैचित्र्यं तत्कृतनामवैचित्र्यं च वाचारम्भणम्–भिन्नभिन्नव्यवहारालम्बनं भवति । अतो व्यवहारवैचित्र्यं न गवाश्वादिवदर्थभेदसापेक्षम्, येनासत्कार्यवादावकाशः । इति ॥ १५ ॥

नामप्यभिव्यक्तिः स्यात् । घटप्रकाशनाय प्रज्वालितेन दीपेन तत्र वर्तमानानां पटादीनामपि प्रकाशो हि दृष्टः । तत्कारणादन्यदेव कार्यम् ।

अत्रोच्यते—कारणाद्ब्रह्मणः कार्यमिदमनन्यदेवेति अनन्यत्वोपपादकेभ्यः आरम्भणशब्दादिभ्यः–आरम्भणशब्दः आदिर्येषां वाक्यानां तेभ्यः 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य'मित्यादिवाक्येभ्यः सिध्यति । अनेन हि वाक्येन सोपपत्तिकमुपपाद्यते कार्यकारणयोरनन्यत्वम् । तथा हि—कार्यं मृण्मयं घटशरावाद्यखिलं एकेन मृत्पिण्डेन विज्ञातं भवति । ननु कथं विज्ञातं भवेत् । अन्य एव मृत्पिण्डः कारणभूतः, घटशरावादि त्वन्यदेव । जलाहरणादिलक्षणो व्यवहारो हि भिन्नभिन्नः, स चार्थभेदनियतः । यो गवा व्यवहारः स नाश्वेन, यश्चाश्वेन स न गवा, तदेकेन मृत्पिण्डेन कथं मृण्मयमखिलं विज्ञातं स्यात् । उच्यते-मृण्मयमखिलं मृत्तिकेत्येव सत्यम्, अन्यदित्यसत्यम्–प्रत्यक्षप्रमाणबाधितम् । ननु कार्यस्य घटादेर्मृत्पिण्डादनन्यत्वे कथं व्यवहारवैचित्र्यम्, अर्थभेदनियतं हि तत् । सत्यम् । वाचारम्भणं विकारो नामधेयम्, वाचारम्भणमिति समस्तं पदम्, वाचेत्याकारान्तः शब्दः । वाक्पूर्वकत्वाद्व्यवहारस्य वाचाशब्देन व्यवहारो लक्ष्यते । व्यवहारस्य—जलाहरणादिव्यवहारविशेषस्यारम्भणमारम्भकः प्रयोजकः । विकारः कम्बुग्रीवाद्यवस्थाविशेषः, तन्निबन्धनं नाम—नामविशेषश्च । या च कारणावस्था पिण्डत्वलक्षणा या च कार्यावस्था विकृतिविशेषलक्षणा तदुभयमपि एकस्मिन्नेव मृद्द्रव्ये सम्बद्धमिति कार्यकारणयोरनन्यत्वम्, व्यवहारवैचित्र्यनिर्वाहः, सत्कार्यवादसंरक्षणं, कारकव्यापारावैयर्थ्यं कालभेदसञ्ज्ञाभेदोपपत्तिश्च । अनेन निदर्शनेन 'येनाश्रुतं श्रुतं भवती'ति प्रतिज्ञातस्य एकविज्ञानेन सर्वविज्ञानस्य च निर्वाहः सुसम्पन्नः । सदेवेत्यादिवाक्यानां समन्वयश्च ।

इदं सूत्रं जगन्मिथ्यात्ववादे नोपपद्यत इति श्रीभाष्ये टीकायां च प्रपञ्चितम् । सारतः किञ्चिदिहानूद्यते । किमिदमनन्यत्वम्, न तावदैक्यम् । जडाजडयोस्तदयोगात् । न च भेदप्रतिषेधमात्रम् ।

भेदस्य प्रतीयमानत्वात्, असतस्तदयोगात् । परमार्थतोऽन्यन्नेति चेन्निषेधः । सूत्राक्षराननुगुण्यम् । तस्मादनन्यत्वं हि तस्मादन्यत्वप्रतिषेधः, स चैक्य एव पर्यवस्यति । यथा पलाशस्य वृक्षादनन्यत्वमुच्यमानं वृक्षैक्यमेव गमयति स्वरसतः, न तु पलाशस्य मिथ्यात्वम् । परमार्थत इति चाध्याहार्यम् । निर्धनत्वमित्यनेन धनाभावप्रतीतिवत् अनन्यत्वमित्यनेन भेदाभावमात्रं प्रतीयत इति चानुपपन्नम् । तथा सति बहुव्रीहिराश्रयणीयः स्यात् । तदा तस्मादनन्यत्वमिति पञ्चम्यन्ताश्रयणेन परेषां व्याख्यानमनुपपन्नम् । पुरुषे निर्धनत्वमित्येव हि व्यवहारः, न तु पुरुषान्निर्धनत्वमिति । किञ्च—अनन्यदित्ययं शब्दः अवधिमधिकरणं चापेक्षते अस्मादिदमनन्यदिति । अवधिनेवाधिकरणेनापि परमार्थसता भाव्यम् । ततोऽन्यन्नेति चेन्निषेधमात्रम्, तदा 'तदन्यासत्त्वमि'ति सूत्रेण भाव्यम् । चन्द्रादनन्यो द्वितीयश्चन्द्र इत्यत्रेवात्र मिथ्यात्वमवगम्यते इत्यप्यसत् । तत्र द्वित्वस्यैव मिथ्यात्वमवगम्यते, न तु चन्द्रस्य । न च रज्जोरनन्यः सर्प इति भवति व्यवहारः । भवतीति चेन्मातुरनन्या वन्ध्येत्यपि व्यवहार इष्यताम् । ननु मातुरनन्या वन्ध्येति व्याहतार्थम्, रज्जोरनन्यः सर्प इति तु न व्याहतम् । अमुख्यया वृत्त्या समन्वयात् । हन्ताऽत्र कस्य पदस्यामुख्यार्थताऽऽश्रीयते । अनन्यशब्दस्य चेत् कस्मिन्नर्थेऽमुख्या वृत्तिः । आरोपिते चेत्, अस्तु । तथा सौत्रस्यानन्यशब्दस्यारोपितपरत्वे 'सत्त्वाच्चापरस्ये'ति सूत्रमसङ्गतं स्यात् । न ह्यारोपितस्य प्राक् सत्ता । न च सर्पशब्दस्याधिष्ठानेऽमुख्या वृत्तिः । तर्हि तेन क्रमेण कार्यशब्दोपलक्षितस्य कारणस्यानन्यत्वं सन्मात्रेऽवगम्यते, न तु कार्यस्य कारणादनन्यत्वम् । कस्तर्हि सत्कार्यवादः ? । तदेवमिदं सूत्रं अध्यासवादे व्याहतार्थम् । परिणामपक्षे एव तु समन्वेति । समन्वयश्च प्रागुपपादित इति नेह वितन्यते ॥ १५ ॥

उपादेयस्योपादानादनन्यत्वं द्रढयन्नाह—

## भावे चोपलब्धेः ॥ २ । १ । १६ ॥

कार्यभावे कारणस्योपलब्धेः, इदं कुण्डलं तदेव हिरण्यम्, इदं घटादि सैव मृत्तिकेति सामानाधिकरण्येन प्रत्यक्षेण ग्रहणात् । 'मृत्तिकेत्येव सत्य'मिति वाक्यसिद्धोऽर्थः सूचितः । घटशरावादिभावेऽपि मृत्तिकेत्येव हि प्रमाणतो गम्यत इति तु तदर्थः । नन्वसत्कार्यत्वादिनामप्यभिमतमेवैतत् कार्यभावेऽपि कारणस्योपलम्भ इति, समवेतं हि कार्यं समवायिकारणे । नैतत् । समवेतस्य वैयधिकरण्येनोपलम्भो घटेत, न तु सामानाधिकरण्येन । उपलभ्यते सामानाधिकरण्येन । ननु जातिनिबन्धनोऽयमुपलम्भः । न । इदं कुण्डलं तदेव हिरण्यमिति व्यक्त्यैक्यं चावगम्यते हि ॥ १६ ॥

## सत्त्वाच्चापरस्य ॥ २ । १ । १७ ॥

अपरस्य—कार्यस्योत्पत्तेः प्रागपि कारणात्मना सत्त्वाच्च । इदं घटशरावादि पूर्वदिने मृत्तिकैवासीदिति हि भवति ग्रहः ॥ १७ ॥

ननु श्रुतिरेव कार्यस्य प्रागसत्त्वं श्रावयतीत्याशङ्क्य परिहरति—

## असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेः शब्दान्तराच्च । २ । १ ॥ १८ ॥

ननु—श्रुतौ 'असदेवेदमग्र आसीत्' 'असद्वा इदमग्र आसीत्' 'इदं

---

**भावे चोपलब्धेः ॥ २ । १ । १६ ॥**

कार्यभावेऽपि कारणस्योपलब्धेः—घटशरावादिकार्यावस्थायामपि तस्यैव मृद्द्रव्यस्य 'मृदेवेदं सर्वं'मित्युपलब्धेः ॥ १६ ॥

**सत्त्वाच्चापरस्य ॥ २ । १ । १७ ॥**

अपरस्य कार्यस्य कारणे सूक्ष्मरूपेण सत्त्वाच्च । महतो वृक्षस्य बीजे सूक्ष्मरूपेणावस्थितेः । एवमेव ब्रह्मणि सर्वशरीरके सर्वमिदं स्थूलं सूक्ष्मरूपेणास्ति ॥ १७ ॥

वाऽग्रे नैव किञ्चनासीत्' इति कार्यस्य प्रागसत्वव्यपदेशात् कार्यं कारणादन्यदेवेति चेन्न । धर्मान्तरेण तथा व्यपदेशात्, एकस्यैव द्रव्यस्य कार्यतादशायां यो धर्मः व्याकृतनामरूपता, ततोऽन्यो यो धर्मः अव्याकृतनामरूपता, तेन धर्मेणासदिति व्यपदेशात् । सौक्ष्म्यस्थौल्याभ्यामसत्सद्व्यवहारो नान्यथेति भावः । वाक्यशेषात्—असदित्युपक्रम्य यद्वाक्यं प्रवृत्तं तस्यैव शेषे 'तत्सदासीत्' इति तच्छब्देन यत्पूर्वमसदित्युक्तं तन्निर्दिश्य सदिति विशेषाभिधानात् एकस्यैव सत्त्वमसत्त्वं चेति धर्मद्वयमवगम्यते । तथा 'असद्वा इदमग्र आसीदि'त्यस्य वाक्यस्य शेषे 'तन्मनोऽकुरुते'ति असतो मनस्करणमुच्यते । मनस्करणं च सङ्कल्पविशेषः । धर्मान्तरयोगाभ्यामेव सदसद्व्यवहारावित्यत्र युक्तिश्च । नह्यभावो नाम अतिरिक्तः कश्चिदर्थः, घटस्य प्रागभावो हि पिण्डकपालाद्यवस्थैव । प्रध्वंसाभावोऽपि शकलाद्यवस्थैव । द्रव्यस्योत्पादः पूर्वावस्थाविरोध्युत्तरावस्थैव । तथा विनाशः तदवस्थाविरोध्यवस्थान्तरप्राप्तिरेव । शब्दान्तराच्च- 'सदेव सोम्येदमग्र आसी'दिति असच्छब्दादन्यो यः सच्छब्दः तस्य श्रवणाच्च ॥ १८ ॥

कार्यकारणयोरन्यत्वे निदर्शनद्वयमाह —

## पटवच्च ॥ २ । १ । १९ ॥

संश्लेषविशेषमापन्ना तन्तव एव पटभावमापद्यन्ते । न तु तन्तु-

---

**असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेः शब्दान्तराच्च ॥ २ । १ । १८ ॥**

ननु 'इदं वाऽग्रे नैव किञ्चनासीत्' इत्यादौ कार्यस्य प्राक्सत्ता प्रतिषिध्यते इति चेन्न । धर्मान्तरेण-सूक्ष्मचिदचिच्छरीरकसत्त्वरूपावस्थान्तरेणावस्थितेः निषेधः नामरूपविभागावस्थस्य निषेधः । 'तदसदेव सन्मनोऽकुरुत स्या'मिति वाक्यशेषादयमर्थोऽवगम्यते । युक्तेः—सतोऽपि धर्मिणोऽसदिति व्यवहारेऽस्ति च युक्तिः—सङ्क्रमनप्रकारः । अस्तित्वं नामरूपविभागार्हत्वम्, असत्त्वं तदनर्हत्वमिति । शब्दान्तरं च 'सदेव सोम्येदमग्र आसी'दिति ॥ १८ ॥

भ्योऽतिरिच्यते पट इति सार्वजनीनमेतत् । एवं ब्रह्मैवावस्थाभेदात् कार्यकारणभावं प्राप्य नामरूपवैचित्र्यास्पदं भवति । अवस्थाभेदश्च सूक्ष्मचिदचिद्वैशिष्ट्यं स्थूलचिदचिद्वैशिष्ट्यं चेति ॥ १९ ॥

## यथा च प्राणादिः ॥ २ । १ । २० ॥

यथा वायुरेक एव वृत्तिवैचित्र्यात्प्राणापानादिनामान्तररूपान्तरकार्यान्तराणि प्राप्नोति, तथा परंब्रह्मैकमेवावस्थावैचित्र्ययोगान्नामरूपभेदभाक् भवति । लौकिकं प्रथमनिदर्शनम्, इदं वैदिकम्, तथा प्रथमं बहूनामेकत्वयोगे, द्वितीयमेकस्य बहुत्वे इति भेदः ॥ २० ॥

पूर्वपक्षः—

(अ. सं.) ननु सत्कार्यवादोऽयं न घटेत कथञ्चन ।
अनन्यता दुर्घटा हि कार्यकारणयोर्मिथः ॥ १ ॥
बुद्धेः शब्दस्य सङ्ख्यायाः कालस्यार्थस्य चाऽऽकृतेः ।
कार्यकारणयोर्भेदो लोके व्यक्तं हि दृश्यते ॥ २ ॥
प्रागासीदसदेवेदमित्यपि श्रूयते क्वचित् ।
तद्ब्रह्मानन्यता ब्रह्मयोनित्वान्नास्य सिध्यति ॥ ३ ॥

---

## पटवच्च ॥ २ । १ । १९ ॥

यथा पटः तन्तुभ्यो नातिरिच्यते, तन्तव एव हि संश्लेषविशेषयोगात् पट इत्युच्यन्ते, तथा ब्रह्मापि सूक्ष्मचिदचिच्छरीरकं स्थूलचिच्छरीरकत्वयोगेन जगदित्युच्यते । विशेषश्चायमनेन निदर्शनेनावगम्यते । यथा शुक्लनीलपीतैस्तन्तुभिरारब्धे पटे शौक्ल्यादयः स्वस्वांश एव व्यवस्थिताः, न तेषां साङ्कर्यम्; तथा चिदचिदीश्वरतत्त्वत्रयसमारब्धेऽस्मिन् जगति जडत्वाज्ञत्वसर्वज्ञत्वादयो विशेषाः तत्तदंश एव व्यवस्थिताः । न चैतेषां साङ्कर्यमिति ॥ १९ ॥

## यथा च प्राणादिः ॥ २ । १ । २० ॥

यथा शरीरे वायुरेक एव वृत्तिभेदात् प्राणापानादिनामरूपभेदेन पञ्चधा भवति । एवमेव ब्रह्म स्थूलचिदचिच्छरीरकत्वावस्थाभेदेन बहुधा भवति ॥२०॥

इति प्रदीपे आरम्भणाधिकरणम् ॥ ६ ॥

सिद्धान्तः—

अत्रोच्यते सदेवेदमग्र आसीदिति श्रुतम् ।
यत्तत्सच्छब्दनिर्दिष्टं गम्यते तदनन्यता ॥ ४ ॥
आरम्भणादिघटितवाक्येभ्यो जगतोऽस्य हि ।
सतोऽवस्थान्तरप्राप्तिमात्रमुत्पत्तिरुच्यते ॥ ५ ॥
बुद्धिशब्दादिभेदो यः सोऽवस्थाभेदमूलकः ।
नार्थान्तरत्वनियतः तद्युक्ता कार्यता सतः ॥ ६ ॥
इदं घटादिकं पूर्वं मृदासीदिति वाक्यतः ।
अग्र आसीत् सदेवेदमित्यपि श्रौतवाक्यतः ॥ ७ ॥
कारणे सति कार्यस्य सत्त्वं चापि हि गम्यते ।
प्रतिसन्धानतोऽप्यस्य प्रसिद्धा कारणात्मता ॥ ८ ॥
असत्त्वव्यपदेशोऽस्य सर्गात् प्राक् यः श्रुतः क्वचित् ।
सूक्ष्मावस्थामभिप्रैति स्थूलावस्थाविरोधिनीम् ॥ ९ ॥
तुच्छता यद्यभिप्रेता वाक्यशेषो विरुध्यते ।
असतस्तस्य सङ्कल्पो वाक्यशेषे श्रुतः कथम् ॥ १० ॥
स्थूलस्य नाशः सौक्ष्म्यं तु युक्तियुक्तं न तुच्छता ।
कथं नु स्यादसदिदं प्राक् सदेवेति च श्रुतेः ॥ ११ ॥
असत्यर्थान्तरत्वेऽपि युक्तोऽवस्थान्तरान्वयात् ।
नामादिभेदयोगो हि ब्रह्मण्यपि पटादिवत् ॥ १२ ॥
केवलं युक्तिमूलोऽसत्कार्यवादो न शोभनः ।
सत्कार्यवादो युक्त्या तु सिद्धः शास्त्रानुकूलया ॥ १३ ॥
हन्त ब्रह्मैव विकृतं ननु स्याज्जगदात्मना ।
अजानतो ब्रह्मतत्त्वमाक्षेपोऽयं प्रवर्तते ॥ १४ ॥
भोक्ता भोग्यं प्रेरितेति श्रूयते यदिदं त्रयम् ।
नित्यसंश्लिष्टमेतच्च न विश्लिष्टं कदाचन ॥ १५ ॥
सङ्घातेऽस्मिन् विशेषस्तु यत्त्रयाणां न मुख्यता ।
मुख्यस्तु परमात्मैव तस्यान्यावुपसर्जनम् ॥ १६ ॥

यदयं तत् द्वयं व्याप्य सर्वस्यात्मतया स्थितः ।
शरीरिणोऽपृथक्सिद्धं शरीरं हि विशेषणम् ॥ १७ ॥
तस्माद्विशिष्टं ब्रह्मैकं तत्त्वं तत्त्वविदो विदुः ।
स चायं परमात्मैकः समस्तचिदचिद्वपुः ॥ १८ ॥
सूक्ष्मयन् स्थूलयंश्चापि स्वेच्छया तद्वपुर्द्वयम् ।
विहरन्नेष भवति स्वयं कार्यं च कारणम् ॥ १९ ॥
सङ्कोचो वा विकासो वा प्रकारांशे प्रवर्तते ।
प्रकारिणि तु नैवास्य प्रसक्तिः परमात्मनि ॥ २० ॥
कार्यकारणभावेऽपि तत्सिद्धास्याऽविकारिता ।
ऊर्णनाभ्यादिदृष्टान्तत्रयेणाप्यवगम्यते ॥ २१ ॥

इति भाष्ये आरम्भणाधिकरणम् ॥ ६ ॥

---

## इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥२।१।२१॥

नन्वारम्भणशब्दादिघटिते सद्विद्याप्रकरणे 'तत्त्वमसी'ति ब्रह्मणः इतरत्वेन—जीवत्वेन व्यपदेशात् ब्रह्मणो जगत्कारणत्वे स्वानन्यस्य जीवस्य सुखदुःखमयसंसरणापादनेन स्वस्याहितं स्वेनैव कृतं स्यात् । एवं सति सर्वज्ञस्य सर्वशक्तस्य स्वहिताकरणादिदोषः प्रसजेत् । अत्राह—

## अधिकं तु भेदनिर्देशात् ॥ २ । १ । २२ ॥

तुशब्दः शङ्कां व्यावर्तयति । परंब्रह्म जीवादधिकम्—अर्थान्तरम् । कस्मात्? भेदनिर्देशात्—जीवात् ब्रह्मणो भेदस्य तत्र तत्र श्रुतिषु श्रवणात् । तथा च श्रुतयः 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति'

---

**इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २ । १ । २१ ॥**

ननु—'तत्त्वमसी'त्यादिवाक्यैः परस्य ब्रह्मण इतरत्वेन जीवत्वेन व्यपदेशात् जीवादनन्यत्वावगमात् स्रष्टुः परब्रह्मणो हिताकरणादिदोषप्रसक्तिः, परं ब्रह्म जीवादनन्यभूतं सत् जीवस्य हितमेव कथं न सृजेत्, अहितं च कथं सृजेदित्येष दोषः प्रसजति ॥ २१ ॥

'स कारणं करणाधिपाधिपः' 'तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो-ऽभिचाकशीति' 'ज्ञाज्ञौद्वावजावीशनीशौ' 'प्राज्ञेनात्मना सम्परिष्वक्तः' 'अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः' 'प्रधानक्षेत्रपतिर्गुणेशः' 'नित्यो नित्यानां चेतनश्चेतनानां एको बहूनां यो विदधाति कामान्' 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं यमात्मानमन्तरो यमयति' इत्याद्याः । एतेन जीवब्रह्मणोः स्वरूपैक्यं परैरभिप्रेतं सूत्रकारेणैव प्रतिक्षिप्तं भवति ! ननु—अविद्याकल्पितो भेद एवेहाभिप्रेत इति चेत् स किं जीवेश्वरयो-र्भेदः, उत जीवब्रह्मणोः । यदि जीवेश्वरयोः, तर्हि किं तेन भेदेन, हिताकरणादिदोषप्रसङ्गस्तु न शाम्यति । सर्वज्ञः सर्वजीवं स्वानन्यं जानात्येव, जानन्नेव संसारमापादयति । न जानातीति चेत्, अज्ञतैव स्यात् । शास्त्रयोनित्वाधिकरणं व्याचक्षाणैः परैः शास्त्रप्रतिपाद्यादर्था-दधिकार्थज्ञातृत्वं हि शास्त्रप्रवक्तुरीश्वरस्य समर्थितम् । तदीश्वरः तत्त्व-मस्यादिशास्त्रार्थं न जानातीत्यनुपपन्नम् । जीवाद्बद्धावस्थात् अविद्यावियुक्ते विशुद्धे यो भेदः स चेत् विवक्षितः, हिताकरणादि-दोषप्रसञ्जनतत्परिहारयोर्नावसरः । न हि तस्मिन् स्रष्टृत्वं पराभिमतम् । सार्वज्ञ्यादिनिरङ्कुशैश्वर्यविशिष्ट एव तत्, जीवाद्भेदश्च ब्रह्मणि तथा-विधैश्वर्ययोगेनैव तत्र तत्र श्रुतिभिः श्राव्यते । किञ्च—स्वाप्नसृष्टेरविशि-ष्टामिमां सृष्टिमभ्युपगच्छतः कोऽयं हिताकरणादिदोषप्रसङ्गः । न हि स्वप्ने स्वाहितं स्वेनाधीयमानमुत्पश्यन् पुरुषो दूष्यते तेनाहिताचारेण

---

## अधिकं तु भेदनिर्देशात् ॥ २ । १ । २२ ॥

अत्रोच्यते—परं ब्रह्म जीवादधिकम्—स्वरूपस्वभावाभ्यां विलक्षणमेव । तयोर्भेदकस्य निर्देशात् । 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' 'करणाधिपाधिपः' 'विद्या-विद्ये ईशते यस्तु सोऽन्यः' 'य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति' इत्यादिश्रुतयो हि तयोर्भेदं वदन्ति ॥ २२ ॥

ननु तदनन्यत्वस्य तत्त्वमस्यादिवाक्यैः श्राव्यमाणस्य कथं निर्वहणम् । उच्यते । नेदं स्वरूपैक्यमभिप्रेत्य प्रवर्तते । अपि तु शरीरशरीरिभावनिबन्धनं सर्वस्य ब्रह्मात्मकत्वमभिप्रेत्य । तथा हि–तत्रैव सद्विद्यायां 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' इति अन्तर्यामिब्राह्मणोक्तं सर्वस्य ब्रह्मात्मकत्वं प्रतिपाद्य तदेव ब्रह्मात्मकत्वं 'तत्त्वमसी'ति जीवविशेषे निर्दिश्यते । तस्मादिदमधिकरणमस्मत्पक्षे सुसङ्गतम् ॥ २२ ॥

## अश्मादिवच्च तदनुपपत्तिः ॥ २ । १ । २३ ॥

अश्मादिषु जडेषु यथा ब्रह्मस्वरूपैक्यमनुपपन्नं तथैव जीवेष्वपि ब्रह्मस्वरूपैक्यमनुपपन्नम् । यद्यपि जीवश्चेतनः, अथापि परब्रह्मस्वरूपपर्यालोचनायां सततविकारास्पदात् जडादिव दुःखैकनिकेतनात् जीवात् ब्रह्मणो महदन्तरमिति भावः ॥ २३ ॥

### पूर्वपक्षः—

(अ. सं.) ननु जीवादनन्यस्य ब्रह्मणः स्रष्टृता कथम् ।
तथा सत्यहितं स्वस्य स्वेनैवापादितं भवेत् ॥ १ ॥
तापत्रयाभिभूतो हि जीवो भवति संसरन् ।
तत्त्वमस्यादिवाक्ये च श्रूयते तदनन्यता ॥ २ ॥

### सिद्धान्तः—

अत्रोच्यते श्रुतिशतैस्तयोर्भेदोपदेशतः ।
जीवात्मनो ह्यन्य एव परमात्मेति सिध्यति ॥ ३ ॥

---

## अश्मादिवच्च तदनुपपत्तिः ॥ २ । १ । २३ ॥

अश्मादीनां जडानां यथा जीवभावो नोपपद्यते तथा परस्य ब्रह्मणो जीवभावो नैवोपपद्यते, 'ज्ञाज्ञौ द्वावजावीशनीशौ' 'अनीशया शोचति मुह्यमानः जुष्टं यदा पश्यत्यन्यमीशं' इत्यादिश्रुतिभिस्तयोरत्यन्तवैलक्षण्यं हि प्रतिपाद्यते ॥ २३ ॥

इति प्रदीपे इतरव्यपदेशाधिकरणम् ॥ ७ ॥

अस्ति चास्य महान् भेदो जीवादपि जडादिव ।
तन्मूलत्वात्तदात्मत्वात्तदभेदगिरोऽस्य च ॥ ४ ॥
इति भाष्ये इतरव्यपदेशाधिकरणम् ॥ ७ ॥

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २ । १ । २४ ॥

परस्य ब्रह्मणः स्वयमद्वितीयस्य सङ्कल्पमात्रेण विचित्रजगत्स्रष्टृत्वं शङ्कानिरसनमुखेन स्थाप्यते । ननु लोके घटादितत्तत्कार्यनिर्माणसमर्थस्यापि तत्तत्कार्याधानाय दण्डादिसहकारिसापेक्षतया तत्तदुपकरणोपसंहरणं दृश्यते । एवं सति सृष्टेः प्रागद्वितीयमेव ब्रह्म उपकरणनिरपेक्षं स्वयमेव विचित्रमिदं सृजतीत्यनुपपन्नमिति चेन्न । क्षीरवद्धि । स्वकार्यजननसमर्थं सर्वमेव न स्वकार्यमाधातुं किमप्युपकरणमादत्ते । क्षीरं हि दध्यात्मना भवत् स्वयमेव भवति नेतरदपेक्षते, तद्धि स्वयमेव तत्र शक्तम्, एवमेव परंब्रह्माचिन्त्यशक्तिकं स्वयं सङ्कल्पमात्रेण भवति बहुधा । तदस्य विचित्रजगत्सर्गे कुलालादेरिव नोपकरणान्तरोपसंहारापेक्षा ॥ २४ ॥

## देवादिवदपि लोके ॥ २ । १ । २५ ॥

लोके देवादयः समधिकशक्तिकाः सङ्कल्पमात्रेण स्वापेक्षितानां

---

**उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २ । १ । २४ ॥**

लोके समर्थानां रथगोपुरादिनिर्माणे सहकारिकारणकलापोपसंहारो दृष्टः, विना सहकारिसमवधानं न प्रभवति कार्यमाधातुम् । तस्मात् सर्गारंभे ब्रह्म स्वयं एकमेव सत् सहकार्युपसंहारं विना जगत् स्रष्टुं न प्रभवति । इति चेन्न । क्षीरवद्धि—क्षीरं यथा स्वयमेव दधि भवति, तथा स्वयमेकमेव जगद्रूपेण बहुधा भवितुमर्हति ॥ २४ ॥

**देवादिवदपि लोके ॥ २ । १ । २५ ॥**

लोके ब्रह्मादीनां देवानां तथा महर्षीणां च सङ्कल्पमात्रेण स्रष्टृत्वे स्थिते तद्वत् सङ्कल्पमात्रेण सर्वज्ञस्य सर्वशक्तस्य परमात्मनः जगत्स्रष्टृत्वे का शङ्का ॥ २५ ॥

इति प्रदीपे उपसंहारदर्शनाधिकरणम् ॥ ८ ॥

स्रष्टारो दृष्टाः, यस्य शक्तिरनवधिका तस्य सर्वेश्वरस्य सङ्कल्पमात्रेण जगत्सर्गकरणे का नामेतरोपकरणोपसंहारापेक्षा । ननु परब्रह्मणोऽप्यस्त्येव प्रकृतिपुरुषतत्कर्मसापेक्षता जगत्सर्गे, तत्कथमिह शङ्कापरिहारयोः सम्भवः । सत्यम् । इयमिह शङ्का—कुलालादयो घटादिनिर्माणे समर्था अपि स्वसङ्कल्पमात्रानधीनसमवधानकसाधनान्तरसापेक्षा दृष्टाः, मृदादयो घटादावुपादानभूता अपि अधिष्ठातृसापेक्षा दृष्टाः, तस्मात् सङ्कल्पमात्रेण स्वयमेव सर्वं सृजतीत्येतन्नोपपद्यत इति । परिहारश्च—देवादयः सङ्कल्पमात्रेण स्वापेक्षितानां स्रष्टारो दृष्टाः, तत्तत्कार्योपादानादीनि च समवयन्ति तेषां सङ्कल्पमात्रेण । अधिष्ठातृनिरपेक्षता च परेणापि क्षीरादौ दृष्टा । तत् सर्वतनोः सर्वज्ञस्य सर्वशक्तस्य सङ्कल्पमात्रेण स्वयं बहुभवनरूपमिदं जगत्स्रष्टृत्वं न नोपपद्यत इति ॥ २५ ॥

### पूर्वपक्षः—

( अ. स. ) नन्वन्यनैरपेक्ष्येण ब्रह्मैव सृजतीत्यसत् ।
समर्थस्यापि लोकेऽस्मिन् कारकापेक्षणात् कृतौ ॥ १ ॥

### सिद्धान्तः—

मैवं सङ्कल्पमात्रेण जगत् सृजति तु प्रभुः ।
आत्मनः करणेऽन्यस्यापेक्षा नैव प्रदृश्यते ॥ २ ॥
यथा क्षीरं भजत् स्वेन रूपेण दधिभावताम् ।
नापेक्षतेऽन्यत् किमपि तथात्रापि विभाव्यताम् ॥ ३ ॥
सर्वज्ञं सत्यसङ्कल्पं ब्रह्म सर्वशरीरकम् ।
सङ्कल्पमात्रतो नानारूपं प्रभवति स्वयम् ॥ ४ ॥
देवानां च महर्षीणामपि सङ्कल्पमात्रतः ।
सृष्टिः श्रुता स्मृता दृष्टा लोकेषु च यथायथम् ॥ ५ ॥

इति भाष्ये उपसंहारदर्शनाधिकरणम् ॥ ८ ॥

पुनरत्र कापिलः प्रत्यवतिष्ठते—

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥२।१।२६॥

ब्रह्मैव चेदुपादानम्, दुग्धं विकृतं सर्वांशेन यथा दधि भवति, तथा कृत्स्नस्य ब्रह्मणः जगद्रूपताऽऽपद्येत, तदा ब्रह्म हेयप्रत्यनीकं नावशिष्येत । अथ मृत्पिण्ड इवांशतश्चेत् जगदात्मना भावः, ब्रह्म मृत्पिण्डवत् सांशमापद्येत, तथा सति निरवयवत्वशब्दस्य-निरवयवत्वश्रुतेर्व्याकोपः स्यात् । इदमभिहितं भवति–'सदेव सोम्येदमग्र आसीत्' 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादिश्रुतिभिः सृष्टेः प्राक् चिदचिद्विभागरहितं ब्रह्मैवासीदित्यवगम्यते । तच्च 'निष्कल'-मित्यादिश्रुत्या निरंशमिति च । तदीदृशं ब्रह्मैव चेज्जगदात्मना भवति, न विशुद्धं ब्रह्म तत्वं किञ्चित्तदा, यदन्वेष्टव्यं स्यात् । यद्यंशतश्चिदचिदात्मना जगद्रूपेण भवनमिष्येत तदा निरंशत्वश्रुतिविरोध इति ॥ २६ ॥

अत्रोच्यते—

## श्रुतेस्तु शब्दमूलत्वात् ॥ २ । १ । २७ ॥

तुशब्दः शङ्काव्यावृत्तौ । श्रुतेः–या श्रुतिः ब्रह्मण एकत्वं प्रागवगमयति, या च श्रुतिर्निरंशत्वमवगमयति, सैव श्रुतिः परस्य ब्रह्मणस्तस्यैव विविधजगद्रूपेण भवनमप्यवगमयति 'तदैक्षत बहु स्यां प्रजा-

---

**कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २ । १ । २६ ॥**

ननु ब्रह्मैव स्वयं क्षीरवत् जगद्रूपेण परिणमतीत्यभ्युपगमे कृत्स्नस्य ब्रह्मणो जगद्रूपता प्रसजेत् । कारणं नावशिष्येत । अंशतः परिणामाभ्युपगमे निरवयवत्वश्रुतेर्व्याकोपः स्यात् । सावयवद्रव्य एव हि अंशव्यवहारः । 'निष्कलं निष्क्रिय'मिति च श्रूयते । निष्कलम्-निरवयवमित्यर्थः । सत्यं निष्कलम्, अथापि चिदचिद्विशिष्टं हि ब्रह्म कार्यावस्थं भवति । अस्तु किं तेन । तथाविधं ब्रह्म बहुधा भवत् कार्यभावापत्त्या तदानीं नावशिष्येतेत्याक्षेपो जागर्त्येव ॥ २६ ॥

येय' 'सच्च त्यच्चाभवत्' 'तदात्मानं स्वयमकुरुत' इत्यादिना। न च त्वदभिमतं प्रधानमिवानुमानिकं ब्रह्म, किन्तु शब्दैकमूलम्-शब्दैकप्रमाणकम्। आनुमानिक एव तु तर्कोपमर्दः प्रभवति। अनुमानं हि दृष्टोपजीव्यम्। इदमभिहितं भवति—दृष्टविसजातीयं विचित्रशक्तियुक्तं परं ब्रह्मावबोधयति श्रुतिः, येन विचित्रशक्तियोगेन निरंशस्याप्यविभागो विभागो हेयप्रत्यनीकता च घटते॥ २७॥

## आत्मनि चैवं विचित्राश्च हि ॥ २ । १ । २८ ॥

एवमेव जीवात्मन्यपि दृष्टविसजातीये। नहि पृथिव्यादिषु दृष्टाश्छेद्यत्वादयो देहे च दृष्टा वृद्धिह्रासादयो वस्तुत्वेन प्राणयोगेन वाऽऽत्म-

---

अत्राह—

### श्रुतेस्तु शब्दमूलत्वात् २ । १ । २७ ॥

तुशब्दः शङ्काव्यावृत्तये। नायं दोषः, श्रुतेः। श्रुतिश्च 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेय' 'तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत' इत्यादिः। श्रुत्या प्रतिपाद्यमानेऽर्थे लोकतः समुत्प्रेक्ष्यमाणा शङ्का निरवकाशैव। ननु अग्निना सिञ्चतीति वाक्यमिव बाधितेऽर्थे श्रुतिरपि प्रमाणं भवितुं नार्हति। नैवम्। परब्रह्मणः शब्दमूलत्वात्—शब्दैकसमधिगम्यत्वात्। जलं लोकदृष्टं सेककरणम्, अग्निस्तु दाहकरणम्, तत अग्निना सिञ्चतीति वाक्यमप्रमाणम्। एवं यूपो लोकदृष्टः, तस्मिन् आदित्यतादात्म्यं विरुद्धम्, तदादित्यो यूप इतिवाक्यस्य लाक्षणिकार्थे प्रामाण्यमाश्रीयते। ब्रह्म तु न लोकसिद्धम्, अपि तु शब्दैकगम्यम्, शब्दश्च सदेवेत्यादिः, तस्य जगद्रूपकार्यात्मना भवनं बोधयति निरंशतां च। तदस्मिन् लोकदृष्टयमाशंका—किमंशतः जगदात्मना भवति उत सर्वांशेनेति नैव प्रसरति॥ २७॥

### आत्मनि चैवं विचित्राश्च हि ॥ २ । १ । २८ ॥

आत्मनि चैवम्—दृश्यमाने वस्तुनि संभाव्यमानानां विकारित्वादीनां वस्तुत्वसाम्येन जीवात्मनि प्रसञ्जने कृते श्रुतितो विलक्षणतयाऽवगम्यमाने नेदं प्रसञ्जनं घटेतेत्येव हि वक्तव्यम्। किं बहुना, दृश्यमानेष्वपि अग्निजल-

न्यारोपयितुं शक्यन्ते 'अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे' इत्यादिशब्दैकसमधिगम्यस्य स्वभावो हि दृष्टविसजातीयः । किं बहुना, दृश्यमानेष्वपि पृथिव्यग्निजलादिषु मिथो विचित्रा एव हि शक्तयः—अग्नावौष्ण्यम्, जले तु शैत्यम्, पृथिव्यां काठिन्यं, जले द्रवत्वमिति । एतेन—'अग्निना सिञ्चे'दितिवद्व्याहतमर्थं श्रुतिरपि न प्रभवत्यवगमयितुमित्येतदपास्तम् । अग्नेर्दाहकत्वं स्वभावः, न सेचनकर्तृत्वम्, तत्तु जलस्येति स्वभाववैचित्र्यं प्रत्यक्षावगतमिति तद्विरुद्धमर्थं लौकिकं वाक्यं न बोधयितुं प्रभवति । ब्रह्म तु न तथेति यथाश्रुति विचित्रशक्तिकं तदभ्युपगन्तव्यमित्यविरोधः । स्मर्यते च विचित्रशक्तियोगस्तस्य—'निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः । कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते' × × × 'शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः । यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः' ××× 'भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता' इति ॥२८॥

## स्वपक्षदोषाच्च ॥ २ । १ । २९ ॥

आनुमानिकप्रधानकारणवादिनः कापिलस्य ब्रह्मकारणवादे प्रत्यवस्थानं नैव योग्यम् । योऽयं दोष उद्भाव्यते स तु स्वपक्ष एव प्रसजति । प्रधानं चेन्महदादिरूपेण परिणमति तदा कृत्स्नस्यैव कार्यात्मना

---

वाय्वादिषु शक्तयो विचित्रा एव हि—नह्यग्नेर्यः स्वभावः स जले, जलस्य यः स्वभावः स न वायौ, तेषु यः स्वभावः स न जीवे वा, तथा तेषु तेषु च यः स्वभावः स न परमात्मनि । तत् यन प्रमाणेन यथाऽवबोध्यते तथैव तद्वस्त्वभ्युपगन्तव्यमिति । तथा च स्मर्यते—'शक्तयः सर्वभावानामचिन्त्यज्ञानगोचाराः' इति ॥ २८ ॥

### स्वपक्षदोषाच्च ॥ २ । १ । २९ ॥

ये कापिलाः प्रधानकारणवादिनः कृत्स्नप्रसक्तिदोषं ब्रह्मकारणवादे श्रौते समुद्भावयन्ति ते तमिमं दोषं स्वपक्षे सन्तं किमिति न पश्यन्ति । प्रधानं निरंशमिति मन्यन्ते, तदेव जगद्रूपेण परिणमतीति च । तथा सति

परिणतिप्रसङ्गः । यद्येकांशतः, तर्हि तस्य निरंशत्ववादो व्याहन्येत । ननु सत्त्वरजस्तमसां त्रयाणां समुदायः प्रधानमिष्यते, तत् तैस्त्रिभिः सांशत्वमभिमतमेव नः इति चेत् । तथाप्यनिर्मोक्ष एव तस्मात् दोषात् । त्रयाणामेव हि संहतानां परिणतिर्वाच्या । ननु त्रिष्वेकांशस्तथैवावतिष्ठति अपरावंशौ परिणमत इति वक्तुं सुशकम् । ये संहतास्त्रयः प्रत्येकं ते कार्त्स्न्येन परिणमन्ति, उतांशतः । कार्त्स्न्येन चेत् नावशिष्येत, सर्वस्यैव कार्यात्मना भावात् । अथांशतश्चेत् निरवयवत्वादयो व्याहन्येरन् ॥ २९ ॥

अस्मा तु ब्रह्म विचित्रशक्तियुक्तं शास्त्रादेवाभ्युपगच्छतां नेदृशाक्षेपस्यावसर इत्याह—

## सर्वोपेता च तद्दर्शनात् ॥ २ । १ । ३० ॥

येयं परदेवता परब्रह्माभिधा सा हि सर्वशक्त्युपेता, तस्या विचित्रशक्तियोगस्य श्रुतौ दर्शनात् 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति । तदेवं शास्त्रतः सकलेतरविसजातीयं परंब्रह्म विचित्रशक्तियुक्तं कारणमभ्युपगच्छतां दृष्टसजातीयेषु प्रसजतां शुष्कतर्कोपरोधानां नावसर इति भावः ३० ॥

---

कृत्स्नस्य प्रधानस्य कार्यभावापत्तौ कारणं नावशिष्येत, अथांशतश्चेत् परिणामः, निरंशत्वमभ्युपगतं व्याहन्येत । प्रधानं चानुमानिकं दृष्टजातीयं च । तत्रेयमाशङ्का दुर्वारैव ॥ २९ ॥

## सर्वोपेता च तद्दर्शनात् ॥ २ । । ३० ॥

येयं सकलजगत्कारणत्वेन श्रूयमाणा परा देवता सा सर्वशक्त्युपेता—विचित्रसर्वशक्त्युपेता । तद्दर्शनात्—तस्य विचित्रशक्तियोगस्य दर्शनात्—श्रूयमाणत्वात् । 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति ॥ ३० ॥

## विकरणत्वान्नेति चेत्तदुक्तम् ॥ २ । १ । ३१ ॥

ननु 'न तस्य कार्यं करणं च विद्यते' इति करणादिकं प्रतिषिध्यते। शक्तिमतामपि कार्याधानं करणयोगेनैव दृष्टम् । करणादिविहीनस्य कथं स्रष्टृत्वमिति चेत्तदुक्तम् 'श्रुतेस्तु शब्दमूलत्वात्' 'सर्वोपेता च तद्दर्शना'दिति । हन्त कोऽयमाक्षेपः? । उक्तमप्यर्थमनवधार्य पुनराक्षिप्यते। उक्तमेव हि शब्दैकसमधिगम्यं ब्रह्म विचित्रानन्तशक्तियुक्तं स्वयमिदं जगत्स्रष्टुं प्रभवतीति । इदमभिहितं भवति–ब्रह्म निष्कलं निरवद्यं देशकालपरिच्छेदरहितं सृष्टेः प्रागेकमेवाद्वितीयम्, स्वयं सङ्कल्पमात्रेण विचित्रजगद्रूपं भवदप्यविकृतमेव स्वरूपतो निष्कलं निरवद्यमेव च वर्तते । कथमिदं घटेतेति तु प्रत्यक्षानुमानाभ्यां वस्तुस्वभावमवधारयत्सु भवेदाक्षेपः,ये पुनः सकलविसजातीयं विचित्रशक्तियुक्तं ब्रह्मतत्त्वं शास्त्रत एव पश्यन्ति, न तेष्वयमाक्षेपः ननु विचित्रशक्तियोगे शास्त्रगम्ये न विप्रतिपत्तिः, व्याहतेऽर्थे तु भवेदेव शङ्का, ब्रह्मैव जगद्रूपेण प्रभवतीति वदतां हि व्याहतं वचनमिदमवर्जनीयमापतति । एकं बहु च निरवद्यं सावद्यमविकृतं विकृतं चेति । नैतत् । अत एवोच्यते विचित्रा शक्तिः । हन्त, स्वभावविरोधमापादयन्ती कथं विचित्रा शक्तिः? लोकतो भासमानं विरोध ब्रह्मणि परिहरन्ती विचित्रा शक्तिरुच्यते । तद्यथा–ब्रह्मस्वरूपं हि अत्यन्तविलक्षणम् । सत्यज्ञानानन्दैकलक्षणं तत् विविधविचित्रजगत्प्रजननशक्तिगर्भम् । सा च शक्तिः सर्वस्यास्य चेतनाचेतनजातस्य सूक्ष्मावस्थया स्थितिः । सेयं स्थितिर्ब्रह्मण्येवेति प्रजननशक्ति-

---

### विकरणत्वान्नेति चेत्तदुक्तम् ॥ २ । १ । ३१ ॥

ननु 'न तस्य कार्यं करणं च विद्यते' इति करणप्रतिषेधादकरणस्य परब्रह्मणः कथं कारणत्वमिति चेन्न । तत्र यद्वक्तव्यम्, तत्पूर्वसूत्रे 'विचित्राश्च ही'त्यनेनोक्तमेव ॥ ३१ ॥

इति कृत्स्नप्रसक्त्यधिकरणम् ॥ ९ ॥

गर्भं ब्रह्मोच्यते। तादधीन्यात्तदविनाभावात्तस्येयं शक्तिरुच्यते। नामरूपविभागराहित्यादविभागाच्च सृष्टेः प्रागेकमेवाद्वितीयमुच्यते। अविनाभावश्च शरीरशरीरिभावेनेत्येष विशेषस्तु अन्तर्यामिब्राह्मणादौ श्रूयते। तथा च सूक्ष्मचेतनाचेतनशरीरकं ब्रह्म स्थूलचेतनाचेतनात्मना प्रभवतीति सकलश्रुत्यैकार्थ्येन विज्ञायते। तथा चाविचारयतां ब्रह्मस्वरूपमौपनिषदं तदुपादानजगद्वादे व्याहतार्थत्वाशङ्का। जगतोऽस्योपादानमपि परंब्रह्माविकृतमेव निरवद्यमेव। तस्मिन्नविभागेन स्थिता सूक्ष्मचेतनाचेतनलक्षणा या शक्तिस्तस्या एव खलु स्थूलात्मना विकासात् विकृतिः, दोषाश्च हेयास्तस्मिन्नेवांशे। जगदुपादानं ब्रुवन्ती अव्याहतमेव ब्रवीति। निदर्शनं च श्रावयति 'यथा पृथिव्यामोषधयस्सम्भवन्ति' 'यथा सतः पुरुषात्केशलोमानि' 'यथोर्णनाभिः सृजते गृह्णते' चेति। सर्वांशेन किं कार्यभावमापद्यते उतैकांशेनेत्यस्य विकल्पस्य तन्मूलकदोषस्य च नेहावसरः। विचित्रशक्तिकस्य चिदचिद्विशिष्टस्य ब्रह्मणः कार्यकारणावस्थाया नियमनविशेषरूपैश्वर्यविशेषे पर्यवसानात् ॥ ३१ ॥

### पूर्वपक्षः—

(अ. सं.) जगद्रूपेण भवति निरंशं ब्रह्म चेत्तदा।
कारणं नावशिष्येत सांशं स्यादन्यथा तु तत् ॥ १ ॥

### सिद्धान्तः—

मैवं शास्त्रैकसंवेद्ये न युक्तिः सम्प्रगल्भते।
दृष्टानुसारिणी सेयमनुमानाद्यगोचरे ॥ २ ॥
यस्तु दृष्टानुसारेण कल्पयत्यानुमानिकीम्।
प्रकृतिं तस्य कृत्स्नप्रसक्त्यादिर्दूषणं भवेत् ॥ ३ ॥
निरंशत्वमुपादानभावं निर्दोषतामपि।
नित्यत्वं च श्रुतिर्वक्ति ब्रह्मणः सर्वशक्तिताम् ॥ ४ ॥

प्रतिवस्तु विचित्रैव स्वभावस्य व्यवस्थितिः ।
दृश्यते च ततः सर्वं घटते परमात्मनि ॥ ५ ॥
यथाश्रुति च मन्तव्यं श्रौतेऽर्थे न विकल्पयेत् ।
कार्यभावेऽपि न ब्रह्मस्वरूपस्य क्षतिस्ततः ॥ ६ ॥

इति भाष्ये कृत्स्नप्रसक्त्यधिकरणम् ॥ ९ ॥

---

## न प्रयोजनवत्वात् ॥ २ । १ । ३२ ॥

ननु ब्रह्मणो जगत्कर्तृत्वं नोपपद्यते, प्रवृत्तिमात्रस्य प्रयोजनसापेक्षत्वात्, सर्व एव प्रेक्षावान् प्रयोजने सत्येव प्रवर्तेत । परस्य ब्रह्मणोऽवाप्तसमस्तकामस्य प्रयोजनासम्भवाज्जगत्कर्तृत्वं नोपपद्यते । विना प्रयोजनं प्रवृत्तौ उन्मत्ततैव स्यात् । परार्थं प्रवृत्तिरुदारचेतसां दृष्टेति चेत् । दुःखैकनिकेतनमिदं सृजता न कस्यचिदर्थः साधितो भवति ॥ ३२ ॥

अत्रोच्यते–

## लोकवत्तु लीलाकैवल्यम् ॥ २ । १ । ३३ ॥

अवाप्तसमस्तकामस्य परस्य ब्रह्मणः जगत्सर्गः लीलाकैवल्यम्– लीलैव केवलम् । लोके राजानो हि पूर्णकामा अपि लीलायै केवलं कन्दुकादिविहरणं कुर्वन्ति । तदयं जगत्सर्गः परमात्मनो लीलारसायैव भवति ॥ ३३ ॥

---

### न प्रयोजनवत्त्वात् ॥ २ । १ । ३२ ॥

प्रज्ञावतां प्रवृत्तिमात्रस्य प्रयोजनसापेक्षत्वनियमात् परस्य ब्रह्मणो नित्यतृप्तस्य प्राप्तव्यफलाभावात् सर्गे प्रवृत्तिर्नोपपद्यते इति चेत् ॥ ३२ ॥

### लोकवत्तु लीलाकैवल्यम् ॥ २ । १ । ३३ ॥

अत्रोच्यते—लोकवत्तु–यथा लोके राज्ञां तृप्तानामपि कन्दुकादिविहरणं लीलैव केवलं, तथा ईश्वरस्यापि जगत्सर्गादयः केवलं लीलैव ॥ ३३ ॥

ननु—जगत्सर्गरूपलीलारसे प्रवृत्तस्यास्य वैषम्यनैर्घृण्ये प्रसजेताम् । सुरनरतिर्यगादिप्राणिनिचयेऽस्मिन् कांश्चन सुखिनः कांश्चन दुःखिनश्च कुर्वन् विषमसृष्ट्याधायकतया वैषम्यस्य पक्षपातस्य नैर्घृण्यस्य च पात्रं हि भवति । तत्राह—

## वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ २ । १ । ३४ ॥

जगत्सृजतोऽस्य वैषम्यनैर्घृण्ये नैव प्रसजेताम् । सर्गस्य जीवकर्मसापेक्षत्वात् । पूर्वपूर्वतत्तत्पुण्यपापानुगुणा हि देवतादिविचित्रसृष्टिः । तथा हि श्रुतिर्दर्शयति 'रमणीयचरणा रमणीयां योनिमापद्यन्ते कपूयचरणाः कपूयां योनिमापद्यन्ते' 'साधुकारी साधुर्भवति पापकारी पापो भवति' 'पुण्यः पुण्येन कर्मणा भवति पापः पापेने'ति ॥ ३४ ॥

## न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च ॥ २ । १ । ३५ ॥

ननु सृष्टेः प्राक् क्षेत्रज्ञानां कर्मैव नास्ति । अविभागात्—तदानीं ब्रह्मक्षेत्रज्ञविभागस्यैवाभावात् । 'सदेव सोम्येदमग्र आसीदेकमेवे'ति

---

**वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति ॥ २ । १ । ३४ ॥**

ननु सुखिनः कांश्चन कांश्चन दुःखिनः सृजतोऽस्य वैषम्यनैर्घृण्ये स्याताम् । इति चेन्न । सर्गस्य सृज्यकर्मसापेक्षत्वात् । तत्तत्कर्मानुगुणमेव भोक्तृवर्गं सृजतीति नास्य स्रष्टुर्वैषम्यनैर्घृण्ययोः प्रसङ्गः । तथा हि दर्शयति श्रुतिः—'पुण्यः पुण्येन कर्मणा पापः पापेने'ति ॥ ३४ ॥

**न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च ॥ २ । १ । ३५ ॥**

ननु प्रलये सृज्यस्य सर्वस्य ब्रह्मण्यविभागात् तदानीं कर्मैव नास्तीति तत्सापेक्षा सृष्टिरित्येतन्न युज्यते इति चेन्न । अनादित्वात्—जीवानां तत्कर्मप्रवाहस्य

हि श्रूयत इति चेन्न । अनादित्वात्—क्षेत्रज्ञानां तत्कर्मणां चानादित्वात् । उपपद्यते च सृष्टेः प्राक् क्षेत्रज्ञानामविभागः नामरूपविभागराहित्यात्, परस्य ब्रह्मणः शरीरतया तदपृथक्स्थितेश्च । उपलभ्यते च श्रुतौ क्षेत्रज्ञानामनादित्वम्—'न जायते म्रियते वा विपश्चित्' सर्गस्यापि प्रवाहानादित्वम् 'धाता यथापूर्वमकल्पयत्' इति ॥ ३५ ॥

## सर्वधर्मोपपत्तेश्च ॥ २ । १ । ३६ ॥

कारणत्वौपयिका ये ये धर्माः प्रधानादिषु स्वतन्त्रकारणत्वेन पराभिमतेष्वनुपपन्नाः, ते सर्वे धर्मा अस्मिन् सर्वशरीरिणि विशिष्टे परब्रह्मण्युपपद्यन्ते । तस्मात् ब्रह्म जगतः कारणमित्येतत्समञ्जसम् ॥३६॥

(अ. सं.) प्रकृतित्वे तु ये दोषाः शङ्कितास्ते निराकृताः ।
कर्तृत्वानुपपत्तिं च निरस्यत्यथ शङ्किताम् ॥ १ ॥

---

चानादित्वात् । प्रलये नामरूपविभागराहित्यमात्रेण ब्रह्मणि संपन्ना जीवाः पुनः सर्गारम्भे पूर्वकर्मानुगुणमेव देवादियोनिभेदमापद्यन्ते इति स्रष्टुः परमात्मनो न वैषम्यनैर्घृण्यावसरः । सर्गस्थितिलयं चक्रकवत् सततं परिवर्तत इति नात्यन्तिकोच्छेदः सृज्यस्यास्य । कर्मणामनादित्वेऽपि प्रलये अविभागो ब्रह्मणा सहोपपद्यते । नामरूपविभागानर्हदशापत्तिरेव ह्यविभागः । न हि शरीरं शरीरिणा विभक्तम्, सकलचेतनाचेतनशरीरकश्च परमात्मा । तथा क्षेत्रज्ञानामनादित्वमुपलभ्यते च श्रुतिस्मृतिषु 'अजो नित्यः शाश्वतोऽयम्' 'ज्ञाज्ञौ द्वावजानीशनीशौ' 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' इति ॥ ३५ ॥

## सर्वधर्मोपपत्तेश्च ॥ २ । १ । ३६ ॥

कारणत्वौपयिकानां सर्वेषां धर्माणां परमात्मन्येवोपपत्तेश्च अन्यत्र प्रधानपरमाण्वादावनुपपत्तेः परमात्मैव कारणम्, न प्रधानादीति ॥ ३६ ॥

**इति प्रयोजनवत्त्वाधिकरणम् ॥ १० ॥**

**इति ब्रह्मसूत्रार्थप्रदीपे द्वितीयस्याध्यायस्य प्रथमः पादः ।**

पूर्वपक्षः—

नन्वस्य जगतः सृष्ट्या ब्रह्मणः किं प्रयोजनम् ।
अवाप्तकामो हि सदा स्वत एष परः पुमान् ॥ २ ॥
न स्याल्लोकानुग्रहोऽपि दुःखितं सृजतो जगत् ।
प्रयोजनमनुद्दिश्य प्रवृत्तिश्च न युज्यते ॥ ३ ॥

सिद्धान्तः—

मैवं लीलैव सर्गादिः पूर्णस्य परमात्मनः ।
यथा हि लोके राज्ञां च दृष्टं कन्दुकखेलनम् ॥ ४ ॥
अनुग्रहार्थमपि च जीवानां सम्प्रवर्तते ।
सर्गादौ परमात्मा तु जीवकर्मव्यपेक्षया ॥ ५ ॥
तस्य तस्य फलं तत्तद्गुणदोषव्यपेक्षया ।
प्रयच्छतो न वैषम्याद्यस्य स्याद्राजवत्सदा ॥ ६ ॥
यद्यपि प्रलये जीवा लीना ब्रह्मणि केवले ।
भवप्रवाहानादित्वात् कर्म तत्त्वनुवर्तते ॥ ७ ॥
लयोऽपि ह्यविभागेन कारणे ब्रह्मणि स्थितिः ।
न स्वरूपप्रच्युतिस्तु जीवानां नित्यताश्रुतेः ॥ ८ ॥
कारणत्वोपयुक्तानां धर्माणां तत्समन्वयात् ।
परमेव भवेद्ब्रह्म जगज्जन्मादिकारणम् ॥ ९ ॥

इति भाष्ये प्रयोजनवत्त्वाधिकरणम् ॥ १० ॥

इति ब्रह्ममीमांसाभाष्ये द्वितीयस्याध्यायस्य प्रथमः पादः ॥

---

## रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च ॥ २ । २ । १ ॥

पूर्वस्मिन्पादे परैः तर्काभासबलेन समुद्भाविता दोषाः प्रतिक्षिप्ताः । अस्मिन्पादे तर्काभासमूलकाः परपक्षास्तर्कैरेव प्रतिक्षिप्यन्ते । मन्दानां तर्काभासमूलकेष्वपि परपक्षेषु प्रामाण्यसम्भावनया औपनिषदे पक्षे श्रद्धावैकल्यं जातु प्रसजेत्, तन्माभूदित्येष समारम्भः । तत्र सत्कार्य-वादादीनां वैदिकपरिगृहीतानामभ्युपगमात् काणादादिभ्यः कापिल-

पक्षे तत्त्वजिज्ञासूनां तर्करसिकानामभिनिवेशः प्रथमं प्रसजेदिति स पक्षः प्रथमं प्रतिक्षिप्यते ।

कापिला मन्यन्ते—गुणमयस्यास्य विचित्रसन्निवेशस्य मूलकारणभूतेन गुणमयेन भाव्यम् । सर्वमेव हि कार्यं सरूपोपादानकमेव दृश्यते । गुणमयाश्चैते भावाः । गुणाः सत्त्वं रजस्तम इति त्रयः । ते च प्रीत्यप्रीतिविषादात्मानः सुखदुःखमोहात्मकाः क्रमात्प्रकाशप्रवृत्तिनिवृत्तिप्रयोजनकाः । रूपादेः कस्यचिदर्थस्य प्रकाशनकार्ये सत्त्वं प्रवर्तयति रजोगुणः । तेन प्रवर्तितं सत्त्वं प्रकाशयति रूपादि । तमश्च गुरुचलं रजो रुणद्धि, तेन रुद्धं रजस्सत्त्वं स्वकार्येन प्रवर्तयति, ततश्चार्थस्याऽप्रकाशः । ते चान्योऽन्यमभिभूय स्ववृत्तिं लभन्ते । सत्त्वं रजस्तमसी अभिभूय स्ववृत्तिं शान्ताख्यां लभते । रजः सत्त्वतमसी अभिभूय घोराख्यां वृत्तिं लभते । तमः सत्त्वरजसी अभिभूय मूढाख्यां वृत्तिं लभते । ते चैते नित्यमन्योऽन्यं संश्लिष्टा एव । महदादीनामुद्भवाभिभववैचित्र्येण वैचित्र्यमुपगतानां त्रिगुणात्मनां कारणमेकमव्यक्तं सामान्यं गुणत्रयसाम्यावस्थालक्षणमस्ति, तदिदं प्रधानं स्वयमेव तु महदादिक्रमेण प्रसूते सकलानिमान् भूतान्तान् विशेषान् इति । तदिदं प्रतिक्षिपति—नानुमानम्—आनुमानं प्रधानं न जगतो मूलम्, कस्मात् ? रचनानुपपत्तेः । विचित्रेयं विश्वरचना विनाऽधिष्ठातारं पुरुषं नैवोपपद्येत । अधिष्ठात्रा

---

एवं औपनिदे ब्रह्मकारणवादे परेषामाशङ्काः परिहृताः । अथ तेषां पक्षाः प्रतिक्षिप्यन्ते स्वपक्षद्रढिम्ने—

## रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च ॥ २ । २ । १ ॥

अनुमानैकगम्यं प्रधानं न जगतः कारणम् । रचनानुपपत्तेः । रचना—विविधेयं जगद्रचना; तस्या अनुपपत्तिः । न हि चेतनेनानधिष्ठितं जडं दार्वादि रथगोपुरादि रचयितुं प्रभवति, नचाचेतनस्य कार्यारम्भे प्रवृत्तिरुपपद्यते । तस्मात् चेतनानधिष्ठितं गुणत्रयात्मकं प्रधानं महदादिविविधकार्यं रचयितुं न प्रभवति ॥ १ ॥

च सर्वज्ञेन सर्वशक्तेन भाव्यम् । तदचेतनं प्रधानं स्वयमेव विचित्र-रचनस्यास्य मूलमित्येतन्नोपपद्यते । चेतनाधिष्ठितानामेवाचेतनानां दार्वादीनां कार्यारम्भे प्रवृत्तिर्दृष्टा । ईक्षत्यधिकरणे प्रधानकारणत्व-मुपनिषदभिमतमित्येतत्प्रतिक्षिप्तम् । इह तु तन्मतम् । अतो न पौनरुक्त्यम् ॥ १ ॥

## पयोऽम्बुवच्चेत्तत्रापि ॥ २ । २ । २ ॥

ननु क्षीरं दध्यात्मना स्वयमेव परिणमति, वर्षासु वारिदविमुक्तं सलिलं च तैस्तैः पादपैरापीतं स्वयमेव विचित्ररसभावमापद्यते । तथा प्रधानमपि प्राज्ञानधिष्ठितं स्वयमेव परिणमति । वत्सविवृद्धिनिमित्त-मूधसः स्वयमेव यथा निःसरति क्षीरम्, यथा च सलिलं स्वयमेव भवति तथेत्यपरे व्याचक्षते । परिहरति—तत्रापीति । प्राज्ञानधिष्ठितं स्वयमेव प्रधानं परिणमतीत्यत्र नेदं निदर्शनं भवितुमर्हति । उभय-सम्प्रतिपन्नेन हि निदर्शनेन भाव्यम् । तत्रापि क्षीरसलिलयोरपि प्राज्ञाधिष्ठितयोरेव दध्याद्यारम्भकत्वं वयं वदामः । प्राज्ञानधिष्ठितत्वे तत्राप्यस्त्येव विप्रतिपत्तिः ॥ २ ॥

## व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ २ । २ । ३ ॥

सर्गस्य यो व्यतिरेकः—वैपरीत्यं, तेन रूपेणावस्थितिः प्रलयावस्था,

---

**पयोऽम्बुवच्चेत्तत्रापि ॥ २ । २ । २ ॥**

ननु—पयोवत् अम्बुवच्च—यथा दुग्धं केनाप्यनधिष्ठितं स्वयमेव दध्या-त्मना परिणमति, यथा च सलिलं स्वयमेव हिमकरकात्मना परिणमति, तथा प्रधानं स्वयमेव महदादिविशेषात्मना परिणमति, इति चेत्, तत्रापि न स्वतः परिणामः । प्राज्ञाधिष्ठितमेव तु तथा परिणमति । अन्यथा तत्रापीयं शङ्का प्रसरेदेव । तदपि पक्षीकृतमिति यावत् ॥ २ ॥

**व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ २ । २ । ३ ॥**

व्यतिरेकः—सर्गव्यतिरेकः प्रलयः, तस्यानवस्थितेः अव्यवस्थाप्रसङ्गात् ।

सा नैव घटेत, अनपेक्षत्वात्–प्राज्ञानपेक्षत्वात्सर्गस्य । इदमभिहितं भवति । प्राज्ञानधिष्ठितं स्वयमेव प्रधानं परिणमतीति चेत्तदा प्रधानं परिणामस्वभावं सदैव परिणमतु, प्रतिसर्गावस्थैव न स्यात् । ननु धर्माधर्मसापेक्षतां तु वयमपि ब्रूम इति चेत् । परमेश्वरमनभ्युपगच्छतां धर्माधर्मावपि न सिध्यतः । परमेश्वरप्रसादनिग्रहरूपवत्त्वात्तयोः ॥ ३ ॥

## अन्यत्राभावाच्च न तृणादिवत् ॥ २ । २ । ४ ॥

ननु धेनूपभुक्तं तृणं स्वयमेव क्षीरात्मना परिणमति । तद्वत्प्रधानमपि । न । तदपि प्राज्ञाधिष्ठितमेव तथा परिणमति । न स्वतः । अन्यत्रानडुदुपभुक्तेऽवकिरे प्रक्षिप्ते वा क्षीरभावाभावात् । यदि स्वयमेव दुग्धात्मना परिणमति धेनूपभुक्तं तर्ह्यन्यत्र तद्भावः कुतो न । तत्प्राज्ञानधिष्ठितस्य न कारणत्वम् ॥ ४ ॥

## पुरुषाश्मवदिति चेत्तथाऽपि ॥ २ । २ । ५ ॥

ननु–यद्यपि पुरुषश्चैतन्यैकस्वभावो निष्क्रियः । प्रधानं च चैतन्यविहीनं क्रियासमर्थम् । अथापि चैतन्यलक्षणपुरुषसन्निधानमात्रेण

---

प्राज्ञाधिष्ठानस्यानपेक्षायां प्रलयव्यवस्था न सिध्येत् । प्रकृतिपुरुषसन्निधानस्य सदैव सत्त्वेन सर्गहेतोरेव सत्त्वात् प्रलयकारणासंभवः । तत् प्राज्ञानधिष्ठितत्वे सर्गप्रलयव्यवस्थितिर्न सिध्येत् ॥ ३ ॥

### अन्यत्राभावाच्च न तृणादिवत् ॥ २ । २ । ४ ॥

ननु–तृणादि धेन्वा उपभुक्तं स्वयमेव दुग्धात्मना परिणमति इति चेन्न अन्यत्राभावात् । तथा सति अन्यत्र अवकिरे प्रक्षिप्तमनुडुदाद्युपभुक्तं वा तत् तथा कुतो न परिणमति । प्राज्ञेनाधिष्ठितं तु तत्सङ्कल्पानुगुणं परिणमति । तस्मादन्यत्राभावात् स्वत एव परिणमतीत्येतदनुपपन्नम् ॥ ४ ॥

### पुरुषाश्मवदिति चेत्तथाऽपि ॥ २ । २ । ५ ॥

ननु—अन्धो दृक्शक्तिवैकल्यात् देशान्तरं गन्तुं स्वयमसमर्थः, पङ्गुः दृक्शक्तियुक्तोऽपि गमनशक्तिवैकल्यादसमर्थः स्वयं गन्तुम्, तौ पुरुषौ मिथः

स्वयमचेतनमपि प्रवर्तते । यथा अन्धो दृक्शक्तिविकलोऽपि गमनागमनलक्षणक्रियासमर्थः पङ्गोर्गमनागमनशक्तिविहीनस्यापि दृक्शक्तियुक्तस्य सन्निधानात्क्रियासु प्रवर्तते, यथा वाऽयस्कान्तसन्निधानमात्रेणाऽयश्चलति, तथा पुरुषसन्निधानमात्रादचेतनमपि प्रधानं प्रवर्तते । तथा चोक्तम्—'पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः' इति । इति चेत्, तथाप्यनिर्वाह एव । पुरुषसन्निधिमात्रात्प्रधानं प्रवर्तत इत्यनुपपन्नमेव । विषमो ह्ययं दृष्टान्तः । नहि पङ्गुर्निर्व्यापारः, स हि बोधयत्यन्धम्, तेन बोधित इतस्ततः प्रवर्तते । पराभिमतः पुरुषस्तु निर्व्यापारः । तत्सन्निधिमात्रं कथं प्रवृत्त्याधायकमचेतनायाः । अयस्कान्ताश्मन्यपि सन्निहितदेशागमनादयो व्यापाराः सन्ति । पुरुषसन्निधानमात्रस्य नित्यत्वेन नित्यसर्गप्रसङ्गश्च ॥ ५ ॥

## अङ्गित्वानुपपत्तेश्च ॥ २ । २ । ६ ॥

अङ्गित्वम्—प्राधान्यम् त्रिषु गुणेष्वन्यतमस्य, तच्चाधिक्यम्, तस्यानुपपत्तिः । कापिला हि त्रयाणां गुणानां साम्यावस्था प्रलयः,

---

सङ्गतौ तु परस्परशक्त्युपकृतौ यथा अभीप्सितं देशं व्रजतः, तथा प्रकृतिः क्रियाशक्तियुक्ता जडाऽपि पुरुषस्य चेतनस्य सन्निधानात् भवति सर्गक्रियाकर्त्री । यथा च अयस्कान्तशिलासान्निध्यादयः प्रभवतीतस्ततः प्रचलितुम्, तथा पुरुषसन्निधानात् प्रकृतिः सर्गाय चेष्टते । इति चेन्न । तथापि एतन्निदर्शनानुसारेणापि न सर्गोपपत्तिः । पङ्गुर्गमनशक्तिविहीनोऽपि बोधयत्यन्धं पन्थानम्, सोऽयं व्यापारविशेषो दृष्टान्ते वर्तते । इह तु पुरुषे चैतन्यमात्रे व्यापारमात्रविहीने प्रकृतेः प्रवर्तनं कथं घटते । सन्निधिमात्रं तु अप्रयोजकम् । तस्य सर्वदैवाविशेषात् । अश्मन्यप्यस्ति व्यापारविशेषः, यद्व्यापारमनुभवत्ययसि व्यापारः ॥ ५ ॥

### अङ्गित्वानुपपत्तेश्च ॥ २ । २ । ६ ॥

प्रलयावस्थायां सत्त्वरजस्तमसां साम्येनावस्थितानां एकस्य सत्त्वस्य वा रजसो वा तमसो वा उद्रेकेण प्राधान्यं हि सर्गे भवता आश्रयणीयम् ।

वैषम्यावस्था–न्यूनाधिकभावः, सर्गः, इति मन्यन्ते । प्रलयावस्थायां साम्येन सता कदाचिदेकस्याधिक्यं द्वयोर्न्यूनता च कथं घटते । क्षोभकमन्तरा न तत्सम्भवः, पुरुषश्च निर्लेपो न क्षोभकः, विभुरेष नित्यं सन्निहित इति तत्सन्निधिमात्रस्य च जातु क्षोभकत्वं नोपपद्यते ॥ ६ ॥

## अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॥ २ । २ । ७ ॥

ननूद्भाव्यमानानां दूषणानां यथा नावसरः स्यात् तथा प्रकारान्तरेणानुमीयत इति चेत् । तथाऽपि ज्ञशक्तिविरहात्–अचेतनत्वात् रचनानुपपत्तिर्योक्ता सा दुष्परिहरैव ॥ ७ ॥

## अभ्युपगमेऽप्यर्थाभावात् ॥ २ । २ । ८ ॥

अनुमानेन कथं कथमपि प्रधानसमर्थनेऽपि न ततः कोऽप्यर्थः–प्रयोजनम्, तन्निष्प्रयोजनस्य तस्य समर्थनाय किमनुमानप्रयासेन । पुरु-

---

अन्यथा साम्यावस्थया सर्गानुपपत्तेः । तच्चाङ्गित्वं–प्राधान्यं नोपपद्यते । निमित्ताभावात् । पुरुषसन्निधिरिति तु सत्तामात्रलक्षणमप्रयोजकम्, अविकृतश्च स इति न सान्निध्ये विशेषो वक्तुं शक्यते ॥ ६ ॥

### अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॥ २ । २ । ७ ॥

ननु परोक्तदोषाणां यथा नावकाशस्तथा प्रकृतिरनुमानतो व्यवस्थाप्यत इति चेत्, यथा तथा वा अनुमीयताम्, सा तु जडैवाभिमता, न तस्यां ज्ञशक्तिः–चैतन्यम् । अतस्तद्वियोगात् प्राज्ञपुरुषानधिष्ठितायाः सर्गहेतुत्वोपपादनं दुर्घटमेव ॥ ७ ॥

### अभ्युपगमेऽप्यर्थाभावात् ॥ २ । २ । ८ ॥

प्राज्ञानधिष्ठितस्य प्रधानस्य जगद्धेतुत्वाभ्युपगमेऽपि कापिलमते सर्गस्यार्थाभावात्–प्रयोजनाभावात् व्यर्थं प्रधानानुमानम् । यत्तूच्यते पुरुषस्य भोगापवर्गार्थं प्रकृतिः सृजति जगदिदमिति, तदविचारितरमणीयम्, पुष्करपलाशवन्निर्लेपस्य पुरुषस्य नित्यशुद्धस्य भोगापवर्गयोरनुपपत्तेः ॥ ८ ॥

षस्य भोगापवर्गप्रापणं हि प्रधानस्य प्रयोजनमिति कापिलैरिष्यते 'पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्ये'ति । नित्यनिर्विकारस्य पुरुषस्य कैवल्यं स्वतः सिद्धमिति नापवर्गः प्रयोजनम् । न च भोगः । प्रकृतिविलासेन हि नोपलिप्यते पुमान्, न च पश्यति तस्या विलासम्, सुखदुःखादिसर्वं गुणस्यैव । निर्लेपस्य निर्विकारस्यापि प्रकृतिसन्निधिमात्रेण चेद्भोगः, तत्सन्निधानं तस्य विभोः सदैवास्तीति भोगोपरतेर्नैवावसरः ॥ ८ ॥

## विप्रतिषेधाच्चासमञ्जसम् ॥ २ । २ । ९ ॥

कापिलानां मतमसमञ्जसम् । विप्रतिषेधात्–स्वाभ्युपगमविरोधात् । द्रष्टृत्वभोक्तृत्वादिकं पुरुषस्याभ्युपगच्छन्त एव तस्य निर्विकारत्वनित्यमुक्तत्वादिकमप्यभ्युपगच्छन्ति । 'सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्, पुरुषोऽस्ति भोक्तृभावात्' 'पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य' 'पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा'

---

**विप्रतिषेधाच्चासमञ्जसम् ॥ २ । २ । ९ ॥**

तदिदं कापिलमतं विप्रतिषेधात्–परस्परविरुद्धवचनाच्चासमञ्जसम् । तथा च तद्वचनम्—'सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात् । पुरुषोऽस्ति-भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च' 'तस्माच्च विपर्यासात् सिद्धं साक्षित्वमस्य पुरुषस्य । कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च' इति । 'पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य' इति । अन्यत्र च–'तस्मान्न बध्यते नापि मुच्यते नापि संसरति कश्चित् । संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ।' इत्यादि । साक्षित्वं द्रष्टृत्वं भोक्तृत्वं बन्धो मोक्षश्च पुरुषस्येति क्वचित्, क्वचित्तु तन्नास्तीति च व्याहतं हि वचनम् ॥ ९ ॥

**इति प्रदीपे रचनानुपपत्त्यधिकरणम् ॥ १ ॥**

'नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः । गुणवत्यगुणस्य सतः तस्यार्थमपार्थकं चरति' 'मुच्यते नापि संसरति कश्चित् । संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ।' इतीमानि वचनानि मिथो व्याहतार्थानि । किञ्चात्र विचारयामः । पुरुषस्य सुखदुःखात्मकस्वपरिणतिविशेषविषयकदर्शनलक्षणभोगार्थं कैवल्यार्थं च प्रधानं प्रवर्तत इति वदता वक्तव्यम्—कस्य को भोगः, किं वा कैवल्यम् । पुंसोऽस्य त्रिगुणविलासदर्शनं भोगः । नैतत् । दर्शनं हि विकारः बुद्धेर्धर्म इति तवाभिमतिः । सत्यम् , तथाप्यध्यासाद्भोगः । मैवम् । अध्यासो ह्यन्यत्र सतः अन्यत्र ग्रहः, सोऽपि न पुंसो निर्विकारस्य घटेत । कैवल्यं च न प्राप्यम्, स्वत एव केवलो हि पुमान् । न संसरति न बध्यते न मुच्यते वा पुमान्, किन्तु बध्यते मुच्यते च प्रकृतिरिति वदता वक्तव्यं को बन्धः, का वा मुक्तिः प्रकृतेः । पुमांसो हि बहवो नित्या विभवो निर्लेपाश्च तत्सन्निधिः सदैवास्ति प्रकृतेः । प्रकृतिश्च सततप्रवृत्तिशीला नोपरमति जात्वपि, आप्रलयं स्वान् विलासान् वितनुत एव । प्रलये चेदुपरतिः को विमोक्षः । विवेकग्रहतदभावाभ्यां बन्धमोक्षव्यवस्था तु पुंसो घटते । पुमांस्तु नित्यमुक्तः । तयोरपि बुद्धिगतत्वाभ्युपगमे न पुरुषार्थः । तदेवं व्याहतभाषणादसमञ्जसं साङ्ख्यदर्शनम् ॥ ९ ॥

( अ. स. ) स्वपक्षदोषाः पूर्वस्मिन् चरणे तु निराकृताः ।
अथ स्वपक्षरक्षायै परपक्षो निरस्यते ॥ १ ॥
यावत्सत्तर्कमूलत्वं तत्पक्षाणां च बुध्यते ।
तावत्त्रय्यन्तसिद्धान्ते श्रद्धामान्द्यं हि जायते ॥ २ ॥
अतस्तत्पक्षयुक्तीनामाभासत्वं समर्थ्यते ।
तत्रादौ कापिले पक्षे युक्तिदौस्थ्यं प्रदर्श्यते ॥ ३ ॥
विचित्रवस्तुरचना नाव्यक्ते कापिलैर्मते ।
जडं तद्धि प्रवर्तेत कथं प्राज्ञानधिष्ठितम् ॥ ४ ॥

प्राज्ञाधिष्ठितयोरेव पयःसलिलयोरपि ।
प्रवृत्तिर्दृश्यते चैवं दार्वादावप्यचेतने ॥ ५ ॥
यदि प्रवृत्तिशीलत्वात् अधिष्ठात्रनपेक्षता ।
न घटेत तदा सर्गप्रतिसर्गव्यवस्थितिः ॥ ६ ॥
क्षीरात्मना परिणतिर्न तृणादेरपि स्वतः ।
धेनूपभुक्तादन्यत्र तृणादौ तददर्शनात् ॥ ७ ॥
न चोपपद्यते सर्गः पुंसः सन्निधिमात्रतः ।
निर्व्यापारः स हि पुमान् न च स्यात् पुरुषाश्मवत् ॥ ८ ॥
पङ्ग्वन्धाश्मसु दृष्टो हि व्यापारस्तत्प्रयोजकः ।
सन्निधेश्चेत्प्रवर्तेत नित्यसर्गः प्रसज्यते ॥ ९ ॥
गुणानां जातु वैषम्यं कुतः समतया सताम् ।
येनैकैकप्रधानत्वात् सर्गवैचित्र्यसंभवः ॥ १० ॥
अन्यथाऽप्यनुमानेन न दोषान्निःसृतिर्भवेत् ।
चितिशक्तिवियुक्तस्य प्रवृत्तिः स्यात् स्वतः कथम् ॥ ११ ॥
पुंसो भोगापवर्गार्थं प्रधानमुपगच्छताम् ।
न तेन तस्य तावर्थौ निर्लेपो निष्क्रियः स हि ॥ १२ ॥
पुमान् गुणमयीमेनां न भुङ्क्ते न च पश्यति ।
यदि सान्निध्यतोऽध्यासात् भुङ्क्त इत्युपचर्यते ॥ १३ ॥
किं तेनाध्यस्यति न सः न जडा साऽथ कस्य सः ।
तयोः सान्निध्यनित्यत्वान्नापवर्गोऽपि सिध्यति ॥ १४ ॥
मिथो विप्रतिषिद्धानां वादानामपि दर्शनात् ।
कापिलानां मतमिदं सर्वथैवासमञ्जसम् ॥ १५ ॥

इति भाष्ये रचनानुपपत्त्यधिकरणम् ॥ १ ॥

## महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ २ । २ । १० ॥

प्रधानकारणवादो निरस्तः । अथ परमाणुकारणवादो वैशेषिकाभिमतो निरस्यते । असमञ्जसमित्यनुवर्तते । ह्रस्वपरिमण्डलाभ्यां द्व्यणुकपरमाणुभ्याम् । महद्दीर्घवत् । इदमुपलक्षकमणुह्रस्ववदित्वस्य । अणुह्रस्वमिति द्व्यणुकमुच्यते । महद्दीर्घमिति त्र्यणुकम् । वाशब्दश्चार्थे । परमाणुद्व्यणुकाभ्यां द्व्यणुकत्र्यणुकोत्पत्तिवादवदन्यदपि तदभ्युपगतमसमञ्जसमित्यर्थः । यद्यप्यत्र महद्दीर्घशब्दयोः सामानाधिकरण्ये (महच्च तत् दीर्घञ्चेति कर्मधारये) आन्महत इत्यादिनाऽऽत्वे महादेव इतिवत् महादीर्घमिति भाव्यम् । अथाप्यार्षे प्रयोगे नायं दोषः । वस्तुतो महद्दीर्घशब्दौ भावप्रधानौ, नातस्तयोः सामानाधिकरण्यम्, नातो महच्छब्दस्यात्वम् । महत्त्वदैर्घ्याभ्यां तद्गुणकं त्र्यणुकं लक्ष्यते । केचित्—महद्दीर्घशब्दौ भावप्रधानौ, महद्दीर्घावस्य स्त इति महद्दीर्घवत् । महत्त्वदैर्घ्ययुक्तं त्र्यणुकं, इदमुपलक्षणं द्व्यणुकस्य, परमाणु-

---

अथ परमाणुकारणवादिनां मतानि निरस्यन्ते । तत्र प्रथमं काणादमतं निरस्यते । ते हि परमाणुभ्यां द्व्यणुकं त्रिभिः द्व्यणुकैस्त्र्यणुकमित्येवं क्रमेण जगदारम्भमुपवर्णयन्ति । तदेतदसमञ्जसमित्याह—

**महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ २ । २ । १० ॥**

असमञ्जसमित्यनुवर्तते । वाशब्दश्चार्थे । ह्रस्वपरिमण्डलाभ्यां—ह्रस्वं द्व्यणुकम्, पारिमाण्डल्य परमाणुः । ताभ्यां महद्दीर्घवत् त्र्यणुकवत् द्व्यणुकवच्चान्यदप्यसङ्गतम् । महद्दीर्घमिति द्व्यणुकस्योपलक्षकम् । महद्दीर्घमिति भावप्रधानो निर्देशः । महत्त्वं दीर्घत्वं चेत्यर्थः । तदुभयविशिष्टं त्र्यणुकं लक्ष्यते । तदस्यास्तीत्यर्थे वा मतुप् । कथमसामञ्जस्यम् । उच्यते । परमाणवो मिथः संयुज्य कार्यमारभमाणाः तन्तव इव मिथोंऽशतः संयुज्यारभन्ते इति वक्तव्यम् । सर्वांशतः संयुज्य चेदधिकपरिमाणारंभकता न स्यात् । प्रदेशभेदस्वीकारे च सांशतापत्त्या सावयवत्वमापतेत् । अवयवाभ्युपगमे च तेष्वपीयमाशङ्केत्यनवस्थेत्यनन्तावयवत्वसाम्यात् सर्षपमहीधरयोः साम्यप्रसङ्गः ॥ १० ॥

द्व्यणुकाभ्यां त्र्यणुकत्र्यणुकावित्येतदसमञ्जसमिति व्याचक्षते । कथमसामञ्जस्यम् । उच्यते । परमाणवो हि मिथः संयुज्यमानाः द्व्यणुकारम्भका इष्यन्ते । संयोगश्च तेषामंशत एवाभ्युपगन्तव्यः । मिथः संयुज्य कार्यारम्भकास्तन्तुप्रभृतयः सर्व एव हि पार्श्वतः संयुज्य पटादिकार्यारम्भका दृष्टाः, तन्मिथः संयुज्य द्व्यणुकारम्भकाणामपि प्रदेशभेदः संयोगावच्छेदकः स्वीकार्यः । तथा च सति सावयवत्वापत्त्या तदवयवानामपि तदारम्भकाणां तथेत्यनवस्था । तथा च सति सर्षपमहीधरयोः साम्यप्रसङ्गः । अवयवानन्त्यतौल्यात् । अथ निरंशकानामेव तेषामवच्छेदकदेशभेदमनपेक्ष्य मिथश्चेत्संयोग इष्येत, तदाऽसंयुक्तप्रदेशभेदाभावेनाधिकपरिमाणकद्रव्यारम्भकता न घटेत ॥१०॥

## उभयथाऽपि न कर्मातस्तदभावः ॥ २ । २ । ११ ॥

किञ्च—सर्गादौ येयं परमाणुष्वाद्यक्रिया मिथःसंयोगाधायिका सा केन भवति । जीवात्मनामदृष्टेनेति चेत् । तददृष्टं किं परमाणुनिष्ठमुतात्मनिष्ठम्, उभयथाऽपि न क्रियानिष्पत्तिः । जीवकृतैः कर्मभिः परमाणुष्वदृष्टं नैवोत्पद्येत । परमाणुषु तदभ्युपगमेऽपि तस्य नित्यमेव

---

### उभयथाऽपि न कर्मातस्तदभावः ॥ २ । २ । ११ ॥

अन्यदप्यसामञ्जस्यमाह—जीवादृष्टात् परमाणौ क्रिया; ततः परमाणुद्वयसंयोगः, ततो द्व्यणुकमित्येवं क्रमेण हि भवता सर्ग इष्यते । तत्र वक्तव्यम् । तददृष्टं जीवगतं सज्जनयति क्रियाम्, उत परमाणुगतं सत् । जीवगतं परमाणुषु क्रियां जनयतीत्यनुपपन्नम्, नहि कारणमन्यत्र कार्यमन्यत्र भवेत् । न च परमाणुगतं सत् । जडेषु तदसंभवात् । अथ स्वाश्रयात्मसंयोगलक्षणपरम्परासंबन्धेन भवति परमाणुषु संबद्धमिति चेत्, तथापि तददृष्टं प्रवाहतोऽनादि सदैव वर्तेत इति सदा सर्गप्रसङ्गः । अथ परिपक्वैरेव तैरिति चेत् असङ्ख्यातानां जीवानां भिन्नभिन्नसमयेष्वनुष्ठितानां एकदैव परिपाको भवतीत्यनुपपन्नम् । तदुभयथाऽपि परमाणुकर्मणः—परमाणुक्रियाया असंभवेन सर्गस्यासंभव इत्यसामञ्जस्यम् ॥ ११ ॥

सत्त्वात् सदैव तत्कर्मोत्पद्येत । अथ चेदात्मगम्, आत्मगतेन तेन तेन परमाणुषु कथं क्रिया । कार्यकारणयोर्वैयधिकरण्यात् । यदि पुनरदृष्टवदात्मसंयोगात् तेषु कर्म, एवमपि किं विपाकनिरपेक्षमदृष्टं तत्कर्मोत्पादयति, उत तत्सापेक्षम् । आद्ये अदृष्टप्रवाहस्यात्मगतस्य नित्यत्वेन नित्यसर्ग आपतेत् । अथचेद्विपाकसापेक्षमदृष्टमाद्यकर्मोत्पादकम्, एवमपि एकस्मिन्नेव समये बहूनां जीवानामदृष्टं पक्वं भवतीत्येतद्दुरुपपादम् । अनन्तैरात्मभिः कालभेदेन विरचितानि पुण्यापुण्यानि हि समयभेदेनैव पाकोन्मुखानि स्युः । नन्वीश्वरेच्छाहितातिशयकादृष्टवदात्मसंयोगात् आद्यं कर्मेति चेत् । न । आनुमानिकेश्वरवादिनामीश्वरस्यैवासिद्धेः । अनुमानतस्तदसिद्धिः प्रागेवोपपादिता । अतो जगतस्तदभावः परमाणुमूलकत्वाभावः ॥ ११ ॥

वैशेषिकमतेऽसामञ्जस्यान्तरमाह—

## समवायाभ्युपगमाच्च साम्यादनवस्थितेः॥२।२।१२॥

समवायाख्यस्य पदार्थान्तरस्याभ्युपगमाच्चासमञ्जसम् । तैर्हि जातिव्यक्त्योर्गुणगुणिनोरवयवावयविनोश्च नित्यसम्बन्धः समवायः कश्चिदिष्यते । तत्र विचार्यते—किमर्थेयं समवायकल्पना । ननु गुणगुणिनोर्जातिव्यक्त्योश्चायुतसिद्धयोर्धर्मधर्मिभावनिर्वाहकेन केनचित्सम्बन्धेन भाव्यम् । संयोगादिस्तु न तथाविधः । विभक्तयोर्हि संयोगः, न चायमपृथक्स्थितिनिर्वाहकः । तत्समवायोऽवश्यं कल्प्यः । नैतद्युज्यते ।

---

**समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ २ । २ । १२ ॥**

इतश्चासामञ्जस्यम् । अवयवावयविनोर्गुणगुणिनोर्जातिव्यक्त्योश्चायुतसिद्धयोरयुतसिद्धतानियामकः समवायो नाम संबन्धः कश्चिदतिरिक्तः पदार्थ इष्यते । यद्येवं तस्यापि समवायस्य संबन्धस्य प्रतियोग्यनुयोगिभ्यां भिन्नस्य तदुभयसंबद्धतानियामकेन समवायान्तरेण संबन्धेन भाव्यम्, संबन्धिभ्यां भिन्नत्वाविशेषात् साम्यात् । अथ समवायान्तरस्य स्वीकारे तस्यापि संबन्धेन समवायान्तरेण भाव्यमित्यनवस्थाप्रातः ॥ १२ ॥

साम्यादनवस्थितेः। तस्यास्य समवायस्य सम्बन्धिभ्यां गुणगुणिभ्यां पृथक्स्थित्यनर्हतायां पुनरपरः समवायः कल्प्यः, तस्याप्येवमित्यनवस्था। समवायस्य न सम्बन्धान्तरापेक्षा, समवायस्यैवैष स्वभाव इति चेद्गुणादीनामेवैष स्वभावः, यद्गुणिनो द्रव्यान्न पृथगवस्थितिर्गुणस्येति साम्यात्। समवायनिरासात् परमाणुकारणवादोऽपि निरस्तः। परमाणूनां समवायिकारणत्वं हि तदभिमतम्। समवायिकारणता च समवायैकनिरूपणीया। यत्समवेतं कार्यं तत्समवायिकारणमिति हि तल्लक्षणं तैः शिक्षितम् ॥ १२ ॥

## नित्यमेव च भावात् ॥ २ । २ । १३ ॥

समवायस्य काणादैर्नित्यत्वाभ्युपगमात् परमाणुमूलकजगद्वादोऽसङ्गत एव। परमाण्वादीनामवयवानामवयविनो जगतश्च सम्बन्धः समवायः। स च नित्योऽभिमतः। सम्बन्धिनित्यतां विना च न तस्य नित्यता। तथा च जगतो नित्यमेव भावात् सर्ग एव नोपपद्यते ॥१३॥

## रूपादिमत्वाच्च विपर्ययो दर्शनात् ॥ २ । २ । १४ ॥

परमाणूनां रूपादिमत्त्वाद्विपर्ययः—स्वाभिमतनित्यत्वस्य विपर्ययोऽनित्यत्वमेव प्रसजेत्। दर्शनात्—ये रूपादिमन्तस्ते ह्यनित्या दृष्टाः। अनुमानेन परमाणुं साधयता दृष्टोपजीव्येनानुमानेनापतन्तोऽनित्यत्वादयोऽपि तेषामपरिहार्याः ॥ १४ ॥

---

### नित्यमेव च भावात् ॥ २ । २ । १३ ॥

इतश्चासामञ्जस्यम्। स च समवायः संबन्धो नित्य इष्यते। यदि स नित्यः, संबन्धस्य नित्यमेव भावात् संबन्धिनोरपि नित्यताऽवश्याभ्युपेयैवेति अवयविनो द्व्यणुकादेरस्य जगतो नित्यताप्रसङ्गः ॥ १३ ॥

### रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ २ । २ । १४ ॥

यच्च परमाणूनां नित्यत्वं निरवयवत्वं चाभिमतं तस्य विपर्ययः वैपरीत्यं—अनित्यत्वं सावयवत्वं च स्यात्। कस्मात्? रूपादिमत्वात्। रूपादिमतामनित्यत्वं सावयवत्त्वं च दृष्टं हि ॥ १४ ॥

## उभयधा च दोषात् ॥ २ । २ । १५ ॥

ननु रूपादिशून्याः परमाणव इष्यन्ते, हन्त उभयधाऽपि दोषः। रूपादिमत्त्वे यथा दोषस्तथा तच्छून्यत्वेऽपि दोषोऽवर्जनीयः। काणादैः कार्यविशेषगुणानां कारणविशेषगुणपूर्वकत्वनियमाभ्युपगमेन कार्याणां घटादीनां नीरूपत्वादिकमापद्येत परमाणूनां रूपादिशून्यत्वे ॥ १५ ॥

## अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ २ । २ । १६ ॥

अपरिग्रहात्–केनाप्यंशेन वैदिकपरिग्रहाभावात्। साङ्ख्यपक्षे प्रसिद्धस्य सत्कार्यवादस्य वैदिकैः परिग्रहोऽस्ति नैवं काणादमतस्य कस्यापि। तस्मादत्यन्तं परिहरणीय एव काणादः पक्षः ॥ १६ ॥

(अ. स.) नित्यप्रधानहेतुत्वपक्षे दोष उदाहृतः।
अथ नित्याणुहेतुत्वपक्षे दोष उदीर्यते ॥ १ ॥
संयुज्य परमाणू द्वौ द्व्यणुकं द्व्यणुकास्त्रयः।
त्र्यणुकं जनयन्त्येतेऽवयवावयविक्रमात् ॥ २ ॥

---

## उभयधा च दोषात् ॥ २ । २ । १५ ॥

रूपादिमत्त्वास्वीकारे तत्स्वीकारे च दोषात्। अनित्यत्वसावयवत्वप्रसङ्गभिया रूपादिमत्त्वं चेन्न स्वीक्रियेत तदा तदारब्धे द्व्यणुकादावपि नीरूपताद्यापतेत्। अवयवरूपादिभिरेव अवयविनि रूपाद्युत्पादनात्। अथ अवयविनां रूपादिमत्त्वसंरक्षणाय चेदवयवे परमाणावपि तत् स्वीक्रियेत तदाऽनित्यत्वं सावयवत्वं चापतेदित्युभयधा च दोषः ॥ १५ ॥

## अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ २ । २ । १६ ॥

कापिलैः स्वीकृतस्य सत्कार्यवादस्य वैदिकपरिग्राह्यतासद्भावादंशतोऽस्ति शिष्टजनपरिग्राह्यता। काणादनये तु नैकस्याप्यंशस्य वैदिकपरिग्राह्यतेति शिष्टापरिग्रहात्तन्मतस्य वेदान्तविचारे सुतरामनपेक्षैव ॥ १६ ॥

इति प्रदीपे महद्दीर्घाधिकरणम् ॥ २ ॥

---

परमाणुभिरारब्धं क्षित्यादिकमिदं महत् ।
इति यत् कल्प्यते कैश्चित् तदेतदसमञ्जसम् ॥ ३ ॥
संयुज्यारभमाणानां नियता तु सभागता ।
आरभन्ते पटं पार्श्वैः षड्भिः संयुज्य तन्तवः ॥ ४ ॥
सर्वांशेन तु संयोगे न मानाधिक्यसंभवः ।
क्रियां विना न संयोगः स च न व्याप्य वर्तते ॥ ५ ॥
परमाणुषु सर्गादौ क्रिया नाप्युपपद्यते ।
अदृष्टेनात्मनिष्ठेन परमाणौ कथं क्रिया ॥ ६ ॥
प्रागप्यस्त्येव संयोगो नन्वदृष्टवदात्मनाम् ।
तदाऽदृष्टमपक्वं चेत् पच्यते युगपत् कथम् ॥ ७ ॥
क्रमादेव हि भोक्तृणामदृष्टं परिपच्यते ।
अदृष्टानामधिष्ठाता त्वीश्वरो नैव सिध्यति ॥ ८ ॥
या साऽप्ययुतसिद्धानां समवायस्य कल्पना ।
असाध्वी युक्तितौल्येन प्रसङ्गादनवस्थितेः ॥ ९ ॥
स चैको नित्य इति यत् नैव तच्च समञ्जसम् ।
सदा सर्वस्य रूपादेः सर्वत्रापि प्रसङ्गतः ॥ १० ॥
किञ्च रूपादिमत्त्वेन स्यादणूनामनित्यता ।
रूपादिशून्यतायां तु क्षित्याद्यपि तथा भवेत् ॥ ११ ॥
पक्षेऽस्मिन् नांशतोऽप्यस्ति वैदिकानां परिग्रहः ।
तत्काणाद उपेक्ष्योऽयं पक्षोऽसत्कार्यसाधकः ॥ १२ ॥

इति भाष्ये महद्दीर्घाधिकरणम् ॥ २ ॥

---

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ २ । २ । १७ ॥

अबाह्या निरस्ताः, अथ बाह्या निरस्यन्ते । परमाणुकारणवादिनो वैशेषिका निरस्ताः, तत्प्रसङ्गादणुप्रचयवादिनः सौगता निरस्यन्ते । तत्र सौगताः–सर्वास्तित्ववादिनः विज्ञानमात्रास्तित्ववादिनः सर्वशून्यवादिनश्चेति त्रिविधाः । क्षणभङ्गवादिनश्चैते सताम् । सर्वास्तित्ववादिषु

बाह्यार्थस्य प्रात्यक्षिकत्वानुमेयत्ववादाभ्यां द्विविधोऽवान्तरभेदः । तत्र प्रात्यक्षिकबाह्यार्थवादिनो वैभाषिकाः, अनुमेयबाह्यार्थवादिनो सौत्रान्तिकाः । तत्र सर्वास्तित्ववादिनां पक्षः प्रथमं निरस्यते । तैर्बाह्यो भूतभौतिकलक्षणः समुदायः, आभ्यन्तरश्चित्तचैत्तात्मकः समुदाय इति

---

अथ बाह्याः परमाणुवादिनो निरस्यन्ते । तत्र सौगतः पक्षो निरस्यते । तत्र बाह्यास्तित्ववादः ज्ञानमात्रास्तित्ववादः सर्वशून्यवादश्चेति त्रेधा भवति अवान्तरविभेदः । प्रात्यक्षिकबाह्यास्तित्ववादः अनुमेयबाह्यास्तित्ववादश्चेति प्रथमोऽपि द्वेधा विभिद्यते । तयोः प्रथमो वैभाषिकाभिमतः, द्वितीयः सौत्रान्तिकाभिमतः । बाह्यं वा आभ्यन्तरं वा सर्वं क्षणिकमेवेति सर्वेषामेषां समानम् । तत्र विज्ञानमात्रवादी बाह्यं सांवृतं मन्यते । सर्वशून्यवादी तु सर्वमेव सांवृतं मन्यते । तत्र बाह्यास्तित्ववादः प्रथमं निरस्यते—

**समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ २ । २ । १७ ॥**

यश्चायं भूतभौतिकलक्षणः समुदायः—सङ्घातः, यश्च शरीरेन्द्रियादिलक्षणः समुदायः, तावुभौ परमाणुसङ्घातलक्षणौ । नावयवावयविभेदस्तयोः । तावेतौ उभयहेतुकौ, तत्र गन्धरसरूपस्पर्शस्वभावानां परमाणूनां सङ्घातः पृथिवी, रसादिस्वभावानामणूनां सङ्घातः आपः, रूपादिस्वभावानां परमाणूनां सङ्घातः तेजः, स्पर्शस्वभावानां परमाणूनां सङ्घातो वायुः । तेषामेव सङ्घातानां सङ्घातविशेषः शरीरेन्द्रियादिः । अयं च समुदायो ग्राहकत्वाभिमानारूढस्य चित्तस्यारादुपकरणतया समुदायान्तरतया पृथक् निर्दिश्यते । क्रमादुभयहेतुकेऽप्यस्मिन् समुदायद्वये स्वीक्रियमाणे तदप्राप्तिः—तस्य समुदायस्याप्राप्तिः असिद्धिः । जडानां तेषां स्वत एव संहत्यसम्भवात्, स्वतस्तत्संभवाभ्युपगमेऽपि तेऽणवः कदा व्याप्रियन्ते, कदा वा मिथः संहन्यन्ते । विना क्रियां संहतिर्हि दुरुपपादा । क्षणिकत्वाच्च सर्वेषां व्यापृतिक्षणे योऽणुः स तदानीमेव नष्ट इति व्यापृत्य संहन्यते इत्येतन्न घटते । यश्चापरः समुदायविशेषलक्षणः चक्षुरादिकरणग्रामः स च क्षणिकः, स कदा व्याप्रियते, कदा च विषयेन सङ्गच्छते, कदा च तं प्रकाशयति । क्षणद्वयमेकस्यानुवृत्तेः ॥ १७ ॥

समुदायद्वयमिष्यते । चित्तं विज्ञानमिति च पर्यायः, चैत्तं रागादिकम् । भूतभौतिकानामणुमूलताभ्युपगमेऽपि न वैशेषिकैरिवावयवावयविभाव इष्यते, अतः समुदायशब्देन निर्देशः । तदेवं बाह्याभ्यन्तरसमुदायात्मकोऽयं प्रपञ्चः । तत्र बाह्यसमुदाये गन्धादिस्वभावाः पार्थिवाप्यतैजसवायवीयाश्चतुर्विधा अणवो हेतवः, आभ्यन्तरे विज्ञानस्कन्धादयः । तदेवमुभयहेतुकेऽपि समुदाये—समुदायस्योभयहेतुकत्वाङ्गीकारेऽपि तदप्राप्तिः, तस्य—समुदायभावस्याप्राप्तिः । समुदितप्रपञ्चात्मना भावो नैवोपपद्यते । सर्व एव हि भावाः क्षणविनाशिनोऽभिमताः, कदाऽणवो व्याप्रियन्ते कदा वा संहन्यन्ते । एवमाभ्यन्तराणामपि क्षणविनाशितया कथमाभ्यन्तरसमुदायसिद्धिः । बाह्यश्चायमाभ्यन्तरेण चित्तेन सम्बध्यमानो व्यवहारपथगो भवति । नान्यथा । क्षणविनाशिनां चैषां मिथः सम्बन्धो दुर्घटः । परे त्वेवं व्याचक्षते—उभयहेतुकेऽपि समुदायेऽभ्युपगमने तदभावः—समुदायाभावः—समुदायसिद्ध्यभावः । अचेतनानामेषां अणुलक्षणानां स्वतश्चेतनाधिष्ठानं विना समुदितत्वानुपपत्तेः । इति ॥ १७ ॥

## इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न सङ्घातभावानिमित्तत्वात् ॥ २ । २ । १८ ॥

ननु समुदायात्मकोऽयं प्रपञ्चः इतरेतरप्रत्ययत्वादुपपद्यते । प्रत्ययः—कारणम् । हेतुः प्रत्ययो निदानं कारणं निमित्तमित्यनर्थान्तरमिति

---

**इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न सङ्घातभावानिमित्तत्वात् ॥ २ । २ । १८ ॥**

ननु किं चेतनेनैकेनाधिष्ठात्रा, अविद्यामूलकमिदं जगच्चक्रं परिवर्तते । तत्रैवं कार्यकारणचक्रकम् । अविद्या—अस्थिरेषु स्थिरत्वधीलक्षणा, तया रागद्वेषादिलक्षणः संस्कारः, तेन चित्ताभिज्वलनम्, तस्मात् चित्तचैत्ताः, रूपिद्रव्यं च पृथिव्यादि, ततः षडायतनानि, ततः स्पर्शः, ततो वेदना, ततः पुनरविद्येत्येवं परिवर्तते । एवं इतरेतरप्रत्ययत्वात्—अन्योन्यहेतुकत्वात्, (प्रत्ययशब्दः

सौगताः । अविद्यासंस्कारविज्ञाननामरूपषडायतनस्पर्शवेदनातृष्णोपादानभवजात्यादयः क्रमेण, ततः पुनरविद्येतीदमन्योन्यकारणकं संसरणचक्रम् । तत्र—अविद्या अस्थिरेषु स्थिरत्वबुद्धिः, ततो रागद्वेषमोहादयसंस्काराः, ततश्च चित्ताभिज्वलनम्—गर्भाशये चित्तवृत्तिसमुन्मेषलक्षणं विज्ञानम्, ततो गर्भस्य कललपेश्यादिरूपेणाभिव्यक्तिर्नामरूपम्, ततः षडिन्द्रियायतनरूपशरीरनिष्पत्तिलक्षणं षडायतनम्, ततो विषयेन्द्रियसंसर्गजं ज्ञानं स्पर्शः, तन्निमित्ते सुखदुःखवेदने, ततो भवति दुःखपरिहारार्था विषयेच्छा तृष्णा, तया भवत्युपादानं प्रियाणाम्, पुनर्भवति येन स भवः पुण्योपगमादिलक्षणं कर्म, तेन जात्यादिर्जरामरणशोकपरिवेदनान्तः, तेन पुनरविद्या, इत्येवमितरेतरप्रत्ययकमिदं चक्रकम्, इति चेत्तथाऽपि सङ्घातभावस्यास्य भूतभौतिकस्यानिमित्तत्वात्—निमित्तशून्यत्वात् । इदमभिहितं भवति—अविद्यया स्याद्रागद्वेषादिकम्, न तन्मात्रेण नामरूपषडायतनलक्षणाभ्यन्तरसमुदायस्य भूतभौतिकलक्षणबाह्यसमुदायस्य चोत्पत्तिर्घटेत । नह्यस्थिरेषु स्थिरत्वबुद्धिलक्षणाविद्यातन्मूलकरागद्वेषादिमात्रतः स्थिरमस्थिरं वा वस्तूत्पद्येत । स्वसामग्र्यपेक्षं तु तत् । तदनेनेतरेतरप्रत्ययचक्रकप्रदर्शनेन किमायातम् । यस्याविद्या तस्य रागादि, नामरूपषडायतनसम्पत्तिश्च तस्यैव । सर्वस्य क्षणिकत्वं वदतां नैतदप्युपपद्यते । एकस्याविद्यारागाद्याश्रयस्यानुपपत्तेः ॥ १८॥

नन्वस्थिरैरेव पूर्वपूर्वाणुभिरुत्तरोत्तराणवो जायन्ते, तत्रायं विशेषः, विप्रकृष्टैः पूर्वपूर्वैः क्रमशो मिथः सन्निकृष्टा अणवः उत्पद्यन्ते, अत-

---

कारणवाची) उपपद्यते अधिष्ठातृनिरपेक्षं जगच्चक्रमिति । अविद्यामूलकस्य वेदनान्तस्य पुनरविद्यादिमूलत्वेनान्योन्यहेतुतेति चेन्न । अविद्यादीनां सङ्घातभावे निमित्तत्वासंभवात् । नहि अस्थिरेषु स्थिरबुद्धिः स्थिरसाध्यमर्थमुत्पादयितुं शक्नोति, न हि शुक्तौ रजतधीः रजतकार्यमुत्पादयितुं प्रभवति । अविद्याऽपि क्षणविनाशिनी, अविद्या यस्य सोऽपि क्षणविनाशी, कथमिदं सङ्घातभावे निमित्तं भवेत् ॥ १८ ॥

एव च दृश्यादृश्यवैषम्यम्, सन्निकर्षप्रकर्षाच्च सङ्घातभावः। इति चेत्तत्राह—

## उत्तरोत्पादे च पूर्वनिरोधात् ॥ २ । २ । १९ ॥

क्षणभङ्गपक्षे कार्यकारणभाव एवायमनुपपन्नः। सतः कारणत्वं नासतः, उत्तरस्योत्पादसमये पूर्वस्तु नष्टः, विनष्टस्य कथं भाविनि कारणता। ननु नासतः कारणत्वं वयं ब्रूमः, किन्तु सत एव। न च कार्योत्पादसमये कारणेन सता भाव्यम्, किन्तु भूतेन-प्राक्कालसम्बद्धेन, पूर्ववृत्ति कारणमिति हि कारणलक्षणम्, कार्यकालेऽस्तु वा मा वा। नैतद्युक्तम्। कार्यपूर्ववृत्ति कारणमित्यनेन पूर्वमसतः कारणत्वं नेत्येतन्नियम्यते, न तु कार्योत्पादनसमये कारणस्य सत्त्वानपेक्षाऽपि। यदि विनष्टादपि कार्योत्पादः, सर्वस्मात्सर्वत्र सर्वमुत्पद्येत। असत्त्वाविशेषात्। क्षणभङ्गवादिनां मते कालत इव देशतोऽपि नैकाधिकरण्यं द्वयोः। येन कारणसमकालदेशजन्मना कार्येण भाव्यमिति नियमो वक्तुं शक्येत। इदमभिहितं भवति–असता पूर्वक्षणलक्षणेन घटेनोत्तरोत्तरो घटक्षण उत्पद्यत इति चेत्, उत्तरत्वाविशेषात्। सर्वं सर्वत्र कारणं स्यात्। ननु सजातीयानामेव घटक्षणानां कार्यकारणभाव इति चेत्। एकस्य पूर्वघटक्षणस्य घटक्षणान्तरं प्रति (सर्वानेवोत्तरक्षणलक्षणघटान् प्रति) कारणत्वं स्यात्। ननु यत्र देशे यो घटः पूर्वक्षणलक्षणः, स तत्रैव देशे उत्तरक्षणलक्षणघट एव कारणमिति चेत्त-

---

### उत्तरोत्पादे च पूर्वनिरोधात् ॥ २ । २ । १९ ॥

उत्तरक्षणलक्षणस्य कार्यस्योत्पादसमये पूर्वक्षणात्मकस्य वस्तुनो नाशात् कस्य कुत्र हेतुता। कारणेन हि कार्यकाले सता भाव्यम्। असता कथं कार्योत्पादनम्। ननु कारणस्य पूर्वक्षणवर्तित्वमात्रमपेक्षितमिति चेत् पूर्वक्षणवर्त्तिभिः सर्वैः सर्वमुत्पद्यताम्। पूर्वक्षणवर्तित्वविशेषात्। न च जातितो देशतो वा विशेषः केषाञ्चित् अनुगतः कल्पयितुं शक्यः, देशादेरपि क्षणिकत्वेन तदसंभवात्॥ १९ ॥

दप्यनुपपन्नम् । देशैक्यस्याप्यनभिमतत्वात् । यत्सत्तत्क्षणिकं हीष्टं परैः ॥ इति ॥ १९ ॥

ननु बीजं विनष्टं सदेवाङ्कुरं जनयति, दुग्धं विनष्टं सदेव दधि जनयति, तथा क्षणिकानामपि कारणत्वं युज्यते इति चेदाह—

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २ । २ । २० ॥

पूर्वक्षणलक्षणे घटे उत्तरक्षणेऽसति प्रतिज्ञायाः—अधिपतिसहकार्यालम्बनसमनन्तरप्रत्ययाश्चत्वारश्चित्तचैत्तहेतव इति या प्रतिज्ञा तस्या उपरोधः । अधिपतिः—इन्द्रियम्, सहकारी—आलोकः, आलम्बनम्—विषयः, समनन्तरप्रत्ययः—समनन्तरपूर्वज्ञानम्, एते चत्वारः प्रत्यक्षहेतव इति प्रतिज्ञार्थः । इयं हि प्रतिज्ञा घटप्रत्यक्षविषयस्य घटस्य पूर्वोत्तरक्षणवर्तित्वाभ्युपगम एव घटेत नान्यथा । कारणेन पूर्वक्षणवर्तिना भाव्यम् । प्रत्यक्षस्य वर्तमानग्राहितया प्रत्यक्षोत्पत्तिक्षणे च तेन वर्तमानेन भाव्यम् । तस्मादुत्तरक्षणे घटस्याननुवृत्तौ आलम्बनस्य कारणत्वप्रतिज्ञा हीयेत । अन्यथा—प्रतिज्ञासंरक्षणाय उत्तरक्षणेऽप्यनुवृत्तिस्वीकारे, पूर्वस्योत्तरोत्पादकत्वनियमेन तेनोत्पन्नो घटः, अनुवर्तमानो घटश्चेति द्वयोर्घटयोर्युगपदुपलब्धिप्रसङ्गः । सर्वस्य क्षणिकत्वप्रतिज्ञाभङ्गश्च । ननु घटो नोत्तरक्षणेऽनुवर्तते घटक्षण एव तत्प्रत्यक्षमपि, आलम्बनस्य कारणत्वं वर्तमानतयैव न पूर्ववर्तितयाऽपीति चेत् । इन्द्रियसम्प्रयोगज्ञानयोर्यौगपद्यमापद्येत, इन्द्रियसम्प्रयोगेन कारणेन हि पूर्ववर्तिना भाव्यम् ॥ २० ॥

---

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २ । २ । २० ॥

असत्यपि कारणे कार्योत्पत्त्यभ्युपगमे प्रतिज्ञायाः—'अधिपतिसहकार्यालम्बनसमनन्तरप्रत्ययाश्चत्वारो विज्ञानोत्पत्तिहेतव' इति प्रतिज्ञाया उपरोधः स्यात् । अन्यथा प्रतिज्ञानुपरोधाय कार्यकाले कारणस्य सत्त्वाभ्युपगमे यः पूर्वो घटक्षणो यश्च ततो जात उत्तरो घटक्षणः, तयोर्द्वयोर्युगपदुपलब्धिप्रसङ्गः । घटद्वयमुपलभ्येतेत्येतत् ॥ २० ॥

## प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २ । २ । २१ ॥

सौगताः स्वीकुर्वन्ति निरोधद्वयम् । नाशो निरोध इति तैः परिभाष्यते । स च निरन्वयो नाशः । आत्यन्तिको नाश इत्येतत् । सत्कार्यवादप्रतिषेधात् । स च निरोधो घटादेर्मुद्गरादिना यो भवति स प्रतिसङ्ख्यायते–दृश्यते, सोऽयं स्थूलः प्रतिसङ्ख्यानिरोधः । घटस्य क्षणिकतया सदृशसन्ताने प्रतिक्षणं जायमानो यो नाशः स न दृश्यत इत्यप्रतिसङ्ख्यानिरोध उच्यते । तौ द्वावपि निरोधौ न सिध्यतः । अविच्छेदात्–द्रव्यस्यानुवृत्तेः । न हि मुद्गरपातादिना विनष्टे क्षणमात्रमपि स घटप्रदेशः, शून्यं भूतलमात्रं दृश्यते, किन्तु तेनैव द्रव्येण कपालात्मनाऽवस्थितेन विशिष्ट एवोपलक्ष्यते । किं वक्तव्यमप्रतिसङ्ख्यानिरोधे ॥ २१ ॥

## उभयधा च दोषात् ॥ २ । २ । २२ ॥

सौगतैः प्रतिसङ्ख्यानिरोधोऽप्रतिसङ्ख्यानिरोध आकाशं चेति त्रयं

---

**प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २।२।२१ ॥**

योऽयं मुद्गराभिघातादिना जायमानो घटस्य निरोधः आत्यन्तिकनाशः, यश्च प्रतिक्षणं जायमानः सूक्ष्मो नाशः, तावेतौ प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधावुच्यते दृश्यत्वाददृश्यत्वाभ्याम् । तयोरप्राप्तिः । यो ह्यात्यन्तिकोच्छेदः स तु नैव सिध्यति । अविच्छेदात्–न हि किमपि वस्तु अत्यन्तोच्छेदमाप्नोति । घटो भग्नोऽपि कपालात्मनाऽस्त्येव । अवस्थापगममात्रम्, न तु वस्तुन उच्छेदः ॥ २१ ॥

**उभयधा च दोषात् ॥ २ । २ । २२ ॥**

असत उत्पत्तौ उत्पन्नस्यासत्त्वे च दोषात् । पूर्वक्षणलक्षणो घटो नष्टः, उत्तरक्षणलक्षणो घटः असत एव पूर्वक्षणादुत्पन्नश्चेत् तुच्छादुत्पत्तिः स्वीकृता भवतीति तुच्छादुत्पन्नस्य तुच्छता आपतेत् । उत्पन्नस्य तत्क्षणलक्षणस्य सर्वस्यास्य नाशे जगदिदमुत्तरक्षणे तुच्छमेव स्यात् । न चैवं प्रतीयते ॥२२॥

तुच्छमिष्यते । सर्वस्य क्षणिकत्वं वदता प्रतिक्षणं सर्वस्य निरोधाभ्युपगमेनोत्तरघटोत्पत्तौ निरोधस्यैव कारणत्वमापतति, तुच्छस्य तु कारणत्वं न सम्भवतीत्येको दोषः । तुच्छादुत्पत्त्यभ्युपगमे तुच्छादुत्पन्नं तुच्छमेव स्यादित्यपरो दोषः । तदेवमुभयथा दोषाच्च सौगतमतमसमञ्जसमेव ॥ २२ ॥

## आकाशे चाविशेषात् ॥ २ । २ । २३ ॥

यदाकाशस्य तुच्छत्वमभ्युपगम्यते तदसङ्गतम् । पृथिव्यादिवदाकाशेऽप्यविशेषात्—चाक्षुषत्वरूपित्वाद्यविशेषात् । यथा प्रत्यक्षेण पृथिव्यादि सिध्यति तथाऽऽकाशोऽपि । इह श्येनः पततीति पतनाधारतयाऽऽकाशस्योपलम्भात् । तथा रूपोपलम्भात् । श्यामं नभ इति हि प्रत्यक्षेण गम्यते ॥ २३ ॥

## अनुस्मृतेश्च ॥ २ । २ । २४ ॥

अनुस्मृतेश्च—सोऽयं घट इति प्रत्यभिज्ञानाच्च क्षणभङ्गवादोऽसङ्गतः । प्रत्यभिज्ञा हि पूर्वोत्तरकालसम्बन्धमेकस्यावगमयति सोऽयमिति । नन्विदं ज्ञानद्वयम्, तदंशे स्मरणमिदंशे च प्रत्यक्षम्, शैघ्र्यात् ज्ञानद्वित्वाग्रहः । मैवम् । तदेवेदमिति जानन् तदर्थी पुरुषः प्रवर्तते । यदि पूर्वोत्तरकालसम्बद्धयोरैक्यं न गृह्येत कथं प्रवर्तेत तदर्थी । ननु भवतु ज्ञानमेकमेव, तद्विषयौ तदिदमंशौ तु भिद्येते, तयोरैक्यावभासस्तु भ्रान्तिरेव 'सेयं दीपज्वालेति'वत् । तथा चोक्तम्—'तस्माद्भ्रान्तिरियं भिन्नेष्वभेदाध्यवसायतः । प्रत्यभिज्ञा सदृक्षेषु ज्वालादिविषया यथा'

---

### आकाशे चाविशेषात् ॥ २ । २ । २३ ॥

यदाकाशस्य तुच्छत्वमभ्युपगम्यते तत्रोच्यते, आकाशे च पृथिव्यादाविव न तुच्छता । अविशेषात् । 'इहाऽऽलोक' इति तस्याप्युपलम्भात् ॥ २३ ॥

### अनुस्मृतेश्च ॥ २ । २ । २४ ॥

स एवायं घट इति अनुस्मृतेरबाधितायाः सत्त्वात् वेद्यं वेत्ता च स्थिरोऽवश्यमभ्युपगन्तव्यः । तत् क्षणिकवादोऽसङ्गत एव ॥ २४ ॥

इति । इति चेत् । पूर्वेद्युर्यदपश्यं तदेवेदमद्य स्पृशामीत्यर्थसेव द्रष्टुः स्प्रष्टुश्चैक्यावलम्बिनी प्रत्यभिज्ञा । प्रत्यभिज्ञातुः पूर्वापरकालसम्बन्धं विनेयं नैवोपपद्यते । यत्सत्तत् क्षणिकमित्यनुमानाभासेन बाधितेन स्वगोष्ठीमात्रनिष्ठेन प्रत्यभिज्ञामात्रं भ्रान्तिरिति तु साहसम् ॥ २४ ॥

## नासतोऽदृष्टत्वात् ॥ २ । २ । २५ ॥

सर्वास्तित्ववादिनो वैभाषिकाः, सौत्रान्तिकाश्चाविशेषेण निरस्ताः । अथ सौत्रान्तिको विशिष्य निरस्यते । स त्वाह—आलम्बनस्य ( विषयस्य ) यत्प्रत्यक्षे कारणत्वमुच्यते, न तत् परैरिव विषयतया, येन प्रतिज्ञोपरोधो यौगपद्यमन्यथेत्येष आक्षेपः प्रसरेत् । किन्तु स्वाकारसमर्पकतया, इत्थं च पूर्वक्षणमात्रवर्त्यपि घटादिरर्थः स्वाकारं ज्ञानं समनन्तरं जनयति । नीलोऽर्थः क्षणिकः नीलाकारं प्रत्यक्षज्ञानं जनयति । बाह्यो नीलोऽर्थस्त्वप्रत्यक्ष एव नीलाकारेण प्रत्यक्षेणानुमीयते । ततश्च तत्र प्रवृत्तिः । इति । तत्रोच्यते । असतोऽर्थस्य स्वाकारसमर्पकत्वस्यादृष्टत्वात् । असतोऽर्थस्य यथा न प्रत्यक्षविषयता, तथाऽसतोऽर्थस्य नोत्तरज्ञाने स्वाकारसमर्पकताऽपि । जपाकुसुमादीनां स्फटिकादौ स्वाकारसमर्पकता सतामेव दृष्टा, नासताम् ॥ २५ ॥

---

बाह्यास्तित्ववादिनोर्वैभाषिकसौत्रान्तिकयोः साधारणा दोषा उक्ताः । अथानुमेयबाह्यास्तित्ववादिनः सौत्रान्तिकस्यासाधारणं दूषणमाह—

## नासतोऽदृष्टत्वात् ॥ २ । २ । २५ ॥

अभ्युपगम्यते नाम बाह्योऽर्थः क्षणिकः, परं स तु न प्रत्यक्षः, जायमानेन नील इति ज्ञानेन नीलाकारेणानुमीयते—आसीन्नील इति, न ह्यसति नीलेऽर्थे ज्ञानं नीलालम्बनं भवेत्, तदालम्बनता च तदाकारतैव, विषयस्य ज्ञाने हेतुता च स्वाकारसमर्पकतैव । क्षणिकस्य विनष्टस्याप्यर्थस्य विषयता च युज्यते । अतोऽर्थोऽनुमेय एवेति, तदेतन्न युक्तम् । असतः—क्षणविनष्टस्यासतः स्वाकारसमर्पकतेत्येतन्न संभवति । सत एव तु बिम्बस्य दर्पणादौ स्वाकारसमर्पकता दृष्टा ॥ २५ ॥

## उदासीनानामपि चैवं सिद्धिः ॥ २ । २ । २६ ॥

एवं सति—सर्वस्य क्षणिकत्वेऽसञ्ज्ञ एव चोत्तरोत्पादे उदासीनानां फलाय प्रयत्नमकुर्वतामपि सर्वसिद्धिः स्यात् । क्षणिकवादे ह्यन्य एव वेत्ताऽन्य एव च यतमानः अन्यदेव चार्थजातम् । न च पूर्वपूर्व-संस्कारः विद्या वा उत्तरोत्तरमनुवर्तते । तत्सर्वस्य सर्वं सिध्येत् । साधारणमिदं दूषणम् ॥ २६ ॥

( अ. स. ) नित्याणुहेतुतापक्षे दोषः सम्परिकीर्तितः ।
अथ क्षणिकहेतुत्वपक्षे दोषः प्रकीर्त्यते ॥ १ ॥
न ज्ञानं न च विज्ञेयं शून्यमेवेति सौगताः ।
नान्यत् क्षणिकविज्ञानात् इत्याहुस्तेषु केचन ॥ २ ॥
अन्ये त्वाहुरिदं सर्वमस्ति क्षणिकमेव तु ।
बाह्यमाभ्यन्तरं चेति वस्तु द्वेधा व्यवस्थितम् ॥ ३ ॥
आभ्यन्तरं तत्र तावत् चित्तं चैत्तमिति द्वयम् ।
भूतभौतिकभेदेन बाह्यं च भवति द्विधा ॥ ४ ॥
क्षित्यादिकमिदं भूतं शरीरादि तु भौतिकम् ।
क्षित्याद्युत्पद्यते नैवावयवावयविक्रमात् ॥ ५ ॥
संहन्यन्ते मिथस्ते ते तत्तद्भूतात्मनाऽणवः ।
तत्तद्भौतिकभावेन तच्च भूतचतुष्टयम् ॥ ६ ॥
समुदायाविमौ तावद् भूतभौतिकलक्षणौ ।
पूर्वपूर्वसजातीयसमुदायसमुद्भवौ ॥ ७ ॥

---

### उदासीनानामपि चैवं सिद्धिः ॥ २ । २ । २६ ॥

एवं सति—सर्वेषामेव क्षणिकत्वे सति अन्य एव कर्ता अन्य एव भोक्तेति स्वीकृतं भवति, तथा सति उदासीनानां—अर्थायाप्रयतमानानामपि अर्थ-लाभः स्यात् ॥ २६ ॥

इति प्रदीपे समुदायधिकरणम् ॥ ३ ॥

---

अत्रोच्यते चोभयस्मिन् सत्यप्युभयहेतुके ।
क्षणिकत्वेनाभिमते न सिध्येत् समुदायता ॥ ८ ॥
असंहितानां हि सतां संहतिर्जातु दृश्यते ।
असंहतिः संहतिश्चेत्युभयं क्षणिके कथम् ॥ ९ ॥
अणवः क्षणिकास्ते च संहता इत्यसङ्गतम् ।
क्रियासंयोगसापेक्षा संहतिः क्षणिके कथम् ॥ १० ॥
क्षणिकत्वे च सर्वस्य लोकयात्रा न सिध्यति ।
अविद्यामूलकाच्चक्रादितरेतरकारणात् ॥ ११ ॥
निर्वाहो लोकयात्राया इत्यप्येतदसङ्गतम् ।
अविद्यामात्रतो नैव वस्तुसङ्घातसंभवः ॥ १२ ॥
असिद्धे वस्तुसङ्घाते व्यवहारो न सिध्यति ।
उत्तरोत्तरसङ्घाते पूर्वपूर्वो न कारणम् ॥ १३ ॥
उत्तरोत्पादसमये पूर्वपूर्वविनाशतः ।
विनष्टेन न कार्यस्य घटेत जननं क्वचित् ॥ १३ ॥
अधिपत्यादिकान् हेतून् ज्ञानस्य प्रतिजानतः ।
प्रतिक्षणं स्वतो भावा जायन्ते इति दुर्वचम् ॥ १४ ॥
अथोत्पाद्य परं पूर्वं पश्चाद्यदि विनश्यति ।
उपलभ्येत युगपत् पूर्वापरघटद्वयम् ॥ १५ ॥
सूक्ष्मस्थूलविभेदेन निरोधद्वयकल्पना ।
अयुक्ता वस्त्वविच्छेदादवस्थैव तु भिद्यते ॥ १६ ॥
सतस्तुच्छात् समुत्पत्तिरुत्पन्नस्य च तुच्छता ।
क्षणिकत्वे हि नियता निरन्वयविनाशतः ॥ १७ ॥
तथा चोभयथा दोषस्तुच्छतापत्तिलक्षणः ।
बाह्यार्थवादिनः सेयमनिष्टा बाह्यवस्तुषु ॥ १८ ॥
पृथिव्यादिवदाकाशे प्रत्ययोऽस्ति ह्यबाधितः ।
अतोऽविशेषात् तुच्छत्वकल्पना तस्य नोचिता ॥ १९ ॥

प्रत्यभिज्ञायमानत्वात् न च सत् क्षणिकं भवेत् ।
क्षणिकत्वे च भावानां सर्वं सर्वत्र सिध्यतु ॥ २० ॥
ग्रहे हेतुत्वमर्थस्य स्वाकारस्य समर्पणात् ।
अर्थस्य ग्राह्यता सेयमिति केचन सौगताः ॥ २१ ॥
क्षणिकस्य विनष्टस्य स्वाकारार्पकता कथम् ।
ग्रहकालेऽपि चेदर्थः क्षणिकत्वं न सिद्ध्यति ॥ २२ ॥
अर्थतद्ग्रहयोर्नापि समकालसमुद्भवः ।
अक्षसंयोगसापेक्षः स्यात्तदैव कथं ग्रहः ॥ २३ ॥

इति भाष्ये समुदायाधिकरणम् ॥ ३ ॥

---

अथ विज्ञानमात्रवादी योगाचारो निरस्यते—

## नाभाव उपलब्धेः ॥ २ । २ । २७ ॥

विज्ञानमात्रवादी प्राह—न बाह्यः समुदायात्मा कश्चिदर्थः । समुदायभावानुपपत्तेः । असंयुक्तेष्वणुषु न समुदायभावः । संयोगो रूपादिवच्चेद्व्याप्यवृत्तिः, तर्ह्यधिकपरिमाणारम्भानुपपत्तिः, अव्याप्यवृत्तिश्चेत् अणूनामपि सांशताऽऽपतेत् । असतः क्षणविनाशस्वभावस्य चित्तेन सम्बन्धस्य दुर्निरूपतया विषयता दुर्घटा । तस्मान्नैव बाह्योऽर्थो वर्तते । आभ्यन्तरचित्तमेव तु परमार्थः । तदेव चित्तं विज्ञानशब्दाभिलप्यं क्षणिकं पूर्वपूर्वचित्तप्रत्ययकं धारया प्रवहति । तदेव च नीलपीता-

---

योगाचारा आहुः—न बाह्योऽर्थः कश्चिदस्ति, आभ्यन्तरं विज्ञानमेकमेव तत्त्वम्, तच्च क्षणिकं पूर्वपूर्वज्ञानप्रभवमर्थात्मना च भासते वासनाबलात् इति । तन्मतं निरस्यति—

### नाभाव उपलब्धेः ॥ २ । २ । २७ ॥

बाह्यस्यार्थस्याभावो नैव वक्तुं शक्यते, कस्मात्, उपलब्धेः । सर्वेषामप्युपलब्धेः । नीलोऽयं, पीतोऽयं, घटोऽयं, पटोऽयमित्यबाधितात् प्रत्यक्षात् । न च प्रात्यक्षिकस्यापलापः कर्तुं शक्यते ॥ २७ ॥

द्याकारं वासनावैचित्र्यात् । न बाह्यार्थापेक्षा नीलपीताद्याकारतायाम् । स्वाप्नावभासवत् । तदेव चित्तं नीलाद्याकारं बाह्यवदाभासते । इदं नीलमिदं पीतमिति । तथा चोक्तम्—'यदन्तर्ज्ञेयतत्त्वं हि बहिर्वद्‌वभासते' इति । व्यवहारः सर्वोऽयं सांवृतः, न परमार्थः । विज्ञानं चेदं स्वत एव प्रकाशते, नानेन ग्राह्यं किमपि, नास्य ग्राहकः कश्चित् । ग्राह्यग्राहकविभागः संवृत्यैव कल्पितः । ग्राह्यग्राहकभावविधुरा क्षणिकविज्ञानधारैवालयविज्ञानमुच्यते । सैव वासनारूषिता नीलपीताद्याकारा प्रवृत्तिविज्ञानमुच्यते इति । अत्रोच्यते—नाभावः—न बाह्यार्थस्याभावः, उपलब्धेः । इदं नीलमिदं पीतमित्यबाधितेन प्रत्यक्षेण सिध्यतो नीलपीतादेर्बाह्यार्थस्यापलापो नैव युज्यते । यदपि 'सहोपलम्भनियमादभेदो नीलतद्धियोः' इति, तदसङ्गतम् । ज्ञानं यदोदेति विषयमवभासयदेवोदेति, विषयावभासनस्वभावत्वात् । उदयच्च तत्स्वयमेव प्रकाशते, ग्राहकसामग्र्यन्तरानपेक्षत्वस्वाभाव्यात् । अतो विज्ञानं स्वयमवभासमानं सदेवोदयद्विषयमवभासयति । तस्मात्सहोलम्भनियमो नीलतद्धियोः । न त्वभेदनिबन्धनः । साहित्यं च भेदमेवावगमयति । अवभासनं च व्यवहारानुगुण्यापादनम् । व्यवहार्यस्यार्थस्य व्यवहारानुगुण्यापादनस्वभावस्य विज्ञानस्य च कथमैक्यम् ॥ २७ ॥

## वैधर्म्याच्च न स्वाप्नादिवत् ॥ २ । २ । २८ ॥

स्वाप्नस्य ज्ञानस्येव सर्वस्यैव ज्ञानस्यार्थशून्यत्वोपपादनमसङ्गतम् । जाग्रद्विज्ञानस्य स्वाप्नाद्वैलक्षण्यात् । स्वाप्नं हि ज्ञानं निद्रादिदोषजन्यम् । बाधश्च स्वाप्नस्य जाग्रद्दशायाम् । महद्वैधर्म्यं स्वाप्नजागरयोः ॥ २८ ॥

---

### वैधर्म्याच्च न स्वाप्नादिवत् ॥ २ । २ । २८ ॥

ननु स्वप्ने विविधविचित्रवस्तुजातमुपलभ्यते । न च वस्तु तत् वर्तते । अथापि भासते केवलम् । तद्वत् बाह्यस्याप्यसतः उपलम्भः संभवति । पूर्वपूर्ववासनावासितं चित्तमेव त्वर्थाकारमवभासते । इति चेन्न । वैधर्म्यात्—स्वाप्नार्थादस्यानुभूयमानस्य वैधर्म्यात्—वैलक्षण्यात् । स्वाप्नार्थाः प्रबोधसमये बाध्यन्ते । नेमे । अतो महदन्तरमेनयोः ॥ २८ ॥

## न भावोऽनुपलब्धेः ॥ २ । २ । २९ ॥

अर्थशून्यस्य नैव सद्भावः, तथाविधस्य ज्ञानस्यानुपलम्भात् । स्वाप्नज्ञानस्याप्यर्थवत्तामुपरिष्टात्स्वयं दर्शयिष्यति सन्ध्याधिकरणे । एतेन व्यपेतवासनाकलङ्का निरालम्बना क्षणिकविज्ञानधारा काऽप्यनुवर्तते, सैव मुक्तिदशा इत्येतदपास्तम् ।

(अ. स.) विज्ञानमेकं वस्त्वस्ति नास्ति ज्ञेयमिदं जगत् ।
इति दृश्यापलापोऽयमुपलम्भादसङ्गतः ॥ १ ॥
अहं जानामीदमिति कर्तृकर्मक्रियाश्रये ।
उपलम्भे सति कथं क्रियामात्रस्य सत्यता ॥ २ ॥
बाधाबाधादिवैधर्म्यान्न स्वाप्नवदसत्यता ।
न चोपलभ्यते ज्ञानमकर्तृकमकर्मकम् ॥ ३ ॥
येन विज्ञानमात्रस्य वक्तुं शक्येत सत्यता ।
मायावादिमतस्यापि निरासोऽत्र विधित्सितः ॥ ४ ॥

इति भाष्ये उपलब्ध्यधिकरणम् ॥ ४ ॥

---

अथ सर्वशून्यवादी सौगतेष्वन्यतमः प्राह—यथा बाह्योऽर्थः सांवृतः, तथा विज्ञानमपि सांवृतम् । शून्यमेव तु तत्वम् । तत् न सन्नासन्नसदसदुभयम्, नाप्यनुभयम् । 'चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका जगुः' । शून्यता नाम नैःस्वाभाव्यम् । उक्तं च—'बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते ।' 'अतो निरभिलप्यास्ते निःस्वभावाश्च कीर्तिताः' इति । ननु विज्ञानमपि सांवृतमित्यनुपपन्नम्, निरधिष्ठानभ्रमानुपपत्तेः । नैवम् । संवृतिपारमार्थ्यं विना भ्रमोपपत्तिवदधिष्ठान-

---

न भावोऽनुपलब्धेः ॥ २ । २ । २९ ॥

आलम्बनरहितस्य ज्ञानमात्रस्य भावः—सद्भावो नोपपद्यते, अनुपलब्धेः—कर्तृकर्मरहितस्य ज्ञानस्यानुपलब्धेः । अहमिदं जानामीत्येव तु अनुभवः ॥२९॥

इति प्रदीपे उपलब्ध्यधिकरणम् ॥ ४ ॥

पारमार्थ्यं विनैव भ्रमस्योपपत्तेः । केशस्तबकादिभ्रमदर्शनाच्चेति । अत्रोच्यते—

## सर्वथाऽनुपपत्तेश्च ॥ २ । २ । ३० ॥

इदं हि मतं सर्वथाऽनुपपन्नम् । विज्ञानमात्रवादस्यानुपपन्नत्वं प्राक् दर्शितम्, अथ विज्ञानमपि सांवृतमिति वादस्तु भ्रमाधिष्ठानस्याप्यनभ्युपगमेन सर्वैः प्रकारैरनुपपन्नः । सर्वभ्रान्तिमूला संवृतिरपि सांवृता, सर्वभ्रान्त्यधिष्ठानमपि सांवृतम्, संवृत्याश्रयो विज्ञाताऽपि सांवृतः इत्येकैकमप्यनुपपन्नमिति ॥ ३० ॥

(अ. सं.) यथा यथा शून्यवादो विचारपदमश्नति ।
शतं चानुपपत्तीनां समुन्मिषति तन्मते ॥ १ ॥
न सन्नासन्नसदसत् न चोभयविलक्षणम् ।
शून्यं तत्त्वमिति प्रोक्तं तद्गोष्ठ्यामेव शोभताम् ॥ २ ॥
सदा सर्वं सर्वथैव नास्ति सर्वत्र चेत्ययम् ।
निरुपाख्यनिषेधस्तु मानबाधान्न सिध्यति ॥ ३ ॥
सोपाधिके निषेधे तु न सिध्येत् सर्वशून्यता ।
युक्त्या सर्वस्य बाधोऽपि युक्तिबाधान्न सिध्यति ॥ ४ ॥

इति भाष्ये सर्वथाऽनुपपत्त्यधिकरणम् ॥ ५ ॥

---

## सर्वथाऽनुपपत्तेश्च ॥ २ । २ । ३० ॥

यश्च शून्यवादो माध्यमिकानां स चात्यन्तमसङ्गतः । सर्वथाऽनुपपत्तेः— शून्यवादस्य केनापि प्रकारेण दुर्निरूपत्वात् । नास्ति ज्ञाता नास्ति ज्ञेयं नास्ति च ज्ञानम्, सर्वमेव सांवृतम्, अथापि शून्यमेव भासत इत्येतत् कथमपि नोपपद्यते । अध्यासो ह्यधिष्ठानसापेक्षः । अधिष्ठानमप्यपलपन्नेष महासाहसिकः ॥ ३० ॥

इति प्रदीपे सर्वथाऽनुपपत्त्यधिकरणम् ॥ ५ ॥

अथाणुकारणवादिष्वन्यतमोऽयं बाह्य आर्हतो निरस्यते—

## नैकस्मिन्नसम्भवात् ॥ २ । २ । ३१ ॥

आर्हता आहुः—द्रव्यषट्कात्मकमिदं जगत् । तानि च द्रव्याणि जीव-धर्म-अधर्म-पुद्गल-काल-आकाशानि । तत्र जीवाः देहपरिमाणाः ज्ञानादिस्वभावाः । धर्मः गतिमतां गतिहेतुभूतो द्रव्यविशेषः । अधर्मः स्थितिहेतुभूतो द्रव्यविशेषः । तावेतौ जगद्व्यापिनौ । पुद्गलः—रूपरसगन्धस्पर्शस्वभावं द्रव्यम् । कालो भूतभविष्यद्वर्तमानहेतुः । आकाशोऽवकाशस्वभावः । अपरश्चायं विभागप्रकारः मुमुक्षुजनोपयुक्तः। जीवाजीवास्रवसंवरनिर्जरबन्धमोक्षा इति सप्त । जीवः उक्तस्वभावः। अजीवस्तद्भोग्यभूतं तनुभुवनादि । आस्रवत्यनेनेति आस्रवः, जीवो यैर्विषयेष्वास्रवति, आस्रवणं रूपादिप्रलोभनविषयकज्ञानपरिणामित्वम्, तच्चेन्द्रियसम्प्रयोगात्, तानि चेन्द्रियाणि । संवरः, संवृणोतीन्द्रियप्रवृत्तिमिति संवरः, स च गुप्तिसमित्यादिः । तदुक्तम्—'आस्रवः स्रोतसां द्वारं संवृणोतीति संवरः । आस्रवो बन्धहेतुः स्यात् संवरो मोक्षकारणम्' इति । गुप्तिः कायवाङ्मनोनिग्रहः । समितिः—निरीक्ष्यसञ्चरणं मितभाषणमित्यादिः । निर्जरः—निःशेषं जीर्यति कामक्रोधादिर्येन तपसा केशोलुञ्छनतप्तशिलारोहणादिना सः । घातिकर्मचतुष्टयाघातिकर्मचतुष्टयाभ्यां जायमाना जन्मपरम्परा बन्धः, ताभ्यां

---

**नैकस्मिन्नसम्भवात् ॥ २ । २ । ३१ ॥**

अथार्हताः निरस्यन्ते । एते हि सर्वं वस्तु नैकान्तस्वभावमाचक्षते । अयमेषामाशयः—जगदिदं जीवधर्माधर्मपुद्गलकालाकाशप्रभेदेन षड्विधं नैकान्तस्वभावम्, अस्तित्वनास्तित्वनित्यत्वानित्यत्वादिनैकान्तस्वभावम् । तथा च सप्तभङ्गी नयः—स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यम्, स्यादस्ति चावक्तव्यम्, स्यान्नास्ति चावक्तव्यम्, स्यादस्ति च नास्ति चावक्तव्यमिति । भाष्ये चायं न्यायो व्याख्यातः । अयं च नैकान्तस्वभाववादः एकस्मिन् अस्तित्वनास्तित्वादीनां मिथो विरुद्धानामसंभवादसङ्गतः ॥ ३१ ॥

विमुक्तस्य सततोर्ध्वगमनादिलक्षणो मोक्षः । बन्धमुक्तस्य ह्यूर्ध्वगमनं स्वभावः, पञ्जरविनिर्मुक्तस्येव पक्षिणः । उक्तं च–'गत्वागत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः । अद्यापि न निवर्तन्ते त्वलोकाकाशमार्गगाः' इति । व्यपगतसमस्तक्लेशतद्वासनस्यानावरणज्ञानदर्शनसुखवीर्यस्यात्मन ऊर्ध्वस्थितिलक्षण एव वा मोक्षः । यान्येतानि षट् द्रव्याणि तानि नैकान्तानि; अस्तित्वनास्तित्वभिन्नत्वाभिन्नत्वादिविरुद्धानेकधर्मसमावेशास्पदत्वात् । तथा चात्रावतरति सप्तभङ्गीनयः । स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यम्, स्यादस्ति चावक्तव्यम्, स्यान्नास्ति चावक्तव्यम्, स्यादस्ति च नास्ति चावक्तव्यम्, इति । अत्र स्यादिति तिङन्तप्रतिरूपकमव्ययम्, ईषदर्थकम् । अनैकान्त्यार्थकं वा । भङ्गः प्रकारः, सप्तानां प्रकाराणां [1]सत्त्वादिलक्षणानां समुदायः सप्तभङ्गी, भङ्गः नियमभङ्गो वा, नियमश्च सत्त्वादीनां सदेवासदेवेति, तेषां भङ्गः अस्ति च नास्ति चेत्यादिप्रकारेण, अस्मिन्नर्थे सप्तभङ्गीति जैनानां परिभाषा । अनेन सप्तभङ्गीनयेन सर्वमेव वस्तु नैकान्तम् । इति । अत्रोच्यते–नैकस्मिन्नसम्भवात् । एकस्मिन्वस्तुनि विरुद्धयोः सत्त्वासत्त्वयोरसम्भवात् । ननु–सामान्यात्मनाऽस्ति विशेषात्मना नास्ति च–यदा केवलं मृत्पिण्डः तदा मृत्पिण्डोऽस्ति घटो नास्ति इति हि व्यवह्रियते, तत्तदा एकस्मिन्द्रव्ये सत्त्वमसत्त्वं च समायातम् । सामान्यविशेषयोरैक्यात् । अत एव भिन्नत्वमभिन्नत्वं च, सामान्यात्मनाऽभिन्नत्वं पर्यायात्मना च भिन्नत्वम् । नैतत् । सत्त्वासत्त्वे भावाभावलक्षणे तेजस्तमोवद्विरुद्धे क्रमभाविपिण्डत्वघटत्वरूपावस्थाद्वयगते न तु युगपदेकगते । अवस्थाऽनतिरिक्तौ वा तौ भावाभावौ क्रमभाविनौ नानैकान्त्यमावहतो वस्तुनः । कालभेदेन व्यवस्थितौ हि तौ मिथोभिन्नौ धर्मौ द्रव्यस्य । एतेन भिन्नमभिन्नं चेत्यपि निरस्तम् । अन्योन्याभावतदभावरूपयोर्मिथोविरुद्धयोरेकस्मिन्नसम्भवात् । गवाश्वयो-

---

१ सत्त्वमसत्त्वं सदसत्त्वमनिर्वचनीयत्वं सत्त्वसहितमनिर्वचनीयत्वं असत्त्वसहितमनिर्वचनीयत्वं सत्त्वासत्त्वसहितमनिर्वचनीयत्वं चेति सप्त प्रकाराः स्यादस्तीत्यादिना प्रोक्ताः ।

रेव त्वन्योन्याभावः । नतु मृद्धटयोः । मृत्त्वं घटत्वं चेति तु सामान्यविशेषौ, एते अनुवृत्तव्यावृत्ते, न चैताभ्यामन्योन्याभावतदभावयोरेकत्र निर्वहणं घटेत ॥ ३१ ॥

## एवं चात्माऽकात्स्र्यम् ॥ २ । २ । ३२ ॥

एवं जैनमते आत्माकात्स्र्यमपि प्रसज्यते । आत्मा चेद्देहपरिमाणः, हस्तिशरीरे प्रविष्टो हस्तिपरिमाणः, स एव यदा पिपीलिकाशरीरे प्रविशति तदा तस्य कृत्स्नांशेन न प्रवेशः । एकांशेन प्रविष्ट एकांशेनाप्रविष्टश्च स्यात् पिपीलिकाशरीरस्याल्पपरिमाणत्वात् ॥ ३२ ॥

## न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ २ । २ । ३३ ॥

ननु-को विरोधः परिमाणतारतम्ये, पर्यायेण तदुपपत्तेः, हस्तिशरीरे यदा प्रविशति तदा तत्परिमाणः, यदा पिपीलिकाशरीरे प्रविशति तदा तत्परिमाणो भवति । सङ्कोचविकासाभ्यां तदुपपत्तिः इति चेत्, हन्त विकारापत्तिरात्मस्वरूपस्य ॥ ३३ ॥

---

### एवं चात्माऽकात्स्र्यम् ॥ २ । २ । ३२ ॥

तेषां पक्षे एवमात्मनोऽकात्स्र्यप्रसङ्गश्च दोषः । ते हि जीवं देहपरिमाणमाचक्षते । तथा सति हस्त्यादिशरीरे स्थितस्य हस्तिशरीरपरिमाणस्य भवान्तरे पिपीलिकाशरीरेऽनुप्रवेशे तावत्परिमाणस्य तस्य पिपीलिकाशरीरेऽनुप्रवेशदौर्घट्यादननुप्रविष्टांशोऽवशिष्यत इत्यकात्स्र्यम् ॥ ३२ ॥

### न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ २ । २ । ३३ ॥

पर्यायात्—सङ्कोचविकासलक्षणावस्थान्तरापत्त्याऽविरोधः शरीरपरिमाणे नात्माऽकात्स्र्यदोषप्रसङ्गः । गजशरीरे यो गजपरिमाणः स एव पिपीलिकाशरीरमनुप्रविशन् सङ्कोचावस्थां प्राप्नोति ततो गजशरीरं प्रविशन् विकासावस्थां प्राप्नोतीत्यविरोधः । इति न च वाच्यम् । विकारित्वस्य तत एवानित्यत्वस्य च प्रसङ्गात् ॥ ३३ ॥

## अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ २ । २ । ३४ ॥

अन्त्या याऽवस्थितिः मुक्तावस्थितिः, तस्यामवस्थितौ जीवस्य यः परिमाण इष्यते, स परिमाणो नित्य एव, तथा च तस्य तत्परिमाणाश्रयस्य जीवस्य चोभयोर्नित्यत्वेन मुक्तेः पूर्वमपि परिमाणोऽविशेष एव स्वीकार्यः । तथाच देहपरिमाणत्वं न सम्भवति ॥ ३४ ॥

( अ. स. ) नैकान्तवादो यश्चायं सप्तभङ्गीनयात् श्रितः ।
न युज्यते, यदेकस्मिन् स्थितिः स्यान्न विरुद्धयोः ॥ १ ॥
मिथोविरुद्धं खल्वेतत् अस्तितानास्तितादिकम् ।
तत्तच्छरीरमानत्वं जीवस्याभ्युपगच्छताम् ॥ २ ॥
अल्पं शरीरं विशतः स्थूलाद् गजशरीरतः ।
अंशतस्तु प्रवेशः स्यात् अंशतस्तु बहिः स्थितिः ॥ ३ ॥
पर्यायादविरोधश्चेद्विकारादिः प्रसज्यते ।
मुक्तौ यत् परिमाणं स्यात् तदेव निरुपाधिकम् ॥ ४ ॥
नित्यत्वात्तस्य तन्मानं स्वीकार्यमविशेषतः ।
सदैव चाऽकात्स्र्यदोषान्न मोक्षो जैनवादिनाम् ॥ ५ ॥

इति भाष्ये एकस्मिन्नसम्भवाधिकरणम् ॥ ६ ॥

---

**अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ २ । २ । ३४ ॥**

या संसरतोऽस्य जीवस्यान्त्यावस्थितिः—मोक्षावस्थितिः, तदानीन्तनपरिमाणः, स च तदाश्रयो जीवोऽपि नित्य एवेति उभयोर्नित्यत्वाभ्युपगमात् तस्यैव परिमाणस्य स्वाभाविकत्वावश्यंभावेन पूर्वावस्थास्वपि परिमाणे विशेषाभावात् आत्माकात्स्र्यदोषो दुष्परिहर एव ॥ ३४ ॥

**इति प्रदीपे एकस्मिन्नसंभवाधिकरणम् ॥ ६ ॥**

## पत्युरसामञ्जस्यात् ॥ २ । २ । ३५ ॥

अथ पाशुपतं मतं निरस्यते—ननु कापिलमतनिरसनसमनन्तरमेवास्य निरसनं न्याय्यम्, प्रधानोपादानवादसाम्यात् । मैवम् । वैदिकत्वांशे कापिलकाणादयोः साम्यात् तर्कबलाश्रयणे च साम्यात् पाशुपतानां वैदिकविरुद्धाचरणादिविधानेन विप्रकर्षात् कापिलविचारानन्तरं काणादमतविचारः प्रसक्तः । अथाणुकारणवादप्रसङ्गात् सौगतार्हतमतविचारः प्रसक्तः । अथ—प्रधानोपादानवादाश्रयणेनांशतः कापिलमतानुप्रविष्टाः, निमित्तमात्रेश्वराभ्युपगमात् अंशतः काणादमतानुप्रविष्टाः, श्रुतिस्मृतिविरुद्धमुद्रिकाषट्कादिधारणविधानाश्रयणाद्वेदबाह्यकोट्यनुप्रविष्टाः पाशुपताः प्रसक्ता इति सङ्गतिः । पूर्वाधिकरणतो नेत्यनुवर्तते । पत्युः—पशुपतेर्मतम्, नोपपद्यते । असामञ्जस्यात् । भिन्ननिमित्तोपादनकत्वादेराश्रयणेनासामञ्जस्यात् । ननु ईश्वरो निमित्तमात्रम् । नैतत् । अनुमानत ईश्वरं साधयतो निमित्तत्त्वानुपपत्तिं समनन्तरमेव प्रदर्शयिष्यामः । आगमेन पाशुपतेन चेन्निमित्तमात्रता सम्भाव्येत । आगमस्त्वसमञ्जस एव । 'मुद्रिकाषट्कतत्वज्ञः परमुद्राविशारदः । भगासनस्थमात्मानं ध्यात्वा निर्वाणमृच्छति । रुद्राक्षकंकणं हस्ते जटा चैका च मस्तके । कपालं भसना स्नानम्' इत्येवमादिनिःश्रेयसपथनिरूपणं हि महदसमञ्जसम् ॥ ३५ ॥

आनुमानिकनिमित्तेश्वराभ्युपगमे दोषमाह—

## अधिष्ठानानुपपत्तेश्च ॥ २ । २ । ३६ ॥

कथमयमीश्वरोऽशरीरः प्रधानस्याधिष्ठाता भवितुमर्हति । कुला-

---

### पत्युरसामञ्जस्यात् ॥ २ । २ । ३५ ॥

नेति पूर्वाधिकरणतोऽनुवर्तते । पत्युः—पशुपतेर्यन्मतं पाशुपतं, न तत् आदरणीयम्, असामञ्जस्यात् । वेदविरुद्धवादात् मिथो व्याघातकवचनाच्चासामञ्जस्यात् । प्रणवपूर्वकाभिध्यानमिति वैदिकम्, सुराकुंभस्थापनं भगासनस्थात्मध्यानमिति ततो विरुद्धम् ॥ ३५ ॥

लादयो हि सशरीरा एव मृदादीनामधिष्ठातारो दृष्टाः । शरीराभ्युपगमे च तस्य सावयवत्वेनानित्यता समापतेत् ॥ ३६ ॥

## करणवच्चेन्न भोगादिभ्यः ॥ २ । २ । ३७ ॥

यथा जीवः शरीरेन्द्रियादीन्यधितिष्ठन् तदधिष्ठाने शरीरान्तरं नापेक्षते तथाऽयं शरीरनिरपेक्षः प्रधानमधितिष्ठतीति चेन्न । तथा सति ईश्वरस्यापि भोगप्रसङ्गः स्यात् । अतश्च पाशुपतं मतमसमञ्जसम् ॥३७॥

## अन्तवत्त्वमसर्वज्ञता वा ॥ २ । २ । ३८ ॥

भोगान्वयाभ्युपगमे पुण्यपापवश्यतावश्यम्भावेनान्तवत्त्वं संहार्यत्वं सृज्यत्वं च स्यादसर्वज्ञता चापतेत् ॥ ३८ ॥

( अ. सं. ) वेदबाह्यमतं क्षिप्तमागमस्तादृशोऽथ च ।
जगन्निमित्तमात्रत्वस्येश्वरे प्रतिपादनात् ॥ १ ॥

---

## अधिष्ठानानुपपत्तेश्च ॥ २ । २ । ३९ ॥

ते हि पाशुपता वदन्ति आनुमानिकेनेश्वरेणाधिष्ठितात् प्रधानाज्जगदिदं जायत इति । तदिदं न सङ्गच्छते । अधिष्ठानानुपपत्तेः । सशरीराणामेव कुम्भकारादीनां मृदाद्यधिष्ठानं दृष्टम्, तत् अशरीरस्येश्वरस्य प्रकृत्यधिष्ठानं कथमानुमानिकेश्वरवादिनो घटेत ॥ ३९ ॥

## करणवच्चेन्न भोगादिभ्यः ॥ २ । २ । ३७ ॥

ननु जीवः करणमिन्द्रियवर्गं सशरीरं यथा शरीरान्तरनिरपेक्षः सन्नेवाधितिष्ठति, तथा शरीरनिरपेक्ष एव प्रधानमधितिष्ठति परमेश्वर इति चेन्न । तथा सति स इव करणाधिष्ठाता, अयमपि सुखदुःखादिभोक्ता भवतु । अनुमानस्य दृष्टमनु पराक्रमो नान्यत्र ।

## अन्तवत्त्वमसर्वज्ञता वा ॥ २ । २ । ३८ ॥

वाशब्दश्चार्थे । करणकलेवरमधितिष्ठतो जीवस्येव प्रधानमधितिष्ठतोऽस्येश्वरस्यापि असर्वज्ञत्वमन्तवत्त्वं सृष्टिप्रलयगोचरत्वं च स्यात् ॥ ३८ ॥

इति प्रदीपे पशुपत्यधिकरणम् ॥ ७ ॥

---

सुराकुम्भस्थापनादिदुराचारोपदेशतः ।
मतं पाशुपतं तावन्न ग्राह्यमसमञ्जसम् ॥ २ ॥

इति भाष्ये पशुपत्यधिकरणम् ॥ ७ ॥

---

## उत्पत्त्यसम्भवात् ॥ २ । २ । ३९ ॥

पाशुपतमते निरस्ते पाञ्चरात्रस्याप्यप्रामाण्यशङ्का समुदेति । तामाशङ्कामुद्भाव्य परिहरति । तत्रेयमाशङ्का—यद्यपि पाशुपतमत इव पाञ्चरात्रे जगत्कारणत्ववादे नौपनिषदपक्षतो विरोधः, वासुदेवस्यैव जगन्निमित्तोपादानत्वाभ्युपगमात् । अथापि पाञ्चरात्रमप्रमाणम्, नित्यस्य जीवात्मनः उत्पत्त्यभिधानात् । भगवान्वासुदेवः सर्वेश्वरः परमात्मा तस्मात् सङ्कर्षणाख्यो जीवो जायते, तस्मात्प्रद्युम्नाख्यं मनो जायते, तस्मादनिरुद्धाख्योऽहङ्कारो जायत इति हि पाञ्चरात्रे तत्त्वप्रक्रिया । सेयं प्रक्रिया श्रुतिविरुद्धा, तस्मान्न पाञ्चरात्रं प्रमाणम् ॥ ३९ ॥

## न च कर्तुः करणम् ॥ २ । २ । ४० ॥

कर्तुः जीवात्मनः करणं जायते इति चानुपपन्नम् । मनस्तु जीवस्य कर्तुः क्रियासु करणम् । तत् मनसः करणस्य कर्तुर्जीवादुत्पत्तिरित्यसङ्गतमिति भावः ॥ ४० ॥

---

### उत्पत्त्यसंभवात् ॥ २ । २ । ३९ ॥

ननु पाशुपतमतवत् पाञ्चरात्रमप्यनादरणीयम् । पाञ्चरात्रे—'वासुदेवात् सङ्कर्षणो नाम जीवो जायते' इति जीवस्योत्पत्तिः स्मर्यते । स च जीवोत्पत्तिवादोऽसङ्गतः । तस्य नित्यतया उत्पत्त्यसंभवात् ॥ ३९ ॥

### न च कर्तुः करणम् ॥ २ । २ । ४० ॥

कर्तुर्जीवात् करणं मनो जायते इत्यप्यसङ्गतम् । तथा च पाञ्चरात्रेऽभ्युपगम्यते 'सङ्कर्षणात् प्रद्युम्नसंज्ञं मनो जायते' इति ॥ ४० ॥

अत्रोच्यते—

## विज्ञानादिभावे वा तदप्रतिषेधः ॥ २ । २ । ४१ ॥

'अपि वा कर्तृसामान्यात्' 'एकं वा संयोगरूपचोदनाख्याविशेषा'-दित्यत्रेवात्र वेति शङ्का व्यावर्त्यते। विज्ञानं च तदादि चेति समासः। यत्सर्वस्यास्यादिभूतं 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति श्रुतिसिद्धं विज्ञानं परं-ब्रह्म, तद्भावे—सङ्कर्षणादीनां ब्रह्मभावे तदप्रतिषेधात् पाञ्चरात्रस्याप्रति-षेधात्। **अयमाशयः**—भगवान् परो वासुदेवः जीवाद्यधिष्ठातृसङ्क-र्षणादिरूपेण स्वयमेव प्रादुर्भवतीत्यवतारविशेषपरेयं पाञ्चरात्रप्रक्रिया। तन्नाप्रामाण्यशङ्कावकाशः इति। स्मर्यते च—'व्यूह्यात्मानं चतुर्धा च वासुदेवादिमूर्तिभिः। सृष्ट्यादीन्प्रकरोत्येष विश्रुतात्मा जनार्दनः' इति। तथा पौष्करसंहितायां—'कर्तव्यत्वेन वै यत्र चातुरात्म्यमुपा-स्यते। क्रमागतैः स्वसंज्ञाभिः ब्राह्मणैरागमं तु तत्।' इति च ॥४१॥

## विप्रतिषेधाच्च ॥ २ । २ । ४२ ॥

पाञ्चरात्रे जीवोत्पत्तिर्विशेषेण प्रतिषिध्यते च। तत्पाञ्चरात्रहार्दम-

---

अत्रोच्यते—

**विज्ञानादिभावे वा तदप्रतिषेधः ॥ २ । २ । ४१ ॥**

'अपि वा कर्तृसामान्यादि'त्यादाविव वाशब्दः शङ्काव्यावृत्तिं द्योतयति। यः सङ्कर्षणो यश्च प्रद्युम्नः, न तौ जीवमनसी, अपि तु तदभिमानित्वेन जीवमनःशब्दाभ्यां निर्देशः, तौ तु परब्रह्मणो वासुदेवादनन्यौ। भगवान् वासुदेव एव सङ्कर्षणादिव्यूहरूपेण प्रादुर्भवतीति हि पाञ्चरात्रप्रक्रिया। अतः तयोः विज्ञानादिभावे—विज्ञानस्वरूपं यदादिकारणं सङ्कर्षणादेः तद्भावे, तस्य पाञ्चरात्रस्याप्रतिषेधः—न प्रामाण्यप्रतिषेधः ॥ ४१ ॥

**विप्रतिषेधाच्च ॥ २ । २ । ४२ ॥**

पाञ्चरात्रशास्त्रे जीवोत्पत्तेः विशेषेण प्रतिषेधाच्च। तथा हि परमसंहितायां स्मर्यते—'सह्यनादिरनन्तश्च परमार्थेन निश्चितः' इति ॥ ४२ ॥

इति प्रदीपे उत्पत्त्यसम्भवाधिकरणम् ॥ ८ ॥

**इति ब्रह्मसूत्रार्थप्रदीपे द्वितीयाध्यायस्य द्वितीयः पादः।**

विज्ञानतामयमाक्षेपः । तथा चोक्तम्–'अचेतना परार्था च नित्या सततविक्रिया । त्रिगुणा कर्मिणां क्षेत्रं प्रकृते रूपमुच्यते ॥ व्याप्तिरूपेण सम्बन्धः तस्याश्च पुरुषस्य च । सह्यनादिरनन्तश्च परमार्थेन निश्चितः ॥ अनादिकालतो जीवो मायया परिवेष्टितः । अनुग्रहाद्धरेरेव मुच्यते नात्र संशयः' इति । तस्मात्पाञ्चरात्रं सर्वांशेन प्रमाणमेव ॥ ४२ ॥

( अ. सं. ) शैवादिवत् पाञ्चरात्रे न विरोध इतीर्यते ।
विज्ञानात्मा वासुदेवः परंब्रह्माऽऽदिकारणम् ॥ १ ॥
सङ्कर्षणादिरूपेण व्यूह्यात्मानं स वर्तते ।
निःश्रेयसार्थिभिः सेव्य इत्येव प्रतिपादनात् ॥ २ ॥
प्रतिषेधाच्च जीवानामुत्पत्त्यादेर्विशेषतः ।
प्रामाण्यं पाञ्चरात्रस्य स्थितं वेदाविरोधतः ॥ ३ ॥

इति भाष्ये उत्पत्त्यसम्भवाधिकरणम् ॥ ८ ॥

इति ब्रह्ममीमांसाभाष्ये द्वितीयस्याध्यायस्य द्वितीयः पादः ॥

---

द्वितीयाध्यायस्य प्रथमे पादे कारणविषये परैरुद्भाविता दोषाः परिहृताः । परेषां पक्षाश्च समनन्तरमेव प्रतिक्षिप्ता द्वितीये पादे । कार्यविषये परैरुद्भाव्यमाना दोषाः परिह्रियन्ते तृतीये पादे । तत्र प्रथमे वियदुत्पत्तिश्चिन्त्यते । वियदुत्पद्यते न वेति संशयः । अत्र परः शङ्कते–

## न वियदश्रुतेः ॥ २ । ३ । १ ॥

वियन्नोत्पद्यते, कस्मात्? अश्रुतेः, सद्विद्यायां कारणनिरूपणपरायां 'तत्तेजोऽसृजत'त्यादिना तेजःप्रभृतीनामेव सर्जनश्रवणात् ।

---

स्वपक्षसंरक्षणाय परपक्षः प्रतिक्षिप्तः । अथ सर्वस्य ब्रह्मकार्यत्वद्रढिम्ने विचार्यते—

### न वियदश्रुतेः ॥ २ । ३ । १ ॥

वियन्नोत्पद्यते, अश्रुतेः–छान्दोग्ये सद्विद्यायां सृष्टिनिरूपणप्रकरणे वियदुत्पत्तेरश्रवणात् । तेजःप्रभृतीनामेव हि तत्र सृष्टिः श्रूयते ॥ १ ॥

आकाशस्य तदश्रवणात् । तदिदमश्रवणं निरवयवस्याकाशस्योत्पत्त्यसम्भवमेव द्योतयति ॥ १ ॥

अत्रोच्यते—

## अस्ति तु ॥ २ । ३ । २ ॥

वियदुत्पत्तिपरा श्रुतिरस्ति तु । तैत्तिरीयोपनिषदि श्रूयते–'आत्मन आकाशः सम्भूतः' इति । तुशब्देन तर्कः प्रतिक्षिप्यते । श्रुतिप्रतिपन्नेऽर्थे तर्को न प्रवर्तत इति । कार्येण सावयवेन भाव्यमिति नैष नियमः, अवस्थान्तरापत्तिमात्रेण तु कार्यता । सा च न सावयवत्वमपेक्षते । तर्केण च श्रुतिप्रमाणानुगुणेन भाव्यम् । अप्रत्यक्षे ह्यर्थे श्रुतिः मुख्यं प्रमाणम् ॥ २ ॥

परः प्रत्यवतिष्ठते—

## गौण्यसम्भवात् शब्दाच्च ॥ २ । ३ । ३ ॥

'आत्मन आकाशः सम्भूत' इति आकाशस्य सम्भवश्रुतिर्गौणी । असम्भवात्–मुख्यार्थस्य बाधात् । न हि बाधितेऽर्थे शब्दः प्रभवति । न ह्याकाशस्य विभोर्निरवयवस्योत्पत्तिरुपपद्यते । शब्दाच्च–'वायुश्चान्तरिक्षं चैतदमृत'मिति नित्यत्वावबोधकशब्दाच्च ॥ ३ ॥

---

### अस्ति तु ॥ २ । ३ । २ ॥

तुशब्दः पूर्वपक्षं व्यावर्तयति । वियतः उत्पत्तिरस्ति । तथा हि श्रूयते तैत्तिरीयके 'आत्मन आकाशः संभूत आकाशाद्वायुः' इति । अतश्छान्दोग्ये तेजःप्रभृतीनां सृज्यत्वकथनमाकाशस्याप्युपलक्षकम् ॥ २ ॥

### गौण्यसंभवात् शब्दाच्च ॥ २ । ३ । ३ ॥

ननु तैत्तिरीयके श्रूयमाणा वियदुत्पत्तिः गौणी, कस्मात्? असंभवात्–मुख्यत्वे छान्दोग्ये श्रूयमाणस्य सृज्यवर्गे तेजःप्राथम्यस्यासंभवात् । अमूर्तस्य विभोरुत्पत्त्यसंभवादिति वा । शब्दाच्च–'वायुश्चान्तरिक्षं चैतदमृत'मिति वियतो नित्यत्वावबोधकशब्दाच्च ॥ ३ ॥

## स्याच्चैकस्य ब्रह्मशब्दवत् ॥ २ । ३ । ४ ॥

ननु सम्भूत इत्ययमेक एव सम्भूतशब्दः आकाशे गौणः । उत्तरत्राग्न्यादिष्वनुषज्यमानो मुख्य इति कथमुपपद्यत इति चेदत्राह—स्याच्चैकस्याप्यस्योत्तरत्रानुषज्यमानस्य मुख्यत्वमाकाशे त्वमुख्यत्वम् । ब्रह्मशब्दवत् । 'तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते' इत्यत्र ब्रह्मशब्दः प्रधाने गौणः, स एव 'तपसा चीयते ब्रह्मे'त्यत्र श्रूयमाणो मुख्यः । तस्मादावृत्ताविवानुषङ्गेऽपि गौणो मुख्यश्च भवितुमर्हति ॥ ४ ॥

अत्रोच्यते—

## प्रतिज्ञाऽहानिरव्यतिरेकात् ॥ २ । ३ । ५ ॥

एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया हानिर्यथा न स्यात्तथैव हि श्रुत्यर्थो निरूपणीयः । आकाशस्य चेन्नित्यता, तस्याऽकार्यत्वेन ब्रह्मणो व्यतिरेकादेकविज्ञानेन सर्वविज्ञानप्रतिज्ञा हीयेत । अव्यतिरेकात्तु

---

ननु तैत्तिरीयके श्रूयमाणा वियत उत्पत्तिर्गौणीति वक्तुं न शक्यते । 'आत्मन आकाशः संभूतः आकाशाद्वायु'रित्यत्र संभूतशब्दस्य वाय्वादौ मुख्यार्थस्य आकाशे गौणार्थकत्वाश्रयणस्यासंभवात् । इति चेदाह—

### स्याच्चैकस्य ब्रह्मशब्दवत् ॥ २ । ३ । ४ ॥

स्याच्चैकस्यैव संभूतशब्दस्य वाय्वादौ मुख्यार्थकस्याकाशे गौणार्थत्वं ब्रह्मशब्दवत्—'तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते' इत्यत्र प्रधानपरतया श्रूयमाणस्य ब्रह्मशब्दस्य गौणस्य तस्मिन्नेव प्रकरणे 'तपसा चीयते ब्रह्म' इत्यत्र परब्रह्मणि यथा मुख्यत्वम् ॥ ४ ॥

### प्रतिज्ञाऽहानिरव्यतिरेकात् ॥ २ । ३ । ५ ॥

**अत्रोच्यते**—आकाशस्यापि ब्रह्मण उत्पत्तिरस्त्येव । अन्यथा छान्दोग्ये सद्विद्यायां येयमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञा 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञात' मिति कार्यकारणयोरव्यतिरेकात् श्रूयते, तस्या हानिः स्यात् । उपक्रमस्वारस्यानुरोधेन तेजस उत्पत्तिनिरूपणमाकाशस्याप्युपलक्षकमित्येव सिध्यति ॥ ५ ॥

प्रतिज्ञाया अहानिः । अव्यतिरेकश्च सर्वस्य ब्रह्मकार्यत्व एव । तस्मादाकाशस्योत्पत्तिश्रुतिर्मुख्यैव ॥ ५ ॥

## शब्देभ्यः ॥ २ । ३ । ६ ॥

सद्विद्यायां सृष्टिप्रकरणे श्रूयमाणं सृष्टौ तेजसः प्राथम्यं बहुभ्यः शब्देभ्यो गम्यमानामाकाशस्योत्पत्तिं न निरोद्धुं प्रभवति । तथाहि शब्दाः 'आत्मन आकाशः सम्भूतः' 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इत्यादयः, 'ऐतदात्म्यमिदं सर्व'मित्यादयश्च ॥ ६ ॥

## यावद्विकारं तु विभागो लोकवत् ॥ २ । ३ । ७ ॥

सृष्टेः प्रागविभक्तं ब्रह्मैकमेव । पश्चात्तेजोऽबन्नात्मना बहुधा विभक्तमिति सर्वस्यास्य ब्रह्मणो विभागमुदयं निरूपयितुं प्रवृत्तं सदेवेत्यादिप्रकरणम् । अत्र श्रूयमाणस्तेजोऽबन्नानां विभागः उदयः प्रदर्शनार्थः, यावद्विकारम्—विकारजातं सर्वमेवाभिव्याप्नोति । लोकवत्—लोके दशापीमे मम पुत्रा इत्युक्त्वा तेषु कतिपयप्रदर्शनमन्येषामप्युपलक्षकं भवति यथा ॥ ७ ॥

---

### शब्देभ्यः ॥ २ । ३ । ६ ॥

व्यक्तमवगम्यते चाकाशस्योत्पत्तिः, शब्देभ्यः श्रौतेभ्यः स्मार्तेभ्यश्च । तथा हि—'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी'। 'तामसादपि भूतादेर्विकुर्वाणादभून्नभः' इति श्रुतिस्मृती ॥६॥

### यावद्विकारं तु विभागो लोकवत् ॥ २ । ३ । ७ ॥

छान्दोग्ये सद्विद्यायामुपक्रमे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानुरोधात् 'ऐतदात्म्यमिदं सर्वमि'ति वाक्यानुरोधाच्च यावन्तो विकारा महदादयः, तावतां सर्वेषामेव विभागः कार्यकोटौ बोध्यः । तेजोग्रहणमुपलक्षकम्, लोकवत्—यथा लोके देवदत्तस्य दश पुत्राः इत्युक्त्वा तेषु केषाञ्चिन्निर्देशः क्रियमाणः सर्वेषामुपलक्षको भवति तथा ॥ ७ ॥

## एतेन मातरिश्वा व्याख्यातः ॥ २ । ३ । ८ ॥

एतेन—आकाशस्यात्मनः सकाशादुत्पत्तिनिरूपणेन मातरिश्वा वायुरपि व्याख्यातः—तत एवोत्पद्यत इति । इदं तु नातिदेशसूत्रम् । अधिकाशङ्काया अभावात् । किन्तु 'तेजोऽत' इति वक्ष्यमाणसूत्रेऽतःशब्देन वायोर्ग्रहणार्थं पृथक्सूत्रमिदं प्रवृत्तम् ॥ ८ ॥

## असम्भवस्तु सतोऽनुपपत्तेः ॥ २ । ३ । ९ ॥

किं बहुना—असम्भवस्तु—अनुत्पत्तिस्तु सत एव—सच्छब्दवाच्यस्य ब्रह्मण एव । ततोऽन्यस्य कस्याप्यसम्भवानुपपत्तेः—अनुत्पत्त्यनुपपत्तेः । 'सदेव सोम्येदमग्र आसीदि'ति सत एकस्यैव सृष्टेः प्राक्स्थित्यवधारणात् । महदहङ्कारादिक्रमेण सर्वस्यैवास्योत्पादात् । तथा च सद्विद्यायां वियदुत्पत्त्यश्रवणेण वियतो नित्यत्वाशङ्का नैव युज्यत इति भावः ॥ ९ ॥

(अ. सं.) परपक्षाः प्रतिक्षिप्ताः स्वपक्षोऽद्य विशोध्यते ।
तत्राकाशादिभूतानां कार्यतादि विचिन्त्यते ॥ १ ॥

पूर्वपक्षः—

नोत्पद्यतेऽनवयवं वियत्तत्र न च श्रुतिः ।
तस्मादात्मन आकाशः सम्भूत इति या श्रुतिः ॥ २ ॥
असम्भवात्तु सा गौणी शब्दाच्चामृतमित्यपि ।
वायोरपि च सम्भूतश्रुतिः स्यादेवमेव तु ॥ ३ ॥

---

### एतेन मातरिश्वा व्याख्यातः ॥ २ । ३ । ८ ॥

एतेनाकाशोत्पत्तिसमर्थनेन वायुरपि ब्रह्मकार्यत्वेन व्याख्यातः ॥ ८ ॥

### असंभवस्तु सतोऽनुपपत्तेः ॥ २ । ३ । ९ ॥

उत्पत्तेरभावः सतस्तु—सत एव 'सदेव सोम्येदमग्र आसी'दिति सकलकारणतया प्रस्तुतस्य परस्य ब्रह्मणः सच्छब्दवाच्यस्यैव । अनुपपत्तेः तस्यैवोत्पादानुपपत्तेः ॥ ९ ॥

इति प्रदीपे वियदधिकरणम् ॥ १ ॥

**सिद्धान्तः—**

अत्रोच्यते न गौणी सा वियदुत्पत्तिबोधिनी ।
तस्यापि ब्रह्मकार्यत्वात्तस्मादव्यतिरेकतः ॥ ४ ॥
तद्विज्ञाने सर्वविज्ञानप्रतिज्ञा चोपपद्यते ।
प्राक् सृष्टेर्ब्रह्ममात्रस्य सत्त्वोक्तिश्चोपपद्यते ॥ ५ ॥
ऐतदात्म्यमिदं सर्वमित्यादिश्रुतिवाक्यतः ।
वियद्वाय्वोर्विकारित्वसिद्ध्योत्पत्तिश्च सिध्यति ॥ ६ ॥

इति भाष्ये वियदधिकरणम् ॥ १ ॥

---

## तेजोऽतस्तथा ह्याह ॥ २ । ३ । १० ॥

तेजःप्रभृतीनां स्वस्वव्यवहितपूर्वकारणादेव किमुत्पत्तिः, उत परस्माद्ब्रह्मण एवेति विचार्यते । तत्र पूर्वपक्षी प्राह–तेजोऽत इत्यादि । अतः–मातरिश्वन एव तेज उत्पद्यते, तथा ह्याह श्रुतिः–'वायोरग्नि'रिति ॥ १० ॥

## आपः ॥ २ । ३ । ११ ॥

अत इत्यनुषज्यते । अतः–अग्नेरेवापः । 'अग्नेराप' इति श्रुतेः ॥११॥

## पृथिवी ॥ २ । ३ । १२ ॥

अतः–अद्भ्य एव पृथिवी । 'ता अन्नमसृजन्त' इति श्रुतेः ॥ १२ ॥

---

ननु–अस्तु ब्रह्ममूलकत्वं सर्वस्य । परं न साक्षात् । किंतु परम्परयेत्याशङ्क्य परिह्रियते—

### तेजोऽतस्तथा ह्याह ॥ २ । ३ । १० ॥

अतः–मातरिश्वनः तेजः, तथा ह्याह श्रुतिः 'वायोरग्निः' इति ॥ १० ॥

### आपः ॥ २ । ३ । ११ ॥ पृथिवी ॥ २ । ३ । १२ ॥

अत इति तथा ह्याहेति चानुवर्तेते । अतः–तेजस आपः । अतः–ताभ्य अद्भ्यः पृथिवी । तथा हि श्रुति राह—'अग्नेरापः अद्भ्यः पृथिवी'ति 'तदपोऽसृजत' 'ता अन्नमसृजन्त' इति च ॥ ११ ॥ १२ ॥

नन्वन्नशब्देन कथं पृथिवी गृह्यते, तत्राह—

## अधिकाररूपशब्दान्तरेभ्यः ॥ २ । ३ । १३ ॥

अधिकारात्—महाभूतसृष्ट्यधिकारात् । यत्पृथिव्या असाधारणं रूपं तस्यान्ने श्रवणात् 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्ये'ति । 'अद्भ्यः पृथिवी'ति शब्दान्तराच्च ॥ १३ ॥

अत्रोच्यते—

## तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ २ । ३ । १४ ॥

तुशब्दः पक्षं व्यावर्तयति । तदभिध्यानादेव तल्लिङ्गात्—तस्य सच्छब्दवाच्यस्य परस्य ब्रह्मणो यदभिध्यानं सङ्कल्पः 'तदैक्षत बहु स्यां प्रजायेय' 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त' इति श्रूयमाणः तस्मादेव तदसाधारणाल्लिङ्गात् स परमात्मैव वायुतेजःप्रभृतितत्तच्छरीरकः तेजःप्रभृत्युत्तरोत्तरतत्त्वे कारणमिति निश्चीयते । इदमुपलक्षकं महद्-

---

**अधिकाररूपशब्दान्तरेभ्यः ॥ २ । ३ । १३ ॥**

ननु जलकार्यत्वमन्ने श्रूयते न पृथिव्यामित्याशङ्कां निवारयन्नाह—'तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजते'त्यादिना महाभूतसृष्टिर्हि तत्र प्रक्रान्ता, तत् महाभूतसृष्ट्यधिकारादन्नशब्दः पृथिवीपर एव । तथा—'यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' इति कृष्णं रूपं हि अन्नस्य निर्दिश्यते, कृष्णं च रूपं पृथिव्याः । शब्दान्तरं च 'अद्भ्यः पृथिवी'ति ॥ १३ ॥

एवं प्राप्ते प्राह—

**तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ २ । ३ । १४ ॥**

उत्तरोत्तरभूतेषु श्रूयमाणं यत् पूर्वपूर्वभूतहेतुकत्वं तदपि तत्तद्भूतशरीरकपरमात्मन एव कारणत्वमभिप्रेत्य प्रवृत्तम् । कथमिदमवगम्यते? तदभिध्यानादेव श्रूयमाणात्तल्लिङ्गात् स एव तत्तदात्मा कारणम् । 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त' इति अभिध्यानं सङ्कल्पविशेषो हि श्रूयते । स च सङ्कल्पविशेषः न जडेषु भूतेषु घटेत, अपि तु तच्छरीरकपरमात्मन एव । शरीरशरीरिभावश्चान्तर्यामिब्राह्मणे व्यक्तं श्रूयते ॥ १४ ॥

हङ्कारादीनाम् । तेषामपि पूर्वपूर्वतत्त्वशरीरकात्तस्मादेवोत्पत्तेः । श्रूयते चान्यत्र 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इति । श्रूयते चान्तर्यामिब्राह्मणे परमात्मनः सर्वशरीरकतया सर्वात्मता ॥ १४ ॥

## विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ २ । ३ । १५ ॥

अतस्तु–अत एव, परस्माद्ब्रह्मण एव सर्वस्योत्पत्तेरेव 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चे'त्यत्र श्रूयमाणो विपर्ययेण क्रमः–पराभिप्रेतक्रमविपरीतक्रमेण सृष्टिनिरूपणक्रम उपपद्यते । अयं भावः–कार्यवर्गे यत्प्रथमं महत् तस्मिन्नेकस्मिन्नेव परंब्रह्म कारणम् । अन्यत्र तु महदादि पूर्वपूर्वमेवोत्तरकार्ये कारणमित्येतन्नोपपद्यते । एतत्क्रमविपर्ययेण साक्षात् परमात्मन एव एतस्मात्प्राणो जायते एतस्मान्मनो जायते इति विना पराभिमतं क्रमं परस्य ब्रह्मणः कार्यमात्रे कारणत्वश्रुतेरिति ॥ १५ ॥

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ २ । ३ । १६ ॥

ननु स्वस्वपूर्वकारणतः उत्तरोत्तरकार्योत्पत्तिरित्ययमेव परम्परया

---

**विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ २ । ३ । १५ ॥**

तुशब्द एवार्थः । अतस्तु–अत एव तत्तच्छरीरकात् परब्रह्मणः सकाशादेव सर्वस्योत्पत्त्यभ्युपगमादेव विपर्ययेण आकाशादिक्रमेण परम्परयैवोत्पत्तिरिति यः पक्षस्ततो विपर्ययेण ब्रह्मणः सकाशादेव सर्वस्योत्पत्तिरिति क्रमः 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इति श्रूयमाणः उपपद्यते । एतस्मादित्यनेन हि सर्वेषां प्राणादीनां पृथिवीपर्यन्तानां साक्षात् परब्रह्मानन्तर्यं स्वरसतो गम्यते ॥ १५ ॥

**अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ २ । ३ । १६ ॥**

ननु 'एतस्माज्जायते' इति श्रुतिरपि 'आत्मन आकाशः संभूतः, आका-

ब्रह्मकारणकत्वक्रमः 'एतस्माज्जायते प्राण' इत्यत्राप्यभिप्रेतः। कथमिदमुच्यते ? प्राणादीनां हि परमात्मन उत्पत्तिरुच्यते। नैवम् । अन्तरा विज्ञानमनसी, अयमर्थः—'खं वायुर्ज्योतिरापः पृथिवी'ति क्रमविशेषः प्रतीयते, अयं च क्रमः 'आत्मन आकाशः सम्भूत आकाशाद्वायुर्वायोरग्निरग्नेरापः अद्भ्यः पृथिवी'ति क्रमानुगुण एव । एवं क्रमविशेषपरोत्तरवाक्यसाहचर्याल्लिङ्गात् यानि विज्ञानानि—इन्द्रियाणि, यच्च मनः, तदुभयम्—अन्तरा—प्राणभूतयोरन्तराले क्रमादुत्पद्यते इत्येतत्परमेव 'प्राणो मनः सर्वेन्द्रियाणि चे'तिवाक्यम् , इति । इमामाशङ्कां प्रतिक्षिपति—इति चेन्नाविशेषादिति । 'एतस्माज्जायत' इत्यस्य प्राणे इव मनइन्द्रिययोः खादिष्वप्यन्वयस्याविशेषात्पारम्पर्येण परमात्मनः खादिहेतुत्वपरमिदं वाक्यमिति नैवोपपद्येत ॥ १६ ॥

ननु—'आकाशाद्वायुर्वायोरग्नि'रित्यत्र आकाशादिशब्दानां लोके आकाशादौ व्युत्पन्नानां तत्तच्छरीरकपरमात्मपरत्वे गौणत्वमापद्येतेति चेत्तत्राह—

## चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तः तद्भावभावित्वात् ॥ २ । ३ । १७ ॥

आकाशादितत्तच्छब्दव्यपदेशः चराचरव्यपाश्रयोऽपि—चराचराव-

---

शाद्वायु'रितिवत् पारम्पर्यपरैव । 'खं वायुः ज्योतिरापः पृथिवी'ति व्यक्तः स एव क्रमः । यान्येतानि भूतानि, यश्च प्राणः, तयोरन्तराले विज्ञानमनसोः—इन्द्रियमनसोः पारम्पर्येण निवेशो विवक्षितः । तल्लिङ्गात्—पारम्पर्यसृष्टिपरभूतसृष्टिवाक्यसहपाठाल्लिङ्गात् । इति चेन्न। 'एतस्माज्जायते' इति प्राणप्रभृतिपृथिव्यन्तानां ब्रह्मण उत्पत्तेरविशेषेण श्रवणात् प्राणस्येवान्येषामपि पृथिव्यन्तानां परब्रह्मणः सकाशात् उत्पत्तिर्ह्यविशेषेण श्रूयते इति पारम्पर्यपरत्वं नास्य वाक्यस्य युज्यते इति यावत् ॥ १६ ॥

ननु—तेजोबन्नादयः शब्दा लोके चराचरव्यपाश्रया दृश्यन्ते। चरमचरं वा वस्तु वाच्यतयाश्रित्यैव ते ते शब्दाः प्रयुज्यन्ते । तेषामेषां तेजःप्रभृतिशब्दानां ब्रह्मपरत्वेन नयनं कथं घटेत । तत्राह—

लम्ब्यपि ब्रह्मण्यभाक्त एव । कस्मात्? तद्भावभावित्वात्—तस्य ब्रह्मणो यो भावः चराचरवस्तुषु भावः सद्भावः अनुप्रवेशलक्षणः, तेन सर्वेषां तत्तन्नामात्मकशब्दानां भावित्वात्—प्रवर्तमानत्वात् । 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी'त्यनया नामरूपव्याकरणश्रुत्या चैतद्गम्यते । शरीरवाचिशब्दानां शरीरिणि प्रवृत्तिस्तु मुख्यैव ॥ १७ ॥

पूर्वपक्षः—

(अ. सं.) ननु वाय्वऽग्न्यबन्नानि जायन्ते पूर्वपूर्वतः ।
श्रुतो हि वायुराकाशाद्वायोरग्निरिति क्रमः ॥ १ ॥
सत्यं किं तेन सर्वत्र साक्षाद्ब्रह्म न कारणम् ।
स्यात्परम्परया सर्वहेतुः कारणकारणम् ॥ २ ॥

---

## चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ २ । ३ । १७ ॥

चराचरव्यपाश्रयस्तु लौकिको व्यपदेशः भाक्तः—भक्तिरेकदेशः—वाच्यैकदेशः, तस्मिन् विश्रान्तो भाक्तः। सर्वेषां चापृथक्सिद्धप्रकारवाचिनां शब्दानां प्रकारिण्येव वृत्तिपर्यवसानात्, शरीरस्य शरीरिणं प्रत्यपृथक्सिद्धप्रकारतया सर्वस्य चराचरस्य परमात्मानं प्रति शरीरतया च तस्यैव तत्तत्पदव्यपदेशपर्यवसानभूमित्वात् । चराचराणां वाच्यैकदेशत्वे स्थिते अर्थतत्त्वस्थितिमजानन्तो लौकिकास्तांस्तान् शब्दान् प्रकारमात्रे प्रयुञ्जते । तदयं व्यपदेशो भाक्तः । सर्वेषामेव पदानां तद्भावभावित्वात् प्रकारिणि यो भावः पर्यवसानं तद्भावित्वात् । यद्वा—अभाक्त इति पदविभागः । लोके चराचराश्रयो यो व्यपदेशः, तेन तस्य ब्रह्मणो व्यपदेशो यः श्रुतौ स तु अभाक्तः—न गौणः किन्तु मुख्य एव । सर्वस्यैवार्थजातस्य तद्भावेन ब्रह्मभावेनैव ब्रह्मात्मकतयैव भावित्वात् । तस्य—परमात्मनो यो भावः अन्तरात्मतया तत्र तत्रावस्थितिः, तेनैव सर्वेषामर्थानां सत्ताया भावित्वात् इति वा । आशयस्तु स एव ॥१७॥

इति प्रदीपे तेजोधिकरणम् ॥ २ ॥

---

सिद्धान्तः—

मैवं साक्षाद्भवेदेव ब्रह्म सर्वत्र कारणम् ।
तत्तद्भूतात्मना ब्रह्म जनयत्युत्तरोत्तरम् ॥ ३ ॥
सङ्कल्पपूर्विका सृष्टिर्न भूतेषूपपद्यते ।
तत्तेज ऐक्षतेत्यादौ श्रुता सृष्टिस्तथाविधा ॥ ४ ॥
क्रमातिलङ्घनं यच्चाप्यत एवोपपद्यते ।
प्राणविज्ञानमनसां खादीनां चाविशेषतः ॥ ५ ॥
एतस्माज्जायत इति श्रूयते ब्रह्मतो जनिः ।
ब्रह्मण्यभाक्तः सर्वोऽपि शब्दस्तद्भावभावतः ॥ ६ ॥

इति भाष्ये तेजोधिकरणम् ॥ २ ॥

---

## नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥ २ । ३ । १८ ॥

वियदादिवज्जीवस्यापि ब्रह्मण उत्पत्तिरस्ति न वेत्येतद्विचार्यते। आह कश्चिदस्तीति, कस्मात्? एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात्, तस्य तदकार्यत्वे प्रतिज्ञानुपपत्तेः, सृष्टेः प्रागेकत्वावधारणाच्च। 'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेतस्मादात्मनः × × × × सर्व एवात्मानो व्युच्चरन्ति' इति व्युच्चरणश्रुतेः 'तोयेन जीवान् विससर्ज भूम्याम्' 'प्रजापतिः प्रजा असृजत' 'सन्मूलाः सोम्येमाः सर्वाः प्रजा' इति जीवानां सृज्यत्वश्रुतेश्च ।

---

ननु—वियदादिव ज्जीवात्माऽपि किमुत्पद्यते? । नेत्याह—

**नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥ २ । ३ । १८ ॥**

आत्मा नोत्पद्यते, कस्मात्? । श्रुतेः—'न जायते म्रियते वे'ति उत्पत्तिनिषेधश्रुतेः । ताभ्यः—'नित्यो नित्यानां चेतनश्चेतनानामेको बहूना' मित्यादिश्रुतिभ्योऽवगम्यमानान्नित्यत्वाच्चात्मनां नोत्पत्तिः संभवति । नित्यभावस्योत्पत्त्ययोगात् । सृज्यत्वश्रुतिस्तु जीवानामभिनवशरीरयोगपरा । विशिष्टवेषेण च ब्रह्मकार्यत्वम् । अत एवैकविज्ञानेन सर्वविज्ञानोपपत्तिः ॥ १८ ॥

इति प्रदीपे आत्माधिकरणम् ॥ ३ ॥

अत्रोच्यते–आत्मा नोत्पद्यते, श्रुतेः–'न जायते म्रियते वा विपश्चित्' इति उत्पत्तिप्रतिषेधश्रवणात् ताभ्यः–'नित्यो नित्यानां चेतनश्चेतनानामेको बहूना'मित्यादिश्रुतिभ्यो नित्यत्वावगमाच्च। ननु ते यदि नित्याः कथमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञा, तेषामपि ब्रह्मकार्यत्वात्। कार्यकारणयोरनन्यत्वात्। ननु नित्यस्य कथं कार्यता? अवस्थान्तरापत्तिमात्रेण कार्यता। धर्मभूतज्ञानसङ्कोचविकासादिलक्षणा चावस्थान्तरापत्तिः। वियदादीनां स्वरूपान्यथाभावः, स्वभावान्यथाभावस्त्वेषाम्। स्वतनुचिदचितोः स्थौल्यसौक्ष्म्याभ्यामवस्थान्तरयोगेन ब्रह्मण एव कार्यकारणभावेऽवस्थिते जीवानां नित्यत्वेनाकार्यत्वशङ्का कथमवतरेत्। परे त्वत्राश्रुतेरिति पदं भित्वाऽर्थं वर्णयन्ति। अनुपपन्नं चैतत्। 'उत्क्रान्तिगत्यागतीना'मित्युत्तरसूत्रे श्रुतेरित्यनुषङ्गस्यानुपपत्तेः। इतस्तदनुषङ्गेणैव हि तस्यार्थो वर्णनीयः। सृष्टिप्रकरणे जीवानां सृज्यत्वाश्रवणादित्यनुपपन्नम्। क्वचिदश्रवणेऽप्यन्यत्र श्रवणात्। श्रवणं च निरूपितमस्माभिः पूर्वपक्षे। ब्रह्मणो नित्यत्वात्तदनन्यत्वाच्च जीवस्य नोत्पत्तिः सम्भाव्यत इति चानुपपन्नम्। सर्वेषामेव तेजःप्रभृतीनां परेषां मते ब्रह्मणोऽनन्यतया नित्यत्वापातात्। 'सर्वं खल्विदं ब्रह्म' 'ब्रह्मैवेदं सर्वमि'त्यादिश्रुतिभिरनन्यत्वं हि सर्वस्य समर्थ्यते तैः। ननु–बाधार्थे सामानाधिकरण्यं तेजःप्रभृतिकस्य न चिदंशस्येति चेत्। जीवानामपि तथैव किन्न स्यात्। बाधार्थे सामानाधिकरण्यं च व्याहतम्। भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिर्हि सामानाधिकरण्यम्। बाधार्थे सामानाधिकरण्यमिति केवलं स्वगोष्ठ्यामेव शोभते ॥ १८ ॥

पूर्वपक्षः–

( अ. स. ) उत्पद्यते किन्नु जीवः किं वा नेति विचार्यते।

अत्राह जायते जीवो ब्रह्मणो वियदादिवत् ॥ १ ॥<br>
अन्यथा ब्रह्मणि ज्ञाते ज्ञातताऽस्य कथं भवेत्।<br>
उत्पत्तिरपि जीवानां श्रूयते च क्वचित् क्वचित् ॥ २ ॥

**सिद्धान्तः–**

अत्रोच्यते न जीवानामुत्पादः श्रुतिसम्मतः ।
श्रुतौ जनिनिषेधेन नित्यत्वश्रवणादपि ॥ ३ ॥
जन्मवादस्तु जीवानां देहयोगेन केवलम् ।
स्वभावस्यान्यथाभावादवस्थान्तरयोगतः ॥ ४ ॥
नित्यत्वेऽपि च कार्यत्वं तेषामपि हि युज्यते ।
सर्गात्प्राक् ज्ञानसङ्कोचाद्विकासात्तदनन्तरम् ॥ ५ ॥
सौक्ष्म्यस्थौल्यदशाभेदविभिन्नचिदचिद्वपुः ।
ब्रह्मैव कारणं कार्यमतः सर्वं समञ्जसम् ॥ ६ ॥

इति भाष्ये आत्माधिकरणम् ॥ ३ ॥

---

## ज्ञोऽत एव ॥ २ । ३ । १९ ॥

आत्मनो नित्यत्वमुपपादितम् । तत्प्रसङ्गात्तस्य स्वरूपं विचार्यते । किमयमात्मा ज्ञानैकस्वरूपः, किं वाऽऽगन्तुकज्ञानगुणकः, किंवा नैसर्गिकज्ञानः । कापिला इव केचिदाचक्षते–चैतन्यमात्रस्वरूपोऽयं न ज्ञानाश्रयः । तथा च श्रुतिः 'विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च' 'यो विज्ञाने तिष्ठन्' 'विज्ञानघन एव' इति । स्मर्यते च ज्ञानमात्रस्वरूपत्वम् 'ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः' इति । अपरे तु नायं ज्ञानस्वरूपः किन्तु आगन्तुकज्ञानगुणकः । ज्ञानस्वरूपत्वे ज्ञातृत्वे वा नैसर्गिके सर्वत्र सर्वदोपलब्धिः स्यात् । सुषुप्तौ चायं ज्ञानशून्य एव ।

---

प्रसङ्गाज्जीवस्वरूपं विशोध्यते—

**ज्ञोऽत एव ॥ २ । ३ । १९ ॥**

अत एव श्रुतेरेव जीवो ज्ञातैव न ज्ञानमात्रम्, नाप्यागन्तुकज्ञानः । तथा च श्रूयते—'एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' 'अथ यो वेदेदं जिघ्राणीति स आत्मा' 'न पश्यो मृत्युं पश्यति' 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' 'जानात्येवायं पुरुषः' 'विज्ञातारमरे केन विजानीयात्' इति ॥ १९ ॥

नहि तदाऽऽत्मानमहमस्मीति जानाति । जाग्रद्दशायामेव तु भवति करणायत्तज्ञानोदयः । श्रूयते च सुषुप्तौ ज्ञानशून्यता 'नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि' इति ।

अत्रोच्यते—अत एव—श्रुतेरेवायमात्मा ज्ञः ज्ञाता, न केवलं ज्ञानमात्रस्वरूपः न वाऽऽगन्तुकज्ञानगुणकः, अपि तु नैसर्गिकज्ञानधर्मा । तथा च श्रूयते—'अथ यो वेदेदं जिघ्राणीति स आत्मा' 'विज्ञातारमरे केन विजानीयात्' 'जानात्येवायं पुरुषः' 'एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' 'एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः' 'न पश्यो मृत्युं पश्यति' 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' इति ॥ १९ ॥

ननु—विभोरात्मनो नित्यस्य ज्ञानस्वभावता चेन्नैसर्गिकी सर्वत्र सर्वदोपलब्धिः स्यात्, अत्राह—

## उत्क्रान्तिगत्यागतीनाम् ॥ २ । ३ । २० ॥

श्रुतेरित्यनुवर्तते । नायमात्मा विभुः, उत्क्रान्तिगत्यागतीनां श्रुतेः । 'तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः' इति जीवस्योत्क्रान्तिः श्रूयते । 'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' 'तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे' इति गत्यागती च श्रूयेते । तदयमणुरेव । नातः सर्वत्र सर्वदोपलब्धिप्रसङ्गावसरः ॥ २० ॥

---

ननु—ज्ञातृत्वं चेदात्मनो नैसर्गिकं तदा तस्य विभुत्वेन सर्वत्र सुखदुःखाद्युपलब्धिप्रसङ्ग इत्यत्राह—

### उत्क्रान्तिगत्यागतीनाम् ॥ २ । ३ । २० ॥

नायं विभुः—उत्क्रान्तेर्गत्यागत्योश्च श्रवणात् । तथा च श्रुतिः—'तेन प्रद्योतेनैष आत्म निष्क्रामति चक्षुषो वा' 'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' 'तस्माल्लोकात्पुनरेत्यस्मै लोकाय' इत्यादिः । विभुत्वं चेदात्मनः उक्तश्रुतीनां विरोधः । अतोऽणुरेवात्मा ॥ २० ॥

## स्वात्मना चोत्तरयोः ॥ २ । ३ । २१ ॥

यद्यप्युत्क्रान्तिः श्रूयमाणा परतः कथञ्चित्कल्पयितुं शक्येत । जीवो विभुरयं शरीरान्नोत्क्रामति, शरीरमेव विनश्यत्सत् वियुज्यते जीवात् तदुत्क्रान्तिरुपचर्यते जीवे इति । तथाऽपि श्रूयमाणयोरुत्तरयोः–गत्यागत्योस्तु निर्वाहः स्वात्मनैव कार्यः । जीवः स्वयमेव परं लोकं गच्छतीमं च लोकं प्रत्यागच्छति यथाकर्मेति अवश्यमभ्युपगन्तव्यम् । श्रूयमाणस्यार्थस्यान्यथा नयनं नैव न्याय्यम् । अतः श्रूयमाणार्थानुरोधादणुत्वमेव जीवस्याश्रयणीयम् ॥ वस्तुतस्तु उत्क्रान्तिरपि निःसरणलक्षणो गतिविशेष एव । 'चक्षुषो मूर्ध्नो वे'ति च श्रूयते । तस्मात्स्वात्मनैवास्या अपि निर्वाहः कार्यः । अथापि पराभिमतिमभ्युपगम्येदमुक्तम् ॥ २१ ॥

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २ । ३ । २२ ॥

ननु जीवो नाणुः–विभुरेव, अतच्छ्रुतेः अणुत्वविरुद्धस्य विभुत्वस्य श्रुतेः । 'योऽयं विज्ञानमयः प्राणेष्वि'ति जीवं प्रस्तुत्य 'स वा एष महानज आत्मा' इति हि श्रूयते इति चेन्न । इतराधिकारात्–इतरस्य परमात्मनोऽधिकारात्–प्रस्तावात् । 'यस्यानुवित्तः प्रतिबुद्ध आत्मे'ति मध्ये परमात्मा हि तत्र प्रस्तुतः । यस्य जीवस्य, अनु-

---

### स्वात्मना चोत्तरयोः ॥ २ । ३ । २१ ॥

उत्क्रान्तेः श्रूयमाणायाः शरीरविश्लेषमात्रपरत्वेन कथमपि निर्वाहेऽपि उत्तरयोः–गत्यागत्योः आत्मनैव स्वरूपत एव क्रियारूपतयैव निर्वाहः कार्यः, नार्थान्तरत्वमाश्रयितुं शक्यते ॥ २१ ॥

### नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २ । ३ । २२ ॥

ननु आत्मा नाणुः, अतच्छ्रुतेः—अणुत्वविरुद्धस्य विभुत्वस्य श्रुतेः । तथा हि श्रुतिः–'स वा एष महानज आत्मा' इति । इति चेन्न । इतराधिकारात्–सा हि श्रुतिर्जीवात्मनोऽतिरिक्तं परमात्मानमधिकृत्य प्रवृत्ता ॥ २२ ॥

वित्तः—उपास्यः प्राप्यो वा प्रतिबुद्ध आत्मा—प्राज्ञः आत्मा परमात्मा इति तु तदर्थः ॥ २२ ॥

## स्वशब्दोन्मानाभ्यां च ॥ २ । ३ । २३ ॥

स्वशब्दाच्च—'न केवलं श्रूयमाणार्थान्यथानुपपत्त्या जीवस्याणुत्वं कल्प्यते । किन्त्वणुत्वावबोधकः शब्दोऽप्यस्ति 'एषोऽणुरात्मा चेतसा वेदितव्य' इति । तथोन्मानाच्च—उद्धृत्य निदर्शकमेकं वस्तु मानं श्रूयमाणमुन्मानमुच्यते । तद्यथा—'वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवःस विज्ञेयः' इति, 'आराग्रमात्रो ह्यवरोऽपि दृष्ट' इति च ॥२३॥

ननु—यद्ययं जीवोऽणुपरिमाणः, कथं सर्वाङ्गव्यापिसुखाद्यनुभवः । तत्राह—

## अविरोधश्चन्दनवत् ॥ २ । ३ । २४ ॥

अणुत्वेऽपि सर्वाङ्गेषु सुखादिप्रकाशे न विरोधः, चन्दनवत् । यथा चन्दनबिन्दुरेकाङ्गैकदेशे स्थितोऽपि सर्वाङ्गे सुखसंवेदनं जनयति तथा ॥ २४ ॥

---

### स्वशब्दोन्मानाभ्यां च ॥ २ । ३ । २३ ॥

अस्ति च श्रुतौ स्वशब्दः—अणुत्वावबोधकः शब्दः—न लिङ्गमात्रमुक्त्वान्यादि, कण्ठरवेणाणुत्वं श्रूयते च । उन्मानं च—निदर्शनपूर्वकं मानविशेषनिरूपणं च 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' इति ॥ २३ ॥

ननु जीवश्चेदणुः, कथं शरीरे सर्वाङ्गेषु सुखदुःखोपलम्भः । तत्राह—

### अविरोधश्चन्दनवत् ॥ २ । ३ । २४ ॥

सर्वाङ्गीणसुखदुःखोपलब्धेर्नाणुत्वेऽपि कश्चन विरोधः । तत्र निदर्शनं चन्दनम् । शरीरप्रदेशे यथा कचिच्चन्दनपङ्कोपलेपमात्रेण परितः शरीरे शैत्यमनुभूयते । तथा जीवः हृदयैकदेशे सन्नपि स्वज्ञानप्रभया सर्वाङ्गेषु सुखदुःखाद्युपलभते ॥ २४ ॥

जीवस्याणोः शरीरेऽवयवविशेषे स्थितिं शङ्कापरिहारमुखेनाह—

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २ । ३ । २५ ॥

ननु चन्दनबिन्दोः शरीरैकदेशेऽवस्थितेः सर्वाङ्गव्यापिसुखाधायकत्वमस्ति । अस्य तु नेति चेन्न । अभ्युपगम्यते ह्यस्यापि हृद्यवस्थितिः । तथा हि श्रूयते 'हृदि ह्ययमात्मा' 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' इति ॥ २५ ॥

परमतेनोक्तं हरिचन्दनवदिति । अथ स्वमतेनाह—

## गुणाद्वाऽऽलोकवत् ॥ २ । ३ । २६ ॥

एकदेशस्थितस्यापि जीवस्य सर्वाङ्गव्यापिसुखादिसंवेदना गुणाद्वा–स्वधर्मभूतज्ञानलक्षणगुणाद्वा भवति । वाशब्दः पूर्वोक्तं मतं व्यावर्तयति । तत्र निदर्शनम्, आलोकवदिति । मणिप्रदीपप्रभृतयो यथा स्वप्रभया परितो व्याप्य प्रकाशयन्ति तथाऽयमपि जीवः शरीरैकदेशे हृदि स्थितः स्वीयज्ञानप्रभया देहं सर्वतो व्याप्य प्रकाशयति ॥ २६ ॥

---

**अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २।३।२५ ॥**

ननु—चन्दनबिन्दोरस्ति हृदि स्थानविशेषेऽवस्थितिः, यतः परितः प्रसर्पति तच्छैत्यमिति चेत् जीवस्यापि सा हृदि अवस्थितिरभ्युपगतेवेति न विरोधः ॥ २५ ॥

निदर्शनान्तरेणाविरोधमुपपादयति—

**गुणाद्वाऽऽलोकवत् ॥ २ । ३ । २६ ॥**

यथा सूर्यः स्वीयालोकेन—स्वकिरणप्रसरणबलेन कृत्स्नं लोकं प्रकाशयति तथा जीवः ज्ञानमयो हृदयैकदेशेऽवस्थितोऽपि स्वगुणभूतज्ञानप्रभया आपादतलमस्तकं व्याप्य प्रकाशयति ॥ २६ ॥

ननु कथं गुणाद्वेत्युच्यते, ज्ञानं त्वात्मनः स्वरूपम्, न तु तस्य गुणः, तत्राह—

## व्यतिरेको गन्धवत् तथा च दर्शयति ॥ २ । ३ । २७ ॥

यथा गन्धः पृथिव्या धर्मः धर्मिणः पृथिवीतो व्यतिरिक्तः, तथा ज्ञातुरात्मनो धर्मभूतं जानाम्यहमित्यनुभवसिद्धं ज्ञानं धर्मिणस्तस्माद्व्यतिरिक्तमेव । तथा दर्शयति च श्रुतिः—'जानात्येवायं पुरुष' इति । व्यतिरेको गन्धवदिति निदर्शनोपन्यासाद्गुणगुणिनोरभेदवादो भेदाभेदवादश्च सूत्रकृदनभिप्रेत इति गम्यते ।

इदमिह बोध्यम्—वियदादीनामपि ब्रह्मण उत्पत्तिं निरूपयता भगवता बादरायणेन प्रसङ्गाज्जीवानामुत्पत्तिशङ्कानिराकरणेन नित्यत्वं समर्थितम् । तदेवं जीवात्मस्वरूपचिन्तायां प्रसक्तायां तत्र यो विशेषः कापिलात्स चावश्यं निरूपणीयः । ब्रह्मणो जगत्कारणत्वसमर्थनावसरे 'ईक्षतेर्नाशब्द'मित्यादिना प्रधानकारणवादः प्राधान्येन प्रतिक्षिप्तः। तदौपनिषदं मतं समर्थयन् एष बादरायणः साक्षात्प्रतिपक्षितया कापिलं मतमभिप्रैति । प्रकृतिचिन्तायामिव पुरुषचिन्तायामपि महद्वैपरीत्यम् । प्रतिक्षेत्रं पुरुषभेदं वदन्नपि तं विभुं चैतन्यमात्रस्वरूपं ज्ञातृत्वादिरहितं, जडाया बुद्धेरेव तद्धर्मं च स्वीकरोति । तदस्य पक्षे मोक्षस्य पुरुषार्थत्वं बन्धमोक्षस्वरूपनिरूपणं च दुर्निरूपम् । तस्मात् जीवात्मचिन्तायां प्रसक्तायामस्यां तस्य ज्ञातृत्वादि समर्थितं भगवता बादरायणेनेति ॥२७॥

---

ननु—न ज्ञानं तस्य गुणः, ज्ञानमेव तु सः, तत् कथमुच्यते गुणाद्वाऽऽलोकवदिति । तत्राह—

**व्यतिरेको गन्धवत् तथा च दर्शयति॥ २ । ३ । २७ ॥**

व्यतिरेकः—आश्रयाश्रयिभावेन पृथिव्या व्यतिरेको गन्धस्येव ज्ञातुरात्मनो व्यतिरेकः—भेदः ज्ञानस्यास्त्येव । तथा च श्रुतिः—'जानात्येवायं पुरुषः' इति । एवकारेण ज्ञानमात्रत्वं प्रतिषिध्यते ॥ २७ ॥

## पृथगुपदेशात् ॥ २ । ३ । २८ ॥

'नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति विज्ञातुर्धर्मिणो विज्ञानं धर्म इति धर्मधर्मिणोः पृथक् निर्देशात् ज्ञातैवायं जीवात्मेति सिद्धम् । 'विपरिलोपो न विद्यते' इत्यनेन सुषुप्तौ मोक्षे च ज्ञानस्यात्यन्तिकोच्छेदपक्षः प्रतिक्षिप्तः ॥ २८ ॥

ननु—'विज्ञानं यज्ञं तनुते' इत्यादिषु ज्ञानमिति निर्देशः कथमुपपद्यते । तत्राह—

## तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २ । ३ । २९ ॥

तदिति ज्ञानमुच्यते, ज्ञानगुणसारत्वात् ज्ञानशब्देन व्यपदेशः, गुणान्तरापेक्षया ज्ञानमेवास्य सारभूतम्—प्रधानमसाधारणो धर्मः । अतः तेनैवास्य निर्देशो विज्ञानमिति । यथा प्राज्ञः परमात्माऽऽनन्दगुणसारत्वात् 'आनन्दो ब्रह्मे'त्यानन्दशब्देन निर्दिश्यते, ज्ञानगुणसारत्वाद्वा 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति ज्ञानशब्देन निर्दिश्यते । तथाऽयमपि । न ज्ञानमात्रत्वात् ॥ २९ ॥

---

### पृथगुपदेशात् ॥ २ । ३ । २८ ॥

ज्ञानं धर्मभूतं ज्ञातुः पृथक्त्वे नान्यत्वेन व्यपदिश्यते—'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति । विज्ञातुर्धर्मिणो या विज्ञातिः—विज्ञानं धर्मः, तस्य विपरिलोपः आत्यन्तिकोच्छेदो न वर्तत इति तदर्थः ॥ २८ ॥

ननु ज्ञातृत्वे आत्मनोभ्युपगम्यमाने 'यो विज्ञाने तिष्ठन्नि'ति श्रुतेर्व्याकोपः । विज्ञानानतिरिक्ततां हि सा श्रुतिर्दर्शयति । तत्राह—

### तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २ । ३ । २९ ॥

ज्ञानगुणसारत्वादात्मनो ज्ञानमिति व्यपदेशः । ज्ञानं चात्मनः स्वरूपनिरूपकतया प्रधानम् । यथा प्राज्ञस्य—सर्वज्ञस्य परमात्मनः 'सत्यं ज्ञानमनन्तं ब्रह्मेति ज्ञानशब्देन निर्देशः ॥ २९ ॥

ननु—ज्ञानं भवतु सारः, तथाऽपि सुषुप्तौ मुक्तौ चाननुवर्तमानतया तस्याऽऽगन्तुकत्वेन न तेनास्य व्यपदेशो युज्यते इत्याशङ्कायामाह—

## यावदात्मभावित्वाच्च न दोषस्त-द्दर्शनात् ॥ २ । ३ । ३० ॥

यावदात्मभावित्वाच्च न दोषः, ज्ञानमस्य नागन्तुको गुणः, अपि तु यावदात्मभावि, विना ज्ञानं नात्मनः सत्ता, सुषुप्तौ मोक्षे वा सदैवानस्तमितज्ञानस्वभावः । तत्तेन ज्ञानशब्देन निर्देशे न कश्चिद्दोषः । तद्दर्शनात् । यावदात्मभाविधर्मेणैव धर्मिणो निर्देशो हि लोके दृष्टः, यथा गोत्वादिना यावदात्मभाविना खण्डमुण्डादयो हि निर्दिश्यन्ते गौरयमिति । गवादिशब्दाश्च गोत्वादिजातिवाचकाः । अत्र चकारात् स्वयम्प्रकाशैकस्वरूपतया च विज्ञानशब्देन निर्देशो युज्यत इत्येतत् समुच्चीयते ॥ ३० ॥

ज्ञानं चेदस्य यावदात्मभावि सुषुप्तौ तत्कुतो न प्रकाशते । तत्राह—

## पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्ति-योगात् ॥ २ । ३ । ३१ ॥

अस्त्येव सुषुप्तावपि ज्ञानमात्मनः । परमनभिव्यक्तं तत् । अभि-

---

**यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ २ । ३ । ३० ॥**

ज्ञानं चात्मनो यावदात्मभावी धर्मः, न कादाचित्कम्, अतस्तद्वाचिना शब्देन तस्य धर्मिणो व्यपदेशे न दोषः, तथा च लोके दर्शनात् । गोत्वजातिवाचिना गोशब्देन धर्मी खण्डादिर्हि व्यपदिश्यते, गोत्वं च खण्डादेः स्वरूपानुबन्धी धर्मः । चकारात् ज्ञानस्यैव ज्ञातुः स्वरूपस्यापि स्वयम्प्रकाशत्वात् ज्ञानव्यपदेशे न दोष इति गम्यते ॥ ३० ॥

ननु—ज्ञानं चेत् स्वरूपानुबन्धी धर्मः सुषुप्तौ कुतो न प्रकाशते । तत्राह—

**पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ २ । ३ । ३१ ॥**

सत एवास्य ज्ञानाख्यधर्मस्य जाग्रद्दशायामभिव्यक्तियोगमात्रम्, न तावता सुषुप्तावसत्ता । पुंस्त्वं यथा युवावस्थायामभिव्यज्यते, अन्यदा तु अनभि-

व्यक्तिश्चाहमिदं जानामीति । सा चेन्द्रियविषयसम्प्रयोगायत्ता । सत एवास्यानभिव्यक्तस्य जाग्रद्दशायामभिव्यक्तिः । यथा पुंस्त्वं-सप्तमो धातुः बाल्येऽप्यस्त्येव शरीरे, परमनभिव्यक्तम्, यौवने त्वभिव्यज्यते, तथा ज्ञानमपि ॥ ३१ ॥

## नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥ २ । ३ । ३२ ॥

ज्ञप्तिमात्रमेवात्मा विभुश्चायमिति पक्षे दूषणमुच्यते । अन्यथा-आत्मनोऽणुत्वानभ्युपगमे ज्ञातृत्वानभ्युपगमे ज्ञप्तिमात्रस्वरूपत्वे विभुत्वे चाभ्युपगम्यमाने नित्यमेवात्मनः सर्वत्रोपलब्ध्यनुपलब्धी स्याताम्, अन्यतरनियमो वा स्यात् । एतदुक्तं भवति—विभुत्वात् ज्ञप्तिमात्रस्वरूपस्य तस्यैव तदुपलब्धौ हेतुत्वे सर्वत्र सर्वदा तदुपलब्धिरेव स्यात्, सर्वत्र सर्वदा नोपलभ्यत इत्यनुपलम्भे चेत्तस्य हेतुता तदा नैवोपलभ्येत, उपलम्भेऽनुपलम्भे च हेतुता चेत् सर्वत्र सर्वदोपलब्धिरनुपलब्धिश्च स्याताम् ॥ ३२ ॥

---

व्यक्तम् । एवं बाह्यघटादिविषयोपसंश्लेषादवभासते ज्ञानम्, सुषुप्तौ तदभावेन न प्रकाशते ॥ ३१ ॥

### नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा ॥ २ । ३ । ३२ ॥

आत्मनो ज्ञानमात्रत्वे विभुत्वे च नित्यमेवोपलब्धिरनुपलब्धिश्चेत्युभयमापद्येत । अन्यतरनियमो वा स्यात् । ज्ञानमात्रस्वरूपस्य विभोश्च जातु क्वचिदेवोपलब्धिर्नान्यत्रेति कथं वक्तुं शक्येत । उपलम्भे हेतोर्विज्ञानात्मनो विभोः सर्वदा सर्वत्र वर्तमानत्वात् । अनुपलब्धावपि तस्यैव चेत् हेतुत्वं अनुपलम्भहेतोरपि सर्वदा सर्वत्र वर्तमानत्वेनोपलम्भानुपलम्भयोर्यौगपद्यं नियमेन स्यात् । अन्यतरमात्रहेतुत्वे तस्येष्यमाणे नियतमन्यतरप्रसङ्गः ॥ ३२ ॥

इति प्रदीपे ज्ञाधिकरणम् ॥ ४ ॥

(अ. सं.) आत्मा निसर्गतो ज्ञाता श्रुतिषु श्रूयते यतः ।
न चायं विभुरुत्क्रान्तेर्गत्यागत्योरपि श्रुतेः ॥ १ ॥
गत्यागत्युपपत्तिस्तु विभुत्वे तस्य दुर्घटा ।
यन्महानज आत्मेति श्रुतिः सा चेतरं प्रति ॥ २ ॥
एषोऽणुरात्मेत्यणुता श्रूयतेऽस्योन्मितिस्तथा ।
वालाग्रशतभागस्येत्याद्युदाहरणश्रुतेः ॥ ३ ॥
अप्यणोरस्य जीवस्य शरीरान्तः सतः क्वचित् ।
सर्वाङ्गचेतयितृता चन्दनस्येव युज्यते ॥ ४ ॥
मणिद्युमणिवद्वाऽयमेकदेशस्थितोऽपि सन् ।
स्वज्ञानप्रभया देहं सर्वतो व्याप्य वर्तते ॥ ५ ॥
पृथिव्या इव गन्धादिर्ज्ञातुर्ज्ञानं गुणोऽस्य तु ।
जानात्येवायं पुरुषः इति हि श्रूयते श्रुतिः ॥ ६ ॥
विज्ञातुर्न च विज्ञातेर्विलोपो जातु विद्यते ।
विज्ञानगुणसारत्वात् क्वचित् विज्ञानशब्दतः ॥ ७ ॥
व्यपदेशः श्रूयमाणो विज्ञातुरपि युज्यते ।
यथाऽऽनन्दनिधौ प्राज्ञे आनन्द इति युज्यते ॥ ८ ॥
ज्ञानमात्रं विभुश्चात्मेत्येतन्नैव तथा सति ।
सर्वत्र चोपलभ्येत नोपलभ्येत वा सदा ॥ ९ ॥
इति भाष्ये ज्ञाधिकरणम् ॥ ४ ॥

---

## कर्ता शास्त्रार्थवत्त्वात् ॥ २ । ३ । ३३ ॥

ज्ञातृत्वं समर्थितम्, अथ कर्तृत्वं समर्थ्यते । आत्मनः किमकर्तृत्वं स्वभावः, उत कर्तृत्वम् । अत्राह–आत्मा नैव कर्ता, श्रुत्यैव हि प्रति-

---

आत्मनो ज्ञातृत्वं प्रसाध्य कर्तृत्वं समर्थयति—

**कर्ता शास्त्रार्थवत्त्वात् ॥ २ । ३ । ३३ ॥**

कर्ता चायं भवति कस्मात्? शास्त्रार्थवत्त्वात्–विधिनिषेधलक्षणशास्त्रार्थवत्त्वात् । अधिकारितयाऽस्य विधिनिषेधयोरन्वयात् । अकर्तृत्वे विधिनिषेध-

षिध्यते कर्तृत्वम् 'हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्। उभौ तौ न विजानीतो नायं हन्ति न हन्यते' इति। प्रकृतिरेव तु गुणमयी कर्त्री, पुरुषे तत्सङ्गात् कर्तृत्वस्य भवति भ्रमः अहं करोमीति। आह भगवानपि—'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते।' इति।

अत्रोच्यते—कर्तैवायमात्मा, कस्मात्? शास्त्रार्थवत्त्वात्—पुरुषमधिकृत्यैव हि शास्त्रं प्रवर्तते। अकर्तृत्वे तस्य शास्त्रस्यार्थवत्त्वं हीयेत। शास्त्रं हि फलविशेषार्थिनं तत्साधनावबोधनद्वारेण पुरुषं प्रवर्तयति तत्तत्साधनेषु। शासनाच्छास्त्रम्—इदं कुरु इदं मा कुर्विति। आत्मनश्चेदकर्तृत्वं कं शास्ति, तस्मात्कर्तैवायमात्मा। हन्ता चेदिति श्रुतिस्तु आत्मनो नित्यतया हननकर्मत्वानन्वयात् अयं मया हतः अहमेनं हन्मीत्येष भ्रम इत्यात्मनित्यत्वमवबोधयितुं प्रवृत्ता न कर्तृत्वप्रतिषेधाय। 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वश' इत्येतत्तु न कर्तृत्वमत्यन्तं प्रतिषेधति। किन्तु यद्येष न कर्ता तर्हि कः कर्ता? नहि जानात्यन्यः करोत्यन्य इत्युपपद्येत, न चाचेतनो ज्ञातुं प्रभवति, तदात्मनः कर्तृत्वसामर्थ्यवतोऽपि पुण्यपापादिविषमकर्मणि कर्तृत्वं न

---

शास्त्रयोरनुत्थितिः। 'स्वर्गकामो यजेत' 'उपासीत' इत्यादयो हि विधयः तत्तत्क्रियासु पुरुषं प्रवर्तयन्ति। तस्य चेत् कर्तृत्वं न स्यात् कथं शास्त्रमर्थवत् स्यात्। शास्त्रं च पुरुषं तत्तत्फलकामनावन्तं तेषु तेषु फलेषु साधनमवगमयत् प्रवर्तयति। अनेन यो ज्ञाता स कर्तेति वस्तुतत्त्वमवगम्यते। जडे कर्तृत्वमजडे चाकर्तृत्वमभ्युपगच्छतां शास्त्रं व्यर्थमापद्येतेति। 'हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्। उभौ तौ न विजानीतो नायं हन्ति न हन्यते' इत्यादीनि तु वचनानि आत्मनोऽविनाशित्वमभिप्रेत्य प्रवृत्तानि। स्वयं कर्तृत्वशक्तिमानयं जातु स्वानुकूलं जातु स्वप्रतिकूलं करोति इतीदं वैषम्यं तु पूर्वपूर्ववासनाकृतं, तत्र च हेतुर्गुणमयप्रकृतिसंसर्ग इत्यभिप्रेत्य प्रवृत्तं 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। अहङ्कारविमूढात्मा कर्ताहमिति मन्यते' इति॥ ३३॥

नैसर्गिकम्, गुणकार्यं तु तत् इत्येव बोधयति । अत एव 'अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् । विविधा च पृथक् चेष्टा दैवं चैवात्र पञ्चम'मिति एकस्य कर्मणो निष्पत्तौ अधिष्ठानादिपञ्चकस्य कारणत्वमुक्त्वा 'तत्रैवं सति कर्तारमात्मानं केवलं तु यः' इत्यनेनाविज्ञायाधिष्ठानसापेक्षतां केवलमात्मन एव कर्तृत्वं यदभिमनुते स भ्रम इत्युच्यते । 'तथा कर्तेति' पुरुषस्य कर्तृत्वेनैव निर्देशः कर्तृत्वमात्मनो नैसर्गिकमवगमयति ॥ ३३ ॥

## उपादानाद्विहारोपदेशाच्च ॥ २ । ३ । ३४ ॥

'यथा महाराज' इत्युपक्रम्य 'एवमेवैष एतान् प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते' इति प्राणानामुपादानं यथाकामं विहरणं च श्रूयमाणं कर्तृत्वमात्मनो गमयति । अकर्तुस्तयोरसम्भवात् ॥३४॥

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः॥२।३।३५॥

'विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च' इति यज्ञादिक्रियायां कर्तृत्वव्यपदेशाच्च कर्तैवात्मा । विज्ञानशब्दस्य बुद्धिपरत्वे

---

### उपादानाद्विहारोपदेशाच्च ॥ २ । ३ । ३४ ॥

प्राणोपादानश्रवणात् विहरणोपदेशाच्चात्मनः कर्तृत्वं सिध्यति । 'स यथा महाराज' इत्युपक्रम्य श्रूयते 'एवमेवैष प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते' इति प्राणानामुपादानं यथाकामं शरीरान्तर्विहरणं च । तदिदमुभयमकर्तृत्वे नोपपद्यते इति ॥ ३४ ॥

### व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ २ । ३ । ३५ ॥

'विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च' इति यज्ञादिक्रियासु कर्तृत्वेन व्यपदेशाच्चात्मा कर्तैव । ननु—विज्ञानमित्ययं शब्दो बुद्धिवाची, अतो नात्मनः कर्तृत्वमत्रोच्यते इति चेत्तथा सति निर्देशविपर्ययः स्यात्—विज्ञानेन यज्ञं तनुते इति तृतीयान्तनिर्देशः प्रसज्यते । श्रूयते च विज्ञानशब्दस्य बुद्धिपरत्वे 'एतेषां प्राणानां विज्ञानेन विज्ञानमादाये'ति तृतीयान्तो निर्देशः ॥ ३५ ॥

बुद्धेः करणत्वेन 'विज्ञानेन यज्ञं तनुत' इति निर्देशविपर्ययः स्यात् । तृतीयान्तनिर्देशेन भाव्यमिति यावत् ॥ ३५ ॥

## उपलब्धिवदनियमः ॥ २ । ३ । ३६ ॥

प्रकृतेः कर्तृत्वे आत्मनां च विभुत्वाभ्युपगमे तत्संयोगस्य सर्वसाधारण्येन सर्वेषां कर्म सर्वेषां फलाय स्यात्, तस्मात्तत्पक्षे उपलब्धौ योऽनियमः प्रागुपपादितः कर्तृत्वेऽप्ययमनियमः स्यात् ॥ ३६ ॥

## शक्तिविपर्ययात् ॥ २ । ३ । ३७ ॥

यदि प्रकृतिः कर्त्री तर्हि सैव भोक्त्री स्यात्, तथा च शक्तेः-भोक्तृत्वशक्तेर्विपर्ययः स्यात्, पुरुषस्य भोक्तृत्वाभ्युपगमो हीयेतेति यावत् ॥३७॥

## समाध्यभावाच्च ॥ २ । ३ । ३८ ॥

प्रकृतेश्चेत्कर्तृत्वं समाधौ कर्तृत्वमपि तस्या वक्तव्यम् । प्रकृतेरन्योऽहमस्मीति च सततानुध्यानलक्षणसमाधौ प्रकृतेः कर्तृत्वं न घटते । तथा च समाध्यभावप्रसङ्गः ॥ ३८ ॥

---

### उपलब्धिवदनियमः ॥ २ । ३ । ३६ ॥

आत्मनो विभुत्वे उपलब्धिवत्—उपलब्धाविव प्रकृतेः कर्तृत्वेऽभ्युपगम्यमाने भोक्तृत्वेऽनियमः प्रसजेत् । प्रकृतेर्विभुत्वेन कर्त्र्याः प्रकृत्याः सर्वपुरुषसाधारण्येन फलभोक्तृत्वे पुरुषस्य नियमो न घटेत ॥ ३६ ॥

### शक्तिविपर्ययात् ॥ २ । ३ । ३७ ॥

कर्तृशक्तिः प्रकृतौ भोक्तृशक्तिः पुरुषे इति च हन्त विपर्ययः । न ह्यन्यः कर्ता भोक्ता चान्यः । तदिदं न घटेत । अभ्युपगम्यते च 'पुरुषोऽस्ति भोक्तृभावा'दिति । तथा सति कर्तृभावोऽपि तस्यैवाभ्युपगन्तव्यः ॥ ३७ ॥

### समाध्यभावाच्च ॥ २ । ३ । ३८ ॥

प्रकृतेः कर्तृत्वे अपवर्गसाधनभूतसमाधेरसंभवश्च । समाधिर्हि प्रकृतेरन्योऽस्मीति भावनं भवदभ्युपगतम् । तत्र कर्तृत्वं प्रकृतेः कथं स्यात् । तथा च सिद्धं पुरुषस्यैव ज्ञातृत्वं कर्तृत्वं भोक्तृत्वं चेति ॥ ३८ ॥

## यथा च तक्षोभयथा ॥ २ । ३ । ३९ ॥

यथा तक्षा वास्यादिसन्निधानेऽपि यदेच्छति तदा करोति यदा नेच्छति तदा न करोति तथाऽऽत्मनः कर्तृत्वाभ्युपगमे उभयथा—यदेच्छति तदा करोति यदा नेच्छति तदा न करोति इत्येतदुपपद्यते। प्रकृतेः कर्तृत्वे तन्नोपपद्यते, इच्छायाः पुरुषधर्मत्वात् ॥ ३९ ॥

(अ. स.) आत्मैव कर्ता न गुणाः शास्त्रानर्थक्यमन्यथा।
शास्त्रे विधिनिषेधौ हि भोक्तारमधिकृत्य वै ॥ १ ॥
जडस्य न च भोक्तृत्वं जडं तत्त्रिगुणात्मकम्।
प्राणादानं वपुष्यस्य विहारश्चोपदिश्यते ॥ २ ॥
विज्ञानं तनुते यज्ञमिति यज्ञे च कर्तृता।
विज्ञातैव तु विज्ञानशब्देन प्रतिपाद्यते ॥ ३ ॥
बुद्धेस्तु करणत्वेन विभक्तौ स्याद्विपर्ययः।
श्रुतौ विज्ञानशब्देन बुद्धिश्चेद्व्यपदिश्यते ॥ ४ ॥
प्रधानं यदि कर्तृ स्यात् स्यात् भोगेऽनियमस्तदा।
यत् तैरभिमतं तावत् विभुत्वं पुंप्रधानयोः ॥ ५ ॥
किं च स्यात् तस्य कर्तृत्वे भोक्तृशक्तेर्विपर्ययः।
भोक्तृभावादस्ति पुमानिति स्याद् व्याहतं वचः ॥ ६ ॥
समाधौ किं च कर्तृत्वं प्रकृतेर्नोपपद्यते।
प्रकृतेरहमन्योस्मीत्येवं सा नैव हि स्मरेत् ॥ ७ ॥

---

ननु पुरुषस्य कर्तृत्वे तस्य नित्यत्वेन सततं किमपि कुर्वन्नेव तिष्ठेत्। तत्राह—

### यथा च तक्षोभयथा ॥ २ । ३ । ३९ ॥

तक्षणे समर्थोऽपि तक्षा इच्छायां करोति असत्यामिच्छायां न करोति। लोके प्रसिद्धमेतत्। एवमेव पुरुषोऽयं उभयथाऽपि इच्छन् कुर्यादनिच्छन् न कुर्यादपि। तदिदमुभयविधमवस्थानं चैतन्यशक्तियुक्ते पुरुषे कर्तरि सूपपन्नम् ॥ ३९ ॥

इति प्रदीपे कर्त्रधिकरणम् ॥ ५ ॥

कर्तृत्वं न प्रसज्येत सदा, तच्छक्तिमात्रतः ।
इच्छाव्यपेक्षा हि कृतिः जातु तक्षाऽपि निष्क्रियः ॥ ८ ॥

इति भाष्ये कर्तृत्वाधिकरणम् ॥ ५ ॥

## परात्तु तच्छ्रुतेः ॥ २ । ३ । ४० ॥

तदिदं कर्तृत्वं किं स्वायत्तमुत परायत्तमिति विचार्यते । अत्राह—स्वायत्तमेव । अन्यथा विधिनिषेधवैयर्थ्येन शास्त्रानर्थक्यप्रसङ्गात् । न हि परेण नियोज्यमानो विधिनिषेधवश्यो भवेत् । अत्रोच्यते—जीवात्मनः कर्तृत्वं परात्तु—परमात्मनस्तु नास्य स्वतन्त्रकर्तृत्वम् । सहि परमात्माऽन्तः प्रविष्टो नियन्ता । 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमयति' 'अन्तः प्रविष्टः शास्ता जनाना'मिति हि श्रूयते ॥ ४० ॥

ननु यदि परायत्तं कर्तृत्वं तर्हि विधिनिषेधवैयर्थ्यम्, तत्राह—

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ २ । ३ । ४१ ॥

पूर्वपूर्वकर्मानुगुणा भवति प्रथममिच्छा जीवस्य, अथ मयेदं कर्तव्यमित्यध्यवसायलक्षणः प्रथमः प्रयत्नो भवति । स च प्रयत्नः

---

**परात्तु तच्छ्रुतेः ॥ २ । ३ । ४० ॥**

अयमत्र विशेषः—यो जानाति इच्छति च स एव कर्तुं प्रभवति । अथाप्यस्य जीवस्य कर्तृत्वं परात्—यः परः सर्वान्तरात्मा परमपुरुषः तस्मात्, तदायत्तमिति यावत् । स ह्यन्तःप्रविश्य नियमयति । समर्थोऽप्येष तेनाहितवीर्यः कर्म कर्तुं प्रभवति ॥ ४० ॥

नन्वेवं सति पराधीनोऽयं विधिनिषेधयोः कथं पात्रं भवेत् । शास्त्रं चैनमनुशास्ति इदं कुरु इदं मा कुरु इति । अत्राह—

**कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ २ । ३ । ४१ ॥**

न बलीवर्दमिवाकृतप्रयत्नमेनं परः प्रवर्तयति किन्तु कृतप्रयत्नापेक्षस्तु—सर्गारम्भे करणकलेवरयोगसमनन्तरं पुरुषोऽयं पूर्वपूर्ववासनावशगः कचित्

आक्रियानिष्पत्ति प्रवहन्ननुवर्तते । तत्रेच्छा तस्यैव, तेन कृतं तं प्रयत्नमपेक्ष्य परमेश्वर उत्तरोत्तरप्रवृत्त्यादौ भवति कारणमनुमतिदानेन। अनुमतिश्च क्वचिदप्रतिषेधमात्ररूपा । प्रतिषेधसमर्थस्याप्यप्रतिषेधो हेतुत्व एव पर्यवस्यति। ज्ञानेन्द्रियकर्मेन्द्रियादयोऽपि एतदाहितशक्तय एव चेष्टन्ते। तस्मादिच्छायां प्रथमप्रयत्ने चास्य स्वातन्त्र्यात् विधिनिषेधवानेष भवतीति न शास्त्रवैयर्थ्यम्। इच्छन् यतमानोऽपि यथासमीहितं कर्म कर्तुमन्तर्याम्याहितशक्तिक एव प्रभवतीति परायत्तं कर्तृत्वम्। ननु द्वितीयादिप्रवृत्तौ परमात्मनोऽप्रतिषेधोऽनुज्ञा वा तस्य वैषम्यनैर्घृण्ये आवहति। मैवम्। प्रथमप्रवृत्तिफलदानरूपत्वात्तस्य न विरोधः। 'एष ह्येव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति एष एवासाधुकर्म कारयति तं यमधो निनीषति' इति श्रुतिस्तु अत्यन्तानुकूलप्रतिकूलविषया । अत्यन्तानुकूला दैवीं सम्पदमभिजाताः, अत्यन्तप्रतिकूलाश्चासुरीं सम्पदमभिजाताः ॥ ४१ ॥

---

प्रयतते, नैसर्गिको ह्यस्य चैतन्ययोगः। ततश्चाऽऽसमीहितसिद्धि प्रयत्नपरंपराऽनुवर्तत एव, पूर्ववासनावशेन कृतं प्रयत्नमनु द्वितीयादिप्रवृत्तिषु सोऽयमन्तर्यामी भवति हेतुः। विहितप्रतिषिद्धयोरवैयर्थ्यात् अनुग्रहनिग्रहशास्त्रावैयर्थ्याच्चैवमेषितव्यम् । **अयमाशयः**—वस्तुमात्रमन्तर्यामिणाऽऽहितवीर्यमेव स्वस्वकार्ये प्रभवति। तदेतत् कार्यसामान्ये हेतुत्वं कालादेरिव साधारणम्। कालस्याप्येतदाहितशक्तिकतया ततोऽस्य विशेषः। पूर्वपूर्ववासनानुगुणमिच्छति पुरुषः प्रयतते च। तत्रेश्वरः प्रथमप्रवृत्तावुपेक्षते, द्वितीयादिप्रवृत्तिषु भवत्यनुमन्ता, अतश्च पुरुषाणां विधिनिषेधवश्यता फलभोक्तृत्वं चोपपद्यते। कर्तृत्वं परायत्तमित्येतदप्युपपन्नतरम् । अधोनिनीषया असाधुकर्मसु प्रवर्तयितृत्वं उन्निनीषया साधुकर्मसु प्रवर्तयितृत्वं च परमात्मनः श्रूयमाणं समधिकदुष्कृतसुकृतशालिषु निग्रहानुग्रहात्मकं न दोषाय । विशेषश्चात्रान्यतोऽवगम्यः ॥ ४१ ॥

इति प्रदीपे परायत्ताधिकरणम् ॥ ६ ॥

(अ. स.) तच्च जीवस्य कर्तृत्वमायत्तं परमात्मनः ।
अन्तः प्रविष्टः शास्तेति श्रुत्या तदवगम्यते ॥ १ ॥
कृताद्यमयत्नसापेक्षस्त्वेनं कारयतीश्वरः ।
न वैयर्थ्यं प्रसज्येत तस्माद्विधिनिषेधयोः ॥ २ ॥

इति भाष्ये परायत्ताधिकरणम् ॥ ६ ॥

---

## अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ २ । ३ । ४२ ॥

**अथायमात्मा किं परमात्मनोऽभिन्नः उत भिन्नः, भिन्नत्वे च किमत्यन्तभिन्नः उतांशभूत इत्येतद्विचार्यते । यद्यपीतरव्यपदेशाधिकरणे**

---

जीवस्य ज्ञातृत्वं कर्तृत्वं च समर्थितम् । अथास्य ब्रह्मांशत्वं समर्थ्यते, जीवभेदस्य भ्रान्तिकल्पितत्ववादः औपाधिकत्ववादश्च येन निरस्तः स्यात् । तथाऽत्यन्तभेदवादश्च ।

### अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ २ । ३ । ४२ ॥

जीवो न ब्रह्मणोऽत्यन्तं भिन्नः, नापि भ्रान्तिपरिकल्पितजीवभावः, नाप्यौपाधिकजीवभावः, किन्तु परस्य ब्रह्मणोंऽशभूतः । कस्मात्? नानाव्यपदेशादन्यथाऽपि व्यपदेशात् । 'द्वावजावीशनीशौ' इत्यादिना जीवब्रह्मणोभेदनिर्देशात्, तथा 'तत्त्वमसी'त्यादिनाऽभेदस्यापि व्यपदेशात् । उभयव्यपदेशो ह्यंशत्व एवोपपद्यते । जीवभेदस्याविद्यकत्वे औपधिकत्वे चातात्त्विकत्वेन भेदश्रुतेरस्वारस्यम् । अत्यन्तभेदवादे चाभेदश्रुतीनाम् । अतोंऽशत्वमेव तु युक्तम् । नन्वखण्डस्य ब्रह्मणः कथमंशो जीवो भवितुमर्हति । मृत्पिण्डस्य सावयवतया खण्डनार्हतया तदंशो घटशरावादिर्भवितुमर्हति । नैतत् । ब्रह्मणः स्वरूपं हि विशिष्टम् । विशेषणं च विशिष्टस्यैकदेश इत्यंशो भवितुमर्हतीति निरवद्यम् । सकलचेतनाचेतनशरीरकतया च परमात्मनः स्वरूपं विशिष्टमेव भवति । श्रुतं चैतदन्तर्यामिब्राह्मणे । अत एवैके शाखिनो ब्रह्मणो दाशकितवादित्वं चाधीयते 'ब्रह्म दाशा ब्रह्म दासाः ब्रह्मेमे कितवा' इति । सर्वतनोः सर्वात्मनः स्वेतरसमस्तवस्तुप्रकारस्य दाशत्वादिकमुपपन्नं नाम ॥ ४२ ॥

जीवात्मपरमात्मनोर्भेदः समर्थितः । अथापि नानात्वैकत्वावबोधकश्रुतिविप्रतिपत्तिप्रशमनमुखेनेह परमात्मांशत्वं समर्थ्यत इति विशेषः । अत्राह—जीवोऽयं परमात्मनोऽभिन्न एव, 'तत्त्वमसि' 'अयमात्मा ब्रह्मे'त्यादिश्रुतेः । यश्चायं जीवभेदः स त्वविद्याकल्पितः औपाधिक एव वा । अपरस्त्वाह अत्यन्तं भिन्न एव, 'ज्ञाज्ञौ द्वावजावीशनीशौ' इत्यादिभेदश्रुतेः । भेदस्याविद्यत्वे अविद्यायाः पारमार्थिकत्वे अद्वैतभङ्गप्रसङ्गादपारमार्थिकत्वे च तत्कल्पकाविद्यान्तरान्वेषणप्रसङ्गेनानवस्थापातात् अज्ञानलक्षणाविद्याया नित्यशुद्धप्रकाशैकरसविज्ञानमात्रस्वरूपे ब्रह्मण्यन्वयासम्भवाच्चानुपपत्तेः । पारमार्थिकोपाध्यायश्रयणेन जीवभेदस्य घटाकाशादिवदौपाधिकत्वाश्रयणे चाखण्डैकरसस्य ब्रह्मणः खण्डासम्भवात्सुखदुःखादिहेयान्वयस्य ब्रह्मस्वरूप एव समापातात् । अभेदश्रुतयस्तूपचारतो नेया इति ।

अत्रोच्यते—नात्यन्तभिन्नः किन्त्वंशोऽयं परमात्मनः, कस्मात् ? नानात्वव्यपदेशादन्यथा च—श्रुतौ भेदस्याभेदस्य च व्यपदेशात् 'द्वा सुपर्णा सयुजा सखाया' 'ज्ञाज्ञौ द्वावजावीशनीशौ' 'तत्त्वमसि' 'अयमात्मा ब्रह्म' इति श्रूयमाणयोर्भेदाभेदयोः समन्वयेनार्थतत्त्वं व्यवस्थाप्यम्, नत्वेकतरस्य बाधेनौपचारिकत्वाश्रयणेन वा । अंशत्वे चोभयसमन्वयः । विशिष्टस्य एकस्य वस्तुनो विशेषणं ह्येकोंऽशः । विशिष्टं च ब्रह्म उत्तरत्रोपपादयिष्यति सूत्रकारः । दाशकितवादित्वं च ब्रह्मण एके शाखिनः अधीयते । 'ब्रह्म दाशा ब्रह्म दासा ब्रह्मेमे कितवा' इति ॥४२॥

## मन्त्रवर्णात् ॥ २ । ३ । ४३ ॥

'पादोऽस्य विश्वा भूतानी'ति मन्त्रवर्णे जीवानां ब्रह्मांशत्वं श्रूयते च । पादशब्दो ह्यंशवाची ॥ ४३ ॥

---

**मन्त्रवर्णात्** ॥ २ । ३ । ४३ ॥

'पादोऽस्य विश्वा भूतानीति' मन्त्रवर्णाच्च ब्रह्मांशत्वं जीवस्यावगम्यते । पादशब्दो ह्यंशवाची ॥ ४३ ॥

## अपि स्मर्यते ॥ २ । ३ । ४४ ॥

'ममैवांशो जीवलोके जीवभूतः सनातनः' इति परमात्मांशत्वं जीवानां स्मर्यते च ॥ ४४ ॥

अंशत्वे विशेषमंशादंशिनो विशेषं चाह—

## प्रकाशादिवत्तु नैवं परः ॥ २ । ३ । ४५ ॥

राज्याङ्गभूतेष्वमात्यादिषु भवति राज्यस्यांशोऽयमिति, कल्पितोपाध्यवच्छेदेन भवति घटाकाशे महाकाशस्यायमंश इति, खण्डपटे च महापटस्यायमंश इति । न चैतेष्वेकः प्रकारोऽपि युज्यते । उच्यते । प्रकाशादिवत्तु–प्रकाशविशिष्टस्य प्रभाविशिष्टस्य सूर्यस्य यथा प्रभा अंशः, तथाऽयं जीवो ब्रह्मणोंऽशः । इदमभिहितं भवति–केषाश्चिद्वस्तूनां स्वरूपं विशिष्टमेव भवति । विशेषणीभूयैव येषां जातिगुणादीनां सत्ता, तद्विशिष्टमेव तु गवादेः स्वरूपम्, प्रभाविशिष्टमेव तु प्रभावतः स्वरूपम् । नहि जातिर्जातु व्यक्तितो विश्लिष्टा, न वा प्रभा प्रभावतो विश्लिष्टा, तदेवंविधविशिष्टद्रव्यस्य विशेषणमंशो भवति ।

---

### अपि स्मर्यते ॥ २ । ३ । ४४ ॥

'ममैवांशो जीवलोके जीवभूतः सानातन' इति स्मर्यते च ॥ ४४ ॥

नन्वंशश्चेज्जीवो ब्रह्मणः मृद्घटयोरिवानन्यतापत्त्या घटगता दोषा मृदीव जीवगता दोषा ब्रह्मस्वरूपे प्रसज्येरन् । तत्राह—

### प्रकाशादिवत्तु नैवं परः ॥ २ । ३ । ४५ ॥

जीवो ब्रह्मणोंऽश इति यदुच्यते तत् न घटस्येव मृदंशता, किन्तु प्रकाशादिवत्तु । यथा प्रभाविशिष्टस्य प्रभावतस्तरणिमणिप्रभृतेः प्रकाशमयप्रभांशः, यथा च जातिविशिष्टव्यक्तेर्जातिरंशः, यथा च नीलादिगुणविशिष्टस्य नीलादिकमंशः, तथा सर्वात्मकतया स्वेतरसमस्तवस्तुप्रकारकस्यास्याप्ृथक्सिद्धप्रकारभूतो जीवोंऽशभूत इति । तत् परः—परमात्मा नैवं—जीववन्न भवति । जीवो यादृक्स्वभावः तादृक्स्वभावो न भवति । अतो जीवगतदोषाणां न ब्रह्मणि प्रसङ्गः ॥ ४५ ॥

परमात्मतत्त्वं च विशिष्टमेव । सर्वेषां चिदचितां तच्छरीरत्वात् । सत्ता चैषां परमात्मनो विशेषणतया । तथा च विशिष्टैकदेशतया विशेषणीभूतानां जीवानां तदंशत्वं युज्यत एवेति । ननु विशिष्टैकदेशत्वं विशेष्येऽपि तुल्यम्, तत् परमात्मन्यप्यंशत्वव्यवहारः स्यात्, तत्राह—नैवं परः । अयं भावः—यथा प्रधानं कापिलैः गुणत्रयतया स्वीक्रियमाणं विशिष्टमेव, न त्रयो गुणाः सत्त्वादयो जातु विश्लिष्टाः, संश्लिष्टा एव तु नित्यम्, अथापि न च तेषुगौणमुख्यभावः, त्रयाणामपि प्राधान्यात् । तत्प्रत्येकं त्रिष्वपि विशिष्टापेक्षयांऽशत्वव्यवहारो घटेत । प्रभाप्रभावत्स्थानीययोर्जीवपरमात्मनोः प्रभाया इव जीवानां परमात्मापेक्षयोपसर्जनतैव, तत्सत्ताधीनसत्ताकत्वात् । स ह्यन्तःप्रविश्य नियन्ता च, तद्विशिष्टेऽस्मिन् धर्मिणो ब्रह्मण एव प्राधान्यम् । तत्प्रकाशादिवत् परतन्त्रोऽयं जीवः, नैवं परः । स हि स्वतन्त्रः स्वायत्तस्वेतरसमस्तवस्तुसत्ताकः । सत्वंशी, जीवस्त्वंश एवेति ॥ ४५ ॥

## स्मरन्ति च ॥ २ । ३ । ४६ ॥

जीवात्मपरमात्मनोः शरीरात्मभावेन शक्तिशक्तिमद्रूपेण प्रभाप्रभावद्रूपेण चांशांशिभावं पराशरादयः स्मरन्ति 'यत्किञ्चित्सृज्यते येन सत्त्वजातेन वै द्विज । तस्य सृज्यस्य सम्भूतौ तत्सर्वं वै हरेस्तनुः' 'एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा । परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत्' इति । अत्र प्रभावतोऽग्नेः प्रभायाश्च स्वभाववैषम्येन भेदज्ञापनार्थं एकदेशस्थितस्य विस्तारिणीति च विशेषणम् । न तु सर्वांशेन दृष्टान्तदार्ष्टान्तिकभावः । एतेनैकदेशस्थितत्वोक्त्या ब्रह्मणो मध्यमपरिमाणशङ्का प्रतिक्षिप्ता ॥ ४६ ॥

---

### स्मरन्ति च ॥ २ । ३ । ४६ ॥

प्रभाप्रभावतोरिव विशेष्यविशेषणभावनिबन्धनमंशांशिभावं स्मरन्ति च मुनयः । 'एकदेशस्थितस्याऽग्नेर्ज्योत्स्ना विस्तारिणी यथा । परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत् । ( शक्तिः—कार्योपयोग्यपृथक्सिद्धविशेषणम् ) 'तत्सर्वं वै हरेस्तनुः ।' इति ॥ ४६ ॥

ननु सर्वेषामेव जीवानां ब्रह्मणः शरीरत्वेनांशत्वेन च साम्ये तेषु केषाञ्चित् वेदे वैदिके चाभ्यनुज्ञा, केषाञ्चित्तत्प्रतिषेधश्च कथं युज्येत, विशुद्धब्रह्मांशत्वाविशेषात् । तत्राह—

**अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरा-**
**दिवत् ॥ २ । ३ । ४७ ॥**

या च वेदे वैदिके च कर्मण्यभ्यनुज्ञा तत्प्रतिषेधश्च तदिदं वैषम्यं देहवैषम्यनिबन्धनम् । यद्यप्यात्मानो नित्यशुद्धस्य ब्रह्मणोऽशंभूताः स्वतो विशुद्धाश्च । अथापि पूर्वकर्मपरिपाकेन लब्धो यो देहः स शुचिरशुचिश्च भवति ब्राह्मणदेहः शूद्रदेह इति । यथाऽग्निर्विशुद्धोऽपि ब्राह्मणगृहादग्निरादेयः न तु चण्डालगृहादिति ॥ ४७ ॥

**असन्ततेश्चाव्यतिकरः ॥ २ । ३ । ४८ ॥**

सन्ततिः—अभितो व्याप्तिः, विभुत्वमिति यावत् । असन्ततिः अविभुत्वं, तच्चाणुत्वम् । जीवानामणुत्वेन प्रतिशरीरं भिन्नभिन्नत्वात् । अव्यतिकरः—असङ्करः, न भोगसाङ्कर्यप्रसङ्गः । एतेनाविद्यकजीवभेदवादे औपाधिकजीवभेदवादे च भोगसाङ्कर्यप्रसङ्गः । पारमार्थिकजीव-

---

ननु जीवाश्चेद्ब्रह्मणोंशभूताः प्रकाशधर्माणो मिथःसमानाश्च कथं तेषु केषांचिदेव क्वचिदनुज्ञा, केषांचित् परिहार इत्याशङ्क्य समाधत्ते—

**अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरा-**
**दिवत् ॥ २ । ३ । ४७ ॥**

द्विजातेरध्ययनेऽभ्यनुज्ञाऽन्येषां च तत्परिहारः देहविशेषयोगनिबन्धनः । यथा स्वतो विशुद्धस्याप्यग्नेः ब्राह्मणागाराद्ग्रहणाभ्यनुज्ञा, श्मशानतस्तु तत्प्रतिषेधस्तथा । अतो न शास्त्रमनुपपन्नार्थम् ॥ ४७ ॥

**असन्ततेश्चाव्यतिकरः ॥ २ । ३ । ४८ ॥**

असन्ततेः—सन्ततिरनुगतिः—असन्ततिरननुगतिः । अननुगतत्वात्—जीवानां प्रतिशरीरं भिन्नत्वादित्यर्थः । अव्यतिकरः, भोगसाङ्कर्यं न । व्यवस्थितसुखदुःखभोगोपपत्तिः ॥ ४८ ॥

भेदवादे प्रतिशरीरं जीवभेदाभ्युपगमेन न साङ्कर्यप्रसङ्गावसर इति गम्यते ॥ ४८ ॥

## आभासा एव च ॥ २ । ३ । ४९ ॥

जीवभेदस्याविद्यकत्वौपाधिकत्वपक्षे या युक्तयः परैः प्रतिपाद्यन्ते तास्तु केवलं युक्त्याभासा एव । यद्वा[1]—ननु न तात्त्विको जीवभेदः किन्त्वौपाधिक इत्यत्राह—आभास एव चेति । स चोपाधिरविद्याख्यो भवतां मते कल्पित एवेति आभास एव । तथा च तत्कल्पकमविद्यान्तरं कल्प्यमित्येवमनवस्था । अत्र यत्परैर्व्याख्यातम्—जीवो ब्रह्मण आभास इति, तत्तु 'अंशो नानाव्यपदेशादन्यथा चे'त्येतत्सूत्रविरुद्धम् । तत्र ह्यंशत्वं समर्थितम्, कथमाभासस्यांशत्वम् । अंश इवांश इति व्याख्यानमुत्सूत्रम् । विशेषश्चात्र श्रुतप्रकाशिकायां बोध्यः ॥ ४९ ॥

पारमार्थिकोपाधिकृतजीवभेदवादे दूषणमाह—

## अदृष्टानियमात् ॥ २ । ३ । ५० ॥

उपाधिसम्बन्धः परब्रह्मणि विभुभूते किं सर्वांशेन, उत केनचिदंशेन । न सर्वांशेन । ब्रह्मजीवभेदस्यैवासम्भवात् । कचिदंशे चेत् कस्मिन् ? तत्र च भोगासाङ्कर्यव्यवस्था कथम् ? ननु पूर्वपूर्वादृष्टादिति चेत् अदृष्टसम्बन्धोऽस्मिन्नेव प्रदेशे इत्यस्यानियमः । अनियमे च जीवभावोऽप्यनियतः स्यात् ॥ ५० ॥

---

एवं जीवानां ब्रह्मांशत्वमुत्पाद्य आविद्यकजीववादं औपाधिकजीववादं च निरस्यति ।

### आभासा एव च ॥ २ । ३ । ४९ ॥

अखण्डप्रकाशैकरसमपि ब्रह्माविद्यातिरोहितस्वरूपं भवति नाना जीवभावेन इत्यादयः केषांचिद्वादाः आभासा एव—दुष्टा एव ॥ ४९ ॥

### अदृष्टानियमात् ॥ २ । ३ । ५० ॥

ननु उपाधिः परमार्थ इष्यते, तेनास्य परब्रह्मणः जीवभाव इति चेदेव-

---

टिप्पणी—१ आभास एव चेति सूत्रपाठभेदानुसारेण द्वितीया योजना 'यद्वे'ति ।

## अभिसन्ध्यादिष्वपि चैवम् ॥ २ । ३ । ५१ ॥

अदृष्टकारणभूतेषु सङ्कल्पविशेषेष्वप्येष एव अनियमः । मनसा सङ्कल्प्य कर्म करोति, तेन पुण्यं पापं वा, तदिदमदृष्टमुच्यते । अदृष्ट इव तद्धेतुभूतसङ्कल्पेऽप्यनियमः, विभौ तत्स्वरूपेंऽशभेदनियामकाभावात् ॥ ५१ ॥

## प्रदेशभेदादिति चेन्नान्तर्भावात् ॥ २ । ३ । ५२ ॥

ननु ब्रह्माखण्डैकरसं सर्वतो व्याप्य वर्तते, उपाधिसम्बन्धस्तु क्वचित्प्रदेशविशेषे । स च प्रदेशनियमोऽनादिः । ततश्च भोगासाङ्कर्यव्यवस्थेति चेन्न । ब्रह्मप्रदेशानामपि सर्वेषामुपहितप्रदेशेऽन्तर्भावात् । एतदुक्तं भवति—ब्रह्म त्वखण्डैकरसं सर्वव्याप्यचलमेकम् । तत्तदुपाधिभूतदेहविशेषा यथायथं ततस्ततोऽन्यत्र चलन्ति तदाऽन्यान्यो ब्रह्मप्रदेशः उपाधिना सम्बध्यत इति स्वीकार्यम् । तथा सति योऽयं

---

मप्यनियमः, अव्यवस्थैव सुखदुःखभोगयोः । उपाधिसंबन्धप्रदेशेऽनियमात् । नन्वदृष्टं नियामकमिति चेन्न । अदृष्टस्याप्यनियम एव प्रदेशभेदस्य वक्तुमशक्यत्वात् ॥ ५० ॥

ननु सङ्कल्पविशेष एवादृष्टसंबन्धनियामक इति चेत्—

**अभिसन्ध्यादिष्वपि चैवम् ॥ २ । ३ । ५१ ॥**

सङ्कल्पादिष्वप्ययमेवानियमः । नहि ब्रह्मस्वरूपे खण्डनप्रसङ्गः । अखण्डित एव तस्मिन् सङ्कल्पविशेषप्रदेशोऽप्यनियत एव ॥ ५१ ॥

**प्रदेशभेदादिति चेन्नान्तर्भावात् ॥ २ । ३ । ५२ ॥**

उपाध्यवच्छिन्नप्रदेशभेदान्नियम उपपद्यते इति चेन्न । अन्तर्भावात् । नहि उपाधिभिः ब्रह्म खण्ड्यते । अखण्डिते तस्मिन् यः प्रदेशः उपाधिनाऽनवलीढः स एवोपाध्युपसरणे उपाध्युपलीढो भवन् जीवभावेऽन्तर्भवति । तदव्यवस्था दुरुद्धरा । इतस्ततो धावमानेषु प्राणिषु उपाध्युपसरणापसरणयोरनैयत्यात् ॥ ५२ ॥

इति प्रदीपे अंशाधिकरणम् ॥ ७ ॥

इति प्रदीपे द्वितीयाध्यायस्य तृतीयः पादः

प्रागुपाध्यनुपहितः प्रदेशः स एवोपाधिना सम्बद्धो भवति । तथा चानियम एव । तदसङ्गतोऽयमौपाधिकजीवभेदवादः ॥ ५२ ॥

(अ. सं.) नियन्तृत्वनियाम्यत्वज्ञत्वाज्ञत्वादिभेदकैः
मिथो जीवब्रह्मणोस्तु नानात्वं श्रूयते क्वचित् ॥ १ ॥
क्वचित्तयोरेकता च तत्त्वमस्यादिवाक्यतः ।
दाशत्वकितवत्वादि ब्रह्मणि श्रूयते क्वचित् ॥ २ ॥
एवमेकत्वनानात्ववादिश्रुत्यनुरोधतः ।
जीवो ब्रह्मण एवांश इत्येषा तात्त्विकी स्थितिः ॥ ३ ॥
पादोऽस्य विश्वा भूतानीत्यंशत्वं श्रूयतेऽपि च ।
ममैवांशो जीवलोके जीवभूत इति स्मृतिः ॥ ४ ॥
प्रकाशादेरिवांशत्वं, परस्तस्माद्विलक्षणः ।
विशिष्टस्यैकदेशत्वाद् भवत्यंशो विशेषणम् ॥ ५ ॥
चिदचिद्भ्यां विशिष्टं तु ब्रह्म सर्वशरीरकम् ।
प्रभाप्रभावद्रूपेण शक्तिशक्तिमदात्मना ॥ ६ ॥
तथा तन्वात्मरूपेण स्मर्यतेऽशांशिताऽनयोः ।
स्वरूपभेदाद्भेदोक्तिरंशांशित्वादभेदगीः ॥ ७ ॥
ब्रह्मांशत्वेऽपि जीवानां देहसंबन्धभेदतः ।
अनुज्ञा परिहारश्च युज्यतेऽग्नेरिव क्वचित् ॥ ८ ॥
अणुत्वादपि भेदाच्च भोगव्यतिकरो न च ।
अत्र कैश्चित् कल्प्यमाना आभासा एव युक्तयः ॥ ९ ॥
या चादृष्टवशात् भोगव्यवस्था साऽपि दुर्घटा ।
अदृष्टस्याभिसन्धेश्च नियमानुपपत्तितः ॥ १० ॥
प्रदेशभेदाश्रयणात् तद्व्यवस्थोपपादनम् ।
ब्रह्मण्यखण्डे सर्वस्याप्यन्तर्भावान्न युज्यते ॥ ११ ॥

इति भाष्ये अंशाधिकरणम् ॥ ७ ॥

इति ब्रह्ममीमांसाभाष्ये द्वितीयाध्यायस्य तृतीयः पादः ।

वियदादीनां भूतानां ब्रह्मणः सकाशादुत्पत्तिः पूर्वं समर्थिता । भूतादिवज्जीवोत्पत्तिशङ्का च निराकृता । प्रसङ्गाज्जीवानां ज्ञातृत्वं कर्तृत्वं ब्रह्मांशत्वं च समर्थितम् । अथ जीवोपकरणभूतानामिन्द्रिय-प्राणानामुत्पत्तिर्विचार्यते–

## तथा प्राणाः ॥ २ । ४ । १ ॥

यथाऽऽत्मा नोत्पद्यते तथा प्राणाः–इन्द्रियाण्यपि नोत्पद्यन्ते । श्रूयते हि प्राणानां सृष्टेः प्राक् स्थितिः 'असद्वा इदमग्र आसीत्, तदाहुः किं तदासीदिति, ऋषयो वाव ते अग्रे सदासीदिति, तदाहुः के ते ऋषय इति, प्राणा वाव ऋषयः' इति । ऋषिशब्दश्च प्राणेषु–इन्द्रियेष्व-न्यत्रापि श्रूयते–'तस्यासते ऋषयः सप्त' इति । बहुवचनाच्च प्राणशब्द इन्द्रियपर एव ॥ १ ॥

अत्रोच्यते—

---

पूर्वस्मिन् पादे जीवस्वरूपं विचारितम् । तत्प्रसङ्गादिदानीं तदुपकरणभूता-नीन्द्रियाणि विचार्यन्ते । ननु जीव इव इन्द्रियाण्यपि नोत्पद्यन्ते । सृष्टेः प्रागपि तेषां स्थितिश्रवणात् । तथा हि श्रूयते–'असद्वा इदमग्र आसीत् तदाहुः किं तदासीदिति ऋषयो वाव ते अग्रे सदासीत् तदाहुः के ते ऋषय इति प्राणा वाव ऋषय' इति ।

अत्रोच्यते—

### तथा प्राणाः ॥ २ । ४ । १ ॥

प्राणाः–इन्द्रियाणि । तथा–वियदादिवदुत्पद्यन्ते । श्रूयते च तेषामुत्पत्तिः 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति । 'आत्मा वा इदमेक एवाग्र आसीत्' 'सदेव सोम्येदमग्र आसीत्' इति परमात्मन एव प्राक् सृष्टेः स्थितिरवगम्यते । तदनुगुण एव 'असद्वे'त्यादावप्यर्थ उन्नेयः । प्राण-शब्दश्च परमात्मनि श्रुत्यन्तरे प्रसिद्धः 'सर्वाणि ह वा इमानि भूतानि प्राण-मेवाभिसंविशन्ती'ति ॥ १ ॥

## गौण्यसम्भवात्तत्प्राक् श्रुतेश्च ॥ २ । ४ । २ ॥

प्राणा न नित्याः । तत्प्राक्–सृष्टेः प्राक् तेषां स्थित्यसम्भवात् । 'सदेव सोम्येदमग्र आसीत्' 'आत्मा वा इदमेक एवाग्र आसी'दित्यादिषु बह्वीषु श्रुतिषु सृष्टेः प्राक् ब्रह्मण एवैकत्वावधारणपूर्वकं स्थितिश्रवणात् । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चे'ति इन्द्रियाणामुत्पत्तिश्रुतेश्च । प्राणशब्दश्चात्र परमात्मपरः । प्रसिद्धश्चायं प्राणशब्दः परमात्मनि 'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते' इत्यादौ । ऋषिशब्दश्च ज्ञातरि प्रसिद्धो न ज्ञानकरणे । सर्वप्राणनहेतुत्वाच्च प्राणः परमात्मा । अतोऽत्र ऋषिप्राणशब्दो नेन्द्रियपरो भवितुमर्हति । ऋषय इति प्राणा इति च बहुवचनश्रुतिर्गौणी अविवक्षितार्था ॥ २ ॥

इतश्चात्र प्राणशब्दः परमात्मपर एव नेन्द्रियपरः—

## तत्पूर्वकत्वाद्वाचः ॥ २ । ४ । ३ ॥

परमात्मव्यतिरिक्तविषयाणां सर्वासामेव वाचां तत्पूर्वकत्वात्–सृष्टिपूर्वकत्वात्, श्रूयते च–'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत' इति ॥ ३ ॥

---

ननु प्राणा इति ऋषय इति च बहुवचनश्रुतिः कथमुपपद्यते, तत्राह—

### गौण्यसम्भवात् तत्प्राक् श्रुतेश्च ॥ २ । ४ । २ ॥

बहुवचनश्रुतिर्गौणी । बहुवचनार्थस्य बहुत्वस्य सृष्टेः प्रागसम्भवात् । तत्प्राक्–सृष्टेः प्राक् 'सदेव सोम्येदमग्र आसीत्' इति परमात्मन एकस्यैव सत्त्वावधारणात् ॥ २ ॥

### तत्पूर्वकत्वाद्वाचः ॥ २ । ४ । ३ ॥

वाचः–सर्वेषां वाग्व्यापाराणां नाम्नां तत्पूर्वकत्वात्–वियदादिसृष्टिपूर्वकत्वात् सृष्टेः प्राक् वाक्प्रभृतीन्द्रियाणां सत्त्वानुपपत्तेः । 'तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत' इति नामरूपव्याकरणस्य सृष्ट्यनन्तरभावित्वं हि श्रूयते । कः प्रसङ्गः पूर्वमिन्द्रियाणाम् ॥ ३ ॥

इति प्रदीपे प्राणोत्पत्त्यधिकरणम् ॥ १ ॥

( अ. सं. ) जीवोपकारकाः प्राणा जायन्ते वियदादिवत् ।
एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ॥ १ ॥
इत्युत्पत्तिः श्रूयते हि प्राणानां परमात्मनः ।
सृष्टेः प्रागृषयः प्राणा आसन्निति तु या श्रुतिः ॥ २ ॥
परमात्मपरा सर्वप्राणने स हि कारणम् ।
प्राणा आसन्नग्र इति गौणी बह्वृचःश्रुतिः ॥ ३ ॥
प्राक् सत्ता नोपपद्येत वागादेरिन्द्रियस्य हि ।
सन्मात्रस्यैव सत्ता हि 'सदेवे'त्यादिना श्रुता ॥ ४ ॥

इति भाष्ये प्राणोत्पत्त्यधिकरणम् ॥ १ ॥

---

अथ तानीन्द्रियाणि कतीत्येतद्विचार्यते—

## सप्तगतेर्विशेषितत्वाच्च ॥ २ । ४ । ४ ॥

श्रुतौ क्वचित्सप्तेति क्वचिदेकादशेति श्रवणेन विप्रतिपत्तेः सङ्ख्या-निर्णयार्थोऽयं विचारः । अत्राह—सप्तैवेन्द्रियाणि, 'सप्त इमे लोका येषु चरन्ति प्राणा गुहाशयाः निहिताः सप्त सप्त' इति सप्तानामेव लोकेषु पुरुषेण सह गतिश्रवणात् । अत्र वीप्सया पुरुषभेदेन भेदो गम्यते । 'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टेत तामाहुः परमां गति'मिति सप्तानां ज्ञानत्वेन विशेषितत्वाच्च । ज्ञायतेऽनेनेति ज्ञानानि इन्द्रियाणि चक्षुःश्रोत्रत्वक्घ्राणजिह्वाबुद्धि-मनांसि । अत्र परमा गतिर्योग उच्यते मोक्षसाधनत्वादिति ॥ ४ ॥

---

## सप्त गतेर्विशेषितत्वाच्च ॥ २ । ४ । ४ ॥

ते प्राणाः—इन्द्रियाणि सप्त वा एकादश वेति विचार्यते । तत्र शङ्कते—सप्तैव प्राणाः; जीवेन सह लोकेषु सञ्चरणं गतिः सप्तानामेव हि श्रूयते—'सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त' इति । विशेषित-त्वाच्च—'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टेत तामाहुः परमां गति' मिति ज्ञानेन्द्रियाणि चक्षुरादीनि मनो बुद्धिश्चेति द्वयम् । आहत्य सप्तानामेव विशेषितत्वाच्च योगदशायाम् ॥ ४ ॥

अत्रोच्यते—

## हस्तादयस्तु स्थितेऽतो नैवम् ॥ २ । ४ । ५ ॥

तुशब्दः पूर्वपक्षं व्यावर्तयति । न केवलं चक्षुरादीन्येवेन्द्रियाणि अपि तु पाणिपादादीन्यपि, शरीरे जीवे स्थिते सति चक्षुरादिवत्तस्योपकरणभूतत्वादेव । अतो नैवम्—सप्तैवेति न किन्तु ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च मनश्चेति एकादश । श्रूयते च—'दशेमे पुरुषे प्राणा आत्मैकादशः' इति । अत्रात्मा मनः । स्मर्यते च—'तैजसानीन्द्रियाण्याहुः देवा वैकारिका दश' 'एकादशं मनश्चात्र' 'इन्द्रियाणि दशैकञ्चे'ति । ननु बुद्धिरपि श्रुतौ चक्षुरादिभिः सह करणतया श्रुता । सत्यम् । चित्तबुद्ध्यहङ्कारा इति तत्र तत्र भेदश्रवणं मनोवृत्तिभेदमभिप्रेत्यैव । अत एवाधिकसङ्ख्यावादो न विरुद्धः । सप्तेति न्यूनसङ्ख्यावादस्तु कार्यविशेषाधायकत्वप्राधान्यमात्रेण ॥ ५ ॥

( अ. सं. ) सतः शरीरे जीवस्य भोगोपकरणत्वतः ।
हस्तादीनामिन्द्रियत्वं श्रोत्रादीनामिवाक्षतम् ॥ १ ॥
प्राधान्याद्वृत्तिभेदाच्च न्यूनाधिक्योक्तिसम्भवः ।
एकादशैवेन्द्रियाणि श्रुतिस्मृत्योस्तथोक्तितः ॥ २ ॥

इति भाष्ये सप्तगत्यधिकरणम् ॥ २ ॥

---

अत्र सिद्धान्तमाह—

## हस्तादयस्तु स्थितेऽतो नैवम् ॥ २ । ४ । ५ ॥

नैवम्—सप्तैवेति न । सन्ति हस्तादयोऽपि कर्मेन्द्रियाणि, जीवे शरीरेऽवस्थिते सति तेऽपि हि चक्षुरादिवदुपकरणतां प्राप्नुवन्ति । श्रूयते 'दशेमे पुरुषे प्राणा आत्मैकादशः' इति । आत्मा मनः । स्मर्यते च 'इन्द्रियाणि दशैकं च' इति ।

इति प्रदीपे सप्तगत्यधिकरणम् ॥ २ ॥

अथ तेषां परिमाणविशेषो विचार्यते—

## अणवश्च ॥ २ । ४ । ६ ॥

आह—'त एते सर्व एव समाः सर्वेऽनन्ता' इति आनन्त्यश्रुतेः इन्द्रियाणां विभुत्वमिति । अत्रोच्यते—'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति अनूत्क्रमणश्रवणात्, विभुत्वे तदनुपपत्तेः, परिमितत्वमेव तेषामभ्युपेयम् । परिमितानां च तेषामुत्क्रमणवेलायां पार्श्वस्थैरग्राह्यत्वादणुत्वमेव सिद्धम् । तदुच्यते—अणवश्चेति । आनन्त्यश्रुतिस्तूपासनमात्रोपयुक्ता उपास्यगुणविशेषमभिप्रेत्य प्रवृत्ता, कार्यबाहुल्याधायकता च गुणविशेषः ॥ ६ ॥

## श्रेष्ठश्च ॥ २ । ४ । ७ ॥

यश्च श्रेष्ठः प्राणः वागादिप्राणान्तरापेक्षया श्रेष्ठतया प्राणसंवादे श्रूयमाणो मुख्यप्राणः सोऽप्युत्पद्यत एव । सृष्टेः प्राक् ब्रह्मण एकत्वावधारणश्रवणात् । ननु 'आनीदवात'मिति सृष्टेः प्राक्प्राणवायुकार्यमननं हि श्रूयते । नैवम् । तच्चाननं न प्राणवायोः । किन्तु 'को ह्येवान्यात् कः प्राण्या'दिति सर्वप्राणनहेतुतया श्रूयमाणस्य परमात्मन

---

### अणवश्च ॥ २ ॥

त एते प्राणा अणवश्च, चोऽवधारणे, अणव एव । 'प्राणमुत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती'ति प्राणानामनूत्क्रमणश्रुतेः, विभुत्वे तदसम्भवात् अणव एव । 'त इमे सर्व एव समाः सर्वेऽनन्ता' इत्यानन्त्यश्रुतिरुपासनार्था तथोपासनात् फलानन्त्यमुपासकस्येति । वृत्त्यानन्त्याच्चानन्त्योक्तिस्तेषु ॥ ६ ॥

### श्रेष्ठश्च ॥ २ । ४ । ७ ॥

यश्चक्षुरादिभ्यः प्राणेभ्यः श्रेष्ठत्वेन प्राणसंवादे श्रूयमाणो मुख्यः प्राणः सोऽपि इतरप्राणवदुत्पद्यत एव 'आनीदवातं' इति सृष्टेः प्राक् श्रूयमाणमननं न प्राणवायुकार्यम्, अपि तु सर्वप्राणनहेतोः प्राणस्यापि प्राणस्य परमात्मनः कार्यम् । अवातमिति वायुमात्रनिषेधात् । अतो मुख्यः प्राणोऽप्युत्पद्यत एव ॥ ७ ॥

इति प्रदीपे प्राणाणुत्वाधिकरणम् ॥ ३ ॥

एव । यद्यपि नात्राधिकाशङ्काबीजम्, अथापि सूत्रप्रणयनमुत्तरत्र प्राणचिन्तार्थम् ॥ ७ ॥

(अ. सं.) उत्क्रान्तिश्रवणा प्राणात् अणवो विभवो नतु ।
यतस्ते नोपलभ्यन्ते पार्श्वस्थैरपि कैश्चन ॥ १ ॥
आनन्त्यवादः श्रौतस्तु प्रशंसार्थः प्रवर्तते ।
यश्च प्राणः श्रेष्ठ एष सोऽप्यणुर्जायतेऽपि च ॥ २ ॥
'आनीदवात'मिति या श्रुतिः ब्रह्मपरैव सा ।
प्राणस्य प्राण इत्युक्तं ब्रह्मेवाग्रे सदुच्यते ॥ ३ ॥

इति भाष्ये प्राणाणुत्वाधिकरणम् ॥ ३ ॥

---

## न वायुक्रिये पृथगुपदेशात् ॥ २ । ४ । ८ ॥

प्राणोऽयं किं वायुमात्रम्, उत तत्क्रियाविशेषः, किंवा वायुविशेषः, इत्येतद्विचार्यते । अत्राह—वायुमात्रम् 'यः प्राणः स वायुरि'ति श्रुतेः । उच्छ्वासनिश्वासलक्षणः क्रियाविशेषो वा वायोः, लोके वायुमात्रे प्राणव्यवहाराभावात् क्रियाविशेषे च तद्व्यवहारात् । सर्वेषामेवेन्द्रियाणां सम्भूय शरीरधारणे प्रवर्तमानानां क्रियाविशेष एव वा प्राणः कापिलसमयसम्प्रतिपन्न इति । अत्रोच्यते— न वायुमात्रं न क्रियाविशेषो वा, 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरि'ति वायोः पृथक् प्राणस्य निर्देशात् । न च वायोस्तत्त्वान्तरमग्न्यादिवत् । यः प्राणः स वायुरिति निर्देशात् । तस्माद्विशेष एवायमुच्छ्वासनिश्वासलक्षणावस्थाविशेषमापन्नः प्राण उच्यते ॥ ८ ॥

---

प्रसङ्गात् प्राणवायुर्विचार्यते—

## न वायुक्रिये पृथगुपदेशात् ॥ २ । ४ । ८ ॥

सोऽयं मुख्यः प्राणो न वायुः—न द्वितीयमहाभूतमात्रम्, न वा तस्योच्छ्वासनिःश्वासलक्षणक्रियामात्रम् । पृथगुपदेशात्—सृष्टिप्रकरणे 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायु'रिति वायोः पृथक् श्रवणात् ॥ ८ ॥

## चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ २ । ४ । ९ ॥

अयं च कर्तुर्जीवात्मनश्चक्षुरादिवत् करणभूतः, तैः चक्षुरादिभिः सह शिष्ट्यादिभ्यः । शिष्टिः अनुशासनम् । प्राणसंवादे हि चक्षुरादिकरणैः सह प्राणो निर्दिश्यते । सा च सह शिष्टिः प्राणस्य करणसजात्यं गमयति ॥ ९ ॥

## अकरणत्वाच्च न दोषः तथाहि दर्शयति ॥ २ । ४ । १० ॥

ननु चक्षुरादेरिव मुख्यप्राणस्य न जीवं प्रति काचिदुपकारिका क्रिया । अतः, अकरणत्वात्–उपकारकक्रियाशून्यत्वात् दोषः–करणभावे दोष इति चेन्न । तथा हि दर्शयति । शरीरधारणलक्षणक्रियाविशेषं जीवस्योपकारकं दर्शयति हि श्रुतिः 'यस्मिन्नुत्क्रान्ते इदं शरीरं पापिष्ठतरमिव दृश्यते स वः श्रेष्ठः' इति ॥ १० ॥

---

### चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ २ । ४ । ९ ॥

नाप्ययमग्न्यादिवत् भूतान्तरम्, किन्तु चक्षुरादिवत्तु–चक्षुरादिवदस्य जीवस्योपकरणम्, तत्सहशिष्ट्यादिभ्यः–तैश्चक्षुरादिभिर्जीवोपकरणभूतैः सह शिष्ट्यादिभ्यः । शिष्टिः–शासनमुपदेशः । उपदिश्यते च प्राणसंवादे चक्षुरादिभिः सह । अतश्चास्य करणसजातीयता गम्यते । योऽयं मुख्यः प्राण इति व्यपदिश्यते च ।

### अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॥ २ । ४ । १० ॥

ननु–चक्षुरादिवन्नास्य करणम्–उपकरणकर्म किमपि । अतः करणशून्यत्वात् चक्षुरादिवदस्योपकरणकोटावन्वये दोषः इति चेन्न । तथा हि श्रुतिर्दर्शयत्युपकरणक्रियां शरीरेन्द्रियधारणलक्षणाम् । श्रूयते हि 'यस्मिन्नुत्क्रान्ते इदं शरीरं पापिष्ठतरमिव दृश्यते स वः श्रेष्ठ' इति ॥ १० ॥

ननु नामभेदात्प्रयोजनभेदाच्च प्राणापानादयो पूर्वपूर्वतो भिन्नानि तत्त्वानीत्याशङ्कायामाह—

## पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ २ । ४ । ११ ॥

कामसङ्कल्पविचिकित्सादिवृत्तिभेदे कार्यभेदेऽपि कामादिकं यथा मनसो न तत्त्वान्तरम् । तथा प्राणापानादिनामभेदे कार्यभेदेऽपि प्राणापानादयो नान्यानि तत्त्वानि, किन्तु प्राणनादिवृत्तिपञ्चकविशिष्टः एक एव प्राणः, प्राणस्यैव वृत्तिभेदात्प्राणापानादिव्यपदेश इति यावत् ॥ ११ ॥

( अ. स. ) न वायुमात्रं श्रेष्ठोऽयं प्राणो नापि च तत्क्रिया ।
'एतस्माज्जायते प्राण' इत्युत्पत्तेः पृथक् श्रुतेः ॥ १ ॥
किन्त्ववस्थाविशेषेण विशिष्टो वायुरेव तु ।
प्राणो भवति वायोर्हि गुणः स्पर्शोऽत्र गृह्यते ॥ २ ॥
नातो भूतान्तरं किन्तु करणं चक्षुरादिवत् ।
भोगोपकरणत्वेन शासनादस्य तैः सह ॥ ३ ॥
भोगोपकरणत्वं च शरीरेन्द्रियधारणात् ।
'यस्मिन्नुत्क्रान्त' इति तु श्रूयते तच्च धारणम् ॥ ४ ॥

इति भाष्ये वायुक्रियाधिकरणम् ॥ ४ ॥

---

## पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ २ । ४ । ११ ॥

अयं च मुख्यः प्राणः पञ्चवृत्तिः—प्राणनापाननादिवृत्तिपञ्चकविशिष्टो व्यपदिश्यते प्राणापानादिशब्दतः । मनोवत्—यथा कामः सङ्कल्प इत्यादयो मनसो वृत्तिविशेषाः, तथा प्राणापानादयोऽपि मुख्यप्राणस्य वृत्तिविशेषा एव नान्ये ॥ ११ ॥

इति प्रदीपे वायुक्रियाधिकरणम् ॥ ४ ॥

## अणुश्च ॥ २ । ४ । १२ ॥

'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इति जीवमनु मुख्यप्राणस्याप्युत्क्रमणश्रवणात् मुख्यप्राणोऽप्यणुरेव । अधिका शङ्का तु 'सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेणे'ति श्रवणान्महापरिमाणसम्भावनया । परिहारस्तु—सा श्रुतिः प्रशंसामात्रपरा, 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इत्यनन्यथासिद्धश्रुतेः ॥ १२ ॥

( अ. स. ) श्रेष्ठः प्राणोऽप्यणुरयमुत्क्रान्त्यादेर्भवेत् श्रुतेः ।
सम एभिस्त्रिभिर्लोकैरित्येतत् स्तावकं वचः ॥ १ ॥

इति भाष्ये श्रेष्ठाणुत्वाधिकरणम् ॥ ५ ॥

## ज्योतिराद्यधिष्ठानं तु तदामननात्प्राणवता शब्दात् ॥ २ । ४ । १३ ॥

अग्न्यादिदेवताविशेषाणां वागादीन्द्रियाधिष्ठातृत्वं श्रूयमाणं किं स्वायत्तमुत परायत्तमित्येतद्विचार्यते—यद्यपि 'परात्तु तच्छ्रुते'रित्यत्र जीवानां कर्तृत्वं परायत्तमिति समर्थितम्, अथाप्यैश्वर्यविशेषसम्पन्ना-

---

### अणुश्च ॥ २ । ४ । १२ ॥

'सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण, सर्वमिदं प्राणेनावृत'मिति महानयं प्राण इत्यधिकाशङ्कायामाह—अणुश्च । 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामती'त्युत्क्रान्तिश्रवणात् । 'सम एभि'रित्यादि तु वैभववादमात्रम् ॥ १२ ॥

इति प्रदीपे श्रेष्ठाणुत्वाधिकरणम् ॥ ५ ॥

### ज्योतिराद्यधिष्ठानं तु तदामननात् प्राणवता शब्दात् ॥ २ । ४ । १३ ॥

प्राणवता—जीवेन सह ज्योतिराद्यधिष्ठानम्—ज्योतिरादीनाम्—अग्न्यादीनां यद्वागादीन्द्रियाधिष्ठानं 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' इत्यादिना श्रूयमाणं तत् तदामननात्—तस्य परमात्मनः आमननात्—आभिमुख्येन मननात् सङ्कल्पात्, भवति । शब्दादिदमवगम्यते । शब्दश्च—'अग्निमन्तरो यमयति' 'आदित्यमन्तरो यमयति' 'आत्मानमन्तरो यमयति' इत्यादिः ॥ १३ ॥

नामग्न्यादिदेवतानामिन्द्रियाधिष्ठाने स्वातन्त्र्यं स्यादेवेत्याशङ्कावकाशः। अत्राह—'अग्निर्वाग्भूत्वा मुखं प्राविशत्' 'आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्' इत्यादिश्रुतेरग्न्यादीनां वागाद्यधिष्ठातृत्वं श्रूयते । भोक्तुर्जीवस्योपकरणता चैषां देवताधिष्ठानादेवेति अग्न्यादीनामेव स्वतन्त्राणामिन्द्रियाधिष्ठातृत्वं युक्तमिति । अत्रोच्यते—ज्योतिरादीनामग्न्यादिदेवतानां यदिन्द्रियाधिष्ठानं, तत्तु प्राणवता सह—जीवेन सह, तदामननादेव—तस्य परमात्मनः आमननादेव-सङ्कल्पादेव भवति । प्राणवता सहेति तु दृष्टान्तार्थम् । यथा जीवस्य भोक्तुरधिष्ठातृत्वं परायत्तं तथा देवतानामधिष्ठातृत्वमपि परायत्तमिति भावः । कुत एतदवगम्यते? शब्दात्—'योऽग्नौ तिष्ठन्' 'य आदित्ये तिष्ठन्' 'य आत्मनि तिष्ठन्नि'त्यादिश्रुतेः । अग्न्यादिदेवतानामपि स्वस्वकार्यक्षमता परमात्मनो नियमनायत्तेत्येव हि गम्यत इति भावः । यत्तु परैः—ज्योतिराद्यधिष्ठानं तु तदामननात् । प्राणवता सह शब्दादिति द्वेधा सूत्रं विभज्य प्रथमसूत्रमिन्द्रियाणामग्न्यादिदेवताविशेषाधिष्ठितत्वसमर्थनपरतया व्याख्यातम्, द्वितीयसूत्रं तेषां भोक्तृत्वनिरासपरतया व्याख्यातम्, तत्तु न युक्तम्, 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्या'मिति सूत्रेणैवेन्द्रियाणां देवताधिष्ठितत्वस्योक्तत्वात् । शरीराद्बहिरेव सतां देवानां तत्तदिन्द्रियवीर्याधायकत्वमात्रेण भोक्तृत्वशङ्काया अनुत्थानात् । तत्परिहारस्य सूत्राक्षरानारूढत्वाच्च ॥ १३ ॥

## तस्य च नित्यत्वात् ॥ २ । ४ । १४ ॥

तस्य—परमात्माधिष्ठितत्वस्य नित्यत्वात् वस्तुस्वरूपानुबन्धित्वेन वस्तुमात्रे यावदात्मभावित्वाच्च देवताविशेषाधिष्ठानमपि परमात्मायत्तमेव ॥ १४ ॥

---

### तस्य च नित्यत्वात् ॥ २ । ४ । १४ ॥

तस्य—ज्योतिरादीनां तन्नियाम्यत्वस्य च नित्यत्वात् । 'तत्सृष्ट्वा तदेवानुप्राविशत्' इत्यादिना अनुप्रवेशपूर्वकनियमनस्य सर्गतः एव श्रूयमाणतया स्वरूपानुबन्धित्वेन नित्यत्वात् ॥ १४ ॥

इति प्रदीपे ज्योतिराद्यधिष्ठानाधिकरणम् ॥ ६ ॥

(अ. स.) यच्च जीवाधिष्ठितत्वं देवाधिष्ठितता च या ।
प्राणानां श्रूयते तच्च सङ्कल्पात्परमात्मनः ॥ १ ॥
अग्र्यादीनां चात्मनां च श्रूयते तन्नियाम्यता ।
परमात्मनियाम्यत्वमेषां नित्यं निसर्गतः ॥ २ ॥

इति भाष्ये ज्योतिराद्यधिष्ठानम् ॥ ६ ॥

## त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ २ । ४ । १५ ॥

प्राणशब्दनिर्दिष्टा अविशेषात्सर्वे एव किमिन्द्रियाणि, उत मुख्यप्राणव्यतिरिक्ताः, अत्राह–सर्वे एव प्राणशब्दनिर्दिष्टाः । अविशेषादिन्द्रियाणि इति । अत्रोच्यते–ते चक्षुरादयः श्रेष्ठादन्यत्र–मुख्यप्राणादन्ये इन्द्रियाणि, तद्व्यपदेशात्–तेषामेव तथात्वेन व्यपदेशात् । 'इन्द्रियाणि दशैकञ्चे'ति मुख्यप्राणादन्येष्वेवेन्द्रियत्वव्यपदेशात्॥१५॥

## भेदश्रुतेर्वैलक्षण्याच्च ॥ २ । ४ । १६ ॥

'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चे'ति प्राणेन्द्रिययोः पार्थक्येन श्रवणात् । ननु मनसोऽप्यस्तीन्द्रियेभ्यः पृथक् श्रवणम् । सत्यम् । शब्दान्तरेण मनस इन्द्रियत्वमवगम्यते 'मनः षष्ठानीन्द्रि-

---

**त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ २ । ४ । १५ ॥**

श्रेष्ठात्–मुख्यप्राणादन्यत्र ते–प्राणाः–मुख्यप्राणादन्ये प्राणशब्दवाच्या इन्द्रियाणि, तद्व्यपदेशात्–'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति प्राणभिन्नेषु इन्द्रियत्वव्यपदेशात् । मनसस्तु पृथङ्निर्देशो गोबलीवर्दनयात् ॥ १५ ॥

**भेदश्रुतेर्वैलक्षण्याच्च ॥ २ । ४ । १६ ॥**

'अथ हेममासन्यं प्राणमूचुः' इति मुख्यप्राणात् भेदेनेन्द्रियाणां श्रवणात् । सुषुप्ताविन्द्रियव्यापारोपरमेऽपि मुख्यप्राणव्यापारानुपरमाद्वैलक्षण्याच्च मुख्यप्राणादन्य एवेन्द्रियाणि ॥ १६ ॥

इति प्रदीपे इन्द्रियाधिकरणम् ॥ ७ ॥

याणी'ति । इन्द्रियाणां मुख्यप्राणादन्यत्वं तु अनपोह्यम् । अस्ति च वैलक्षण्यं प्राणादिन्द्रियाणाम् , प्राणः शरीरधारणकारणम्, इन्द्रियाणि तु ज्ञानक्रियासाधनानि, तदेवं कार्यतो वैलक्षण्यात्प्राणादन्यान्येवेन्द्रियाणि । प्राणाधीनस्थितिकत्वाच्चेन्द्रियेषु प्राणशब्दव्यपदेशः । श्रूयते च– 'त एतस्यैव सर्वे रूपमभवन् तस्मादेतेनाख्यायन्त' इति । तदधीनवृत्तिकत्वात्तद्रूपमुच्यन्ते । एतेनाख्यायन्ते–प्राणनाम्नाऽऽख्यायन्ते ॥ १६ ॥

( अ. स. ) श्रेष्ठादन्ये तु ये प्राणाश्चक्षुःश्रोत्रत्वगादयः ।
इन्द्रियाणि तु तान्येव तेषु तद्व्यपदेशतः ॥ १ ॥
प्राणाद्भेदः श्रूयते च तेषां वृत्तिश्च भिद्यते ।
सुषुप्तौ प्राण एकस्तु स्वयं जागर्ति नेतरे ॥ २ ॥

इति भाष्ये इन्द्रियाधिकरणम् ॥ ७ ॥

पूर्वं वियदादीनां भूतानामिन्द्रियाणां चोत्पत्तिश्चिन्तिता । जीवानामिन्द्रियाणां च कर्तृत्वं करणत्वं च परायत्तमिति स्थिरीकृतम् । इदानीं व्यष्टिसृष्टिमधिकृत्य चिन्त्यते । येयं नामरूपव्याकरणलक्षणा देवादिविविधविचित्रव्यष्टिसृष्टिः तस्यां किं हिरण्यगर्भस्य कारणत्वम् , उत तच्छरीरकस्य परस्य ब्रह्मण एवेति विचार्यते ।

## संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥२।४।१७॥

अत्राह —'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी'ति जीवकर्तृकत्वं नामरूपव्याकरणे श्रूयते । जीवश्चायं हिरण्यगर्भाख्यः–

---

**संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २ । ४ । १७ ॥**

पूर्वं वियदादिभूतसृष्टिः परमात्मकर्तृकेत्युक्तम् । इदानीं या व्यष्टिसृष्टिर्नामरूपव्याकरणलक्षणा साऽपि परमात्मकर्तृकेत्युच्यते । संज्ञा—नाम, मूर्तिः—रूपम् , तयोः क्लृप्तिः—सर्गः, त्रिवृत्कुर्वतः–'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इत्यादिना त्रिवृत्करणे कर्तृतया यो निर्दिश्यते तस्यैव उपदेशात्—तत्कर्तृतयोपदेशात् । 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि, तासां त्रिवृतं त्रिवृतमेकैकां करवाणी'ति त्रिवृत्करणनामरूपव्याकरणयोरेककर्तृकत्वं हि उपदिश्यते ॥ १७ ॥

समष्टिजीवः । ननु—सच्छब्दवाच्याया देवतायाः खल्वेष सङ्कल्पः 'नामरूपे व्याकरवाणी'ति । 'सेयं देवतैक्षते'त्युपक्रम्य हि श्रूयते— 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्ये'त्यादि । तदुत्तमपुरुषेण परस्य ब्रह्मणो व्याकरणकर्तृत्वमवगम्यते, न जीवस्य । सत्यम् । अथाप्यनेन जीवेनेति तृतीयाश्रुत्या जीवस्यानुप्रवेशकर्तृत्वं गम्यते । अनुप्रविश्येति ल्यप्श्रवणाच्चानुप्रवेशव्याकृत्योरेककर्तृत्वं गम्यते । नन्वेवं सति चारेणानुप्रविश्य परबलं सङ्कलयानीत्यत्रेव लाक्षणिकता स्यादुत्तमपुरुषस्य । नैवम् । तत्र राजचारयोरत्यन्तभेदात् लाक्षणिकत्वम् । इह तु जीवस्य ब्रह्मांशत्वेनानन्यतया न लाक्षणिकत्वप्रसङ्गः । तथा च व्यष्टिसृष्टौ कर्तृत्वं हिरण्यगर्भस्यैव प्रथमजीवस्येति ।

अत्रोच्यते—संज्ञा-नाम, मूर्तिः-रूपं, तयोः क्लृप्तिः—व्याकरणम्, त्रिवृत्कुर्वत एव—त्रिवृत्करणकर्तुरेव । उपदेशात् । उपदेशश्च—'सेयं देवता इमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत्, तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' इति । अनेन त्रिवृत्करणकर्तुर्नामरूपव्याकरणकर्तुश्चैक्यं विज्ञायते । त्रिवृत्करणे कर्तृत्वं तु परस्यैव ब्रह्मणः न हिरण्यगर्भस्य । स ह्यण्डान्तर्भूतः । अण्डसृष्टिश्च नात्रिवृत्कृतैर्भूतैः । तस्मात् त्रिवृत्करणमण्डसृष्टेः प्राक्तनमिति तत्कर्तृत्वं परब्रह्मण एव । तस्मान्नामरूपव्याकरणकर्तृत्वं च परस्यैव ब्रह्मणः । इयान्विशेषः हिरण्यगर्भशरीरकः सन् व्यष्टिसृष्टिं करोतीति । इदमत्र बोध्यम्—नामरूपव्याकरणसङ्कल्पः त्रिवृत्करणसङ्कल्पश्चैकस्यैव देवताविशेषस्य श्रूयते । तदनु तस्यैव देवताविशेषस्य क्रमान्नामरूपव्याकरणकर्तृत्वं त्रिवृत्करणकर्तृत्वं च श्रूयते । तत्र त्रिवृत्करणस्य नामरूपव्याकरणे साधनत्वात्, नामरूपव्याकरणसङ्कल्पशेषभूतस्त्रिवृत्करणसङ्कल्पः । पाठक्रमादर्थक्रमस्य बलीयस्त्वेन च त्रिवृत्करणानन्तरभावि नामरूपव्याकरणमिति । श्रुत्यर्थः उपनिषद्विवरणतो बोध्यः ॥ १७ ॥

ननु—त्रिवृत्करणे कर्तृत्वं साक्षाद्ब्रह्मण एव न जीवस्येत्येतन्न युज्यते। व्यष्टिसृष्ट्यनन्तरभावित्वं हि त्रिवृत्करणेऽवगम्यते 'यथा नु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवन्ति तन्मे विजानीही'त्युपक्रम्य 'अन्नमशितं त्रेधा विधीयत' इत्यादिना। पुरुषं प्राप्येति श्रवणाच्चास्य त्रिवृत्करणस्य व्यष्टिसृष्टयनन्तरभावित्वं स्पष्टमवगम्यते, इत्यत्राह—

## मांसादिभौमं यथाशब्दमितरयोश्च ॥ २ । ४ । १८ ॥

'तासां त्रिवृतं त्रिवृतमेकैकामकरोदि'त्यत्र श्रूयमाणात्परमात्मकर्तृकात्त्रिवृत्करणादन्यदेवेद'मन्नमशित'मित्यादिना निरूप्यमाणम्

---

ननु त्रिवृत्करणे कर्तृत्वं अण्डसृष्ट्यनन्तरभाविचतुर्मुखसृष्टेषु पुरुषेष्वेव युज्यते। श्रूयते हि 'यथा तु खलु सोम्येमाः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवन्ति तन्मे विजानीही'ति। पुरुषं प्राप्येतिश्रवणात् व्यष्टिसृष्ट्यनन्तरभावित्वमेव हि गम्यते। तत्राह—

## मांसादिभौमं यथाशब्दमितरयोश्च ॥ २ । ४ । १८ ॥

नेह श्रूयमाणं नामरूपव्याकरणौपयिकं महाभूतानामग्न्यादीनां त्रिवृत्करणम्, यन्नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सङ्कल्पविषयः। किन्तु पुरुषैरुपभुक्तस्यान्नस्य जीर्णस्य परिपाकविशेषरूपं त्रेधोच्यते। अन्नं भुक्तं पुरुषशरीरं प्राप्य परिपक्वं पुरीषमांसमनोभेदेन भवति त्रेधेति। मनस आप्यायकत्वेन मनो भवतीति। अन्यथा मांसस्य आप्यत्वं मनसस्तैजसत्वमापतेत्। मांसादि—मांसं मनश्च भौमं हि—अन्नस्यैव विपाकः हि। इतरयोश्च यथाशब्दम्—अप्तेजसोरपि यथाशब्दम्। अपां भुक्तानां परिपाकः मूत्रलोहितप्राणात्मना त्रेधा, तैजसो भुक्तस्य अस्थिमज्जावागात्मना त्रेधा। तथा च नामरूपव्याकरणौपयिकं महाभूतानां त्रिवृत्करणं परमात्मकर्तृकमेव ॥ १८ ॥

त्रिवृत्कृतपृथिव्यादिविकारभूतान्नादिकस्य पुरुषेणोपभुक्तस्य त्रेधा परिपाकविशेषो ह्यत्र प्रतिपाद्यते। तत्र योऽन्नस्य भुक्तस्य स्थूलो भागस्तत्पुरीषं यो मध्यमस्तन्मांसं योऽणिष्ठो भागः तन्मनः इति मांसं मनश्च भौमं—पार्थिवमुच्यते । तथा, यथाशब्दमितरयोश्च—आपः पीताः परिपच्यमाना मूत्रलोहितप्राणा भवन्ति, तेजो[1] भुक्तं पच्यमानं अस्थिमज्जावाग्रूपं भवतीति प्रतिपादनात् लोहितप्राणयोरब्विकारत्वं मज्जावाचोस्तेजोविकारत्वं गम्यते । यदि पुनः पृथिव्यादिमहाभूतत्रयस्य त्रिवृत्करणमिह विवक्षितं स्यात्, तदाऽन्नस्य यो मध्यमः यश्चाऽणिष्ठः, तयोर्मांसमनसोः क्रमादाप्यत्वतैजसत्वे स्याताम् । यश्चापां मध्यमो भागः लोहितलक्षणोऽणीयान् प्राणः तयोः क्रमात्पार्थिवत्वतैजसत्वे स्याताम्। तथा तेजसो भुक्तस्य मध्यमो मज्जालक्षणो यः, यश्चाणीयाभागः वाक् तयोः पार्थिवत्वाप्यत्वे स्याताम् । श्रूयते तु—'अन्नमयं हि सौम्य मनः आपोमयः प्राणः तेजोमयी वागि'ति । तस्मादन्नमशितमित्यादिना न महाभूतानामत्रिवृत्कृतानां त्रिवृत्करणप्रकारो निरूप्यते इति सिद्धम्॥ १८ ॥

ननु—'अन्नमशितं' 'आपः पीताः' 'तेजोऽशितं' इति महाभूतवाचकान्नादिशब्दैः त्रिवृत्कृतानां कथं निर्देशः, तत्राह—

## वैशेष्यात्तु तद्वादस्तद्वादः ॥ २ । ४ । १९ ॥

वैशेष्यात्—आधिक्यात्, स्वस्वांशाधिक्यात्, तद्वादः—तद्वाचकशब्देन निर्देशः । त्रिवृत्कृतेऽन्ने पार्थिवांशस्याधिक्यात् अन्नमिति

---

वैशेष्यात्तु तद्वादस्तद्वादः ॥ २ । ४ । १९ ॥

तद्वादः—'अन्नमशितम्' 'आपोऽशिताः' 'तेजोऽशित' मिति अन्नादिशब्दैर्निर्देशस्तु वैशेष्यात्—त्रिवृत्कृते तत्र तत्र तत्तदंशस्य भूयस्त्वात् । पार्थिवांश-

---

[1] टी. तेजः—तेजःप्रधानं घृततैलादि ।

व्यपदेशः। त्रिवृत्कृतासु अप्सु अपामाधिक्यात् अब्वादः, तेजस्यशिते तेजस आधिक्यात् तेजोवादः। वीप्साऽध्यायपरिसमाप्ताविति ॥१९॥

(अ. स.) नामरूपव्याक्रियाऽपि तस्यैव परमात्मनः।
त्रिवृत्करणकर्तृत्वं श्रूयते नेतरस्य हि ॥ १ ॥
यस्य तत् श्रूयते साऽपि तस्यैव व्यपदिश्यते।
नामरूपव्याक्रियार्था महाभूतेषु वै पुनः ॥ २ ॥
'तासां त्रिवृत'मित्यादिवाक्योक्ता या त्रिवृत्कृतिः।
ततोऽन्या पुरुषं प्राप्येत्यादिना व्यपदिश्यते ॥ ३ ॥
त्रिवृत्कृतेषु भुक्तेषु त्वन्नादिषु निरूप्यते।
भवेतां मांसमनसोराप्यतैजसते न चेत् ॥ ४ ॥
ते हि भौमे यथाशब्दं बोध्यं हीतरयोरपि।
अन्नादिशब्दनिर्देशो विशेषात्तु त्रिवृत्कृते ॥ ५ ॥

इति भाष्ये संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥ ८ ॥

इति ब्रह्ममीमांसाभाष्ये द्वितीयस्याध्यायस्य चतुर्थः पादः।

समाप्तो द्वितीयाध्यायः।

---

भूयस्त्वादन्नमिति, जलांशभूयस्त्वादाप इति, तेजोंशभूयस्त्वात्तेज इति च व्यपदेश इति यावत्। अध्यायसमाप्तिद्योतकोऽभ्यासः ॥ १९ ॥

इति संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥ ८ ॥

इति ब्रह्ममीमांसार्थप्रदीपे द्वितीयस्याध्यायस्य चतुर्थः पादः।

# तृतीयोऽध्यायः ।

अतीतेनाध्यायद्विकेन जिज्ञास्यस्य परस्य ब्रह्मणः स्वरूपं जगत्कारणत्वलक्षणलक्षितं सकलेतरविलक्षणं परपक्षप्रतिक्षेपस्मृतिन्यायविरोधपरिहारादिभिः सम्यग्विचार्य शास्त्रतो निर्णीतम् । अथ साधनं फलं च समनन्तरद्विकेन विचार्यते । तत्र साधनं ब्रह्मोपासनं, फलं ब्रह्मप्राप्तिः । ब्रह्मोपासनं च भवपथे परिभ्रमतो दोषानपश्यतः अपश्यतश्च ब्रह्मणि गुणान्न घटेत । तदर्थं भवपथे परिभ्रमतो जीवस्य जाग्रदाद्यवस्थासु दोषाः, ब्रह्मणः कल्याणगुणाकरत्वं चेत्येतत् प्रथमं पादद्वयेन क्रमात् प्रतिपाद्यते । तत्प्रसङ्गाज्जीवस्यास्य लोकादस्माल्लोकान्तरं गच्छतो गतिप्रकारः प्रथममस्मिन्नधिकरणे विचार्यते—

## तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ ३ । १ । १ ॥

अत्रायं संशयः—किमयं जीवो लोकान्तरमितो गच्छन् भूतसूक्ष्मैः सम्परिष्वक्त एव गच्छति, उत नेति । अत्राह–इतो गच्छन्

---

**तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ ३ । १ । १ ॥**

पूर्वं जीवस्वरूपं तदुपकरणस्वरूपं च विचारितम् । अधुना जीवस्य गत्यागती विचार्येते । तच्छब्दः पूर्वसूत्रनिर्दिष्टमूर्तिपरः । मूर्त्यन्तरप्रतिपत्तौ—शरीरान्तरप्राप्तौ, इतः प्रेतो जीवः शरीरान्तरं यदा प्राप्तुं रंहति—गच्छति, तदा संपरिष्वक्तः—भूतसूक्ष्मैः संश्लिष्ट एव रंहति । प्रश्नप्रतिवचनाभ्यां चैतदवगम्यते । छान्दोग्ये पञ्चाग्निविद्यायां 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति प्रश्नः, 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'ति च प्रतिवचनं श्रूयते । आभ्यामेतदवगम्यते । आप इति भूतसूक्ष्मम् । आसर्गात्पुरुषमनुवर्तमानं भूतसूक्ष्मं तत्तद्योनिविशेषं प्राप्य स्थूलं शरीरमारभमाणं इतः प्रेते जीवे पुण्यबलेन द्युलोके चन्द्रशरीरं प्राप्य भुक्तावशिष्टेन कर्मणा ततः प्रत्यवरोहति, क्रमेण योषिच्छरीरं प्राप्य पुरुषशब्दाभिलप्यं भवतीति प्रतिवचनाशयः । तत् सिद्धं भूतसूक्ष्मसंपरिष्वक्तो गच्छतीति ॥ १ ॥

भूतसूक्ष्मैः सम्परिष्वक्त एव गच्छतीत्येतन्न । तत्र तत्र लोकान्तरे भूतसूक्ष्माणां सुलभत्वात्। लोकान्तरं गत एव तत्रत्यैर्भूतसूक्ष्मैः परिष्वज्यते । इति । अत्रोच्यते—तदन्तरप्रतिपत्तौ—तच्छब्दः संज्ञामूर्तिक्लृप्तिरिति पूर्वसूत्रे मूर्तिशब्देन निर्दिष्टं देहं परामृशति । देहान्तरप्राप्तावितः सम्परिष्वक्त एव—भूतसूक्ष्मैः संश्लिष्ट एव—एतैरविश्लिष्ट एव रंहति—गच्छति । कस्मादेवमवगम्यते । प्रश्ननिरूपणाभ्याम् । निरूपणम्—प्रतिवचनम् । 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'ति प्रश्नः, 'असौ वाव लोको गौतमाग्नि'रित्युपक्रम्य 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'त्यन्तं पृष्टार्थनिरूपणाय प्रवृत्तं प्रतिवचनम् । आभ्यां भूतसूक्ष्मैः सम्परिष्वक्त एव गच्छन् लोकान्तरे देहान्तरं स्थूलं प्राप्नोतीत्यवगम्यते ।

तथा हि—तत्र द्युलोकपर्जन्यपृथिवीपुरुषयोषाः क्रमादग्नित्वेन परिकल्प्य तेष्वग्निषु क्रमादेवैः प्राणैः हुतानां श्रद्धाशब्दवाच्यानामाहुतिद्रव्यस्थानीयानामपां—भूतसूक्ष्माणां सोमराजादिभावं—स्पृहणीयाह्लादकस्थूलशरीरादिभावं गतानां पञ्चमे योषाग्नौ हुतानां ब्राह्मणादिस्थूलशरीरभावमुपगतानां पुरुषशब्दाभिलप्यत्वं श्रूयते । अत्र प्रश्ने प्रतिवचनान्ते च श्रूयमाणा आपो न केवलमापः, किन्तु मिथःसंश्लिष्टानि भूतसूक्ष्माण्येव स्थूलदेहारम्भकाणि । एतदनुपदमेव सूत्रकारः स्फुटीकरिष्यति । इदञ्चात्र बोध्यम्—प्रथमे द्युलोकाग्नौ हुतानामपां स्वर्गोपभोगार्हसोमराजात्मकस्थूलदेहात्मना परिणत्या तद्भाववत् न परिणत्या वर्षादिभावः, अपि त्वविभागेन तत्र तत्र स्थितिमात्रम् । उपनिषद्विवरणे चैतदुपपादितम् , ततो विशेषतोऽवगन्तव्यम् । अयमत्र प्रतिवचनस्य सारांशः—पुण्येन कर्मणा इतो लोकाल्लोकान्तरं प्रयतोऽस्य एनमनूत्क्रामद्भिः प्राणैः समाकृष्टानि भूतसूक्ष्माणि द्युलोके सोमभावं प्राप्य भोगायतनं भूत्वा भुक्तावशिष्टेन कर्मणा इमं लोकं प्रत्यावर्तमानमेनमनु प्रत्यावर्तमानैः प्राणैः प्रत्याकृष्यमाणानि पर्जन्यादिषु क्रमेण वर्षान्नरेतोभावमुपगम्यान्ते स्त्रीशरीरं प्राप्य गर्भभावमुपगम्य

यथाकर्म भोक्तुरस्य भोगायतनतामापद्यन्त इति । तथा च सिद्धं भूतसूक्ष्मैः सम्परिष्वक्त एवायं रंहतीति ॥ १ ॥

नन्वाप एव श्रूयन्ते न तु भूतसूक्ष्माणि, ? तत्राह—

## त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ ३ । १ । २ ॥

त्रिवृत्करणेन मिथो भूतसूक्ष्माणां संश्लिष्टतया भूतान्तरसंश्लिष्टा एवाप इह बोध्याः, अपां भूयस्त्वादाप इति निर्देशः । इदं पञ्चीकरणस्याप्युपलक्षकम् ॥ २ ॥

## प्राणगतेश्च ॥ ३ । १ । ३ ॥

देहादस्मादुत्क्रामन्तं जीवमनु प्राणानामिन्द्रियाणां गतिः श्रूयते—'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति, प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति । स्मर्यते च—'मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति' 'शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः । गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्' इति । इयं चानुगतिर्निराश्रयाणामेतेषां नोपपद्यते इति तदाश्रयभूतानां भूतसूक्ष्माणां च गतिरवश्यमास्थेया ॥३॥

## अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ३ । १ । ४ ॥

ननु—मरणकाले वागादीनामग्न्यादिष्वप्ययः श्रूयते, तदिन्द्रि-

---

नन्वाप इति कथं भूतसूक्ष्मनिर्देशः । तत्राह—

### त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ ३ । १ । २ ॥

केवलानामपां शरीरारम्भकत्वासम्भवात् त्रिवृत्कृतानामेव च तथात्वसम्भवात् जलांशस्य प्राधान्यात् आप इति निर्देशः ॥ २ ॥

### प्राणगतेश्च ॥ ३ । १ । ३ ॥

'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति, प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती'ति प्राणानां जीवमनु उत्क्रमणश्रुतेः भूतसूक्ष्मसंपरिष्वक्त एव जीवो रंहतीति सिद्धम् । प्राणाधारत्वेन भूतसूक्ष्माणामवश्यंभावात् ॥ ३ ॥

### अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ३ । १ । ४ ॥

ननु 'मृतस्याग्निं वागप्येती'ति मरणसमये वागादीनामग्न्यादौ लयश्रव-

याणां जीवेन सह गमनं नोपपद्यत इति चेन्न । स ह्यप्ययः श्रूयमाणो भाक्तः—औपचारिकः, कस्मात्? भाक्ताप्ययसहपाठात् । 'ओषधीर्लोमानि वनस्पतीन् केशाः' इति ओषध्यादिषु लोमादीनामप्ययस्तत्र श्रूयते । लोमादीनां चेहैव स्थितिः प्रत्यक्षसिद्धा, तत्तेषामप्ययो भाक्त एवास्थेयः । यथा—लोमादीनां याऽधिष्ठात्री देवता, सा तत अपसृत्य ओषधिमात्रमधिष्ठाय वर्तते इति । तथैव वागाद्यधिष्ठात्री अग्न्यादिदेवता वागादित अधिष्ठेयादपसृत्य प्रज्वलनादिलक्षणाग्न्यादिस्वरूपमात्रमधिष्ठाय वर्तत इति भाक्तैवेयमप्ययश्रुतिर्नेया ॥ ४ ॥

## प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ३ । १ । ५ ॥

ननु—प्रथमे द्युलोकाग्नौ आपो न श्रूयन्ते । 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वती'त्येव श्रूयते । तद्भूतसूक्ष्मपरिष्वक्त एवायं गच्छतीत्येतदनुपपन्नमिति चेन्न । ता एव हि—'आपः पुरुषवचसो भवन्ती'ति या आपः श्रुताः, ता एव हि श्रद्धाशब्देनोच्यन्ते । तथासत्येव प्रश्नप्रतिवचनयोरुपपत्तिः । अन्यथा पृष्टमेकं प्रत्युत्तरितमन्यदित्यापतेत् ॥ ५ ॥

---

णात् जीवेन सह गमनमित्यनुपपन्नमिति चेन्न, अप्ययश्रुतेस्तस्या भाक्तत्वात्—गौणत्वात् । 'ओषधीर्लोमानि वनस्पतीन् केशा' इति श्रूयमाणस्य लोमाद्यप्ययस्येव तत्सहपाठात् वागाद्यप्ययस्यापि भाक्तत्वमेव हि । तत्तदभिमानिदेवताविशेषस्य अभिमाननिवृत्तिमात्रे तात्पर्यम् ॥ ४ ॥

### प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥

ननु पञ्चाग्निविद्यायां 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वती'ति श्रद्धाया एव प्रथमे—द्युलोकाग्नौ होम्यत्वश्रवणात् भूतसंपरिष्वक्तो रंहतीत्यनुपपन्नमिति चेन्न । श्रद्धाशब्देन ता एव—आप एवोपपत्तेः—प्रश्नोत्तररूपत्वोपपत्तेरुच्यन्ते । अन्यथा प्रतिवचनं नोपपद्येत । 'श्रद्धा वा आप' इति च श्रूयते ॥ ५ ॥

## अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥३।१।६॥

नन्वत्र प्रश्ननिरूपणवाक्ययोः जीवो न श्रूयते । आप एव तु श्रूयन्ते । तदपां भूतसूक्ष्माणां द्युलोकादिगमनमास्ताम् । भूतसूक्ष्मसम्परिष्वक्तो जीवो रंहतीति प्रश्ननिरूपणाभ्यामवगम्यत इत्येतदनुपपन्नम्, इति चेन्न । अनुपदमुत्तरत्र 'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति × × × × मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्च चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति' इति इष्टादिकारिणां द्युलोकगमनं सोमराजभावश्च श्रूयते । तथा—'तस्मिन् यावत्सम्पातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते × × × × अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते × × × × यो यो ह्यन्नमत्ति यो यो रेतः सिञ्चति तद्भूय एव भवति' इति द्युलोकात्प्रत्यावर्तमानानां तेषामभ्रान्नादिभावश्च श्रूयते । तदनेन सहैकार्थ्यं प्रश्ननिरूपणवाक्ययोरवगम्यत एवेति भूतसम्परिष्वक्तो जीवो रंहतीति सिद्धम् ॥ ६ ॥

ननु—'सोमो राजा····तं देवा भक्षयन्ती'ति सोमराजस्य देवभक्ष्यत्वश्रवणाज्जीवस्य च भक्ष्यत्वानुपपत्तेः नात्र जीवः प्रतिपाद्यत इत्याशङ्कायामाह—

## भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति ॥ ३ । १ । ७ ॥

वाशब्दः शङ्कां व्यावर्तयति । देवभक्ष्यत्वश्रवणं भाक्तम् । देवा

---

**अश्रुतत्वादिति चेन्न इष्टादिकारिणां प्रतीतेः ॥ ३ । १ । ६ ॥**

ननु पञ्चाग्निविद्यायामपामेव गमनं श्रूयते । प्रश्नप्रतिवचनेष्वपामेव श्रवणात् जीवस्याश्रवणात् जीवो भूतसूक्ष्मसंपरिष्वक्तो गच्छतीत्यनुपपन्नमिति चेन्न । तत्रैव प्रकरणे 'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ती'ति इष्टादिकर्तुर्जीवस्य गमनश्रवणात् ॥ ६ ॥

**भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति ॥ ३ । १ । ७ ॥**

ननु—'एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति' इति देवभक्ष्यत्व-

इष्टादिकारिणो द्युलोकमुपगतान् स्वसमानभोगान् स्वभोगोपकरणतया परिगृह्णन्ति। ते चैते तत्परिचरणेन तृप्यन्ति च। एते ह्यनात्मविदः, अतस्तं देवा भक्षयन्तीत्येतदौपचारिकम्। तथा श्रुतिरपि दर्शयति— 'यथा पशुरेवं स देवाना'मिति ॥ ७ ॥

( अ. स. ) अस्माल्लोकादमुं लोकं व्रजन् जीवः स्वकर्मणा।
भूतसूक्ष्मैरविश्लिष्टो विश्लिष्टो वा विचार्यते ॥ १ ॥
ननु विश्लिष्ट एवायं याति यातस्य तस्य तु।
तत्रत्यैरपरैः स्थूलदेहारम्भो हि तैर्भवेत् ॥ २ ॥
अत्रोच्यते भूतसूक्ष्मैरविश्लिष्टः प्रयात्ययम्।
एतत्पञ्चाग्निविद्यायां प्रश्नपूर्वं निरूप्यते ॥ ३ ॥
नन्वाप एव श्रूयन्ते प्रश्ने चापि निरूपणे।
त्र्यात्मकत्वात्तु भूयस्त्वाद्भूतसूक्ष्मेषु तद्वचः ॥ ४ ॥
गतिश्रुतिश्चेन्द्रियाणामत एवोपपद्यते।
गौणी सा या तु वागादेरग्न्यादावप्ययश्रुतिः ॥ ५ ॥
द्युलोकाग्नौ होम्यतया श्रद्धैव श्रूयते ननु।
श्रद्धाशब्देन निर्दिष्टास्त्वाप एवात्र ताः खलु ॥ ६ ॥
प्रश्नप्रत्युक्तिवैरूप्यमन्यथा प्रसजेन्ननु।
नन्वस्तु भूतसूक्ष्माणां गतिः पञ्चाग्निषु क्रमात् ॥ ७ ॥
न तु पञ्चाग्निविद्यायां जीवस्य श्रूयते गतिः ॥ ८ ॥
मैवमिष्टादिकर्तॄणामग्रे द्युप्राप्तिकीर्तनात्।
तेषां तु देवभक्ष्यत्वश्रुतिर्भाक्ता प्रवर्तते ॥ ९ ॥

---

श्रवणात् इष्टादिकारिणां पुण्यफलभोगाय द्युलोकगमनमित्येतदनुपपन्नमित्यात्राह—देवभक्ष्यत्वश्रवणं भाक्तम्—गौणम्। अनात्मविस्त्वादिष्टादिकर्तुः द्युलोकं गतस्यापि तस्य तत्रत्याजानसिद्धदेवापेक्षया निकृष्टत्वात् पशुरिवायं तद्भोगोपकरणीभूतो भवतीत्येतदभिप्रेत्य 'तं देवा भक्षयन्ती'ति श्रूयते। तथा श्रुतिरपि हि दर्शयति—'यथा पशुरेवं स देवाना'मिति ॥ ७ ॥

इति प्रदीपे तदन्तरप्रतिपत्त्यधिकरणम् ॥ १ ॥

अनात्मज्ञतया ते हि देवानां पशवः श्रुताः ।
तथा च सम्परिष्वक्तो रंहतीति सुसंस्थितम् ॥ १० ॥
इति भाष्ये तदन्तरप्रतिपत्त्यधिकरणम् ॥ १ ॥

---

जीवोऽयमितो लोकान्तरं व्रजन् भूतसूक्ष्मसम्परिष्वक्तो याति न वेत्येतद्विचारितम् । अथामुष्माल्लोकादिमं लोकमाव्रजन् किं सानुशय आव्रजति उत निरनुशय इत्येतदद्य विचार्यते—

## कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ३ । १ । ८ ॥

अत्र संशयः—किमयं धूमादिमार्गेण द्युलोकमुपगतो जीवस्तत्रानुभूय पुण्यफलं पुनरिमं लोकं प्रत्यावर्तमानः, सानुशयः प्रत्यावर्तते उत निरनुशय एव । अनुशयः भुक्तावशिष्टं कर्म । अत्राह—'यावत्सम्पातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते' इति हि श्रूयते । सम्पतत्यनेनामुं लोकमिति सम्पातः कर्म । यावत्सम्पातमुषित्वेत्यनेन निरवशेषतया कर्मफलमनुभूय प्रत्यावर्तत इति हि गम्यते । अत्रोच्यते—द्युलोकमुपगतो जीवः कृतस्य सुकृतस्य स्वर्गभोगाधायकस्यात्यये—अवसाने ततः प्रत्यावर्तमानः सानुशय एव—भुक्तावशिष्टकर्मसहित एव प्रत्यावर्तते । कथमेतद्विज्ञायते । दृष्टस्मृतिभ्याम्—दृष्टम्—श्रुतिः ।

---

**कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥३।१।८॥**

पुण्येन कर्मणा द्युलोकमुपगतः कृतस्य कर्मणो भोगेन अत्यये सति अनुशयवान्—भुक्तावशिष्टं कर्म अनुशयः तद्वान् तस्मादवरोहति । श्रुतिस्मृतिभ्यामिदमवगम्यते—'रमणीयचरणा रमणीयां योनिमापद्यन्ते कपूयचरणाः कपूयां योनिमापद्यन्ते' इति श्रुतिः । 'वर्णा आश्रमाश्च स्वकर्मनिष्ठिताः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशकुलरूपायुःश्रुतवृत्तसुखमेधसो जन्म प्रतिपद्यन्ते' इति स्मृतिः । अवरोहणमार्गे चैष विशेषः—यथेतमनेवं चेति । येन मार्गेण गतः, तेन ततोऽन्येन च मार्गेणावतरतीति । आरोहणावरोहणयोराकाशस्यान्वयः । वाय्वादिरारोहणपथादन्योऽवरोहणपथ इति ॥ ८ ॥

तथा हि श्रूयते तत्रैव—'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ×××× अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन्' इति । अभ्याशः—आगन्तारः, अमुष्माल्लोकादिमं लोकं प्रत्यावर्तमानाः । स्मर्यते च—'वर्णा आश्रमाश्च स्वकर्मनिष्ठिताः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तसुखमेधसो हि जन्म प्रतिपद्यन्ते । विष्वञ्चो विपरीता विनश्यन्ती'ति । यावत्सम्पातमुषित्वेति तु परिपक्वकर्मविषयम् । परिपाकश्च फलाधानौन्मुख्यम् । अत्रेदं बोध्यम्—किमेकस्मिन्नेव पक्वापक्वांशभेदः, किंवान्यदेवापक्वं पक्वात्, येनास्मिन् लोके रमणीययोनिप्राप्तिः । स्वर्गकामनया कृते स्वर्गाधायके कर्मण्येव पक्वापक्वांशभेदकल्पनया निर्वहणं तु ज्योतिष्टोमादेः स्वर्गसाधकत्वश्रवणाननुगुणम् । तदन्यदेव सुकृतं स्वर्गाधायकात्कर्मणः परिपक्वात्, स्वर्गोपभोगानन्तरमाकाशादिक्रमेणावरोहतो रेतःसिग्योगावसरे भवति यत् परिपक्वम्, तेन च रमणीययोनिलाभ इति । अवरोहणे चैष विशेषः—'यथेतमनेवं च' येन क्रमेणारोहणं तेनैव क्रमेणावरोहणमिति न नियमः । द्युलोकमारोहन् धूमादिक्रमेणाकाशं प्राप्य ततश्चन्द्रमसं प्राप्नोति, चन्द्रमसः स्थानादवतरन् आकाशेऽवतरति । एतावन्मात्रे यथेतमवरोहणम् । आकाशात्तु वायुधूमाभ्रमेघक्रमेणेति चानेवम् । यथेतम्—यथागतम् ॥ ८ ॥

## चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥ ३ । १ । ९ ॥

ननु द्युलोकादवतरन्नानुशयवानवतरति । पुण्यं तु भुक्तमेव सर्वम् ।

---

**चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥ ३।१।९ ॥**

ननु—अनुशयवानवरोहतीत्येतन्नोपपद्यते । 'रमणीयचरणा' इत्येव हि श्रूयते । चरणशब्दो हि स्मार्ताचारे प्रयुज्यते चरणमाचार इति । पुण्यं कर्म तु श्रौतम् । तत् उक्तश्रुतिबलादनुशयवानवरोहतीत्यसङ्गतमिति चेन्न । अत्र कार्ष्णाजिनिर्मन्यते चरणशब्दः तदुपलक्षणार्थः—पुण्यकर्मोपलक्षणार्थः इति ॥ ९ ॥

यावत्सम्पातमिति च श्रुतिः । 'रमणीयचरणा' इति श्रुतिस्तु आचारमात्रं श्रावयति । चरणशब्दस्तत्रैव प्रवर्तते । चरणमाचारः शीलं वृत्तमिति च पर्यायः । आचारश्च स्मार्तः । श्रूयते च कर्माचरणयोर्भेदेन निर्देशः 'यान्यनवद्यानि कर्माणि तानि सेवितव्यानि ×××× यान्यस्माकं सुचरितानि तानि त्वयोपास्यानी'ति । तद्रमणीयजन्मलाभे साध्वाचरणमेव कारणम्, न भुक्तावशिष्टं कर्मेति चेत् । तत्र कार्ष्णाजिनिराचार्यो मन्यते—आचरणश्रुत्या कर्मैवोपलक्ष्यते, तत्सानुशय एवेमं लोकं प्रत्यावर्तत इति ॥ ९ ॥

## आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ ३ । १ । १० ॥

नन्वेवं सति स्मृतिविहिताचाराणामानर्थक्यम्—नैरर्थक्यं स्यादिति चेन्न । तदपेक्षत्वात्—कर्मणां पुण्यलक्षणानामाचारसापेक्षत्वात् । आचाराङ्गकत्वात् । आचारहीनस्य कर्मण्यनधिकारात् । स्मर्यते च 'सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु' इति ॥ १० ॥

## सुकृतदुष्कृते एवेति तु बादरिः ॥ ३ । १ । ११ ॥

'रमणीयचरणाः' 'कपूयचरणा' इतीयं श्रुतिः पुण्यपापविषयैव । कर्मण्यपि 'पुण्यं कर्माचरति पापं कर्माचरति' इति चरतेः प्रयोगात् । ननु 'यान्यनवद्यानि कर्माणि' 'यान्यस्माकं सुचरितानी'ति भेदेन

---

### आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ ३ । १ । १० ॥

ननु—द्युलोकप्राप्तौ रमणीययोनिप्राप्तौ च यदि न स्मार्ताचारः कारणम्, तर्हि तदानर्थक्यमिति चेन्न, तदपेक्षत्वात्—स्मार्तकर्मसापेक्षत्वात् श्रौतकर्मणः । 'आचारहीनं न पुनन्ति वेदाः' 'सन्ध्याहीनोऽशुचिर्नित्य'मिति स्मरणात् ॥ १० ॥

### सुकृतदुष्कृते एवेति तु बादरिः ॥ ३ । १ । ११ ॥

बादरिराचार्यस्तु मन्यते सुकृतदुष्कृते एव चरणशब्दार्थौ । पुण्यं कर्माचरति पापं कर्माचरतीति हि लोके प्रयोगो दृष्टः । तत् चर्यते इति चरणमिति व्युत्पत्त्या 'रमणीयचरणा' इत्यत्र श्रूयमाणश्चरणशब्दः इष्ट्यादिपुण्यकर्मवाचक इति सानुशयोऽवरोहतीति युक्तमुक्तमिति ॥ ११ ॥

इति प्रदीपे कृतात्ययाधिकरणम् ॥ २ ॥

निर्देशः कथमुपपद्यत इति चेत् । इत्थम् । अनवद्यानि कर्माणीति प्रत्यक्षश्रुतिसिद्धकर्मविषयम्, यान्यस्माकं सुचरितानीति चाचारानुमितश्रुतिसिद्धकर्मविषयम् । मुख्ये सम्भवति लाक्षणिकार्थाश्रयणं न न्याय्यमिति बादरिः ॥ ११ ॥

(अ. स.) किं सानुशय एवायमिममावर्तते दिवः ।
उतानुशयशून्योऽयमायातीति विचार्यते ॥ १ ॥
यावत्पुण्यमुषित्वैतमेवाध्वानमिति श्रुतेः ।
आवर्ततेऽननुशय इति चेदत्र चोच्यते ॥ २ ॥
द्युप्रापकं कर्म यावत्तत्रोषित्वा तदत्यये ।
ऐहिकार्थाधायकेन भुक्तशिष्टेन कर्मणा ॥ ३ ॥
यथागतमनेवं च पुनरावर्तते दिवः ।
आम्नायन्तेऽवतरतामाकाशादिक्रमाद्भुवम् ॥ ४ ॥
रमणीयाचारवतां रमणीयास्तु योनयः ।
कपूयचरणानां तु कपूयास्त्विति योनयः ॥ ५ ॥
तद्गम्यते सानुशयः पुनरावर्तते दिवः ।
नन्वाचारस्य हेतुत्वं तया श्रुत्याऽवगम्यते ॥ ६ ॥
आह कार्ष्णाजिनिः कर्म लक्ष्यार्थं चरणश्रुतेः ।
पुण्यपापार्थतां प्राह बादरिश्चरणश्रुतेः ॥ ७ ॥

इति भाष्ये कृतात्ययाधिकरणम् ॥ २ ॥

---

इष्टादिकारिणां चन्द्रमसं गतानां सानुशयानामेव ततः प्रत्यावर्तनमित्युक्तम् । अथैतत्प्रसङ्गाद्विचार्यते—किमनिष्टादिकारिणामप्यस्ति चन्द्रगमनम्, उत नेति । ननु 'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ती'त्यविशेषेण सर्वेषामेव चन्द्रगमनश्रवणात् पुण्यकर्मिणामिव पापकर्मिणामप्यस्ति चन्द्रगमनम् । तदिदमाह—

## अनिष्टादिकारिणामपि च श्रुतम् ॥ ३ । १ । १२ ॥

इष्टादिकारिणः—यागादिपुण्यकर्मकारिणः, तेभ्योऽन्ये पापकर्मकारिणः, तेषामपि चन्द्रगमनं श्रुतम् 'ये वै के चे'त्यादिना ॥ १२ ॥

नन्वेवं सति को विशेषः इष्टादिकारिणाम्—अविशिष्टं हि चन्द्रगमनमुभयोः । तत्राह—

## संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ ३ । १ । १३ ॥

इष्टादिकारिभ्य इतरेषां पापकारिणां संयमने—यमसदने पापफलमनुभूय तु आरोहावरोहौ चन्द्रारोहावरोहौ । पुण्यकारिणां चन्द्रारोहावरोहौ कृतस्य कर्मणः फलोपभोगाय । पापकारिणां न कृतस्य कर्मणः फलोपभोगाय, उपभुक्तं हि संयमने फलम् । किन्तु ततो लोकमिममवतरतां तेषां मार्गवशात् । अन्यथा पञ्चमाहुत्यसम्भवात् । असत्यां च तस्यां शरीरानिष्पत्तेः । शरीरनिष्पत्तिः पञ्चमाहुतिसापेक्षा श्रूयते । अनिष्टादिकारिणः संयमनं गच्छन्तीति कुतोऽवगम्यते ।

---

ननु—इष्टादिकारिणामेव द्युलोकप्राप्तिरित्येतन्नोपपद्यते—

### अनिष्टादिकारिणामपि च श्रुतम् ॥ ३ । १ । १२ ॥

ये इष्टादिकारिणो न, तेषामपि 'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ती'ति चन्द्रलोकगमनं हि श्रूयते ॥ १२ ॥

अविशिष्टा चेत् सर्वेषां चन्द्रप्राप्तिः पापपुण्यफलवैलक्षण्यं न स्यात् । अत्राह—

### संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ ३ । १ । १३ ॥

इतरेषां पापकर्मिणां संयमने—यमलोके पापफलमनुभूय पश्चाच्चन्द्रारोहावरोहौ । तद्गतिदर्शनात्—'अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे' इति संयमनगतिश्रवणात् ॥ १३ ॥

तद्गतिदर्शनात्–तेषां तद्गतेः श्रुतौ दर्शनात् 'अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे' इति ।

परे तु—इदमेव सूत्रं सिद्धान्तसूत्रतया व्याचक्षते–तुशब्दः पूर्वपक्षं व्यावर्तयति । अनिष्टादिकारिणः संयमने–यमालये कृतस्य कर्मणः पापस्य फलमनुभूय तत एव प्रत्यवरोहन्ति । तस्मादितरेषामनिष्टादिकारिणामारोहावरोहावेवमेव । न तु चन्द्रगमनमिति । तान् पृच्छामः कुत्रारोहः, कुत अवरोहः ?, ननु संयमनमारोहति, तत एवावरोहति । ननु न चन्द्रलोकादिवत् तदितः समुन्नतं स्थानम् । आरोहावरोहौ हि स्थानौन्नत्यसापेक्षौ । किञ्च कर्मफलानुभवतः प्रागारोहः, अवरोहस्तदनन्तरम् । संयमने त्वनुभूयारोहावरोहाविति सौत्रं वाक्यमारोहावरोहयोः कर्मफलानुभवानन्तर्यं गमयति । ननु संयमने त्वनुभूयारोहावरोहाविति नैकं वाक्यम् । संयमने त्वनुभूयावरोहणम् । आरोहावरोहावेवमेवेति च वाक्यान्तरम् । हन्त तथापि वाक्यभेद इत्यस्वरसम् । अध्याहारश्च । ननु यद्यमस्य सदनं साक्षात् तदुपर्येव, ततोऽध एव यत्र क्वापि यमशासनवशगे स्थाने कर्मफलमनुभूय प्रत्यागमनसमये यमसदनमारुह्य ततोऽवतरति । हन्तेयं कल्पना निष्प्रमाणा स्वोत्प्रेक्षामात्रशरणा । ननु सूत्रमिदमपि पूर्वपक्षान्तर्गतश्चेत् तुशब्दवैयर्थ्यम् । न । अवान्तरशङ्काव्युदासपरस्तुशब्द इति व्याख्यातमस्माभिः । 'विद्याकर्मणोरिति तु प्रकृतत्वात्' इति उत्तरसूत्रे तु तुशब्दः पूर्वपक्षव्युदासपरः ॥ १३ ॥

## स्मरन्ति च ॥ ३ । १ । १४ ॥

अनिष्टादिकारिणां यमवश्यतां स्मरन्ति च स्मर्तारः–'सर्वे चैते वशं यान्ति यमस्य भगवन्किल' ॥ १४ ॥

---

**स्मरन्ति च ॥ ३ । १ । १४ ॥**

मन्वादयो यमवश्यतां पापिनां स्मरन्ति च ॥ १४ ॥

## अपि सप्त ॥ ३ । १ । १५ ॥

विशेषतः स्मरन्ति च रौरवादीन् सप्त नरकान् पापोपभोगाय ॥१५॥

ननु पापिनां संयमनप्राप्तिः श्रूयते स्मर्यते च । रौरवादिगमने तद्विरोधः प्रसज्यते । ते हि चित्रगुप्ताधिष्ठिताः, इत्याशङ्कायामाह—

## तत्रापि तद्व्यापारादविरोधः ॥ ३ । १ । १६ ॥

तत्रापि—रौरवादिष्वपि तद्व्यापारादविरोधः—यमशासनव्यापारसद्भावाद्यमवश्यतायामविरोधः ॥ १६ ॥

तथा च संयमने पापफलं प्रथममनुभूय ततः प्रत्यागमनसमये शरीरारम्भकपञ्चमाहुतिसम्पत्त्यर्थौ चन्द्रारोहावरोहौ मार्गवशादिति प्राप्ते उच्यते—

## विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ ३ । १ । १७ ॥

तुशब्दः पूर्वपक्षं व्यावर्तयति । अनिष्टादिकारिणां भुक्तकर्मफलानां प्रत्यागमनमार्गवशादपि चन्द्रारोहणावरोहणे न सम्भवतः । तयोः कर्मफलत्वश्रवणात् । कथमेतत्? प्रकरणादवगम्यते । देवयानपितृयाणे हि 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिस-

---

**अपि सप्त ॥ ३ । १ । १५ ॥**

सप्त रौरवादीन् नरकविशेषान् पापफलभूतान् स्मरन्ति च ॥ १५ ॥

ननु—पापिनां यमवश्यत्वं श्रूयते, रौरवादयस्तु न यमस्य लोकाः । अत्राह—

**तत्रापि तद्व्यापारादविरोधः ॥ ३ । १ । १६ ॥**

रौरवादिष्वपि तस्य यमस्यैव व्यापारात्—प्रशासनव्यापारात् पापिनां यमवश्यत्वे न कोऽपि विरोधः ॥ १६ ॥

अत्रोच्यते—

**विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ ३ । १ । १७ ॥**

तुशब्दः—'सर्वे चन्द्रमसं गच्छन्ती'तिपक्षं व्यावर्तयति । पापकर्मणां चन्द्रारोहावरोहौ नैव भवतः । अपि तु पुण्यकर्मणामेव । विद्याकर्मणोरेव तु गति-

म्भवन्ति अर्चिषोऽहः ×××× तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' 'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममेवाभिसम्भवन्ति धूमाद्रात्रिम् ××× आकाशाच्चन्द्रमसं एष सोमो राजा' इति निरूप्येते। तत्र देवयानेन गच्छतां ब्रह्मानुभवो विद्याफलम्। पितृयाणेन गच्छतां चन्द्रप्राप्तिः कर्मफलम्। यथा विद्याविधुराणां न ब्रह्मप्राप्तिः, तथा कर्मविधुराणां न चन्द्रप्राप्तिः। कर्मफलतया हि तत्प्राप्तिः श्रूयते। सूत्रार्थस्तु—देवयानपितृयाणे इति शेषः। विद्याकर्मणोरिति षष्ठी सम्बन्धसामान्ये। सम्बन्धश्चेह तादर्थ्यलक्षणो विवक्षितः। तादर्थ्यं च तत्फलप्राप्त्युपायतया। इति शब्दो हेतुपरः। तथा च देवयानपितृयाणे यस्मात् विद्याकर्मफलार्थे तस्मात् हेतोरित्यर्थः। कस्मादेतदवगम्यते? प्रकृतत्वात्—'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धातप इत्युपासते' 'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते' इति विद्याकर्मनिष्ठानधिकृत्य फलनिरूपणाय प्रकृतत्वात् ॥ १७ ॥

ननु पापिनां संयमने पापफलमनुभूय प्रत्यावर्तमानानां विना पञ्चमीमाहुतिं कथं शरीरसम्बन्धः। तत्राह—

## न तृतीये तथोपलब्धेः ॥ ३ । १ । १८ ॥

तृतीये—केवलपापकर्मकारिविषये न पञ्चमाहुत्यपेक्षा। तथोपलब्धेः—

---

विशेषो श्रूयते या ब्राह्मी अर्चिरादिगतिः या च चान्द्री गतिर्धूमादिलक्षणेति। तयोरेव प्रकृतत्वात्—'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति' 'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति' इति विद्यानिष्ठानां कर्मनिष्ठानामेव च प्रकृतत्वात् ॥ १७ ॥

ननु—शरीरयोगः पञ्चमाहुतिसापेक्षः, 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'ति श्रवणात्। सा च पञ्चमाहुतिश्चन्द्रलोकादवरोहतामेव श्रूयते। तत् सर्वेषामेव चन्द्रारोहावरोहौ स्तः। इत्यत्राह—

**न तृतीये तथोपलब्धेः ॥ ३ । १ । १८ ॥**

तृतीये—विद्याकर्मनिष्ठाभ्यामन्यस्मिन् न पञ्चमाहुत्यपेक्षानियमः। तथो-

पञ्चमाहुत्यनपेक्षतया तस्य श्रुतावुपलब्धेः । तथा हि श्रूयते—'अथैतयोर्पथोर्न कतरेण च तानीमानि क्षुद्राण्यसकृदावृत्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थान'मिति । इदं च 'वेत्थ यथाऽसौ लोको न सम्पूर्यते' इत्यस्य प्रश्नस्य प्रतिवचनम् । अयमर्थः—एतयोः पथोः—देवयानपितृयाणयोर्मार्गयोः कतरेणापि मार्गेण—एकेनापि मार्गेण न यान्ति तान्येतानि क्षुद्राणि दंशयूकामशकादीनि असकृदावर्तीनि—जननमरणपौनःपुन्यविशिष्टानि भूतानि जायस्व म्रियस्वेति भवन्ति । ओदनं भुङ्क्ष्व सक्तून्पिब धानाः खादेत्ययमभ्यवहरतीत्यत्रेव क्रियासमुच्चयपौनःपुन्यविवक्षया जायस्व म्रियस्वेति भवन्तीति प्रयोगः । अत्र भवन्तीति क्रियासामान्यवाचि । पुनःपुनर्जननमरणक्रियामात्रविशिष्टानि भवन्तीति । तदेतदसकृदावर्तिभूतजातं तृतीयं स्थानम्—केवलं पापफलभोक्तृतया विद्याकर्मनिष्ठापेक्षया तृतीयं स्थानमुच्यते । तेन तृतीयेन नासौ लोकः पूर्यते, अयं लोक एव तु पूर्यते । तथा च तृतीये केवलपापकृद्वर्गे शरीरसम्पत्तये न पञ्चमाहुत्यपेक्षेति सिद्धम् ॥ १८ ॥

## स्मर्यतेऽपि च लोके ॥ ३ । १ । १९ ॥

लोके द्रौपद्यादीनां शरीरनिष्पत्तौ च पञ्चमाहुत्यनपेक्षत्वं स्मर्यते । 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'ति तु अयोगव्यवच्छेदमात्रम् । न त्वन्ययोगव्यवच्छेदोऽपि ॥ १९ ॥

---

पलब्धेः—'अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्राण्यसकृदावृत्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थान'मिति पञ्चमाहुतिनैरपेक्ष्यस्य श्रुतेः ॥ १८ ॥

### स्मर्यतेऽपि च लोके ॥ ३ । १ । १९ ॥

लोकशब्दः—स्मृतिपरः । धृष्टद्युम्नद्रौपदीसीताप्रभृतीनां पञ्चमाहुतिनैरपेक्ष्येण शरीरयोगश्च स्मर्यते ॥ १९ ॥

पा.

## दर्शनाच्च ॥ ३ । १ । २० ॥

पञ्चमाहुत्यनपेक्षशरीरारम्भः श्रुतावपि दृश्यते–'तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति अण्डजं जीवजमुद्भिज्ज'मिति । अत्र जीवजमिति जरायुजमुच्यते । आण्डजजरायुजाभ्यां यदितरत् तत् स्वेदजादि, तच्छरीरं पञ्चमाहुतिनिरपेक्षमिति व्यक्तम् ॥ २० ॥

ननु—आण्डजजरायुजस्वेदजोद्भिज्जभेदेन चत्वारि बीजानि प्रसिद्धानि, कथमुच्यते त्रीण्येवेति । तत्राह—

## तृतीयशब्दावरोधः संशोकजस्य ॥ ३ । १ । २१ ॥

संशोकजस्य—स्वेदजस्य तृतीयशब्दावरोधः–तृतीयेनोद्भिज्जशब्देन भवति सङ्ग्रहः ॥ २१ ॥

### पूर्वपक्षः—

( अ. स. ) सर्वे चन्द्रमसं यान्ति तेऽस्माल्लोकात्प्रयन्ति ये ।
अविशेषेण सर्वेषामिति चन्द्रगतिश्रुतेः ॥ १ ॥
अप्यनिष्टादिकर्तॄणां युक्ता चन्द्रमसो गतिः ।
ननु पापोपभोगाय यान्ति संयमनं तु ते ॥ २ ॥
हन्त तेषां पापकृतां चन्द्रप्राप्तिः कथं भवेत् ।
पापिनां पापभोगाय यमसद्मगतिः श्रुता ॥ ३ ॥

---

## दर्शनाच्च ॥ ३ । १ । २० ॥

लोके स्वेदजानां कृमिदंशादीनां शरीराणां पञ्चमाहुतिनैरपेक्ष्यदर्शनाच्च ॥ २० ॥

ननु श्रुतौ जरायुजाण्डजोद्भिज्जभेदेन त्रैविध्यमेव शरीराणां श्रूयते न स्वेदजभेद इत्यत्राह—

## तृतीयशब्दावरोधः संशोकजस्य ॥ ३ । १ । २१ ॥

संशोकः—स्वेदः, स्वेदजस्य तृतीयेनोद्भिज्जशब्देन सङ्ग्रहः ॥ २१ ॥

इति प्रदीपे अनिष्टादिकार्यधिकरणम् ॥ ३ ॥

स्मर्यते च, तथा सप्त स्मर्यन्ते रौरवादयः ।
सप्तस्वपि च तेष्वस्ति यमस्यैव प्रशासनम् ॥ ४ ॥
सत्यं संयमने पूर्वमनुभूय ततः परम् ।
चन्द्रारोहावरोहाभ्यामिमं लोकं विशन्ति ते ॥ ५ ॥
तस्मान्मार्गवशात्तेषां चन्द्रप्राप्तिश्च युज्यते ।

सिद्धान्तः—

अत्रोच्यते न चन्द्रस्य प्राप्तिर्मार्गवशाद्भवेत् ॥ ६ ॥
विद्याफलोपभोगाय देवयानगतिः श्रुता ।
पुण्यस्य फलभोगाय पितृयाणगतिः श्रुता ॥ ७ ॥
सा गतिः सा च चन्द्राप्तिः सम्भवेत् पापिनां कथम् ।
ननु चन्द्रप्राप्त्यभावे शरीरं नैव सिध्यति ॥ ८ ॥
पञ्चमाहुतिसापेक्षं शरीरं श्रूयते ननु ।
न तृतीये शरीरस्य पञ्चमाहुत्यपेक्षणम् ॥ ९ ॥
इदं तदनपेक्षत्वं श्रुतावेवोपलभ्यते ।
लोकेऽपि केषुचित् दृष्टं स्मर्यते तत्र तत्र च ॥ १० ॥
आण्डजादिषु भूतेषु स्वेदजोद्भिज्जयोर्द्वयोः ।
दृष्टं तदनपेक्षत्वं शरीरारम्भणे ननु ॥ ११ ॥

इति भाष्ये अनिष्टादिकार्यधिकरणम् ॥ ३ ॥

कृतात्ययेऽनुशयवान्प्रत्यावर्तते यथेतमनेवं चेत्युक्तम् । तत्रावरोहण-मार्गे श्रूयमाण आकाशवाय्वादिभावो विचार्यते—'अथैतमेवाध्वानं पुन-र्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा मेघो भवती'ति श्रूयते। किमयमाकाशवाय्वादिभावः सोमराजादिभाववत्—सोमराजशरीरकत्व-वदाकाशवाय्वादिशरीरकत्वलक्षणः मुख्यः, उत तत्सादृश्यापत्ति-मात्रम्, इत्येतद्विचार्यते—

## तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ ३ । १ । २२ ॥

नन्वविशेषात् सोमभाववदाकाशवाय्वादिभावोऽपि मुख्य एवेति चेदुच्यते—तत्स्वाभाव्यापत्तिमात्रम् । तत्स्वाभाव्यम्—तत्समानभावः तत्संसर्गकृतः भेदकस्थूलाकाराभावलक्षणः, न तु तद्भावः, उपपत्तेः । तद्भावे त्वनुपपत्तिः । सुखदुःखोपभोगाय हि सोमादिभावः । कृतात्य-येऽपगते सोमभावे ऐहिकभोगोपयोगिशरीरप्राप्तेः प्राग्भोगस्याप्रसक्तेः वाय्वादिमार्गेणावतरतः तत्र तत्र संश्लिष्टस्य तत्सादृश्यमात्रम्, न तु तद्भावो मुख्यः ॥ २२ ॥

(अ. स.) पुंसः सानुशयस्येमं लोकमागच्छतो दिवः ।
योऽयमाकाशवाय्वभ्रमेघभावः पथि श्रुतः ॥ १ ॥

---

सानुशयस्यास्यावतरतः 'यथेतमाकाशं आकाशाद्वायुः, वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षती'ति वाय्वादिभावः श्रूयते । सोऽयं वाय्वादिभावः सोमभाव इव तत्तच्छरीरता-पत्तिलक्षण इति प्राप्ते आह—

### तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ ३ । १ । २२ ॥

मध्ये मार्गे वाय्वादिषु संयुज्य तिष्ठतः, तत्तत्स्वाभाव्यमात्रम्—तत्सादृश्य-मात्रम्, ननु तत्तच्छरीरता, तावतैवावरोहणोपपत्तेः । पुण्यफलभोगायारोहतः सोमभावो भोगाधायकः। भोगश्च सोमशरीरकतां विना नोपपद्यते। अवतरण-मात्रफलं तु वाय्वादिसंश्लेषः । न हि तत्र भोगावसरः । भोगस्तु पञ्चमाहु-त्यनन्तरभावी । श्रूयते च तत्रैव 'रमणीयचरणा रमणीयां योनि'मिति ॥ २२ ॥

इति प्रदीपे तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ४ ॥

तत्स्वाभाव्यापत्तिमात्रं स न साक्षात्तदात्मता ।
भेदकाकारशून्यत्वात्तत्स्वाभाव्यमिहोच्यते ॥ २ ॥
इति भाष्ये तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ४ ॥

---

## नातिचिरेण विशेषात् ॥ ३ । १ । २३ ॥

आकाशवाय्वादिक्रमेणावतरतः व्रीहिप्राप्तेः प्राक् तत्र तत्राकाशादौ स्थितिश्चिरमचिरं वेत्यनियमः, उत नातिचिरमिति नियमः इति संशये आह—अनियम एव, स्थितिश्रवणमात्रेण पक्षद्वयस्यापि प्राप्तेः । अत्रोच्यते—नातिचिरणेवेति । व्रीहिप्राप्त्यनन्तरम् 'अतो वै दुर्निष्प्रपतर'मिति विशेषश्रवणात्, व्रीहिप्राप्तेः प्राक् सुनिष्क्रमणता हि गम्यते । दुर्निष्प्रपतरम्—दुर्निष्क्रमणतरम् । तकारलोपश्छान्दसः । तरप्प्रत्ययेनाकाशादौ स्थित्यपेक्षया व्रीह्यादौ स्थितेरधिककालत्वोक्त्याऽऽकाशादौ स्थितेरल्पकालत्वनियमः सिद्ध एवेति युक्तं नातिचिरेणेति । एतेन—दुर्निष्प्रपतरमित्यनेन वाय्वादाविव चिरकालस्थितितदभावयोः प्राप्तौ, चिरकालमेवेति नियमो विधीयते—अतो वै दुर्निष्प्रपतरमेवेति न त्वत एव दुर्निष्प्रपतरं नान्यत इति इयमाशङ्का प्रतिक्षिप्ता ॥ २३ ॥

(अ. स.) दिवोऽवतरतः पृथ्वीमाकाशादौ पथि स्थितिः ।
प्राग्व्रीहितो नातिचिरं कालाल्पत्वावबोधतः ॥ १ ॥
ततो दुर्निष्प्रपतरमित्येवं श्रूयतेऽत्र वै ।
तरप्प्रत्ययतो व्रीहौ कालदैर्घ्यं हि गम्यते ॥ २ ॥
इति भाष्ये नातिचिराधिकरणम् ॥ ५ ॥

---

## नातिचिरेण विशेषात् ॥ ३ । १ । २३ ॥

मध्येमार्गमाकाशादिषु स्थितिर्नातिचिरेण । न दीर्घकालं तिष्ठतीत्येतत् । कुतः ? विशेषात्—उत्तरत्र व्रीह्यादिभावानन्तरमेव 'अतो वै दुर्निष्प्रपतर'मिति विशेषश्रवणात् ॥ २३ ॥

इति प्रदीपे नातिचिराधिकरणम् ॥ ५ ॥

## अन्याधिष्ठिते पूर्ववदभिलापात् ॥ ३ । १ । २४ ॥

आकाशादिक्रमेणेमं लोकमवतरतां श्रूयमाणो व्रीह्यादिभावः किं व्रीह्यादिशरीरकत्वलक्षणः उत व्रीह्यादिसंश्लेषमात्रलक्षण इति विचार्यते । तत्राह–'मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा जायन्ते' इति जनिधातुश्रवणात् देवो मनुष्यो जात इत्यत्रेव तत्तच्छरीरकत्वमेव सिध्यतीति । अत्रोच्यते–अन्याधिष्ठिते–अन्येन कर्मणा व्रीह्यादिभावं प्राप्तेन केनापि जीवेनाधिष्ठिते तदीयव्रीह्यादिशरीरेऽस्य संश्लेषमात्रम्, पूर्ववदाकाशादाविव व्रीह्यादिभावस्याभिलापात् । नतु भोक्तृतया । यावत्संपातमुषित्वेत्यनेन प्रारब्धकर्मक्षयः प्रागुक्तः, वक्ष्यति भोक्तृतावबोधकं कर्म 'रमणीयचरणा रमणीयां योनि'मित्यादिना । तदत्र कर्माश्रवणात् संश्लेषमात्रमेव ॥ २४ ॥

## अशुद्धमिति चेन्न शब्दात् ॥ ३ । १ । २५ ॥

ननु–व्रीह्यादिभावोऽस्य न तत्संश्लेषमात्रम्, अपि तु तच्छरीरकतैव, कर्मशेषस्य व्रीह्यादिभावहेतुभूतस्य सत्त्वादित्याशङ्क्य परिहरति–अशुद्धमिति । नन्वस्ति व्रीह्यादिभावे हेतुभूतमशुद्धं यज्ञे पशुविशसनलक्षणम्,

---

'त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा जायन्ते' इति जनिधातुश्रवणात् व्रीह्यादिभावस्तच्छरीरतापत्तिलक्षण इति शङ्कायामाह—

**अन्याधिष्ठिते पूर्ववदभिलापात् ॥ ३ । १ । २४ ॥**

अन्याधिष्ठेते–अन्येन जीवेन पापकर्मणा अधिष्ठिते व्रीह्यादाववतरतोऽस्य पूर्ववत्—आकाशादाविव स्थितिमात्रम्, 'रमणीयचरणा रमणीयां योनिं' 'कपूयचरणाः कपूयां योनि'मिति उत्तरत्रैव जन्माभिलापात् ॥ २४ ॥

**अशुद्धमिति चेन्न शब्दात् ॥ ३ । १ । २५ ॥**

नन्वस्त्यस्य व्रीह्यादिजन्माधायकमशुद्धम्–पापम् । येनायमवतरन् मध्येमार्गं व्रीह्यादिनिकृष्टं जन्म प्राप्नोति । अनुष्ठितं हि कर्म पूर्वस्मिन् जन्मनि ज्योतिष्टोमादि पशुविशसनगर्भम् । तस्य पुण्यांशफलं तु प्राक् सोम-

तत्पापफलभोगार्थोऽयं व्रीह्यादिभावः। ननु यज्ञे पशुसंज्ञपनं कथं पापम्। 'न हिंस्या'दिति निषेधस्पर्शात्। ननु—'अग्नीषोमीयं पशुमालभेते'त्यस्ति विधिसंस्पर्शः। किं तेन। मिथो विरोधे एकेनापरस्यानन्यथासिद्धस्यावकाशं प्रयच्छता ततोऽन्यत्रापसरता हि भाव्यम्। विरोधे तथा भाव्यम्। नात्र विरोधः। न हि निषेधशास्त्रसिद्धस्य पापजनकत्वस्य विधिसंस्पर्शबोध्यक्रतूपकारकत्वस्य च मिथोविरोधः। अनिष्टसाधनत्वतदभावयोरेव तु विरोधः नत्वनिष्टसाधनत्वेष्टसाधनत्वयोः। इष्टे चेत्समुत्कटो रागः, भाव्यनिष्टमप्यविगणय्य प्रवर्तेत। अनिष्टे चेत् समुत्कटो द्वेषः समधिकेऽपि लाभे नैव प्रवर्तेत। तस्माद्यागाङ्गभूतपशुसंज्ञपनजन्यपापमस्य व्रीह्यादिस्थावरजन्मप्राप्तौ हेतुभूतमस्त्येवेति। **अत्रोच्यते**—नास्त्येव तत्। भुक्तमेव पूर्वम्। शब्दात्—'यावत्सम्पातमुषित्वे'ति शब्दात्। सम्पातः—सम्पतति स्वर्गं येन स सम्पातः, स्वर्गसाधनीभूतमदृष्टमुच्यते। ननु पुण्यांशफलमेव तत्र भुक्तम्। नैवम्। [1]अङ्गेन पशुसंज्ञपनेन सिध्यन्नङ्गी यदा फलमाधत्ते तदा सहाङ्गफलेनैवेति स्वर्गसुखानुभवसमय एव त्वन्तराऽन्तरा देवासुरसङ्ग्रामादिप्रसङ्गेन दुःखमप्याधत्त इति न पश्चादवतरणसमये व्रीह्यादिभावाधायकं किमप्यस्ति।

[2]**परे तु व्याचक्षते**—पश्वालम्भनजन्यं पापमस्तीति चेन्न। यागाङ्गतया विहितं पश्वालम्भनं नाशुद्धम्। 'अग्नीषोमीयं पशुमालभेते'ति विधानशब्दात्। 'न हिंस्या'दिति निषेधशास्त्रस्य च विहितव्यतिरिक्तविषयत्वात्। उत्सर्गापवादनयसिद्धं चैतत्। व्याप्यधर्मावच्छिन्नविधाभावेनोपभुक्तम्। अथावतरन् पशुविशसनस्याशुद्धस्य फलं व्रीह्यादिजन्मना भुङ्क्ते इति चेन्न। शब्दात्—'अग्नीषोमीयं पशुमालभेते'ति विधायकात् शब्दात्। विधिसंस्पर्शो ह्यपापतामेव गमयति। 'न हिंस्या'दिति श्रुतिस्तु विहितव्यतिरिक्तविषया। कापिलपक्षे पक्षपातिभिस्तु 'स्वर्गे एव पुण्यफलभोगकाल एव पशुविशसनलक्षणपापफलमसुरसङ्ग्रामादिसम्भवदुःखमुपभुक्तमेव। मिश्रं कर्म मिश्रमेव फलमादधातीति शब्दादेवावगम्यते इति वर्ण्यते ॥ २५ ॥

टिप्पः—१ इदं च प्रधानकर्मण्यावापगमनं कापिलादिसमयसम्प्रतिपन्नम्। २ नैयायिकपक्षोऽयम्।

यकवाक्यप्रामाण्याद्व्यापकधर्मावच्छिन्ननिषेधकवाक्यस्य सङ्कोचकप्रापको ह्येष नयः।

अपरे प्राहुः—यज्ञे पशुविशसनं नाशुद्धम्। 'न हिंस्या'दिति निषेधशास्त्राविषयत्वात्। पुरुषार्था हि हिंसा तेन निषिध्यते। विधीयते तु क्रत्वर्थः। अतो विषयभेदादुत्सर्गापवादनयस्यापि नेहावसर इति। पूर्वाचार्यास्तु प्राहुः—यज्ञे क्रियमाणं पशुविशसनं नैव हिंसा, हिंसापदप्रवृत्तिनिमित्तायोगात्। समधिकसुखानुदर्कदुःखाधायकव्यापारत्वं तु हिंसापदप्रवृत्तिनिमित्तम्, न तु मरणानुकूलव्यापारत्वम्। पित्रादिदुःखाधायकेष्वपि पितृहेत्यादिश्रवणात्। तथा हि श्रूयते—"अथ यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वा ××× भृशमिव प्रत्याह—धिक् त्वाऽस्त्वित्यैवैनमाहुः पितृहा त्वमसि मातृहा वै त्वमसी ××× त्यादि। दुःखाधायकेषु शस्त्रादिना चिकित्सां कुर्वत्स्वपि रक्षत्येनमित्येव व्यवहारो न हन्तीति, अतः समधिकसुखानुदर्केति दुःखे विशेषणम्। 'न वा उ एतन्म्रियसे न रिष्यसे देवानिदेषि पथिभिः सुगेभिः यत्र यन्ति सुकृतो नापि दुष्कृतः' 'हिरण्यशरीर ऊर्ध्वः स्वर्गं लोकमेति' इति श्रुत्या यागाङ्गभूतपशुसंज्ञपने समधिकसुखाधायकताया एव सिद्धेर्न हिंसापदप्रवृत्तिनिमित्तान्वयः। नातो निषेधशास्त्रस्पर्शनिमित्ताशुद्ध्यन्वयः। पुरुषार्थैव हिंसा प्रतिषिध्यते इयं तु विहिता क्रत्वर्थेति विषयभेदमाश्रित्याशुद्धत्वप्रतिक्षेपस्तु न हृदयङ्गमः। रागेणैव हि पुरुषः प्रवर्तते स्वर्गसाधने यागे तदङ्गे च। तत्क्रत्वङ्गेऽपि पुरुषार्थत्वमस्त्येवेति निषेधवचनगोचरता तस्या अप्यपरिहार्यैवेति ॥ २५ ॥

## रेतःसिग्योगोऽथ ॥ ३ । १ । २६ ॥

अथ—व्रीह्यादिभावश्रवणानन्तरं रेतःसग्योगः श्रूयते—'यो यो

---

**रेतःसिग्योगोऽथ ॥ ३ । १ । २६ ॥**

अपि च—अथ व्रीह्यादिभावानन्तरं 'यो यो ह्यन्नमत्ति यो यो रेतः सिञ्चति तद्भूय एव भवती'ति रेतःसिग्योगः श्रूयते, स च रेतःसिग्योगः संश्लेषमात्रम्, अतस्तत्पूर्वभावी व्रीह्यादिभावोऽपि तत्संश्लेषमात्रम् ॥ २६ ॥

---

टिप्पः—१ मीमांसकपक्षोऽयम्। २. रामानुजस्वामिपक्षोऽयम्।

ह्यन्नमत्ति यो यो रेतः सिञ्चति तद्भूय एव भवती'ति । स केवलं रेतःसिक्पुरुषदेहसंश्लेषमात्ररूपः, न तु रेतःसिग्भावः । तथैवायमपि व्रीह्यादिभावस्तत्संश्लेषमात्रम्, न तु तद्भावो मुख्यः ॥ २६ ॥

## योनेः शरीरम् ॥ ३ । १ । २७ ॥

योनिप्राप्त्यनन्तरमेव तु शरीरम्, भोगस्य तत एवारम्भात् । तस्मादाकाशादिषु तत्र तत्रावतरतः यावद्योनिप्रवेशं तत्संश्लेषमात्रमेव ॥२७॥

(अ. स.) अन्याधिष्ठित एवास्य स्थितिर्व्रीहियवादिके ।
नन्ु पापाज्जायतेऽयं पथि व्रीह्यादिभावतः ॥ १ ॥
यागाङ्गपशुहिंसोत्थं पापमस्य हि विद्यते ।
नैतत्तदपि भुक्तं हि नाक एवान्तराऽन्तरा ॥ २ ॥
प्रधानेन सहावापो ह्यप्रधानस्य कर्मणः ।
न च पापं सा हि हिंसा न रागाद्विधिनैव तु ॥ ३ ॥
विधीयते च क्रत्वर्था पुरुषार्था निषिध्यते ।
न च हिंसा पशोर्यागे यत्तत्प्राणवियोजनम् ॥ ४ ॥
तिर्यग्देहापनयनस्वर्ग्यदेहविधानतः ।
सुखानावहदुःखैकाधानमेव तु हिंसनम् ॥ ५ ॥
"न वा उ एतन्म्रियसे" इत्यादिश्रुतिवाक्यतः ।
तथात्वं गम्यते तस्य तन्न पापस्य सम्भवः ॥ ६ ॥
सात्त्विकानामयं धर्मः किं न वेत्स्यन्यदेव तत् ।
कथं हिंस्रैर्मादृशो हि यजेतेति स्मृतं ननु ॥ ७ ॥

---

### योनेः शरीरम् ॥ ३ । १ । २७ ॥

रमणीयां वा कपूयां वा योनिं प्रविष्टानामेव रमणीयारमणीयशरीरप्राप्तिः सुखदुःखोपभोगाधायिका । न ततः पूर्वमिति स्थितम् ॥ २७ ॥

इति प्रदीपेऽन्याधिष्ठिताधिकरणम् ॥ ६ ॥

इति ब्रह्ममीमांसाप्रदीपे तृतीयस्याध्यायस्य प्रथमः पादः ॥

श्रूयतेऽनुपदं चापि रेतःसिग्योग एव तु ।
योनिप्रवेशतस्त्वेष शरीरं प्रतिपद्यते ॥ ८ ॥

इति भाष्येऽन्याधिष्ठिताधिकरणम् ॥ ६ ॥

इति ब्रह्ममीमांसाभाष्ये तृतीयस्याध्यायस्य प्रथमः पादः ॥

---

पूर्वस्मिन्पादे मुमुक्षौपयिकवैराग्यसमुत्पादनाय संसरतो जीवस्य गतागतपरिश्रमैकफलकमारोहणादिकं विचारितम् । तत्र चारोहणावरोहणयोः सूक्ष्मदेहपरिष्वङ्गोक्त्या देहारम्भकबीजानुवृत्तिर्नापैत्याविमोक्षनिष्पत्तेरिति सूचितम् । कथमप्यारूढस्यापि द्युलोके देवभक्ष्यत्वोक्त्या देवाऽनुवर्तनदुःखभूयस्त्वं ज्ञापितम् । अस्मिन्लोके पत्नीपुत्रादीनामेष पशुरमुष्मिंश्चाप्सरःकामुकानां पशुरित्येष एव विशेषः । अवरोहणसमये च गर्भसम्पत्तेः प्रागाकाशादिषु संश्लेषमात्रेण प्रज्ञाशून्या चिरकालं स्थितिः ज्ञापिता । व्रीह्यादिसंश्लेषतः पश्चात् दुर्निष्क्रमणतोक्त्या शरीरयोगस्यात्यन्तदुर्लभता सूचिता । संयमनं प्राप्तानां केवलपापकृतां स्वेदजादितृतीयस्थलनिरूपणेन संसारस्यात्यन्तहेयता च सूचिता । सर्वमिदं जाग्रदवस्थाकार्यम् । अथ स्वप्नावस्था विचार्यते । यद्यपि द्वितीयेऽस्मिन् ब्रह्मणो महिमा प्राधान्येन निरूप्यते । अथापि वैराग्यदार्ढ्याय जीवस्य स्वप्नाद्यवस्थानिरूपणपूर्वकं परस्य महिमा वर्ण्यत इति पादसङ्गतिरप्युपपद्यते—

## सन्ध्ये सृष्टिराह हि ॥ ३ । २ । १ ॥

स्वप्नावस्थायां समुपलभ्यमानाः रथरथयोगरथपथादयः किमवभास-

---

विचारिता जीवस्य भवाध्वनि गतागतलक्षणा जाग्रदवस्था । अथ स्वप्नावस्था विचार्यते । विचारिताभ्यामाभ्यां संसृतौ वैराग्योदयेन मुमुक्षा स्यादिति ।

**सन्ध्ये सृष्टिराह हि ॥ ३ । २ । १ ॥**

जाग्रत्सुषुप्त्यवस्थयोः सन्धौ भवं सन्ध्यम्—स्वप्नावस्था, तस्यां 'अथ रथान् रथयोगान् रथपथः सृजते' इति श्रूयमाणा या सृष्टिः, तस्याः कर्ता स्वप्नदृक् सोऽयं जीव एव । 'सृजते स हि कर्ते'ति श्रुतिराह हि ॥ १ ॥

मात्राः, उत जाग्रदवस्थावत्सृज्याः । सृज्यत्वे, किं जीवेन सृज्यन्ते उत सर्वेश्वरेणेति विप्रतिपत्तावाह–सन्ध्ये इति । जाग्रत्सुषुप्त्योः सन्धौ भवं सन्ध्यम्–स्वप्नावस्था, तस्यां सृष्टिरेव भवत्यर्थानाम् । तथा श्रुतिराह हि–"न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् रथपथः सृजते × × × स हि कर्ता" इति । य इदानीं सर्वैरनुभूयमाना रथादयस्ते तदा न सन्ति, अथ कथमनुभूयन्ते ? तदानीमेव विलक्षणान् रथादीन् सृजते, नावभासमात्रस्वरूपास्ते, अपि तु सृज्यमाना एव । औपनिषदोऽयं पक्षः । ज्ञानमेवावभास्यार्थात्मना भातीति तु क्षणिकविज्ञानमात्रपारमार्थ्यवादी । अपरस्तु नित्यविज्ञानमात्रपारमार्थ्यवादी । अविद्याविशेषेणोत्पद्यन्ते प्रतिभासमात्रकालावस्थायिनस्ते इत्याहुः । सृज्यत्वश्रुतिविरुद्धोऽयं पक्षः । सृजत इति शब्दः स्वरसतः प्रातिभासिकतां व्यावर्तयति । ननु कथमसम्भावितानामाश्चर्याणां सृष्टिर्घटेत । स हि कर्ता–यः सर्वस्य विचित्रस्य कर्ता विचित्रशक्तियुक्तः परमेश्वरः स हि सृष्टेरस्याः कर्ता । श्रौती प्रसिद्धिरियं सौत्रेण हि शब्देन गम्यते । ऐन्द्रजालिको मायावी, शक्तिर्माया–आश्चर्यार्थनिर्माणसमर्था,तया सः कतिपयपुरुषमात्रानुभाव्यान् दृष्टनष्टस्वभावान् पदार्थान् निर्मातुं शक्नोतीति सुप्रसिद्धम् । अयं तु सर्वेश्वरः ब्रह्मादीनामप्याश्चर्यावहविविधवस्तुनिर्माणसमर्थमायाशक्तिसम्पन्नः, तत्तत्पुरुषमात्रानुभाव्यान् तत्कालमात्रस्थायिनोऽर्थान् सृजतीति किमत्रानुपपन्नम्॥१॥

इतश्च स्वाप्नार्थः परमात्मसृष्ट इत्यवगम्यते—

## निर्मातारं चैके पुत्रादयश्च ॥ ३ । २ । २ ॥

एके शाखिनः परमेश्वरं स्वप्नार्थानां निर्मातारं–स्रष्टारमाहुः । "य

---

### निर्मातारं चैके पुत्रादयश्च ॥ ३ । २ । २ ॥

एके शाखिनः–'य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' इति काम्यमानानां निर्मातारं स्वप्नद्रष्टारं जीवमाहुः–काम्यमानाश्च पुत्रादयः, 'सर्वान् कामान् छन्दतः प्रार्थयस्व । शतायुषः पुत्रपौत्रान् वृणीष्वे'ति पूर्वं प्रकृता हि ते कामत्वेन ॥ २ ॥

एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः” इति । सुप्तेष्वेषु यो यः काम एषां तान् पुत्रादीन् सृजति । “पुत्रपौत्रान्वृणीष्वे”ति जीवानां कामाः पुत्रादयस्तु पूर्वं श्रुताः, तेषां निर्मात्रा च परमेश्वरेणैव भाव्यम् । जीवो ह्येष पुत्रादीन् देवेभ्यः कामयते केवलम् , अत एवावर उच्यते, तस्य निर्माता च परः स एव देवदेवः । सुप्तानां चैषां न सङ्कल्पस्याप्यवसरः । तथा च जीवस्य कामांस्तददृष्टानुसारेण तन्मात्रानुभाव्यान् तत्कालमात्रस्थायिनः सृजति फलप्रदः सर्वशक्तिसम्पन्नः सर्वेश्वरः ॥ २ ॥

ननु परिदृश्यमानमिदं परमेश्वरसृष्टमप्युपादानोपकरणदेशकालनियमसापेक्षम् , स्वप्ने भासमानं तु न तथेति कथमुच्यते सृष्टमिति ? । तत्राह—

## मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ । २ । ३ ॥

यस्मात्कार्त्स्न्येन सर्वपुरुषसाधारण्येन नाभिव्यक्तमस्य स्वरूपम् , अत एव स्वप्ने सृष्टं मायामात्रम्—मायामात्रकार्यत्वान्मायामात्रमुच्यते । मात्रशब्देनोपादानादिकारणान्तरनैरपेक्ष्यं गम्यते । अनभिव्यक्तमि-

---

अत्रोच्यते—

**मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३।२।३ ॥**

तुशब्दः पूर्वपक्षं व्यावर्तयति । नायं जीवः कर्ता भवितुमर्हति । यदयमामोक्षात् अनभिव्यक्तस्वरूपः । ‘परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते’ इति हि श्रूयते । ततः पूर्वमस्य सत्यसङ्कल्पत्वादिस्वरूपमविद्यया तिरोहितम् । तदयं तेषां स्रष्टा भवितुं नार्हति । मायामात्रम्—आश्चर्यमात्रं स्वप्नार्थजातम् । यत् दृष्टतत्तदुपादनादिनिरपेक्षमेव सृष्टं परमात्मना सूक्ष्मतत्तत्कर्मफलप्रदानाय सङ्कल्पमात्रेण । मायाशब्दः ज्ञानविशेषरूपसङ्कल्पवाची वा । मात्रचा दृष्टतत्तदुपादानादि व्यावर्त्यते । कार्यकारणयोरभेदोपचारः । स्वाप्नार्थजातं विशेष्यम् । शिष्टं पूर्ववत् ॥ ३ ॥

त्युक्त्या वस्तुनः स्वसत्त्वं केषाञ्चिद्दृक्पथागोचरत्वं च गम्यते । एतेन वस्तुसत्यत्वं सिद्धम् । मानसिकसृष्टौ यथोपादानाद्यादाननैरपेक्ष्यम्, तथा मायासृष्टावपीति सिद्धम् । अघटितघटनाशक्तिस्तु माया, न त्वज्ञानलक्षणाऽविद्या । नहि मायाविनि कुशले अज्ञ इति प्रयोगः ॥ ३ ॥

ननु व्यावहारिकमिदमखिलं यथाऽध्यस्तं तथैवेदं प्रतिभासिकमपि स्वाप्नम् । सृजतेरत्र भाक्तत्वमिति तु न दोषः । वियदादौ जाग्रदर्थे ब्रह्मसृज्यताविवक्षया तत्रापि सृजतिर्भाक्तैव हि । अत्राह—

## पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ३ । २ । ४ ॥

अस्य तु स्वरूपं तिरोहितम्, न तु परस्य, स तु सर्वदैवातिरोहित-स्वरूपः सत्यसङ्कल्पः, तस्य प्रशासितुः सङ्कल्पात् कर्मानुगुणादस्य जीवस्य स्वरूपमविद्यासंज्ञितेन कर्मणा तिरोहितम् । तदेवं जीवपरयो-र्महान् भेदः । स च परोऽस्य स्वाप्नस्यापि स्रष्टा भवितुमर्हत्येव । तत एव हि पराभिध्यानादस्य बन्धतद्विपर्ययौ । संसरतोऽस्य जीवस्य बन्धे मोक्षे च परस्य तस्यैव सङ्कल्पः कारणम् । अविद्याकृताध्यासवादे तु बन्धमोक्षयोर्व्यवस्था नोपपद्येत । कस्य बन्धः कस्य मोक्षः । नित्य-शुद्धस्य ब्रह्मणोऽविद्यातिरोधानं ततो बन्ध इति चानुपपन्नम् । असति बन्धे मोक्षः कः । वस्तुतो न बध्यते नापि मुच्यते इत्येव ह्यन्ततस्तेषां

---

ननु तत् स्वरूपं कुतस्तिरोहितम् ? तत्राह—

**पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ३ । २ । ४ ॥**

परस्य—परमात्मनः सङ्कल्पात् तिरोहितम् । तत एवास्य बन्धस्तदपग-मश्च । अनाद्यविद्याकर्मवासनाभिः परमात्मनोऽन्यत्र व्यापृतः कृतापरा-धोऽयं सकलशुभाशुभकर्मफलप्रदस्य तस्य सङ्कल्पात् भवति तिरोहितस्वरूपः । तदनन्यभक्तिनिष्ठः तत्प्रसादेन मुच्यते च बन्धात् । श्रूयते च—'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दतेऽथ सोऽभयं गतो भवति' 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयं भवति' इति ॥ ४ ॥

वादः । उपनिषदि च परस्य सङ्कल्पात् बन्धो मोक्षश्च जीवस्य श्रुतः । इत्थं च सृजत इत्यस्य भाक्ततया निर्वहणं नैव युक्तम् । यद्वा—ननु जीव एव स्वाप्नार्थस्य कर्ताऽस्तु किमीश्वरेण । तत्राह–परेति । अस्य जीवस्य स्वरूपं हि परस्य सङ्कल्पात् तिरोहितम् । ततो ह्यस्य बन्धविपर्ययौ । सोऽयं तिरोहितसत्यसङ्कल्पत्वादिस्वरूपः कथं स्रष्टुं प्रभवेत् । तत् सृजतिर्भाक्तैव भवेत् । अतः परमेश्वर एव स्रष्टेति युक्तम् ॥ ४ ॥

ननु परस्य सङ्कल्पात्कथमस्य बन्धः—

## देहयोगाद्वा सोऽपि ॥ ३ । १ । ५ ॥

सोऽपि सङ्कल्पाधीनो देहयोगादेव भवति । वाकार एवार्थे । कर्मानुगुणं भगवतः सङ्कल्पादस्य भवति देहयोगः, तेन भवति देहात्माभिमानः, अनेन क्रमेणास्य बन्धः ॥ ५ ॥

नन्विष्यतां नाम स्वाप्नानामर्थानां सत्यता । जीवस्यैवास्य कर्तृत्वं तत्र युक्तम् । सहि कर्तेति लोके कर्तृतया भोक्तृतया च प्रसिद्धो जीव एव तच्छब्देन परामृश्यते । नन्वदृष्टद्वाराऽस्य चेत्कर्तृत्वं विवक्षितम्, तदाऽऽख्यातस्यास्वारस्यम् । आख्यातेन प्रतीयमानं कर्तृत्वं हि तदौपयिकसङ्कल्पयोगं ज्ञापयति । अदृष्टाधीनत्वमात्रेणादृष्टवतः कर्तृत्वं भाक्तमेव स्यात् । सङ्कल्पविरहात् । कामं काममिति च सङ्कल्प्यसङ्कल्प्येत्यर्थकम् । सत्यम् । तिरोहितस्वरूपो नामायम् । अथापि स्वप्नावस्थायां यत्तिरोहितं सत्यसङ्कल्पत्वं नैसर्गिकं प्रजापतिवाक्ये श्रुतं तत्तदानीमाविर्भवति परमात्मनः सङ्कल्पादेव ॥ अथाविर्भूतसङ्कल्पशक्तिरेष सृजतीत्यत्राह—

---

### देहयोगाद्वा सोऽपि ॥ ३ । २ । ६ ॥

सोऽपि—तिरोभावोऽपि देहयोगात् । प्रलयात् पूर्वं सूक्ष्माचिद्रूपतद्योगः, सृष्टिकाले तु स्थूलतद्योगः । तस्मादस्य स्वरूपतिरोभावः ॥ ५ ॥

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ३ । २ । ६ ॥

स्वप्ने दृश्यमाना अर्था द्रष्टुर्भाविशुभाशुभसूचकाश्च हि, चकारात्तदानीन्तनभोग्यता समुच्चीयते, तदानीं भोक्तुरस्य भोगाधायका न केवलम्, भाविसूचकाश्चेत्यर्थः । आविर्भूतसत्यसङ्कल्पत्वस्वरूपः कथं भाव्यशुभसूचकं जानन्नेष सृजेत् । तस्मान्न जीवः सृजति । सूचकता च श्रुतेरव गम्यते । तथा च श्रूयते–"यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने" इति । स्वप्नफलविदः स्मर्तारश्चैवमाचक्षते ।

श्रीभाष्यकारैर्व्याख्यातं नातिलङ्घामहे वयम् ।
परपक्षं प्रतिक्षेप्तुमिदं व्याख्यातमन्यथा ॥

अस्मिन्नधिकरणे प्रथमद्वितीयसूत्रे पूर्वपक्षसूत्रतया तृतीयसूत्रप्रभृतीनि सिद्धान्तसूत्रतया च तैः व्याख्यातानि । सन्ध्ये सृष्टिर्जीवकर्तृकेति पूर्वपक्षः । परमात्मकर्तृकैवेति सिद्धान्तः । स्वप्ने परमात्मना स्वमायया सृज्यमानाः अर्थाः परमार्थभूता एवेति सङ्ग्रहः । विस्तरस्ततो बोध्यः । व्यासार्यैः स्वाप्नार्थसत्यतां स्थापयद्भिः टीकायां परपक्षव्युदासो विस्तरेण कृतस्ततोऽवगन्तव्यः ॥ ६ ॥

---

जीवस्य स्वाप्नार्थस्रष्टृत्वे बाधकं चाह—

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ३ । २ । ६ ॥

स्वाप्नोऽर्थः भाविशुभाशुभसूचकश्च । तथा च श्रूयते—'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने' इति । 'अथ स्वप्ने पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ती'ति । स्वप्नाध्यायविदश्च एवमेव वदन्ति । यदि जीवः स्वाप्नार्थस्य द्रष्टैवास्य स्रष्टा स्यात् तर्हि स्वप्रतिकूलं स्वाप्नं कथं सृजेत् । तत् परमात्मैव विचित्रशक्तिर्विचित्रान् स्वाप्नार्थान् सृजति ॥ ६ ॥

इति प्रदीपे सन्ध्याधिकरणम् ॥ १ ॥

(अ. स.) नाभासमात्रं स्वाप्नार्था न चैते प्रातिभासिकाः ।
ईश्वरेण तु सृज्यन्ते जाग्रदर्थविलक्षणाः ॥ १ ॥
रथा न तत्र न रथयोगा अथ रथादिकान् ।
सृजते स हि कर्तेति ह्याह कर्तारमीश्वरम् ॥ २ ॥
कामं कामं निर्मिमाणः सुप्तेष्वेष्विति च श्रुतिः ।
सर्वान्प्रत्यनभिव्यक्त्या मायाबलविनिर्मिताः ॥ ३ ॥
माया च परमेशस्य शक्तिरेका गरीयसी ।
यया ह्यघटितानर्थान् घटयत्यखिलेश्वरः ॥ ४ ॥
मुख्यार्थता च सृजतेरत एवोपपद्यते ।
नन्वविद्याकल्पितोऽयं प्रपञ्चः सर्व एव तु ॥ ५ ॥
व्यावहारिकसर्गेऽपि भाक्तता सृजतेर्ननु ।
ब्रह्मण्यध्यस्तमखिलं यदविद्यातिरोहिते ॥ ६ ॥
प्रातिभासिकसर्गेऽस्मिन् भाक्तत्वं तन्न दूषणम् ।
प्रकाशैकरसं ब्रह्म तिरोहितमिति त्वसत् ॥ ७ ॥
जीवस्यास्य स्वरूपं तु तत्सङ्कल्पात्तिरोहितम् ।
तत एवास्य जीवस्य युक्तौ बन्धविपर्ययौ ॥ ८ ॥
अत एव न जीवस्य स्रष्टृत्वं तेषु युज्यते ।
बन्धोऽपि देहयोगेन देहात्माभिमतिर्यतः ॥ ९ ॥
तिरोहितस्वरूपोऽपि परमात्मप्रसादतः ।
आविर्भूतस्वरूपस्तु स्वाप्नार्थान् सृजतीत्यसत् ॥ १० ॥
न हि जानन् सृजेत्कश्चित् स्वस्यैवाशुभसूचकम् ।
भाविसूचकता तावत् स्वाप्नानां श्रूयते ननु ॥ ११ ॥

श्रीभाष्यानुसारेण तु—

पूर्वपक्षः—

स्वाप्नानां ननु भोक्ता यस्तेषां कर्ता स एव हि ।
अपरे शाखिनः प्राहुर्निर्मातारं तमेव च ॥ १२ ॥
पुत्रादीनात्मनः कामान् स्वप्ने निर्मात्यसाविति ।

सिद्धान्तः—

नैतदाश्चर्यभूतस्य स्रष्टाऽस्य परमेश्वरः ॥ १३ ॥
स्वप्नदृङ्मात्रसन्दृश्याः स्वप्नकालैकवर्तिनः ।
नन्वाश्चर्यतमा ह्येते स्वाप्ना रथहयादयः ॥ १४ ॥
जीवश्चेदनभिव्यक्तस्वरूपः स कथं सृजेत् ।
अस्य बन्धश्च मोक्षश्च सङ्कल्पात्परमात्मनः ॥ १५ ॥
बन्धोऽपि देहयोगेन तन्नायं स्रष्टुमर्हति ।
कथं सृजेत्स्वयं जानन् स्वस्यैवाशुभसूचकम् ॥ १६ ॥
शुभाशुभानां श्रूयन्ते स्वाप्नार्था ननु सूचकाः ।
अदृष्टवत्तामात्रेण स्रष्टृत्वं त्वौपचारिकम् ॥ १७ ॥
न चासाधारणं तत्तु जाग्रत्साधारणं ननु ।
तस्मात्सर्वस्य यः स्रष्टा स्रष्टाऽस्यापि स एव तु ॥ १८ ॥

इति भाष्ये सन्ध्याधिकरणम् ॥ ३ ॥

---

स्वप्नावस्था विचारिता । अथ सुषुप्त्यवस्था विचार्यते—

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ३ । २ । ७ ॥

सुषुप्तिमधिकृत्य श्रूयते—'अथ यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानाति आसु तदा नाडीषु सृप्तो भवति' इति । अन्यत्र श्रूयते—

---

अथ सुषुप्त्यवस्था विचार्यते—

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ३ । २ । ७ ॥

तदभावः—स्वप्नाभावः सुषुप्तिः । तस्यां पुरुषस्यास्य नाडीष्ववस्थितिः तथा पुरीतत्यवस्थितिः परमात्मनि संपत्तिश्च श्रूयते । तथा हि—'यत्रैतत् सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाति आसु तदा नाडीषु सृप्तो भवति' 'यदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिः सहस्राणि हृदयात् पुरीतमभिप्रतिष्ठन्ते, ताभिः प्रत्यवसृप्य पुरीतति शेते' 'यत्रैतत् पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति' इति । तदेवं श्रूयमाणानां सुषुप्तिस्थानां प्रासादखट्वापर्यङ्कन्यायेन समुच्चयो बोध्यः । प्रासादमध्ये खट्वायां प्रास्तृते

'अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिः सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते' इति । तथाऽन्यत्र 'यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति' इति । अत्र **संशयः**–सुषुप्तिस्थानतया श्रूयमाणानां नाड्यादीनां त्रयाणां विकल्पः उत समुच्चय इति । अत्राह–ननु 'नाडीषु शेते, पुरीतति शेते' 'सता सम्पन्नो भवती'ति निरपेक्षं पृथक्पृथगधिकरणत्वश्रवणात् अणोरस्य जीवस्य त्रिष्वेकदा स्थित्यसम्भवात् समुच्चयानुपपत्तेर्विकल्प एवात्र प्रतीयते–जातु नाडीषु जातु पुरीतति जातु परमात्मनीति । अत्रोच्यते—तदभावः–तस्य स्वप्नस्याभावः सुषुप्तिः नाडीषु तथा पुरीतति परमात्मनि च भवति । तच्छ्रुतेः–त्रिष्वपि सुषुप्तिस्थानत्वश्रुतेः न विकल्पः अपि तु समुच्चय एव । नन्वणोरस्य त्रिषु स्थित्यसम्भवेन कथं समुच्चयः । प्रासादखट्वा-पर्यङ्कन्यायेन तदुपपत्तेः । स्वप्नस्थानात्पुरीततं प्रविशतो नाड्यो मार्गभूता इति तासामपि सुषुप्तिस्थानतोक्तिः । अत एव प्रयोजनभेदान्न विकल्पावसरः । 'हृदयात्पुरीततमभिप्रतिष्ठन्ते' इत्यस्यार्थः उपनिष-द्विवरणे द्रष्टव्यः । तथा च नाडीमार्गेण पुरीततं प्राप्य तद्वेष्टित-हृदयकमलान्तर्वर्तिनं परमात्मानं प्राप्नोति । तस्मात् मुख्यं सुषुप्तिस्थानं परमात्मैवेति सुस्थितम् ॥ ७ ॥

## अतः प्रबोधोऽस्मात् ॥ ३ । २ । ८ ॥

"सत आगत्य न विदुः सत आगच्छामहे' इति जीवानां सुषुप्तानां प्रबोधः सच्छब्दवाच्यस्य ब्रह्मणः सकाशाच्छ्रूयते । स च प्रबोधः अत एव–ब्रह्मणः साक्षात्सुषुप्तिस्थानत्वादेवोपपद्यते ॥ ८ ॥

---

पर्यङ्के शयानं पुरुषमधिकृत्य प्रासादे शेते खट्वायां शेते पर्यङ्के शेते इति यथा त्रिधाऽपि निर्देशो युज्यते तथा नाडीषु पुरीतति परमात्मनि च सुषुप्तिर्भव-तीति सूत्रार्थः ॥ ७ ॥

**अतः प्रबोधोऽस्मात्** ॥ ३ । २ । ८ ॥

यस्मात् प्रासादखट्वापर्यङ्कन्यायेन प्राधान्येन सुषुप्तस्थानं परमात्मा अत

(अ. सं.) सुषुप्तिस्थानता तावन्नाडीषु श्रूयते क्वचित् ।
क्वचित्पुरीतति तथा ब्रह्मणि श्रूयते क्वचित् ॥ १ ॥
अणोर्जीवस्य युगपत् त्रिष्वपि स्थित्यसम्भवात् ।
निरपेक्षतया तेषां स्थानत्वश्रवणादपि ॥ २ ॥
विकल्पाश्रयणं न्याय्यमिति चेदुच्यतेऽत्र हि ।
प्रासादखट्वापर्यङ्कन्यायेनैषां समुच्चयात् ॥ ३ ॥
नाडीक्रमेण साक्षाच्च स्थितिर्ब्रह्मणि युज्यते ।
अत एव सतस्तस्मात् प्रबोधोऽपि च युज्यते ॥ ४ ॥
इति भाष्ये तदभावाधिकरणम् ॥ २ ॥

---

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥३।२।९॥

सुषुप्त्यवस्थायां यः सति सम्पन्नः स एव जाग्रद्दशायां ततः प्रत्यागच्छति उतान्य इति संशये आह—अन्य एव । न हि ब्रह्मसम्पन्नस्य ततः प्रत्यावृत्तिर्युज्यते । अपगतनामरूपविभागो ह्यप्येति सुषुप्तौ सच्छब्दवाच्ये ब्रह्मणि । अत्रोच्यते—यः प्राक् सुषुप्त्यवस्थायां ब्रह्मणि लीनः स एव तु पुनस्ततः प्रत्यागच्छति । कस्मात्? कर्मणो-

---

एव सुषुप्त्यावस्थातो जाग्रदवस्थां प्रति प्रत्यागमनसमये सतः—परमात्मनः प्रबोधः श्रूयमाण उपपद्यते । श्रूयते हि तथा—'सत आगत्य न विदुः सत आगच्छामहे इती'ति ॥ ८ ॥

इति प्रदीपे तदभावाधिकरणम् ॥ २ ॥

---

ननु सुषुप्तौ सति ब्रह्मणि संपन्नस्य पुनः प्रबोधावस्थायां कथं प्रत्यागमनम् । नहि ब्रह्मणि संपन्नस्य पुनर्भवः, तत् प्रबुध्यते त्वन्य एवेत्यत्राह—

**स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ३ । २ । ९ ॥**

यः सुषुप्त्यवस्थामुपगतः स एव तु प्रबुध्यते नेतरः । कर्मणः—भोक्तव्यस्य कर्मणः सद्भावात् । नहि कर्मास्य प्रक्षीणम् । विद्ययैव हि तत्प्रक्षयः । अनुस्मृतिश्च—य एवाहं प्राक् सुप्तः स एवाद्य प्रबुद्धोऽस्मीति प्रत्यभिज्ञानं च ।

ऽप्रक्षीणत्वात्। य एवाहं प्रसुप्तः स एवाहमद्य प्रबुद्धोऽस्मीत्यनुस्मृतेश्च। प्रसुप्तप्रबुद्धयोरभेदबोधकशब्दाच्च। तथा च श्रुतिः–'त इह व्याघ्रो वा सिंहो वा××× यद्यद्भवन्ति तदाभवन्ती'ति। मोक्षसाधनोपासनविधेश्च। अन्यथा विधीनामानर्थक्यम्। साधननिरपेक्षं सुषुप्तौ मुक्तिसम्पत्तेः। सुषुप्त्यवस्थां प्राप्तः प्रादुर्भूतस्वरूप इत्यपि न युज्यते। श्रूयते हि तस्या हेयता–'नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि××× नाहमत्र भोग्यं पश्यामी'ति ॥ ९ ॥

(अ. स.) सुषुप्तौ सति सम्पन्नः स एवावर्तते सतः।
प्रसुप्तादन्य एवायं यः प्रबुद्ध इति त्वसत् ॥ १ ॥
कर्मणामक्षयात्सोऽहमित्यनुसरणादपि।
अभेदबोधकाच्छब्दादुपासनविधेरपि ॥ २ ॥
न सत्सम्पत्तिमात्रेण प्रादुर्भूतस्वरूपता।
यतः सुषुप्त्यवस्थायाः श्रूयते हेयता ननु ॥ ३ ॥

इति भाष्ये कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥ ३ ॥

## मुग्धेऽर्धसम्पत्तिः परिशेषात् ॥ ३ । २ । १० ॥

अथ मूर्च्छावस्था विचार्यते। येयं मूर्च्छा सा जाग्रदाद्यवस्थासु त्रिसृष्वन्यतमा उत अन्यैव। अन्यत्वे मानाभावादन्यतमैवेत्यत्राह—

---

शब्दश्च श्रौतः—'त इह व्याघ्रो सिंहो वा वृको वा ×××× यद्यद्भवन्ति तदा भवन्ती'ति। विधयश्च—मोक्षार्थसाधनविधयश्च श्रूयन्ते। सुषुप्तश्चेन्मुच्यते मोक्षसाधनविधिवैयर्थ्यम् ॥ ९ ॥

इति प्रदीपे कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥ ३ ॥

## मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ ३ । २ । १० ॥

अथ मूर्च्छावस्था विचार्यते—मुग्धे—मूर्च्छित पुरुषे येयमवस्था सा अर्धसंपत्तिलक्षणा। अर्धसंपत्तिः—मरणायार्धसंपत्तिः। कस्मात्? परिशेषात्—जाग्रदाद्यवस्थात्रयवैलक्षण्यात्। ज्ञानाभावात् न जाग्रत्स्वाप्नयोः समावेशः,

मुग्धे—मूर्च्छिते याऽवस्था लोकतः सिद्धा तस्या जाग्रदादिष्वनन्तर्भावात् पारिशेष्यादन्यैव । सा च मरणायार्धसम्पत्तिः । अर्धेत्यतः आयुषश्चेदवशेषः पुनरुत्तिष्ठति । न चेदपुनरुत्थानं शेत इति गम्यते । सेयमवस्था ज्ञानाभावान्न जाग्रदवस्थायामन्तर्भवति, न च स्वाप्नावस्थायाम् । नापि सुषुप्त्यवस्थायाम् । निमित्तभेदात् । अभिघातादिर्हि मूर्च्छादिनिमित्तम् । वैरूप्यं चाकृतौ मूर्च्छितस्य दृश्यते, न सुषुप्तस्य । तस्मादियमन्यैव ॥ १० ॥

(अ. स.) अन्वहं नियतं पुंसां जाग्रदादित्रयं, ततः ।
मरणायार्धसम्पत्तिर्मूर्छेयमतिरिच्यते ॥ १ ॥
नैकेयं ज्ञानशून्यत्वात्स्वाप्नजाग्रदवस्थयोः ।
निमित्तभेदाद्वैरूप्यात्सुषुप्तावपि नान्वयः ॥ २ ॥

इति भाष्ये मुग्धाधिकरणम् ॥ ४ ॥

---

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥३।२।११॥

वैराग्याय जीवस्य जाग्रदाद्यवस्थाविशेषा मूर्च्छान्ता लोकद्वयगत्यादिक्लेशाश्च पूर्वं निरूपिताः । अथ ब्रह्मप्राप्तौ कामनोत्पादनाय ब्रह्मणः हेयप्रत्यनीकत्वकल्याणगुणाकरत्वे प्रतिपाद्येते । अत्रायं संशयः—यदिदं

---

न सुषुप्तिः आकारवैरूप्यान्निमित्तवैरूप्याच्च । मरणं सर्वप्रकारेण देहप्राणवियोगः । मूर्च्छिते तु सूक्ष्मरूपो देहप्राणसंयोग इति पारिशेष्यात् मरणायार्धसंपत्तिरित्युच्यते ॥ १० ॥

इति प्रदीपे मुग्धाधिकरणम् ॥ ४ ॥

---

संसृतौ वैराग्याय जाग्रदाद्यवस्थादोषा निरूपिताः । अथ ब्रह्मप्राप्तौ रुच्युत्पादनाय तदीया गुणा निरूप्यन्ते—

**न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ३ । २ । ११ ॥**

परस्य ब्रह्मणः सर्वान्तर्यामिणः चेतनाचेतनप्रपञ्चेषु सर्वत्र वर्तमानस्यापि व्याप्यगततत्स्थानतोऽपि न कश्चिद्दोषान्वयः । श्रुत्यादिषु प्रमाणेषु सर्वत्रैव

परस्य ब्रह्मणोऽसाधारणं लिङ्गं हेयप्रत्यनीकत्वं कल्याणगुणाश्रयत्वं च तदिदं सम्भवति न वेति। अत्राह–न सम्भवति, स्थानतो दोषान्वयात्। मलमयेऽप्यस्मिन् देहे अन्तरात्मतया निवसति हि तत्। 'देहयोगाद्वा सोऽपी'ति चाव्यवहितपूर्वमुक्तम्। उत्क्रान्तिगत्यागतिस्वाप्नादिदुरवस्था जीवस्येव तदन्तर्यामिणः कथम् न दोषावहाः, स्वेच्छया प्रवेश इति न विशेषः। स्थानस्वभावप्रयुक्तो दोषान्वयः कथं नास्य भवेदिति।

अत्रोच्यते–परस्य ब्रह्मणः स्थानतोऽपि न दोषः। सर्वत्र–श्रुतिस्मृतिषु तद्ध्युभयलिङ्गम्–हेयप्रत्यनीकत्वकल्याणगुणाकरत्वलक्षणस्वासाधारणधर्मद्वयविशिष्टं ह्यभिधीयते। 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' 'समस्तकल्याणगुणात्मकोऽसौ' 'तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः। परः पराणां सकला न यत्र क्लेशादयः सन्ति परापरेशे' इति च श्रुतिस्मृतयः॥ ११॥

## भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ ३। २। १२॥

ननु–प्रजापतिवाक्येऽपहतपाप्मत्वादिना श्रुतस्यापि जीवस्य देहयोगात् जाग्रदाद्यवस्थाभेदान्वयात् दोषान्वय इव देहयोगनिबन्धना-

---

उभयलिङ्गं हि तत्–हेयप्रत्यनीकत्वकल्याणगुणाकरत्वरूपासाधारणधर्मविशिष्टं हि ब्रह्म निरूप्यते। तथा हि श्रुतिस्मृती 'एष आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' 'निरवद्यं निरञ्जनम्' 'समस्तकल्याणगुणात्मकोऽसौ' 'परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे' इति॥ ११॥

**भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ ३। २। १२॥**

ननु ज्ञानैकघनस्यापि जीवस्य देवादितत्तच्छरीरावस्थितिभेदात् सुखदुःखान्वयवत् परस्यापि पृथिव्यादितत्तच्छरीरावस्थितिभेदात् सुखदुःखादि-

वस्थाभेदान्वयोऽवर्जनीय इति चेन्न । प्रत्येकमतद्वचनात्—अन्तर्यामिश्रुतौ 'यः पृथिव्यां तिष्ठन्' 'योऽप्सु तिष्ठन्' 'य आत्मनि तिष्ठ'न्नित्यादिना प्रत्येकम्—प्रतिपर्यायम् 'स त आत्मा अन्तर्याम्यमृत' इति अमृतत्ववचनात् । अमृतत्ववचनं तु अतद्वचनम्—अदोषत्ववचनम् । ततश्च हेयप्रत्यनीकत्वं सिद्धम् । प्रशासितृत्वेन कल्याणगुणयोगश्च । ननु—स्थानभूतवस्तुनोऽपुरुषार्थत्वस्वाभाव्यात् तत्संबन्धप्रयुक्तापुरुषार्थान्वयोऽवर्जनीयः । नैवम् । नहि वस्तुस्वभावनियतं सुखाधायकत्वं दुःखाधायकत्वं वा । एकमेव हि वस्तु कालभेदेन पुरुषभेदेन च सुखाय दुःखाय च प्रभवति । तथा च स्मर्यते—'तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते । तदेव कोपाय यतः प्रसादाय च जायते । तस्माद्दुःखात्मकं नास्ति न च किञ्चित् सुखात्मकम्' इति । सुखाधायकता दुःखाधायकता वा कर्मनिबन्धनैव ॥ १२ ॥

## अपि चैवमेके ॥ ३ । २ । १३ ॥

अपि च एके शाखिनः एवम्—स्थानतोऽपि परस्य दोषाभावमामनन्ति—'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति' इति ॥ १३ ॥

---

दोषान्वयः स्यादिति चेत् न । प्रत्येकमतद्वचनात्—अन्तर्यामिब्राह्मणे पृथिव्याद्यन्तर्यामित्वनिरूपणावसरे प्रत्येकम्—प्रतिपर्यायं 'यस्य पृथिवी शरीरम् × × अन्तर्याम्यमृतः, यस्यात्मा शरीरम् × × × अन्तर्याम्यमृतः' इत्यमृतत्वोक्त्या दोषाभावश्रवणात् ॥ १२ ॥

## अपि चैवमेके ॥ ३ । २ । १३ ॥

अपि च एके शाखिनः एवम्—शरीरे वसतो जीवस्य दोषान्वयं तत्रैव वसतः परस्य दोषानन्वयं च 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति' इति वदन्ति ॥ १३ ॥

ननु 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी'ति श्रूयमाणो रूपयोगो जीवानां चेत् हेयान्वयापादकः, तद्योगः परस्य तदन्वयावहः कथं न भवेत्, तत्राह—

## अरूपवदेव हि तत् प्रधानत्वात् ॥ ३ । २ । १४ ॥

सत्यं जीवस्येवास्यापि परस्य रूपयोगोऽस्ति । यदेव रूपं—शरीरं जीवस्य तदेव परस्यापि भवति रूपम् । अथापि अरूपवदेव हि—न रूपं यस्य तदरूपम्, तद्वदेव—रूपरहितमिवैव तत्—ब्रह्म । अन्तर्यामितया तत्र तत्र अनुप्रविष्टं परंब्रह्म जीवस्य यद्रूपं शरीरं तेन रूपवदपि —शरीरवदपि तद्रूपयोगप्रयुक्तसुखदुःखानन्वयेन तद्रूपरहितमिवैव, अतत्कार्यकरत्वात् तस्य रूपस्य । कुत एतत्? प्रधानत्वात्—प्राधान्यमत्र तत्तन्निर्वाहकत्वलक्षणम् । नामरूपनिर्वाहकत्वं हि परस्य श्रूयते— 'नामरूपयोर्निर्वहिते'ति । नामरूपव्याकरणश्रुत्या प्रतीयमानो जीवस्य रूपयोगः कर्ममूलकः, अन्तर्यामिश्रुत्या प्रतीयमानस्तु परस्य तद्योगो निर्वाहकत्वप्रयुक्त इति भेदान्न दोषान्वयप्रसङ्ग इति यावत् ॥ १४ ॥

हेयप्रत्यनीकत्वं ब्रह्मणो लिङ्गमित्यास्ताम् । न तावता सविशेषत्वम् । प्रत्यनीकताया अभावरूपत्वेन अभावस्य चाधिकरणस्वरूपानतिरिक्तत्वात् । ये च सर्वज्ञत्वादयो विशेषाः श्रूयन्ते ते च 'नेति नेति'ति निषेधमुखेनैव ब्रह्मस्वरूपावबोधनेनाताात्त्विका इति गम्यते । अत एव 'सत्यं ज्ञान'मिति ज्ञानस्वरूपत्वमात्रं ब्रह्मण उच्यते । तत् कल्याणगुणाकरत्वस्य लिङ्गस्यासम्भवात् नोभयलिङ्गं ब्रह्मेत्यत्राह—

---

**अरूपवदेव हि तत् प्रधानत्वात् ॥ ३ । २ । १४ ॥**

यद्यपि परंब्रह्म देवादितत्तद्रूपेषु अनुप्रविष्टम्, अथापि रूपरहितमिव तत्—रूपसंसर्गकृतदोषशून्यमेव, कुतः? प्रधानत्वात्, प्रविष्टयोरात्मनोर्मध्येऽस्य प्रधानत्वात्—नियामकत्वेन प्राधान्यात् । न हि कर्मवश्यत्वमस्येतरवत्, स्वातन्त्र्यात् ॥ १४ ॥

## प्रकाशवच्चावैयर्थ्यात् ॥ ३ । २ । १५ ॥

प्रकाशवत्—प्रकाशैकरसज्ञानस्वरूपत्वमिव स्वावबोधकवाक्यावैयर्थ्यात् सर्वज्ञत्वादिकल्याणगुणाश्रयत्वमपि ब्रह्मणः सिध्यति । 'सत्यं ज्ञानमनन्त'मिति श्रुतिबलात् ज्ञानस्वरूपं ब्रह्मेति यथाऽभ्युपगम्यते तथैव 'यः सर्वज्ञः सर्ववित्' 'सत्यकामः सत्यसङ्कल्पः' इत्यादिवाक्यबलात् सर्वज्ञत्वसत्यसङ्कल्पत्वादिगुणाश्रयत्वमपि ब्रह्मणोऽभ्युपगन्तव्यमेवेति भावः ॥ १५ ॥

## आह च तन्मात्रम् ॥ ३ । २ । १६ ॥

ननु 'सत्यं ज्ञानमनन्त'मित्यादिवाक्यात् ज्ञातृत्वनिषेधो गम्यते । नैवम् । चस्त्वर्थे । 'सत्यं ज्ञान'मिति श्रुतिः ज्ञानस्वरूपतामात्रमाह, न तु ज्ञातृत्वादिगुणान्तरप्रतिषेधमपि । ननु 'नेति नेती'ति निषिध्यत इति चेत् तत्रोत्तरमुत्तरत्र वक्ष्यते ॥ १६ ॥

## दर्शयति चाथो अपि स्मर्यते ॥ ३ । २ । १७ ॥

अथो इत्ययं निपातः कार्त्स्न्यार्थकः । कार्त्स्न्येन श्रुतिः कल्याणगुणयोगं दर्शयति । तथा स्मर्यते च । ब्रह्म निरूपयन्ती श्रुतिर्नैकाऽपि

---

### प्रकाशवच्चावैयर्थ्यात् ॥ ३ । २ । १५ ॥

'सत्यं ज्ञान'मिति श्रुत्या यथा प्रकाशैकरसता—ज्ञानस्वरूपताऽभ्युपगम्यते । तथा सत्यकामत्वादिश्रुत्यनुरोधात् तदवैयर्थ्याय कल्याणगुणाकरत्वमप्यभ्युपगन्तव्यमेवेति नोभयलिङ्गत्वस्योपमर्दः । केचित्तु प्रकाशोऽस्यास्तीति प्रकाशवदिति व्युत्पत्त्या ज्ञानाश्रयपरतया व्याचक्षते ॥ १५ ॥

### आह च तन्मात्रम् ॥ ३ । २ । १६ ॥

'सत्यं ज्ञान'मिति श्रुतिस्तु ज्ञानस्वरूपतामात्रमाह न तु ज्ञातृत्वादिकल्याणगुणयोगं प्रतिषेधति । येन गुणप्रतिपादकश्रुतीनामुपरोधः शङ्क्येत ॥ १६ ॥

### दर्शयति चाथो अपि स्मर्यते ॥ ३ । २ । १७ ॥

दर्शयति च श्रुतिः कल्याणगुणान् बहून् 'यः सर्वज्ञः सर्ववित्' 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' 'सत्यकामः सत्यसङ्कल्पः'

निर्विशेषतां गमयतीत्येतत् । तथा च श्रुतयः—'यः सर्वज्ञः सर्ववित्' 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' 'तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम्' 'न तस्य कार्यं करणं च विद्यते' 'भीषाऽस्मात् वातः पवते' 'स एको ब्रह्मण आनन्दः' 'आनन्दं ब्रह्मणो विद्वान्' इत्यादयः । स्मृतयश्च—'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' 'यो मामजमनादिं च वेत्ति लोकमहेश्वरम्' 'मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय' 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इत्याद्याः ॥ १७ ॥

एतावता सर्वत्रान्तरात्मतयाऽवस्थितमपि परं ब्रह्म स्थानगतदोषैरसंस्पृष्टतया उभयलिङ्गमेवेति समर्थितम् । अथ स्थानगतदोषानुपलेपे निदर्शनमाह तद्द्राढ्याय—

## अत एव चोपमा सूर्यकादिवत् ॥ ३ । २ । १८ ॥

अत एव—तत्र तत्रावस्थितावपि स्थानदोषैरनुपलिप्तत्वादेव सूर्यकादिवदित्युपमाननिरूपणं समन्वेति । आदिशब्दादाकाशस्य ग्रहणम् । तद्यथा—'आकाशमेकं हि यथा घटादिषु पृथग्भवेत् । तथाऽऽत्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान्' इति । यथा आकाशमेकमेव अविभिन्नस्वभावं सदेव घटकरकादिषु भिन्नभिन्नस्थानेषु पृथग्भवेत् व्यवहारवैलक्षण्याधायकं भवेत् । घटाकाशकरकाकाशादिव्यवहारपार्थक्य-

---

इति । अथ स्मर्यते च—'समस्तकल्याणगुणात्मकोऽसौ' 'मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय' 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः' इति ॥ १७ ॥

**अत एव चोपमा सूर्यकादिवत् ॥ ३ । २ । १८ ॥**

अत एव च—पृथिव्यादितत्तत्स्थानेष्वन्तर्यामितयाऽवस्थितस्यापि यतः स्थानगतदोषैरलिप्तत्वं अत एव, सूर्यादिवदिति श्रूयमाणोपमा युज्यते । श्रूयते च तथा—'आकाशमेकं हि यथा घटादिषु पृथग्भवेत् । तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान्' इति ॥ १८ ॥

निबन्धनं भवेत् । सलिलमिव स्थानमनु अंशभेदं गुणभेदं च नाप्नुयात् । तथैव परमात्मा तत्र तत्र अन्तरात्मतयाऽवस्थितोऽपि एक एव–अभिन्नस्वभाव एव । न व्याप्यगतगुणदोषैरुपलिप्यते । किन्तु तत्तद्वस्तु तत्तदनुगुणमन्तः प्रविश्य नियमयति केवलम् । यथा च सूर्यो जलाधारेषु प्रतिबिम्बात्मना दृश्यमानो न तद्दोषैरुपलिप्यते । तथा परोऽपीति ॥ १८ ॥

शङ्कते—

## अम्बुवदग्रहणात्तु न तथात्वम् ॥ ३ । २ । १९ ॥

ननु कथं तथात्वम्–सूर्योपमानकत्वम् । अम्बुनीवाग्रहणात् । सप्तम्यन्ताद्वतिः । जले सूर्यो ह्यपरमार्थः सन् गृह्यते । परमात्मा तु न तथा । अपि तु तत्र तत्रान्तर्यामितयाऽवस्थित एव गृह्यते । तुशब्दः शङ्काद्योतकः ।

परिहरति—

## वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च ॥ ३ । २ । २० ॥

नेत्यनुवर्तते । अन्तर्भावात्–तत्र तत्र पृथिव्यादिषु अन्तर्यामितया

---

आशङ्कते—

**अम्बुवदग्रहणात्तु न तथात्वम् ॥ ३ । २ । १९ ॥**

ननु अम्बुनि सूर्यः प्रतिबिम्बात्मना गृह्यते, पृथिव्यादिषु परमात्मा तु न तथा गृह्यते, किन्तु अन्तर्यामितयाऽवस्थितः । तत् न तथात्वम्, सूर्यस्येव परमात्मनः स्थानदोषासंस्पृष्टत्वं न घटते ॥ १९ ॥

परिहरति—

**वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च ॥ ३ । २ । २० ॥**

तत्र तत्रान्तर्भावात् परमात्मनः स्थानकृतवृद्धिह्रासभाक्त्वं सूर्यादिदृष्टान्तेन निवर्त्यते । तत्र निदर्शनद्वयं श्रूयते–एकं पारमार्थिकावस्थितिविशिष्टम्

अन्तः सत्तामात्रेण स्थानगतवृद्धिह्रासादिदोषभाक्त्वं परस्य नेत्येतन्मात्रं सूर्यकादिदृष्टान्तेनोच्यते । न तु ततः प्रतिबिम्बभावगतमिथ्यात्वमपीहाभिप्रेतम् । एवं सत्येवोभयसामञ्जस्यम्–उभयस्य आकाशसूर्यदृष्टान्तद्वयस्य सामञ्जस्यम् । आकाशदृष्टान्तेन तु सत्यतैवावगम्यते । इदमुक्तं भवति–न सर्वांशेन दृष्टान्तेन भाव्यम् । व्याप्यवस्तुगतदोषैरनुपलिप्ततायां निदर्शनद्वयम् । तत्रैकमाकाशमन्तरवस्थितम्, अन्यत्तु अनवस्थितम् । वस्तुतोऽनवस्थितस्य सूर्यस्य प्रतिबिम्बित्वमात्रेण यथा न लेपः, तथाऽवस्थितस्यापि न लेप इत्येतावन्मात्रे तात्पर्यमिति । एवं दर्शनाच्च—एकांशतो दृष्टान्तग्रहणस्य सिंह इव माणवक इत्यादौ दर्शनाच्च ।

एवं वा सूत्रार्थः। ननु 'जलाधारेष्विवांशुमा'निति सूर्योपमाननिरूपणेन तत्र तत्रान्तरवस्थितेरवास्तवत्वं गम्यते, अत एव निर्विशेषतया परब्रह्मणो हेयप्रत्यनीकत्वमात्रमिति चेदाह–'अम्बुवदि'ति निदर्शनमुक्तं नाम 'जलाधारेष्विवांशुमा'निति । अथापि अम्बुवद्ग्रहणात्तु न तथात्वम्–अम्बुनि सूर्यो गृह्यते केवलम्, अयं तु न तथा परमात्मा, किन्तु अनुप्रविश्य तिष्ठति, अतो ग्रहणमात्राभावात् घटादिष्वाकाशस्येवावस्थितेर्न तथात्वम् । अम्बुनि गृह्यमाणस्य प्रतिबिम्बस्येव नावास्तवत्वम् । अत एव 'आकाशमेकं हि यथा घटादिषु पृथक् भवेत्' इत्यस्यानुगुण्यम् । सूर्यनिदर्शनेन तु अन्तरवस्थितोऽप्ययमनवस्थित इव न लिप्यते, इत्यलेपत्वदार्ढ्याय । अन्यत्र च श्रूयते सूर्योपमा–'सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः ।

---

'आकाशमेकं हि यथा घटादिष्वि'ति । अपरमपारमार्थिकावस्थिति । उभयसामञ्जस्यं वृद्धिह्रासभाक्त्वप्रतिषेधांशमात्रेण । न तु व्याप्त्यंशेऽपि । यथा घटोदरावस्थित्या गृहोदरावस्थित्या वाऽऽकाशस्य न पार्थक्यम्–न वैषम्यम्–नाल्पत्वमहत्त्वे, यथा च जलाधारपात्राल्पत्वमहत्त्वाभ्यां सूर्यस्य न महत्त्वाल्पत्वे तथेति भावः । विवक्षितांशमात्रे निदर्शनं दृष्टं च 'सिंहो माणवक' इत्यादौ ॥ २० ॥

एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ॥' इति । तथा तत्रैवान्तरवस्थितेस्तात्त्विकं निदर्शनान्तरं च 'वायुर्यथैको भुवनं प्रविष्टः' 'अग्निर्यथैको भुवनं प्रविष्ट' इति । ननु वृक्षादिष्वन्तः प्रविश्य स्थितिश्चेत् तात्त्विकी, वर्धमानमनुवृद्धिर्ह्रासमानमनुह्रासश्च स्यात् । तत्राह–वृद्धिह्रासेति । नेत्यनुवर्तते । अन्तर्भावात्–अन्तर्भावमात्रात्, न वृद्धिह्रासभाक्त्वम्, स हि विकारविशेषः । भावमात्रं न विकाराधायकम् । अन्तर्बहिश्चाकाशस्येव व्याप्य वर्तमानस्य अणोरणुतरस्य महतो महत्तरस्य कुतो विकारदोषप्रसङ्गः । उभयसामञ्जस्यात् 'अपहतपाप्मा' 'सत्यकाम' इति श्रूयमाणस्य हेयप्रत्यनीकत्वकल्याणगुणाकरत्वोभयस्य सामञ्जस्यात् । एवं दर्शनाच्च–तत्र तत्र प्रविष्टत्वेऽपि तत्तद्गुणदोषैरसंस्पृष्टत्वस्य श्रुतेश्च । तथा हि श्रुतिः–'अशरीरं शरीरेष्वनवस्थेष्ववस्थित'मिति । सुरनरतिर्यक्तरुगुल्मादिषु अनवस्थेषु शरीरेषु अवस्थितोऽप्ययमात्मा अशरीर एव–शरीरसंबन्धकृतकार्यरहित एवेति ॥ २० ॥

ननूभयलिङ्गत्वं ब्रह्मणो न संभवति, प्रतिषिध्यते हि सर्वो विशेषो ब्रह्मणः 'अथात आदेशो नेति नेति' । अनेन निषेधमुखेनैव हि ब्रह्मस्वरूपमवबोध्यते । ननु पूर्वं 'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च' इत्यादिना श्रूयन्ते विशेषाः । सत्यम् । त एव नेति नेतीति निषिध्यन्ते, तत्राह—

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ ३ । २ । २१ ॥

श्रुतिरप्राप्तान् विशेषान् ब्रह्मणः प्रतिपाद्य तानेव प्रतिषेधतीत्यनु-

---

ननु 'द्वे वा ब्रह्मणो रूपे मूर्तं चामूर्तमेव च' इति रूपं प्रतिपाद्य 'अथात आदेशो नेति नेति'इति उक्तप्रकारविशेषनिषेधेन निर्विशेषं ब्रह्मेति श्रुतिर्बोधयतीत्यत्राह—

**प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ ३।२।२१॥**

'द्वे वा ब्रह्मणो रूपे' इत्यनेन कतिपयरूपप्रदर्शनेन यत् प्रसक्तं परब्रह्मण

चितमेतत् । ननु अतात्त्विकत्वात् प्रतिषेधति । हन्तातात्त्विकत्वे श्रुतिः कुतो विदधाति । भ्रान्तस्य भ्रान्त्यपनोदनं हि आप्तकार्यम्, न तु भ्रमापादनमपि । तस्मात् 'द्वे वा व ब्रह्मणो रूपे' इत्यादिना विशेषनिरूपणेन प्रकृतं यदेतावत्त्वं—कतिपयविशेषमात्रवत्त्वम्, तत्प्रतिषिध्यते । इति न—इत्येतावन्मात्रं न । आदरात् द्विरुक्तिः । ततोऽपि—निरूपितेभ्योऽपि विशेषेभ्यः भूयः—अधिकं ब्रवीति च 'अथ नामधेयं सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्य'मिति । प्राणाः जीवाः, अविकारित्वात् ते सत्यम्, तेषां धर्मभूतं तु ज्ञानं सङ्कोचविकासलक्षणविकारास्पदम्, परमात्मा तु न तथा, किन्तु स्वरूपतः स्वभावतश्च अविकृतः, अतस्तेभ्योऽपि परमात्मा सत्यम् । ननु—'न ह्येतस्मादिति नेत्यन्यत्परमस्ती'ति ब्रह्मणोऽन्यत्सर्वं निषिध्यते । नैवम् । इति नेत्येतस्मात्—'इति न इति न' एतत्प्रकारमात्रं नेति निरूपितादेतस्मात् अन्यत् परमुत्कृष्टं न ह्यस्तीति अभ्यधिकराहित्यं हि तत्रोच्यते । तस्मादियत्ताराहित्यस्यैवेह निरूपणात् नोभयलिङ्गत्वस्योपमर्दः ॥ २१ ॥

प्रमाणान्तरागोचरे ब्रह्मणि मूर्तामूर्तद्विविधरूपादिविशेषानुवादतत्प्रतिषेधयोरनुपपन्नतां द्रढयन् ब्रह्मणः प्रमाणान्तराप्राप्ततामाह—

## तदव्यक्तमाह हि ॥ ३ । २ । २२ ॥

तत् परंब्रह्म अव्यक्तं—प्रमाणान्तराग्राह्यम् । श्रुतिराह हि—'न सन्दृशे

---

एतावत्त्वं—परिच्छिन्नत्वम्, तद्व्यावर्त्यते इति न इति नेति । पूर्वनिर्दिष्टप्रकारमात्रं नेति तदर्थः । ततः—अनन्तरमनुपदं भूयो ब्रवीति च गुणगणं श्रुतिः 'न ह्येतस्मादिति नेत्यन्यत् परमस्ति, अथ नामधेयं सत्यस्य सत्यम्, प्राणा वै सत्यं तेषामेष सत्य'मिति । अयमर्थः—इति नेत्येतस्मात् एतन्मात्रप्रकारको नेति निर्दिष्टात्परमात्मनोऽन्यत् परमुत्कृष्टं नास्ति, नाम चास्य सत्यस्य सत्यमितीति ॥ २१ ॥

तदव्यक्तमाह हि ॥ ३ । २ । २२ ॥

'नेतिनेती'त्यादेशस्यैतावन्मात्रप्रतिषेध एव तात्पर्यम्, न तु निर्दिष्टप्रकार-

तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्' इति ब्रह्मणः प्रमाणान्तरागोचरताम् ॥ २२ ॥

## अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ ३ । २ । २३ ॥

अपि च संराधन एव तस्य ब्रह्मणो गम्यत्वम्, संराधनं—सम्यक् प्रीणनम्, तच्च भक्तिरूपापन्नं ज्ञानम्, तदेकगम्यत्वं श्रुतिस्मृतिभ्यामवगम्यते । तथा च श्रुतिस्मृती—'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' 'ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः ।' 'नाहं वेदैर्न तपसा न दानेन न चेज्यया । शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप' इति ॥२३॥

---

निषेधे । प्रत्यक्षादिलौकिकप्रमाणागम्ये ब्रह्मण्यप्राप्तं प्रकारविशेषं स्वयमेव प्रतिपाद्य श्रुतिरेव तं निषेधतीति चोपहास्यम् । श्रुतिश्चास्याव्यक्ततां—लौकिकप्रमाणागम्यतामाह 'न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैन' मिति ॥ २२ ॥

**अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ ३ । २ । २३ ॥**

अव्यक्तोऽप्येष परमात्मा संराधने—सम्यक् प्रीणनलक्षणे उपासने भवति व्यक्तः । भक्तिरूपापन्नोपासनाविपाकेन साक्षात्क्रियत इति यावत् । श्रुतिस्मृतिभ्यां चैतदवगम्यते । तथा च श्रुतिस्मृती—'ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः' 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' 'नाहं वेदैर्न तपसा न दानेन न चेज्यया । शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप' इति ॥ २३ ॥

## प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ ३ । २ । २४ ॥

प्रकाशो ज्ञानम् । ज्ञानादिवत् । यथोपास्यस्य परब्रह्मणो ज्ञानानन्दादयः स्वरूपनिरूपकधर्माः उपासकैरुपासनसमये साक्षात्क्रियन्ते तथा निरूपितस्वरूपविशेषणभूता मूर्तामूर्तरूपादयोऽपि साक्षात्क्रियन्त एव । अवैशेष्यात् विशेषणत्वावैशेष्यात् । तथा च श्रूयते साक्षात्कृतपरब्रह्मस्वरूपानामनुभवप्रकारः—'अहं मनुरभव'मित्यादिना । प्रकाशश्च—ज्ञानानन्दादिश्च कर्मण्यभ्यासात्—उपासनकर्मण्यभ्यासात् असकृदावृत्तिकृतप्रकर्षातिशयात् साक्षात्क्रियते ॥ २४ ॥

उपक्रान्तमुभयलिङ्गत्वमुपसंहरति—

## अतोऽनन्तेन तथा हि लिङ्गम् ॥ ३ । २ । २५ ॥

निर्विशेषब्रह्मवादिभिरपि हेयप्रत्यनीकत्वांशस्याभ्युपगतत्वेन कल्याणगुणयोगेनोभयलिङ्गत्वमुपसंहरन् अनन्तेनेत्याह । अतः कारणात्, परं

---

### प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ ३ । २। २४ ॥

साक्षात्कृतपरब्रह्मस्वरूपाणां वामदेवादीनां यो ब्रह्मस्वरूपसाक्षात्कारः, तस्मिन् प्रकाशादिवत्—प्रकाशैकरसज्ञानानन्दस्वरूपस्येव मूर्तामूर्तादिरूपविशिष्टत्वस्यापि अवैशेष्यम्—अविशेषेण भानमिति यावत् । तथा हि तेषामनुभवप्रकारः—'तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चे'ति । अयं च प्रकाशः साक्षात्कारविशेषात्मकः कर्मणि संराधनलक्षणे अभ्यासात् भवति ॥ २४ ॥

### अतोऽनन्तेन तथा हि लिङ्गम् ॥ ३ । २ । २५ ॥

उपसंहरत्युभयलिङ्गत्वम् । अतः—उक्तैर्हेतुभिः अनन्तेन कल्याणगुणगणेन युक्तं परंब्रह्म, तथाहि सत्येवोभयलिङ्गत्वं श्रुतिस्मृतिषु श्रूयमाणमुपपन्नं भवति ॥ २५ ॥

इति प्रदीपे उभयलिङ्गाधिकरणम् ॥ ५ ॥

ब्रह्म अनन्तेन कल्याणगुणगणेन विशिष्टम्, तथा सत्येव हि श्रुतिसूक्तमुभयलिङ्गमुपपद्यते ॥ २५ ॥

(अ. स.) यद्धेयप्रत्यनीकत्वं यः कल्याणगुणान्वयः ।
तदेतदुभयं लिङ्गं तत्र तत्र श्रुतौ श्रुतम् ॥ १ ॥
न हीयते स्थानतोऽपि यत्तद्दोषैर्न लिप्यते ।
जाग्रदादिदशाभेदा अस्य जीवशरीरिणः ॥ २ ॥
जीवस्येव न दोषाय कल्पेरन्नतदुक्तितः ।
अन्तर्याम्यमृत इति प्रत्येकं श्रूयते खलु ॥ ३ ॥
देहान्तःस्थितितौल्येऽपि सुखदुःखाद्यनन्वयम् ।
अनश्नन् दीप्यते इति प्राहुरेके हि शाखिनः ॥ ४ ॥
देहप्रवेशमात्रेण न देहीव निबध्यते ।
प्रशासितृत्वात् प्राधान्यात् कुतो बन्धस्य संभवः ॥ ५ ॥
ज्ञानस्वरूपतेवास्य ज्ञानशक्त्यादियोगिता ।
स्वीकार्या श्रुत्यवैयर्थ्यात् श्रुतिप्रामाण्यवादिभिः ॥ ६ ॥
ज्ञानस्वरूपतामाह सत्यं ज्ञानमिति श्रुतिः ।
ज्ञानादिगुणयोगित्वं न च सा प्रतिषेधति ॥ ७ ॥
किं तु श्रुतिर्दर्शयति स्फुटं स्मरति च स्मृतिः ।
अत एव श्रूयते च सूर्याकाशनिदर्शनम् ॥ ८ ॥
प्रतिबिम्बात्मना सूर्यो गृह्यते केवलं जले ।
न तथा गृह्यते ब्रह्म वर्तते तत्र तत्र तु ॥ ९ ॥
अंबुनीवाग्रहादस्य किन्तु सर्वत्र च स्थितेः ।
अलेपत्वे कथं तावन्निदर्शनमिदं भवेत् ॥ १० ॥
नैवं ह्रासादिभाक्त्वं तु दृष्टान्तेन निवर्त्यते ।
विवक्षितांशमात्रेण दृष्टं लोके निदर्शनम् ॥ ११ ॥
अत एव च दृष्टान्तद्वयमत्र समञ्जसम् ।
असतः स्थानदोषेण यथा लेपो न सम्भवेत् ॥ १२ ॥

तथा सतोऽपि तस्यास्य न लेपो वियतो यथा ।
इदमेव तु दृष्टान्तद्वयेनेह विवक्षितम् ॥ १३ ॥
ननु द्वे ब्रह्मणो रूपे मूर्तं चामूर्तमेव च ।
इत्युक्त्वा नेति नेतीति प्रकारप्रतिषेधतः ॥ १४ ॥
ब्रह्मण्युभयलिङ्गत्वं नेति चेदत्र कथ्यते ।
प्रकारमात्रं नैवात्र ब्रह्मणः प्रतिषिध्यते ॥ १५ ॥
प्रकृता या परिच्छित्तिः सैवात्र प्रतिषिध्यते ।
भूयो ब्रवीति हि ततस्तल्लिङ्गद्वयमक्षतम् ॥ १६ ॥
मूर्तामूर्तशरीरत्वमपूर्वं विहितं तु यत् ।
तदेव नेति नेतीति कथं वा प्रतिषिध्यताम् ॥ १७ ॥
मानान्तरागोचरत्वं ब्रह्मणः श्रुतिराह हि ।
उपासनैकगम्यत्वमाहतुश्च श्रुतिस्मृती ॥ १८ ॥
उपासनेऽभ्यासबलात् ज्ञानानन्दस्वरूपवत् ।
मूर्तामूर्तशरीरत्वमपि तस्य प्रकाशते ॥ १९ ॥
तस्मादनन्तकल्याणगुणयोगस्त्वबाधितः ।
तथा चोभयलिङ्गत्वं सुस्थितं श्रुतिबोधितम् ॥ २० ॥

इति भाष्ये उभयलिङ्गाधिकरणम् ॥ ५ ॥

---

## उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ ३ । २ । २६ ॥

उभयलिङ्गत्वं ब्रह्मणः समर्थयता 'अथात आदेशो नेति नेती'ति

---

'द्वे वा ब्रह्मणो रूपे मूर्तं चामूर्तमेव च' इति मूर्तामूर्तोभयस्य यद्ब्रह्मरूपत्वमुक्तं तद्विचार्यते । अत्राह—

**उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ ३ । २ । २६ ॥**

उभयव्यपदेशात्—प्रपञ्चब्रह्मणोर्भेदाभेदोभयव्यपदेशात्—'सर्वं खल्विदं ब्रह्म' 'आत्मैवेदं सर्वम्' इत्यभेदस्य 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी'ति भेदस्य च व्यपदेशात् सर्पस्य ऋजुभा-

निषेधश्रुतिः पूर्वापरवाक्यपर्यालोचनपूर्वकं प्रकृतैतावत्त्वनिषेधपरेति समर्थितम् । अथ यत्प्रकृतं मूर्तामूर्तोभयरूपकत्वं ब्रह्मणः तत्कथमिति विचार्यते उभयलिङ्गत्वदार्ढ्याय । त्रेधा तदुपपादयति । तत्र यत्परं तत्स्वमतम् ।

यन्मूर्तं पृथिव्यादि यच्चामूर्तमन्तरिक्षादि तदिदमुभयमहिकुण्डलवत् अवस्थाभेदतो ब्रह्मणो रूपं भवितुमर्हति, श्रुतावुभयव्यपदेशात्—'ब्रह्मैवेदं सर्वं' 'हन्ताहमिमास्तिस्रो देवताः अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी'ति भेदाभेदोभयव्यपदेशात् । इदमभिहितं भवति—परं ब्रह्मैव स्वयं जगद्रूपेण परिणमत् मूर्तामूर्तोभयरूपं भवति । सर्पस्य ऋजुभावकुण्डलभाववदवस्थाविशेषयोगेनोभयरूपतोपपत्तिः । अनेन निदर्शनेन दुग्धमिव दध्यात्मना न विकरोतीति विशेषो गम्यते । दधिभावे दुग्धत्वमुपमृद्यते । सर्पस्य तु कुण्डलभावे ऋजुभावे च न सर्पत्वोपमर्दः, तथा ब्रह्मणः चिदचिद्भावेऽपि न ब्रह्मत्वोपमर्द इति ॥ २६ ॥

## प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ ३ । २ । २७ ॥

तेजस्त्वजातियोगात्प्रकाशतदाश्रयवद्वा । यथा सूर्यतत्प्रभयोः स्वरूपतो भिन्नयोरपि तेजस्त्वरूपैकधर्मान्वयेनैक्यम्, तथा प्रपञ्चब्रह्मणोरपीति मूर्तामूर्तोभयरूपत्वं ब्रह्मण उपपद्यते । इदमभिहितं भवति—ब्रह्मैव

---

वकुण्डलभाववत् अवस्थाभेदमात्रेण भेदाभेदयोः स्वाभाविकत्वेन मूर्तामूर्तोभयरूपत्वश्रुतिरुपपद्यते ॥ २६ ॥

पक्षान्तरमुच्यते—

**प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ ३ । २ । २७ ॥**

नाहिकुण्डलवत् ब्रह्मण एवेयं मूर्तामूर्तोभयरूपता । तथा सत्यविकारित्वश्रुतिविरोधप्रसङ्गात् । किन्तु तेजस्त्वरूपैकजातियोगात् यथा प्रकाशतदाश्रययोः—प्रभाप्रभावतोर्भेदाभेदोभयसमन्वयः । तथा प्रपञ्चब्रह्मणोरपीति मूर्तामूर्तोभयस्य ब्रह्मरूपतोपपत्तिरिति । वाशब्दः पूर्वोक्तं पक्षं व्यावर्तयति ॥ २७ ॥

चेन्मूर्तामूर्तात्मना परिणमतीति मूर्तामूर्तोभयरूपता ब्रह्मणः तर्हि अचित्प्रपञ्चगतसकलदोषास्पदता तस्य प्रसज्येत, तस्मात् अहिकुण्डलनिदर्शनेन मूर्तामूर्तोभयरूपत्वोपपादनं न युज्यते, किन्तु प्रभाप्रभावतो नियतधर्मधर्मिभावयोः भिन्नस्वभावयोरपि तेजस्त्वरूपैकधर्मयोगेनैक्यवत् मूर्तामूर्तोभयरूपता ब्रह्मण इति ॥ २७ ॥

## पूर्ववद्वा ॥ ३ । २ । २८ ॥

प्रभातदाश्रययोरिवैकजातियोगे इष्यमाणे चिदचिदीश्वरेषु त्रिषु ब्रह्मत्वमेकमनुगतं स्वीकृतं भवेत्, तथा सति अभेदश्रुतयो जात्यैक्यपरतया नेया स्युः। 'भोक्ता भोग्यं प्रेरितारं च मत्वा' इत्यादिभिः विजातीयतया श्रूयमाणेषु ब्रह्मत्वरूपैकजात्यन्वयाभ्युपगमश्च श्रुतिस्मृतिविरुद्धः। जगत्कारणत्वलक्षणलक्षितमेव तु ब्रह्मेति श्रूयते। तस्मात् पूर्ववत्—'अंशो नानाव्यपदेशा'दिति पूर्वोक्तप्रकारेणैव मूर्तामूर्तोभयरूपत्वं ब्रह्मणो निर्वाह्यम्। अन्तर्यामिब्राह्मणे जगद्ब्रह्मणोः शरीरशरीरिभावश्रवणात् शरीरस्य च शरीरिणं प्रति अपृथक्सिद्धप्रकारतया ब्रह्म स्वेतरसमस्तवस्तुप्रकारमेवेति विशिष्टैक्येन विशिष्टैकदेशस्य विशेषणस्य विशिष्टं प्रत्यंशतया भेदाभेदश्रुतिसमन्वयः। ब्रह्मणो मूर्तामूर्तोभयशरीरकतया 'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तमेव च' इति श्रुतेश्च समन्वयः। विशेषणविशेष्ययोः स्वभावभेदात् ब्रह्मणो हेयप्रत्यनीकत्वकल्याणगुणाकरत्वे चोपपद्येते। यद्यपि अंशाधिकरणे जीवानां ब्रह्मांशत्वं समर्थितम्। तथापि विशिष्टैकदेशतया जीवानामिवाचिद्वर्गस्यापि अंशत्वं सिद्धमेवेति पूर्ववद्वेत्युक्तिः ॥ २८ ॥

---

अत्रोच्यते—

### पूर्ववद्वा ॥ ३ । २ । २८ ॥

'अंशो नानाव्यपदेशा'दिति पूर्वमुपपादितप्रकारेणांशांशिभावेन मूर्तामूर्तयोर्ब्रह्मरूपत्वश्रुतिर्नेया। विशिष्टस्य हि विशेषणमंशः, ब्रह्म च चिदचिच्छरीरकं विशिष्टमेकं तत्त्वम्। अंशश्चांशिनो रूपमुच्यते ॥ २८ ॥

## प्रतिषेधाच्च ॥ ३ । २ । २९ ॥

नन्वंशांशिभावः स्वरूपपरिणाममेव ज्ञापयति । नैतत् । प्रतिषिध्यते ह्यचिद्धर्मः 'स वा एष महानज आत्मा अजरोऽमरः' 'नास्य जरया एतज्जीर्यत' इति । तस्मात् विशिष्टैकदेशतयांऽशत्वमेव तु युक्तम् ॥२९॥

( अ. स. ) मूर्तामूर्तोभयात्मत्वं ब्रह्मणोऽद्य विचार्यते ।
कुण्डलत्वमृजुत्वं च यथाऽहेर्ब्रह्मणस्तथा ॥ १ ॥
अवस्थाभेदमात्रं तु मूर्तामूर्तादिरूपता ।
प्रपञ्चब्रह्मणोर्भेदोऽप्यभेदः श्रुतिबोधितः ॥ २ ॥
ब्रह्मैव यत् परिणमत्यनेकजगदात्मना ।
यद्वा तेजस्त्वयोगेन प्रकाशाश्रययोर्यथा ॥ ३ ॥
तथा जगद्ब्रह्मणोश्च भेदाभेदसमन्वयः ।
एकजात्यन्वयात् ब्रह्म मूर्तामूर्तात्मकं ननु ॥ ४ ॥
अंशांशिभावतो वा तु तदेतदुपपद्यते ।
ब्रह्मणो हि विशिष्टस्य भवत्यंशो विशेषणम् ॥ ५ ॥
समस्तं चिदचिद्रूपं ब्रह्मणो हि विशेषणम् ।
अचिद्धर्मनिषेधाच्च नान्यथा स्यात् समन्वयः ॥ ६ ॥

इति भाष्ये अहिकुण्डलाधिकरणम् ॥ ६ ॥

---

## प्रतिषेधाच्च ॥ ३ । २ । २९ ॥

'स वा एष महानज आत्माऽजरोऽमरः' इति जरामरणादिप्राकृतदोषप्रतिषेधादहिकुण्डलन्यायेन ब्रह्मत्वरूपैकजातियोगेन वा मूर्तामूर्तयोर्ब्रह्मरूपत्वोपपादनं न युज्यते ॥ २९ ॥

इति प्रदीपेऽहिकुण्डलाधिकरणम् ॥ ६ ॥

यदिदं जगज्जन्मादिकारणत्वलक्षणलक्षितं परंब्रह्म इतोऽप्यन्यत्परमस्तीत्याशङ्क्य प्रतिक्षिप्यते तस्योभयलिङ्गत्वदार्ढ्याय। निरतिशयासङ्ख्येयकल्याणगुणाकरत्वे सति हि असाधारणमुभयलिङ्गत्वं भवेत्। सति ततः परे तस्य न निरतिशयकल्याणगुणाकरता। कतिपयकल्याणगुणयोगश्च मुक्तादिष्वपि तुल्यः। प्रकृतैतावत्त्वप्रतिषेधकाधिकरणे 'न ह्येतस्मादिति नेत्यन्यत्परमस्तीति' विषयवाक्ये परनिषेधः प्रकृतः, स चानेन दृढीक्रियते—

## परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ ३। २। ३० ॥

अतः—जगत्कारणत्वलक्षणलक्षितात् परस्माद्ब्रह्मणोऽपि परमन्यदस्ति। कस्मात्? 'अथ य आत्मा स सेतुः' इति सेतुशब्दव्यपदेशात्। सेतुशब्दश्च कूलान्तरप्राप्तिसाधनभूते व्यपदिश्यते। 'एतं सेतुं तीर्त्वाऽन्धः सन्ननन्धो भवति' इति तरितव्यता चास्य गम्यते। उन्मानाच्च—

---

ननु—परंब्रह्मोभयलिङ्गमित्येतन्नोपपद्यते। परब्रह्मणोऽपि परमन्यदस्तीति श्रूयते। यत् सर्वतः परं तदेव तु निरतिशयकल्याणगुणविशिष्टं भवितुमर्हति इत्यभिप्रायेणाशङ्कते—

**परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ३। २। ३० ॥**

अतः—उक्तात् परमात्मनोऽपि अन्यत्परमस्ति, सेतुत्वादिव्यपदेशेभ्यः। 'अथ य आत्मा स सेतुः' इति सेतुशब्दव्यपदेशः। सेतुश्च परतीरप्रापकः। अत एतत्प्राप्येणान्येन परतीरेण भाव्यम्। 'एतं सेतुं तीर्त्वाऽन्धः सन्ननन्धो भवति' इति च श्रूयते। 'चतुष्पात् ब्रह्म' 'षोडशकलम्' इति चोन्मानं श्रूयते। अतश्च परिच्छिन्नता गम्यते। 'अमृतस्यैष सेतुः' इति च प्राप्यप्रापकत्वलक्षणः संबन्धः श्रूयते। अमृतप्रापकत्वेनास्य अनेन प्राप्यममृतमन्यद्विज्ञायते। 'तेनेदं पूर्णं पुरुषेण सर्वम्, ततो यदुत्तरतरं तदरूपमनामयम्' इति पुरुषादप्युत्तरत्वेन भेदोऽपि व्यपदिश्यते ॥ ३० ॥

'चतुष्पाद्ब्रह्म' 'षोडशकलम्' इति परिच्छिन्नान्मानाच्चापरिच्छिन्नेनान्येन भाव्यम् । 'अमृतस्य परं सेतुं' 'अमृतस्यैष सेतु'रिति प्राप्यप्रापकसम्बन्धश्च श्रूयते । तत् प्रापकादस्मात् प्राप्यमितः परमस्तीति च गम्यते । 'तेनेदं पूर्णं पुरुषेण सर्वम्, ततो यदुत्तरतरं' इति विभोरस्मात्पुरुषात् उत्तरतरमस्तीति भेदश्च व्यपदिश्यते । तदेभ्यो हेतुभ्यः परब्रह्मणः परमन्यदस्तीति गम्यत इति ॥ ३० ॥

अत्राह—

## सामान्यात्तु ॥ ३ । २ । ३१ ॥

तुशब्दः शङ्कां व्यावर्तयति । सामान्यं समानो धर्मः । अत्र सेतुरिति व्यपदेशो जगद्विधारकत्वसामान्यात् । न तु परतीरप्रापकत्वात् । ये ये लोका नभस्यनवलम्बे यत्र यत्र स्थिताः ते ते लोकाः तत्र तत्रैव यथा व्यवस्थिताः तिष्ठेयुः तथा तेषामेष धारकः, तदिदमभिप्रेत्य सेतुरेष उच्यते । स्ववाक्य एव 'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय' इति श्रवणात् । असम्भेदः–असाङ्कर्यम् । इदमभिहितं भवति—'सत्यं ज्ञानमनन्तं ब्रह्म' 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' 'आत्मन आकाशः सम्भूतः' इत्याद्यनेकवाक्यैः परस्यैव ब्रह्मणः सकलजगत्कारणत्वमुक्तप्राप्यत्वसर्वतःपरतरत्वसिद्धेः सेतुरिति व्यपदेशस्य तदनुगुण एवार्थो वाच्यः । स च विधरणत्वलक्षण एव वाक्यशेषावगत इति । तरतिश्चात्र प्राप्तिपरः, वेदं तरतीतिवत् ॥ ३१ ॥

---

अत्रोच्यते—

## सामान्यात्तु ॥ ३ । २ । ३१ ॥

तुशब्दः पूर्वपक्षं व्यावर्तयति । सेतुरिति व्यपदेशो न तीरप्राप्तिसाधनत्वविवक्षया । अपि तु सामान्यात् । 'एष सेतुर्विधृतिरेषां लोकानामसंभेदाये'ति असाङ्कर्येण धारकत्वं हि सामान्यं सेतुसाधारणं श्रूयते ॥ ३१ ॥

## बुद्ध्यर्थः पादवत् ॥ ३ । २ । ३२ ॥

'चतुष्पाद्ब्रह्मे'त्युन्मानव्यपदेशस्तु बुद्ध्यर्थः—उपासनार्थः । यथाऽन्यत्र 'वाक्पादः प्राणः पादः चक्षुः पादः मनः पादः' इति व्यपदेशः उपासनार्थः, एवमिहापि उपासनार्थोऽयं निर्देशः । श्रूयते च उपासना 'य एतमेवं विद्वान् चतुष्कलं पादं ब्रह्मण उपास्ते' इति ॥ ३२ ॥

ननु सर्वतो व्याप्तस्य विभोरनुन्मानस्य कथमुन्मानं तत्राह—

## स्थानविशेषात् प्रकाशादिवत् ॥ ३ । २ । ३३

यथाऽऽलोकाकाशादेः परितो व्याप्तस्य वातायनाद्युपाधिसम्बन्धात् उन्मानं तथाऽस्य परब्रह्मणो वागादिस्थानसम्बन्धात् तत्तत्स्थानविशेषोपाधिप्रयुक्तमुन्मानं युज्यते ॥ ३३ ॥

## उपपत्तेश्च ॥ ३ । २ । ३४ ॥

उपपद्यते च प्राप्यस्यैव परस्य ब्रह्मणः प्रापकत्वमपि । तथा च

---

### बुद्ध्यर्थः पादवत् ॥ ३ । २ । ३२ ॥

चतुष्पादिति उन्मानव्यपदेशः उपासनार्थः, पादवत् । 'वाक् पादः प्राणः पादः चक्षुः पादः मनः पादः' इति ब्रह्मणो वागादिपादव्यपदेशो यथोपासनार्थस्तथा, नातस्तस्यापरिच्छिन्नत्वव्याघातः ॥ ३२ ॥

नन्वपरिच्छिन्नस्य वागादिभिः परिच्छिद्योपासनं कथमुपपद्येत, तत्राह—

### स्थानविशेषात् प्रकाशादिवत् ॥ ३ । २ । ३३ ॥

स्थानविशेषात्—सर्वव्यापिनस्तस्य वागादिस्थानसंबन्धस्य वर्तमानतया तदवच्छेदेनोपासनं न क्षतये । किन्तूपासनानुकूल्यायैव । यथा प्रकाशस्य-सौरस्य तेजसः सर्वतो व्याप्तस्यापि गवाक्षविवरावच्छेदेनोपाश्रयणं गृहोदरवर्तिनामर्थप्राप्त्यानुकूल्याय भवति ॥ ३३ ॥

### उपपत्तेश्च ॥ ३ । २ । ३४ ॥

'अमृतस्यैष सेतु'रित्यत्र यदमृतप्रापकत्वं श्रूयते तत् परस्य ब्रह्मणो निःसमाभ्यधिकस्योपपद्यते । स्वचरणनलिनसमाश्रयान् भक्तान् स्वं रूपमेवामृतं स्वयं प्रापयतीति । प्राप्यममृतं नेतोऽन्यत् ॥ ३४ ॥

श्रूयते—'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति । तस्मात् 'अमृतस्यैष सेतु'रिति अमृतप्रापकत्वोक्त्या न ततः परस्य सिद्धिः ॥ ३४ ॥

यच्चोक्तं परस्माद्ब्रह्मणः परमन्यदस्तीति, तत्राह—

## तथाऽन्यप्रतिषेधात् ॥ ३ । २ । ३५ ॥

चार्थस्तथाशब्दः । अन्यप्रतिषेधाच्च—परस्माद्ब्रह्मणः परस्यान्यस्य तत्र तत्र श्रुतौ प्रतिषेधाच्च । 'न ह्येतस्मादिति नेत्यन्यत्परमस्ती'ति नेत्युपदिष्टात्परब्रह्मणः परमन्यन्नास्तीति श्रूयते परस्य प्रतिषेधः । तथा 'ततो यदुत्तरतर'मित्यतः पूर्वं श्रूयते 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' 'यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्' इति । अयमर्थः—तमसः-गुणमयात्तमःशब्दवाच्यात् प्रकृतिमण्डलात्परतः अप्राकृते दिव्यलोके वर्तमानं सर्वतो महान्तमादित्यवर्णं दिव्यमङ्गलविग्रहमेतं पुरुषमहं वेद, तमेव विदित्वाऽतिमृत्युं—मोक्षमेति, एतद्वेदनादन्यः पन्था अतिमृत्युप्राप्तये न विद्यते, तमेव पुरुषं विशिनष्टि—यस्मात्पुरुषात्परं प्रकृष्टमपरमन्यन्न किञ्चिदस्ति यस्मान्नाणीयो न ज्यायः किमपि । य एवाणोरणीयान्महतो महीयान् ध्येयः सोऽयममृतत्वायेति ।

---

**तथाऽन्यप्रतिषेधात् ॥ ३ । २ । ३५ ॥**

यथा—'न ह्येतस्मादिति नेत्यन्यत्परमस्ती'ति परस्मात् ब्रह्मणः परं प्रतिषिध्यते, तथा अन्यप्रतिषेधपरमेव 'ततो यदुत्तरतर'मित्यपि । 'तेनेदं पूर्णं पुरुषेण सर्वम्'—यस्मादेष पुरुषः सर्वं व्याप्य वर्तते, ततो हेतोः यत् सर्वस्मादुत्तरतरं श्रेष्ठतरं तदेतत् पुरुषशब्दाभिधेयं परं तत्त्वमरूपमनामयमिति तदर्थः । अत्रैव 'यस्मात् परं नापरमस्ति किञ्चित् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्' इति च श्रूयतेऽव्यवहितपूर्वम्, तदयमेवार्थो युक्तः ॥ ३५ ॥

एवं परतत्त्वत्वममृतत्वप्राप्तिसाधनत्वं चोक्त्वा तमेवार्थं हेतूपन्यासपूर्वकं निगमयति 'ततो यदुत्तरतर'मिति । अस्य चोपक्रमानुगुण एवार्थो वाच्यः । अयमर्थः—ततो हेतोः यदुत्तरतरं परतरं सर्वेभ्यः पूर्वोक्तमादित्यवर्णं पुरुषतत्त्वं, तत्प्राकृतरूपरहितमनामयं, य एतद्विदुरमृतास्ते भवन्ति, अथेतरे दुःखमयं संसारमेवाप्नुवन्तीति । 'नान्यः पन्था विद्यतेऽयनाये'त्युपक्रान्तमुपसंहृतमनेन भवति । अन्यत्राप्येवमेवार्थो नेयः । उपनिषद्विवरणे तत्तदर्थो बोध्यः ॥ ३५ ॥

इतश्च परब्रह्मणोऽन्यत्परं नास्तीत्यवगम्यते—

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३ । २ । ३६ ॥

यस्मादनेन सर्वगतत्वम्—एतत्कर्तृकं सर्वगतत्वं सर्वव्याप्तत्वम्, तस्मात्सर्वतः प्रकृष्टोऽयमेव न ह्यनेनाव्याप्तं यत्किञ्चिदणु वा स्थूलं वा, चेतनतत्त्वं वा अचेतनतत्त्वं वा, तस्माद्व्याप्येभ्योऽन्येभ्यः व्यापकोऽयमेव परतरः । कथमस्य सर्वगतत्वमवगम्यते । आयामशब्दादिभ्यः—आयामो व्याप्तिः, तदवबोधकशब्दादिभ्यः । ते च शब्दाः 'तेनेदं पूर्णं पुरुषेण सर्वम्' 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' । 'ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्' इत्याद्याः । आदिशब्दात् 'ब्रह्मैवेदं सर्व'मित्याद्या बोध्याः ॥ ३६ ॥

---

**अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३ । २ । ३६ ॥**

अनेन सर्वगतत्वम्—सर्वस्य व्याप्तत्वमायामशब्दादिभ्योऽवगम्यते । आयामः—व्याप्तिः । 'तेनेदं पूर्णं पुरुषेण सर्व'मिति सर्वस्य पुरुषशब्दाभिलप्येन परब्रह्मणा हि व्याप्तिः प्रतिपाद्यते । 'अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः' इति च व्याप्तिः श्रूयते । तदनेनाव्याप्तं अस्मादधिकमन्यदस्तीति कथं घटेत? तत् परमात्मैव परतरः । नातोऽन्यत्परमस्ति ॥ ३६ ॥

इति प्रदीपे पराधिकरणम् ॥ ७ ॥

(अ. स.) परं परब्रह्मणोऽन्यदस्ति वा नेति चिन्त्यते ।

पूर्वपक्षः—

आहान्यत् परमस्त्यस्मात् सेत्वादिव्यपदेशतः ॥ १ ॥
'आत्मा स सेतुर्विधृतिः' 'सेतुं तीर्त्वे'ति च श्रुतेः ।
सेतुनेव परं तीरं प्राप्यमस्ति ततः परम् ॥ २ ॥
तर्तव्यत्वश्रुतेश्चान्यत्परमस्तीति गम्यते ।
'चतुष्पात्' 'षोडशकल'मित्युन्मानाच्च गम्यते ॥ ३ ॥
सर्वतः परता नैव परिच्छिन्नस्य सम्भवेत् ।
'अमृतस्य परं सेतु'मित्यादिश्रुतिवाक्यतः ॥ ४ ॥
प्राप्यप्रापकभावश्च सम्बन्धो व्यपदिश्यते ।
तेनास्मात् प्रापकादन्यत् प्राप्यमस्तीति गम्यते ॥ ५ ॥
'ततो यदुत्तरतर' मिति भेदोऽपि बोध्यते ।

सिद्धान्तः—

अत्रोच्यते धारकत्वसामान्यात् सेतुरुच्यते ॥ ६ ॥
असम्भेदेन लोकानां धारको ह्ययमिष्यते ।
उपासनार्थमुन्मानममितस्यापि सम्भवेत् ॥ ७ ॥
स्थानभेदात्तदुन्मानं प्रकाशाकाशयोरिव ।
प्राप्यस्यैव प्रापकत्वं श्रुतावप्युपपाद्यते ॥ ८ ॥
'यस्मात्परं नान्यदस्ति किञ्चने'ति निषेधतः ।
य एव पुरुषः प्रोक्तः स एवात्र निगद्यते ॥ ९ ॥
तस्योत्तरतरत्वे तु हेतुस्तत इतीर्यते ।
परत्वव्यञ्जकं सर्वगतत्वं चास्य कीर्त्यते ॥ १० ॥

इति भाष्ये पराधिकरणम् ॥ ७ ॥

परमात्मोपासनायां प्रवर्तनाय जीवानां जाग्रदाद्यवस्थाभेदेन सदोषत्वं परमात्मनो हेयप्रत्यनीकत्वकल्याणगुणाकरत्वलक्षणमुभयलिङ्गत्वं तस्य परतरत्वं चोक्तम् । अथ तदुपासनं निरूपयिष्यन्नुपासीनानां फलं तत एव सिध्यतीत्येतत् बोधयितुं फलसामान्यस्य तत एव सिद्धिमाह—

## फलमत उपपत्तेः ॥ ३ । २ । ३७ ॥

अतः—परमपुरुषादेव शास्त्रविहितानामनुष्ठितानां फलं निष्पद्यते, उपपत्तेः । स हि सर्वकर्मसमाराध्यस्तैस्तैः प्रकारैराराध्यमानः सर्वान्तर्यामी सर्वज्ञः सर्वशक्तः तांस्तानधिकारिणस्तानि तानि फलानि प्रापयति । एतदुक्तं भवति—परमात्मा सर्वतनुः कर्मभिरुपासनेन साक्षात् देवताद्वारा वा समाराधितः प्रसन्नः तत्तदिष्टमैहिकमामुष्मिकमपवर्गं वा दातुं प्रभवति । न क्षणप्रध्वंसिनां यज्ञदानादीनां जडानां तत्सामर्थ्यम् ॥ ३७ ॥

## श्रुतत्वाच्च ॥ ३ । २ । ३८ ॥

श्रूयते च भोगमपवर्गं वा फलमयमेव प्रयच्छतीति 'स वा एष महानज आत्माऽन्नादो वसुदानः' 'एष ह्येवानन्दयाती'ति ॥ ३८ ॥

---

उक्तं परस्य ब्रह्मण उभयलिङ्गत्वमैश्वर्यम् । अथ मोक्षफलप्रदत्वलक्षणमैश्वर्यमपि तस्यैवेति वदन् सामान्यतः सकलफलप्रदत्वमपि तस्यैवेत्येतदाह—

### फलमत उपपत्तेः ॥ ३ । २ । ३७ ॥

सर्वेषामेव कर्मणामुपासनानां च फलं सर्वतनोरस्मात् परमात्मन एव सिध्यति । अस्यैव सकलफलप्रदत्वोपपत्तेः । सर्वज्ञस्य सर्वशक्तस्य सर्वान्तर्यामिणः सकलफलप्रदत्वमुपपद्यते, नान्यस्येति भावः ॥ ३७ ॥

### श्रुतत्वाच्च ॥ ३ । २ । ३८ ॥

श्रूयते च—'स वा एष महानज आत्माऽन्नादो वसुदान' इति ॥ ३८ ॥

## धर्मं जैमिनिरत एव ॥ ३ । २ । ३९ ॥

अतः—उपपत्तेः श्रुतत्वाच्च धर्ममेव फलसाधनं जैमिनिर्मन्यते उपपत्तिस्तावत् लोकतो गम्यते । कृषीवलैः क्रियमाणं कृष्यादिकर्मैव फलं साक्षात्परम्परया वा साधयति, न तद्देवताप्रसादादिसापेक्षम् । एवमेव यज्ञदानादिकर्म तथोपासनं च मानसं कर्म फलसाधनं स्वयमेव भवितुमर्हति । क्षणविध्वंस्यपि अदृष्टद्वारा प्रभवति फलाय । 'स्वर्गकामो यजेते'ति श्रुत्या च अपूर्वद्वारा यागस्यैव स्वर्गसाधनत्वं गम्यते ॥ ३९ ॥

## पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ३ । २ । ४० ॥

तुशब्देन जैमिनेः पक्षो व्यावर्त्यते । बादरायण इति स्वनाम्ना निर्देशः स्वपक्षे निर्बाधत्वद्योतनाय । पूर्वं-प्रथममुक्तं परमात्मनो देवताविशेषस्य फलप्रदत्वमेव बादरायणो मन्यते । कुतः? हेतुव्यपदेशात्—तत्र तत्र 'यजेत' इत्यादिभिर्देवताया एव हेतुत्वव्यपदेशात् । यजिर्हि देवपूजार्थकः, विधिना च देवपूजायाः साधनत्वमवगम्यते, तेन पूजिता देवता फलं प्रयच्छतीति सिद्धम् । 'वायव्यं श्वेतमालभेत भूतिकामः

---

### धर्मं जैमिनिरत एव ॥ ३ । २ । ३९ ॥

जैमिनिस्तु अतः—उपपत्तेः शास्त्रतश्च धर्ममेव फलदं मन्यते । कृष्यादिकर्म कर्तुः फलं यच्छतीति लोकत उपपत्तिः । श्रुतिश्च 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति ॥ ३९ ॥

### पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ३ । २ । ४० ॥

बादरायणस्तु पूर्वम्—प्रथमं पक्षं परमात्मनः फलदातृत्वमेव मन्यते । हेतुव्यपदेशात् 'वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयती'ति देवताविशेषस्यैव हि फले हेतुत्वं व्यपदिशति । सा च वाय्वादेरप्यन्तरात्मा परा देवतैवेति ॥ ४० ॥

इति प्रदीपे फलाधिकरणम् ॥ ८ ॥

इति ब्रह्ममीमांसासूत्रार्थप्रदीपे तृतीयस्याध्यायस्य द्वितीयः पादः ॥

वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति' इति व्यक्तमवगम्यते च देवतायाः फलसाधनत्वम् । वस्तुतः सर्वतनुरयमेव तत्तद्देवताशरीरकः समाराधितः प्रसन्नः फलमादधाति । इममर्थं श्रुतिः स्वयं श्रावयति 'इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः' तदेवाग्निः 'तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः' इति । अन्तर्यामिब्राह्मणे च 'यो वायौ तिष्ठन्' 'योऽग्नौ तिष्ठन्' 'य आदित्ये तिष्ठन्नि'त्यादिना तत्तद्देवतात्मत्वमवबोध्यते । स्मर्यते च 'यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ स तया श्रद्धया युक्तः तस्याराधनमीहते । लभते च ततः कामान् मयैव विहितान् हि तान्' ॥ इति । 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव चे'ति च । प्रभुः—फलप्रदः । अविदितश्रुतिहार्दास्तु तत्तनुमात्रे श्रद्धां कुर्वते । अतश्चान्तवत्फलं भवति तेषाम् । विदितश्रुतिहार्दास्तु यज्ञदानतपोध्यानादिभिस्तमेवाराधयन्तोऽनन्तं फलमाप्नुवन्ति । तत् बादरायणमतमेव तु श्रुत्यन्तहार्दम् ॥ ४० ॥

( अ. सं. ) यज्ञदानादिकर्माणि देवतोपासनानि च ।
जनयन्ति फलं स्वं स्वं कथमित्यद्य चिन्त्यते ॥ १ ॥
शास्त्रीयैः साधनैस्तैस्तैर्देवताप्रीणनात्मकैः ।
देवताप्रीतिजननद्वारेणोत्पाद्यते फलम् ॥ २ ॥
सा तु सर्वतनुः साक्षात् परमात्मैव देवता ।
अतः फलं सर्वशक्तात्सर्वज्ञादुपपद्यते ॥ ३ ॥
तस्यास्य फलदातृत्वं श्रुत्यन्ते श्रूयतेऽपि च ।
धर्मादपूर्वात् तत्सिद्धिमुपपत्तेस्तु जैमिनिः ॥ ४ ॥
विधेश्च मन्यते देवप्रसादस्यैव सूत्रकृत् ।
फलदत्वं मन्यते तु भगवान् बादरायणः ॥ ५ ॥

इति भाष्ये फलाधिकरणम् ॥ ८ ॥

इति ब्रह्ममीमांसाभाष्ये तृतीयस्याध्यायस्य द्वितीयः पादः ।

## सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ ३ । ३ । १ ॥

उक्तं निःश्रेयसार्थिभिरुपास्यस्य परस्य ब्रह्मणः कल्याणगुणाकरत्वं सर्वस्मात्परतरत्वं सकलफलसाधनत्वं च, येनोपासिसिषा निःश्रेयसार्थिनां सपदि समुद्भवेत् । अथोपासनाभेदानवगमयता गुणोपसंहारतदभाव-निर्णयाय विद्याभेदतदभेदचिन्ता क्रियते । तत्र प्रथमं तावत्-एकस्यां शाखायां श्रुता एकसंज्ञिका एकफलाश्च वैश्वानरविद्यादिका विद्याविशेषाः शाखान्तरेऽपि श्रूयन्ते, तासां शाखाभेदात् भेदः उत नेत्येतद्विचार्यते । अत्राह—शाखाभेदाद्विद्या भिद्यते । कथमेतत् ? अविशेषपुनःश्रवणात् । असति विद्याभेदे अविशेषपुनःश्रवणं व्यर्थं स्यात् । अविशेषपुनःश्रवणे निमित्ताभावात् । तथा प्रकरणभेदाच्च । शाखाभेदे प्रकरणभेदो ह्यवर्जनीयः । मुण्डके आथर्वणे श्रूयमाणा या अक्षरब्रह्मविद्या तस्याः शाखान्तरे श्रूयमाणा या अक्षरब्रह्मविद्या ततो भेदः स्वीकार्यः । 'तेषामेवैतां ब्रह्म-विद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इति तस्याः शिरोव्रताङ्गकत्व-श्रवणात् । अत्रोच्यते—सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् । प्रती-यत इति प्रत्ययम्, सर्ववेदान्तैः प्रतिपाद्यमानमुपासनमेकमेवेति साध्या-

---

अतीते पादे परमात्मनः उभयलिङ्गत्वादयः ऐश्वर्यविशेषा निरूपिताः, अथ तदुपासनलक्षणासु विद्यासु गुणोपसंहारानुपसंहारनिर्णयाय विद्याभेदाभेद-विचारः क्रियते । तत्र प्रथममवबोधकशाखाभेदेऽपि अवबोध्यविद्याया भेदो नास्तीत्येतत्समर्थ्यते ।

### सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ ३ । ३ । १ ॥

सर्वैर्वेदान्तैः—भिन्नभिन्नशाखासु श्रूयमाणैर्वेदान्तवाक्यैः सर्वैः प्रत्ययो बोधो यस्योपासनस्य तत् अवबोधकशाखाभेदेऽप्यभिन्नमेव । चोदनाद्यविशेषात्—चोदनासंयोगरूपसमाख्यानामविशेषात् । यथा—वैश्वानरविद्या छान्दोग्ये वाजसनेयके च श्रूयते—तत्र चोदना त्वेकैव, उपास्यं वैश्वानररूपमेकमेव, फलसंयोगश्च ब्रह्मप्राप्तिलक्षण एकः, समाख्या च वैश्वानरविद्येत्येका, अतः शाखाभेदेऽपि वैश्वानरविद्यैकेव ॥ १ ॥

ध्याहारो हेतुबलात् । भिन्नभिन्नशाखाप्रतिपाद्यमाना विद्या एकैवे-त्यर्थः । तत्र हेतुः—चोदनाद्यविशेषात् । चोदना—विधिः । आदिशब्दात् फलसंयोगरूपाख्यानानि ग्राह्याणि । विधिफलसंयोगरूपसमाख्यानाम-विशेषात् । एतेष्वेकस्य वा चेद्भेदः तदा विद्याभेदः स्यात् । तथा तु न । छान्दोग्ये वाजसनेयके च श्रूयमाणायां वैश्वानरविद्यायां—'वैश्वानरमुपास्ते' इति विधिरेक एव, फलसंयोगश्च ब्रह्मप्राप्तिलक्षण एक एव, रूपं चैकमेव, वैश्वानरविद्येति नाम च । तस्मान्न शाखाभेदमात्रेण विद्याभेदः । ननु छान्दोग्यवाजसनेयकयोः श्रूयमाणयोः पञ्चाग्नि-विद्ययोर्नाम भिद्यते कौथुमीपञ्चाग्निविद्या वाजसनेयकपञ्चाग्निविद्येति । नैतत् । नेदं विद्यानाम । पञ्चाग्निविद्येत्येवाविशिष्टं नाम । कुथमेन प्रोक्ता कौथुमीति विद्यावबोधकशाखानाम विद्यायामुपचारात्प्रयु-ज्यते । तथा वाजसनेयकप्रोक्ततया च वाजसनेयकीति ॥ १ ॥

अविशेषपुनःश्रवणादिना विद्याभेद इत्याशङ्कां परिहरति—

## भेदान्नेति चेदेकस्यामपि ॥ ३ । ३ । २ ॥

ननु प्रकरणभेदादविशेषपुनःश्रवणाच्च शाखाभेदेन विद्याभेदान्नैक्य-मिति चेत्, एकस्यामपि विद्यायाम्—विद्यैक्येऽपि प्रतिपत्तृभेदेनाविशेष-पुनःश्रवणाद्युपपत्तेः चोदनाद्यविशेषाद्विद्यैक्यमेव युक्तम् ॥ २ ॥

ननु मुण्डकोपनिषदि श्रूयमाणा अक्षरविद्या शाखान्तरे श्रूयमा-णाया अक्षरविद्याया विभिद्यते शिरोव्रताङ्गकत्वादित्यत्राह—

---

**भेदान्नेति चेदेकस्यामपि ॥ ३ । ३ । २ ॥**

ननु शाखाभेदाद्विद्याभेदोऽवर्जनीयः, अविशेषपुनःश्रुतेः । असति विद्या-भेदे पुनःश्रवणानुत्थितेः । इति चेन्न । एकस्यामपि विद्यायाम्—असत्यपि विद्याभेदे प्रतिपत्तृभेदादविशेषपुनःश्रवणमुपपद्यते ॥ २ ॥

ननु मुण्डके 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इति ब्रह्मविद्याङ्गता शिरोव्रतस्य श्रूयते । इदं च शिरोव्रतमाथर्वणिकानामेव । तथा च मुण्डके श्रूयमाणा विद्या शाखान्तरे श्रूयमाणाया विद्याया भिन्नैव । तस्याः शिरोव्रतानङ्गकत्वादिति चेदत्राह—

## स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ । ३ । ३ ॥

स्वाध्यायस्य—विद्यावबोधकैतच्छाखाध्ययनस्य, तथात्वे हि—शिरोव्रताङ्गत्वे हि तन्नियमः—शिरोव्रतनियमः; न तु विद्यायाः । आथर्वणिकानां वेदव्रतावबोधके समाचाराख्ये ग्रन्थे अधिकारात्—प्रतिपादनात् । चकारेण 'नैतदचीर्णव्रतोऽधीते'इत्यननुष्ठितव्रतान्प्रत्यध्ययननिषेधो विधीयमानो हेतुर्गम्यते । सववच्चेति दृष्टान्तः । यथा सप्तसूर्याख्यहोमप्रभृतिशतौदनपर्यन्तो होमगणः आथर्वणिकानामेव नान्येषाम्, एकाग्निसम्बन्धात् । एकाग्निश्च तदीयः । तथाऽऽथर्वणिकानामेतदध्ययने तन्नियमः, नतु विद्यायाम् ॥ ३ ॥

## दर्शयति च ॥ ३ । ३ । ४ ॥

शाखाभेदेऽपि विद्यैक्यं श्रुतिरेव दर्शयति । तथा हि—छान्दोग्ये श्रूयते दहरविद्या 'दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आका-

---

### स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ । ३ । ३ ॥

स्वाध्यायस्य—अध्ययनमात्रस्य तथात्वे शिरोव्रताङ्गकत्वे 'तेषामेवैता'मित्युपदेशः प्रवर्तते । 'ब्रह्मविद्यां वदेते'ति हि श्रूयते । 'एतां ब्रह्मविद्या'मिति च उपनिषदियमभिधीयते । 'नैतदचीर्णव्रतोऽधीते' इति चान्ते श्रूयते । समाचाराख्ये ग्रन्थे च 'इदमपि वेदव्रतेन व्याख्यातम्' इति अधिकृतम् । सववच्च—सौर्यादयः शतौदनपर्यन्ताः सवहोमा आथर्वणिकैकाग्निसंबन्धिनः तत्रैव विधेया न त्रेताग्निषु इति यथा नियमः तथाऽयं नियमः यैः शिरोव्रतं विहितं तैरेवेयमुपनिषदध्येतव्येति ॥ ३ ॥

### दर्शयति च ॥ ३ । ३ । ४ ॥

शाखाभेदेऽपि विद्यैक्यं श्रुतिरेव दर्शयति । तथा हि—'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्य'मित्यन्वेष्टव्यतया प्रोक्तं 'किं तत्र विद्यते यदन्वेष्टव्य'मिति प्रश्नपूर्वक-

शस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्' इति। 'किं तदत्र विद्यते यदन्वेष्टव्य'-मिति प्रश्नमुद्भाव्य सत्यकामत्वादिविशिष्टस्योपास्यत्वं तत्र प्रतिपाद्यते। इयमेव दहरविद्या तैत्तिरीये श्रूयते 'तत्रापि दहं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्' इति। तत्रापेक्षितार्थाकथनेन तदर्थं छान्दोग्योपजीव्यत्वेन विद्यैक्यं गम्यते। तथा चोभयत्रापि सत्यकामत्वादिगुणविशिष्टस्यैवोपास्यत्वं सिध्यति ॥ ४ ॥

अथैवं विद्यैक्यावधारणस्य प्रयोजनमाह—

## उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च ॥३।३।५॥

समाने—शाखाभेदेऽपि विद्यैक्ये स्थिते, दहरविद्यावैश्वानरविद्यादिषु शाखान्तरे उक्ता गुणाः शाखान्तरे अनुक्ता अप्युपसंहार्याः। कस्मात् विधिशेषवदर्थाभेदात्—दहरविद्याविधायकवाक्ये विधिशेषतया वाक्यशेषस्था गुणास्तद्विद्यासंबन्धात्तदुपकारार्थतया यथोपसंह्रियन्ते तथा शाखान्तरेऽपि विद्योपकारकत्वरूपप्रयोजनैक्यादुपसंहार्या एव। च शब्दोऽवधारणार्थः ॥ ५ ॥

---

मपहतपाप्मत्वादिगुणविशिष्टं ब्रह्मेति ज्ञापयति। तैत्तिरीयश्रुतिस्तु छान्दोग्ये श्रुतमेवान्वेष्टव्यविशेषमुपजीव्य 'तत्रापि दहं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्य'मिति श्रावयति। किं तत्र विद्यते यदन्वेष्टव्यमुच्यते इत्यत्र तु छान्दोग्ये श्रुत एव विशेष इह विवक्षित इति तदुपजीव्यताऽस्याः श्रुतेः ॥ ४ ॥

तदेवं शाखाभेदेऽपि विद्यैक्यं समर्थितम्, अथैतत्प्रयोजनमाह—सिद्धे च विद्यैक्ये शाखान्तरे श्रुता गुणविशेषाः शाखान्तरेऽश्रुता अपि तत उपसंहार्याइति।

### उपसंहारोऽर्थाभेदात् विधिशेषवत्समाने च ॥ ३ । ३ । ५ ॥

अर्थाभेदात् उपास्यार्थैक्यात् चोदनाद्यविशेषात्, उपासने समाने सति—अभिन्ने सति शाखान्तरोक्तगुणानामनुक्तानामुपसंहारः कार्यः। विधिशेषवत्—यथा दहरवैश्वानरादिविद्याविधिशेषभूतानां तदङ्गानां एकस्यामेव शाखायां वाक्यान्तरे श्रूयमाणानां विधावुपसंहारस्तथा विध्युपकारकत्वाविशेषात् शाखान्तरे श्रूयमाणानामप्युपसंहारो न्याय्यः ॥ ५ ॥

इति प्रदीपे सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

( अ. स. ) वैश्वानरादिविद्यायाः श्रुतायाः शाखयोर्द्वयोः ।
शाखाभेदेन भेदोऽस्ति न वेत्येतद्विचार्यते ॥ १ ॥

पूर्वपक्षः–

विधिभेदस्य कल्प्यत्वादविशेषपुनःश्रुतेः ।
शाखाभेदेन भेदः स्याद्विद्याया इति चेन्न तत् ॥ २ ॥

सिद्धान्तः–

चोदनाफलसंयोगरूपाख्यास्वविशेषतः ।
शाखाभेदेऽपि विद्यैक्यं ज्योतिष्टोमादिवद्भवेत् ॥ ३ ॥
सम्भवेत् प्रतिपत्तॄणां भेदादपि पुनः श्रुतिः ।
क्वचिदध्ययनाङ्गं तु श्रुतं नाङ्गं शिरोव्रतम् ॥ ४ ॥
विद्याया इति विद्यैक्यं शाखाभेदेऽपि सम्भवेत् ।
विद्यैक्यं दर्शयति तु शाखाभेदेऽपि च श्रुतिः ॥ ५ ॥
विद्यैक्ये चोपसंहार्याः गुणाः शाखान्तरश्रुताः ।
विधिशेषतया तत्तच्छाखाश्रुतगुणा इव ॥ ६ ॥

इति भाष्ये सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

---

उक्तं शाखाभेदेऽपि विद्यैक्यम्, विद्यैक्ये गुणोपसंहारश्च । अथ कासुचिद्विद्यासु शाखान्तरेऽपि श्रूयमाणासु विशेषोऽस्ति नेति विमर्शपूर्वकं निर्णीयते—

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ३ । ३ । ६ ॥

इदं पूर्वपक्षसूत्रम् । पूर्वपक्षी विशेषमाशङ्क्य निरस्यति । श्रूयते

---

चोदनाद्यविशेषाद्विद्यैक्ये समर्थिते कासुचिद्विद्यासु तदविशेषेण विद्यैक्यमाशङ्क्याविशेषं निरसिष्यन् प्रथममविशेषमाशङ्कमानः सिद्धान्तिच्छायया विशेषमाशङ्क्य पूर्वपक्षिमुखतः प्रतिक्षिपति—

**अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ३ । ३ । ६ ॥**

श्रूयते तावदुद्गीथविद्या बृहदारण्ये छान्दोग्ये च । यद्यप्यस्ति समाख्याया ऐक्यम्, अथाप्युपास्ये अन्यथात्वम्—भेदः, शब्दभेदादेवावगम्यते ।

तावदुद्गीथविद्या वाजिनां शाखासु, 'द्वया ह प्राजापत्या देवा असुराश्च ××ते ह देवा ऊचुः हन्तासुरान् यज्ञ उद्गीथेनात्ययाम ××× अथेममासन्यं प्राणमूचुस्त्वं न उद्गायेति ××× भवत्यात्मना पराऽस्य द्विषन् भ्रातृव्यो भवति य एवं वेद' इति। छन्दोगानां शाखासु च 'देवासुरा ह वै यत्र संयेतिरे ××× तद्ध देवा उद्गीथमाजह्रुः अनेनैनमभिहनिष्यामः ××× अथ ह य एवायं मुख्यः प्राणः तमुद्गीथमुपासाञ्चक्रिरे ××× यथाऽश्मानमाखणमृत्वा विध्वंसते ××× य एवंविदि पापं कामयते' इति। अत्राह—शाखाभेदेऽपि न विद्याभेदः, अविशेषात्। चोदना चोभयत्र फलश्रुतिबलात्कल्प्यमाना उपासनाविषयिणी एकैव, नाम चोद्गीथविद्येत्यविशिष्टम्, फलं शत्रुनिरसनलक्षणमेकम्, 'उद्गीथमाजह्रुः' 'उद्गीथेनात्ययाम' इत्युभयत्रोद्गीथस्यैवोपास्यताश्रवणात् रूपमप्येकम्। ननु विद्या भिद्यत एव। रूपस्यान्यथात्वात्। अन्यथात्वं च शब्दादेवावगम्यते। तथा हि—वाजिनां शाखासु 'अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्' इति उद्गानकर्तरि प्राणदृष्टचोपासनमुक्त्वा 'एवंविदी'त्यनेन प्राणदृष्टचोद्गातारमुपासीनस्य फलमुच्यते। छन्दोगानां तु—'य एवायं मुख्यप्राणस्तमुद्गीथमुपासांचक्रिरे' इति प्राणदृष्टचोद्गानकर्मण उद्गीथस्योपास्यत्वं श्रूयते। अतो रूपभेदाद्विद्या भिद्यते इति चेन्नाविशेषात्—रूपस्याप्यविशेषादेकैव। उभयत्रोपक्रमे हि 'उद्गीथमाजह्रुः' 'उद्गीथेनात्ययाम' इति शत्रुजयाय उद्गीथग्रहणं श्रूयते। अत उपक्रमबलात् उद्गीथस्यैवोपास्यत्वे सिद्धे 'तेभ्य एष प्राण उदगाय'दिति उद्गानकर्तृत्वनिर्देशः

बृहदारण्यके तावत् उद्गातरि प्राणदृष्टयवबोधकः शब्दः 'तेभ्य एष प्राण उदगायत्' इति; छान्दोग्ये तु 'य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे' इति उद्गीथे प्राणदृष्टयवबोधकः शब्दः। अत उपास्यभेदात् भेद इति चेन्न। अविशेषात्। उभयत्रोपक्रमे 'हन्तासुरान् यज्ञ उद्गीथेनात्ययाम' इति बृहदारण्यके, 'उद्गीथमाजह्रुरनेनैनानभिहनिष्याम' इति छान्दोग्ये च उद्गीथस्यैवोपास्यताया अविशेषेण श्रवणात्॥ ६॥

अध्यस्तप्राणभावस्योद्गीथस्यैवोद्गानकर्मणः सौकर्यातिशयविवक्षया पाककर्मणोऽप्योदनस्य पाककर्तृत्वविवक्षया ओदनं पचतीतिवदौपचारिकः ॥ ६ ॥

अत्र सिद्धान्तमाह—

## नवा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ३ । ३ । ७ ॥

वाशब्दः पूर्वपक्षव्यावृत्तिं द्योतयति । न विद्यैक्यम्, प्रकरणभेदात् । छान्दोग्ये 'ओमित्येतदक्षरमुद्गीथमुपासीते'ति उद्गीथावयवभूतं प्रणवं प्रस्तुत्य 'एतस्य वा अक्षरस्योपव्याख्यानं भवति ××× देवासुरा ह वै यत्र संयेतिरे ××× अथ य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीते'ति श्रूयते । अतः प्रकरणमुद्गीथावयवभूतप्रणवस्यैवोपासनाविशेषमवगमयति । अत एव 'तमुद्गीथमुपासीते'ति तच्छब्दसामानाधिकरण्यादुद्गीथशब्दस्तदवयवभूतप्रणवविशेषपर इत्यपि सिध्यति । तथा च छान्दोग्ये उद्गीथावयवभूतप्रणवे प्राणदृष्टिर्विधीयते । वाजसनेयके तु—तथाविधप्रकरणाभावात् 'हन्तासुरान् यज्ञ उद्गीथेनात्ययामे'त्यत्र उद्गीथशब्दः कृत्स्नोद्गीथपरः । अतः उपास्यरूपभेदाद्विद्याभेदः । 'त्वं न उद्गाय' 'तथेति तेभ्यः प्राण उदगात्' इति उद्गातरि

---

अत्रोच्यते—

## न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥ ३ । ३ । ७ ॥

वाशब्द एवार्थे । अविशेषो नैव । प्रकरणभेदात् । प्रक्रियत इति प्रकरणम्—उपक्रमः; उपक्रमो हि भिद्यते । छान्दोग्ये उपक्रमे श्रुत एवोद्गीथः प्रणवः उत्तरत्राप्यनुवर्तते । बृहदारण्यके तु 'हन्तासुरान् यज्ञे उद्गीथेनात्ययाम' इति उद्गीथमात्रस्योपास्यता श्रूयते । साऽपि न साक्षात् किन्तु उद्गीथकर्मकोद्गानकर्तुरुपास्यस्य विशेषणतया । तदुपास्यस्वरूपभेदाद्विद्या भिद्यते । परोवरीयस्त्वादिवत्—यथा एकस्यामेव शाखायामुद्गीथावयवभूतप्रणवे परमात्मदृष्टिविधिसाम्येऽपि हिरण्यश्मश्रुत्वादिविशेषणपरोवरीयस्त्वादिविशेषणभेदाद्विद्याभेदस्तथाऽयं भेद इति ॥ ७ ॥

प्राणदृष्टिर्विधीयत इति च विशेषः । मुख्यार्थे सिध्यत्योदनं पचतीतिवदमुख्यार्थाश्रयणमनुचितम् । न चोपक्रमे उद्गीथेनात्ययामेति उद्गानकर्मभूतस्योद्गीथस्य शत्रुजयहेतुत्वेनाश्रयणश्रुतिविरोधः शङ्क्यः । उद्गीथोद्गानकर्तुरुपास्यत्वे उपास्यकोटावुद्गीथस्याप्यनुप्रवेशस्यावर्जनीयत्वात् । भेदे निदर्शनमाह — परोवरीयस्त्वादिवत् इति । एकस्यामेव शाखायामुद्गीथे परमात्मदृष्टिविधानसाम्येऽपि यथा हिरण्मयपुरुषदृष्टिविधानात् परोवरीयस्त्वादिगुणविशिष्टदृष्टिविधानं भिद्यते तथेत्यर्थः ॥७॥

## संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ३ । ३ । ८ ॥

ननु उद्गीथविद्येति संज्ञैक्याद्विद्यैक्यमिति चेत्तदुक्तम्, तत्र यद्वक्तव्यम्, तदुक्तमेव पूर्वसूत्रे प्रकरणभेदेन रूपभेदात् परोवरीयस्त्वादिगुणविशिष्टोपासनवदित्यनेन । अस्ति तु अग्निहोत्रसंज्ञैक्येऽपि नित्याग्निहोत्रात् कुण्डपायिनामयनाग्निहोत्रे भेदः । तथाऽत्रैव च प्रथमप्रपाठकपठितासु उद्गीथोपासनलक्षणास्वन्यास्वपि विद्यासु उद्गीथविद्येति तत्संज्ञैक्यम् ॥८॥

## व्याप्तेश्च समञ्जसम् ॥ ३ । ३ । ९ ॥

छान्दोग्ये उपक्रमे यः प्रणव उपास्यतया प्रस्तुतः तस्यैवोत्तरत्रापि

---

पुनराशङ्क्य परिहरति—

### संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ३ । ३ । ८ ॥

ननु संज्ञाया ऐक्यात् तत् विद्यैक्यमुक्तमिति चेदस्ति तु तदपि । विधेयभेदेऽपि संज्ञैक्यमस्ति तु । यथा नित्याग्निहोत्रे कुण्डपायिनामयनाग्निहोत्रेऽपि, तथा छान्दोग्ये श्रूयमाणासु बह्वीषु उद्गीथविद्यासु विधेयभेदेऽपि उद्गीथविद्येति संज्ञैक्यम् । न तावता विद्यैक्यं, रूपं हि भिद्यते ॥ ८ ॥

### व्याप्तेश्च समञ्जसम् ॥ ३ । ३ । ९ ॥

छान्दोग्ये उपक्रमे य उद्गीथावयवभूतः प्रणवः 'ओमित्येतदक्षरमुपासीत' इति प्रक्रान्तस्तस्य उत्तरास्वप्युद्गीथविद्यासु व्याप्तेः सम्बन्धात् मध्येऽपि तस्यैवान्वय उचित इति प्राणदृष्ट्योपासनमपि प्रणवस्यैव छान्दोग्ये समञ्जसम् ॥ ९ ॥

इति प्रदीपे अन्यथात्वाधिकरणम् ॥ २ ॥

उद्गीथविद्यासु व्याप्तिः–सम्बन्धो वर्तते । अतो मध्ये 'उद्गीथमाजह्रु'-रित्यत्रापि उद्गीथशब्देन तदवयवभूतः प्रणव एव गृह्यत इति समञ्जसम् ॥ ९ ॥

(अ. स.) उद्गीतविद्या छान्दोग्ये श्रुता वाजसनेयके ।
किमभिन्नाऽथ भिन्ना वेत्येतदत्र विचार्यते ॥ १ ॥

पूर्वपक्षः–

अध्यस्तप्राणभावस्योद्गीथस्योपास्यता श्रुता ।
उद्गीथेनोद्गीथमिति चोद्गीथः श्रूयते द्वयोः ॥ २ ॥
चोदनाफलसंयोगरूपाख्यानामभेदतः ।
शाखाभेदेऽपि विद्यैकेत्येवं प्राप्तेऽभिधीयते ॥ ३ ॥

सिद्धान्तः–

कृत्स्नोद्गीथ उपास्यत्वं श्रुतं वाजसनेयके ।
किञ्चाध्यस्तप्राणभाव उद्गातोपास्य ईरितः ॥ ४ ॥
छन्दोगानां तु शाखासु न कृत्स्नोपास्यतोच्यते ।
उद्गीथावयवो यस्तु प्रणवस्तस्य सा श्रुता ॥ ५ ॥
पूर्वापरासु विद्यासु तस्यैव हि समन्वयः ।
प्रक्रान्तश्च स एवातो रूपभेदोऽस्ति शाखयोः ॥ ६ ॥
संज्ञैक्यमात्रं विद्यैक्ये नैव स्यात्तु प्रयोजकम् ।
संज्ञैक्येऽपि विभेदोऽस्ति नित्यकाम्याग्निहोत्रयोः ॥ ७ ॥

इति भाष्ये अन्यथात्वाधिकरणम् ॥ २ ॥

---

## सर्वाभेदादन्यत्रेमे ॥ ३ । ३ । १० ॥

प्राणविद्या छान्दोग्ये वाजसनेयके च श्रूयते–'यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च' इत्यादिना ।

---

### सर्वाभेदादन्यत्रेमे ॥ ३ । ३ । १० ॥

ननु छान्दोग्ये वाजसनेयके कौषीतकिनां शाखासु च प्राणविद्या श्रूयते–तत्र ज्यैष्ठ्यश्रैष्ठ्यवसिष्ठत्वादिगुणविशिष्टतया प्राणोपासनं छान्दोग्यवाजसनेय-

तत्र प्राणस्य श्रैष्ठ्योपपादनाय वाक्चक्षुःश्रोत्रमनसां ये गुणा वसिष्ठत्व-प्रतिष्ठात्वसम्पत्त्यायतनत्वानि, तेषामपि वागादीनां प्राणाधीनसत्ताकतया प्राणगुणत्वमेव निरूप्य ज्यैष्ठ्यश्रैष्ठ्यवसिष्ठत्वादिगुणविशिष्टतया प्राणोपासनं विहितम्। कौषीतक्युपनिषदि तु ज्यैष्ठ्यश्रैष्ठ्यमात्रविशिष्ट-प्राणोपासनं विधीयते। अतो रूपभेदात् कौषीतक्युपनिषदि श्रूयमाणप्राण-विद्यातश्छान्दोग्यवाजसनेयकयोः श्रूयमाणा प्राणविद्या भिन्नैवेति चेत्।

अत्रोच्यते—अन्यत्रापि कौषीतकिनां शाखास्वपि इमे—वसिष्ठत्वादय उपास्यगुणाः सन्त्येव। कुतः? सर्वाभेदात्—श्रैष्ठ्यत्वोपपादन-प्रकाराणां सर्वेषामभेदात्। इदमभिहितं भवति। उपक्रमे प्राणस्य ज्यैष्ठ्यश्रैष्ठ्यगुणकत्वेनोपासनतत्फलयोः श्रवणम्, वागादीनां वसिष्ठ-त्वादिगुणनिरूपणं, स्वस्वश्रैष्ठ्याभिमानेन मिथो वादः, तन्निर्णयाय ब्रह्म-समीपगमनं, तस्य प्रतिवचनमुपश्रुत्य तदुक्तप्रकारेण स्वस्वश्रैष्ठ्यपरीक्षण-मन्ते वागादीनां प्राणायत्तस्थितिकत्वावधारणपूर्वकं प्राणस्यैवोत्कर्षाव-धारणमित्येतेषां कौषीतकिनां शाखास्वपि श्रूयमाणत्वात्प्राणविद्या तिसृष्वपि शाखास्वेकैव। वागादिभिः 'यद्वाऽहं वसिष्ठाऽस्मि त्वं तद्व-सिष्ठोऽसी'त्यनुवादमात्रं न कृतम्, तदकरणेऽपि प्राणायत्तस्थितिकत्वा-वधारणेनैव तान्यप्यनूदितप्रायाणीति।

ननु कौषीतकीनां शाखासु चतुर्थे दशमे च प्राणविद्या श्रूयते। तयो-र्दशमे या श्रूयते, सा छान्दोग्यवाजसनेयकप्राणविद्यातो नातिरिक्तेति सुवचं नाम। ज्यैष्ठ्यश्रैष्ठ्यगुणतदुपपादनप्रकाराणां समानत्वात्। या तु चतुर्थे 'अथातो निःश्रेयसादान'मित्यादिना श्रूयते, सा तु भिद्यत एव।

---

कयोरविशिष्टम्। कौषीतकिनां तु वसिष्ठत्वादिवैशिष्ट्यं नोपास्यस्वरूपे इति रूपभेदाद्विद्याभेद इत्याशङ्कायामाह—सर्वेति। अन्यत्र—कौषीतकिनां शाखा-स्वपि इमे वसिष्ठत्वादयो गुणा उपसंहार्याः। सर्वाभेदात्—ज्यैष्ठ्यश्रैष्ठ्यो-पपादनप्रकाराणां सर्वेषामभेदात्॥ १०॥

इति प्रदीपे सर्वाभेदाधिकरणम्॥ ३॥

ज्यैष्ठ्यश्रैष्ठ्यगुणयोगानिरूपणात् । स्वस्वोत्कर्षपरीक्षाप्रकारश्चान्य एव, 'एता ह वै देवता अहंश्रेयसे विवदमाना अस्माच्छरीरादुच्चक्रमुः' 'अथ दारुभूतं तच्छिश्ये, अथैतद्वाक् प्रविवेश तद्वाचाऽवदत् शिश्य एव ×××× अथैतत्प्राणः प्रविवेश तत्ततः एव समुत्तस्था'विति फलञ्च भिद्यते 'तथैवं विद्वान् ××× अस्माल्लोकादुत्क्रामति सवायुप्रतिष्ठा आकाशात्मा स्वरेति स तद्भवति यत्रैतद्देवास्तत्प्राप्य तदमृतो भवति' इति। मैवम् । 'अहं श्रेयसे विवदमाना' इत्यनेन श्रैष्ठ्ये विवाद इति व्यक्तम् । तत्परीक्षणप्रकारो भिद्यतां नाम, परीक्ष्य यन्निर्णीयते तत्तु प्रधानम्, तच्च श्रैष्ठ्यं समानम् । फलेऽपि न भेदः । स्वरेति तद्भवतीति स्वर्गाधिपत्य-मुच्यते फलम् । तच्च श्रैष्ठ्यान्तर्गतमेव, यच्चामृतत्वं फलं श्रूयते तदपि चिरकालस्थायित्वरूपमिति ज्यैष्ठ्यान्तर्गतमेव, वृद्धतमत्वमेव तु ज्यै-ष्ठ्यम् । प्राणदेवतोपासकस्य प्राणदेवतासायुज्यं तु सर्वत्र समानम् ॥१०॥

(अ. स.) शाखासु कौषीतकिनां शाखयोरन्ययोरपि ।
श्रूयमाणा प्राणविद्या नैकैका वेति चिन्त्यते ॥ १ ॥
शाखासु कौषीतकिनां वसिष्ठत्वाद्यनुक्तितः ।
भिन्नभिन्ना प्राणविद्या तत्रतत्रेति चेन्न तत् ॥ २ ॥
वागादीनां तादधीन्यश्रुत्या लब्धस्तदन्वयः ।
तत्राप्येवं प्राणविद्या सर्वत्रैकाऽविशेषतः ॥ ३ ॥

इति भाष्ये सर्वाभेदाधिकरणम् ॥ ३ ॥

---

प्राणविद्यायां विचारणीयमवशिष्यते । तदनन्तरं विचारयिष्यति । प्राणस्य श्रैष्ठ्यं वसिष्ठत्वादिगुणैर्विनाऽनुपपन्नमिति श्रैष्ठ्यगुणविशिष्ट-प्राणोपासनलक्षणप्राणविद्यायां वसिष्ठत्वादीनामप्युपसंहार उक्तः । तत्प्रसङ्गात् यान् गुणान् विना ब्रह्मण उपासनं न घटते, ते गुणाः सर्वासु ब्रह्मविद्यासु उपसंहार्या इत्येतद्विचार्यते ।

नन्वानन्दादयः सर्वविद्यासु नोपसंहार्याः, विद्यास्वनुपकारात् । विद्याप्रकरणेऽनाम्नानात् । अत्रोच्यते—

## आनन्दादयः प्रधानस्य ॥ ३ । ३ । ११ ॥

अभेदादित्यनुवर्तते । अनुवृत्तिलाभश्चास्य प्राणविद्याङ्गविचार-सूत्रतः प्राक् प्रणयने बीजमित्याचक्षते केचित् । प्रधानस्य–उपासने प्रधानस्य धर्मिणो ब्रह्मणः सर्वविद्यास्वभेदात् आनन्दादीनां च स्वरूप-निरूपकधर्मत्वात्तान्विना धर्मिस्वरूपानवबोधात् सर्वविद्यास्वानन्दादय उपसंहार्याः । 'सत्यं ज्ञानमनन्तं ब्रह्म' 'आनन्दो ब्रह्मेति' हि श्रूयते ॥ ११ ॥

नन्वेवं 'तस्य प्रियमेव शिरः' इत्यादिना श्रूयमाणाः प्रियशिरस्त्वा-दयोऽपि सर्वविद्यासूपसंहार्याः । आनन्दादिभ्योऽविशेषात् । अत्राह–

## प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ ३ । ३ । १२ ॥

ब्रह्मस्वरूपे प्रियशिरस्त्वादीनां न प्राप्तिः–न सम्भवः । यथा

---

**आनन्दादयः प्रधानस्य ॥ ३ । ३ । ११ ॥**

परमात्मनः 'सत्यं ज्ञानमनन्तं ब्रह्म' 'आनन्दो ब्रह्म' इत्यादिना श्रूयमाणा आनन्दादयः–आनन्दत्वादिधर्माः परविद्याप्रकरणेऽनाम्नाताः तासु नोपसंहार्या इतीमां शङ्कां परिहरन्नाह–आनन्दादय इति । प्राधानस्य–परोपासनासु यत् प्रधानं धर्मिस्वरूपमुपास्यं परंब्रह्म तस्य सर्वविद्यासु ऐक्यात्, येन विना तत्स्वरूपं निरूपयितुं न शक्यते तदानन्दत्वादिकमपि सर्वासु परविद्यासूप-संहार्यमेव । ज्ञानानन्दस्वरूपं हि परंब्रह्म ॥ ११ ॥

नन्वेवं सति आनन्दवल्ल्यां 'प्रियमेव शिरः' इत्यादिना श्रूयमाणं प्रियशिर-स्त्वादिकमपि सर्वविद्यासूपसंहार्यं स्यात् इत्याशङ्कायामाह—

**प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥३।३।१२॥**

प्रियशिरस्त्वादीनां रूप्यमाणानामेषां परविद्यास्वानन्दादिवन्न प्राप्तिः । 'तस्य प्रियमेव शिर' इत्यादिना पुरुषाकृतित्वसंपत्तये रूप्यते केवलम्, पूर्वपूर्वेषु पुरुषाकृतित्वसंपत्तये श्रद्धाशिरस्त्वादिरूपणवत् । प्रियशिरस्त्वादिभेदे वस्तुतः परमात्मनोऽभ्युपगम्यमाने तत्स्वरूपस्योपचयापचयावापद्येते–वृद्धिह्रासौ स्याताम्, अंशतः उपचितमंशत अपचितं च ब्रह्मस्वरूपमापद्येत ॥ १२ ॥

देहः शिरःप्रभृतिभिरवयवैरवयवी तथा ब्रह्मस्वरूपमपि शिरःप्रभृति-भिरवयवैरवयवि चेत् तथा सति भेदे—शिरःप्रभृतिप्रदेशभेदे प्राप्ते स्वरूप एवोपचयापचयौ स्थौल्यकार्श्ये प्रसजेताम् । 'अस्थूलमनणु' इति हि तस्य स्वरूपं श्रूयते । हन्त निर्विशेषब्रह्मवादीव भगवति दिव्यरूप-योगमपलपति भवान् । दिव्ययोगं न प्रतिक्षिपामः । किन्तु ब्रह्मणः स्वरूपं शिरोग्रीवाकरचरणाद्यात्मकविग्रहात्मकं नेत्येतदुच्यते । सत्य-ज्ञानादिवत् प्रियशिरस्त्वादीनां स्वरूपगतत्वे हि धर्म्यैक्यात् सर्व-विद्यासूपसंहार्यता स्यात् । अतस्तदप्राप्तिः तत्प्राप्तौ दोषश्चोक्तः । नन्वेवं सति प्रियशिरस्त्वादिकं ब्रह्मणः कथमुपदिशति श्रुतिः । ननु विज्ञान-मयस्य जीवात्मनः कथमुपदिशति श्रद्धाशिरस्कत्वादि । ननु रूपणमात्रं प्रतिपत्तिसौकर्यायेति चेत्, हन्तात्राप्येवमित्यवधीयताम् । ननु विग्रह-योगोऽस्ति न विग्रहात्मकोऽयमिति चेत् जीवानां विग्रहवतामपि जीवस्वरूपमात्रस्योपादेयत्वं न विग्रहस्येतिवत् ब्रह्मण एवोपादेयता विग्रहस्यानुपादेयता च स्यात् । नैवम् । तत्रानुपादेयत्वं प्राकृतत्वेन हेयत्वात् । इह तु अप्राकृतत्वान्न तथात्वम् । दिव्यरूपयोगश्चान्तरधि-करण एव संसूचितो भाष्ये समर्थितश्च । तस्य ऐश्वर्यवीर्यादिवद्विशेषण-तया ध्येयता च युज्यत एव । नाप्यानन्दादेरिव सर्वत्र विद्यासु दिव्य-विग्रहस्योपसंहारः, वैश्वानरविद्यायां तदसम्भवात् । तस्यां हि द्युमूर्ध-त्वादिविशिष्टस्योपास्यता ॥ १२ ॥

ननु प्रियशिरस्त्वादीनामप्राप्तिरित्यस्तु । तेभ्योऽन्येषां सर्वेषामेव परब्रह्मापृथक्सिद्धविशेषणानां विद्याप्रकरणेऽनाम्नातानामप्यानन्दादि-वत्सर्वविद्यासूपसंहारः कुतो न? उपसंहारे तु गुणानामानन्त्यादुपासनं दुःशकमापद्येतेत्याशङ्कायामाह—

## इतरे त्वर्थसामान्यात् ॥ ३ । ३ । १३ ॥

प्रियशिरस्त्वादिभ्यो ये इतरे, ते तु न सर्व एव सर्वविद्यासूपसंहार-

---

**इतरे त्वर्थसामान्यात् ॥ ३ । ३ । १३ ॥**

ननु—आनन्दादिवत् परमात्मनो येऽपृथक्सिद्धा ऐश्वर्यादयो गुणवि-

मर्हन्ति । किन्त्वितरे केचिदानन्दादय एव । अर्थसामान्यात्–अर्थेन सामान्यात्, समानस्वभावत्वात् । अर्थस्य–उपासनायां विषयभूतस्य ब्रह्मणो यः स्वभावो विषयतयाऽर्थोपस्थित्यनुबन्धित्वलक्षणः, तस्य ब्रह्मस्वरूपनिरूपकेष्वानन्दादिष्वपि सत्वात् । 'यतो वा इमानि भूतानि' इत्येतल्लक्षणलक्षितं ब्रह्म आनन्दत्वादिनैव स्वरूपनिरूपकधर्मेणोपस्थाप्यते । तथा च श्रुतिः–'आनन्दो ब्रह्म' 'सत्यं ज्ञानमनन्तं ब्रह्म' इति । ये तु इतोऽन्ये ऐश्वर्यगाम्भीर्यकारुण्यवात्सल्यादयः ते त्वतथाभूता इति न तेषां सर्वविद्यासूपसंहारः । निरूपितगुणास्तु ते । ते च यथा चोदनं विद्याविशेषेष्वेवानुसन्धेयाः ॥ १३ ॥

ननु प्रियशिरस्त्वादि यदि परब्रह्मणः न धर्मः किमिति तथा रूप्यते तत्राह—

## आध्यानाय प्रयोजनाभावात् ॥ ३ । ३ । १४ ॥

'ब्रह्मविदाप्नोति पर'मित्यनेन प्रस्तुतं यत् ब्रह्मणो वेदनमाध्यानलक्षणं तस्य सिद्ध्ये तथा रूपणम् । आनन्दमयतः पूर्वपूर्वेषु विज्ञानमयादिषु तत्तत्प्रतिपत्तिदार्ढ्याय यथा शिरःप्रभृतिनिरूपणं क्रियते तेन क्रमेण तस्य तस्य बुद्धावारोपणं सुकरमिति । तथेहापि बोध्यम् ॥१४॥

---

शेषाः, तेषामपि सर्वविद्यासूपसंहारः स्यात्, तथा सत्यानन्त्यात् गुणानामुपासना दुर्घटा स्यात् तत्राह—इतरे त्विति । इतरे आनन्दत्वादित इतरे ये गुणाः सर्वे ते न सर्वविद्यासूपसंहारमर्हन्ति, किन्तु 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति येन रूपेण ब्रह्मस्वरूपं निरूप्यते तदेव सत्यत्वादि, अर्थसामान्यात्—अर्थेनोपास्येन धर्मिणा सह समानत्वात्—उपास्यस्वरूपं विनेवोपास्यस्वरूपनिरूपकधर्मं विनोपासनाऽनिष्पत्तेः समानत्वात्, सर्वविद्यासूपसंहार्यम्॥१३॥

**आध्यानाय प्रयोजनाभावात् ॥ ३ । ३ । १४ ॥**

यत्तु प्रियशिरस्त्वादिरूपणं तत्तु केवलमाध्यानाय–चिन्तनाय । चित्ते सुखेन आनन्दमयस्य परमात्मनः समारोहणाय । प्रयोजनान्तराभावात् ॥१४॥

इतश्च प्रियशिरस्त्वादयो नानन्दमयधर्माः, किन्तु रूप्यमाणा एव—

**आत्मशब्दाच्च ॥ ३ । ३ । १५ ॥**

'अन्योऽन्तर आत्माऽऽनन्दमय' इत्यात्मशब्देन हि निर्दिश्यते । आत्मनो नायमाकारः शिरःपक्षादिः, स हि देहस्य ॥ १५ ॥

**आत्मगृहीतिरितरवदुत्तरात् ॥ ३ । ३ । १६ ॥**

नन्वनात्मसु अन्नमयप्राणमयमनोमयेष्वप्यात्मशब्दश्रवणान्नास्यात्मशब्दनिर्देशस्य परमात्मासाधारण्यमिति चेन्न । आत्मगृहीतिः—आनन्दमयस्यात्मशब्देन ग्रहणमितरवत् । प्रकरणान्तरेषु 'आत्मा वा इदमेक एवाग्र आसीत् स ईक्षत लोकान्नु सृजा' इत्यादिष्विवायमात्मशब्दः परमात्मपर एव । कस्मादवगम्यते । उत्तरात् । 'सोऽकामयत बहु स्यां प्रजायेय' इत्याद्युत्तरवाक्यात् । तद्ध्यानन्दमयपरब्रह्मविषयकम् ॥१६॥

**अन्वयादिति चेत् स्यादवधारणात् ॥ ३ । ३ । १७ ॥**

ननु पूर्वं प्राणमयप्रभृतिष्वात्मशब्दस्यान्वयादयमात्मशब्दः पर-

---

नेदं प्रियशिरस्त्वादिकं नैसर्गिकमिति कथमवगम्यते, तत्र कारणान्तरमाह—

**आत्मशब्दाच्च ॥ ३ । ३ । १५ ॥**

'आत्मन आकाशः संभूत' इत्यनेनोपक्रान्तस्यैव 'अन्योऽन्तर आत्माऽऽनन्दमय' इत्यात्मशब्देन निर्देशाच्च । न चात्मस्वरूपे शिरःपक्षादिभेदः ॥१५॥

**आत्मगृहीतिरितरवदुत्तरात् ॥ ३ । ३ । १६ ॥**

आत्मशब्देन परमात्मन एवात्र ग्रहणम्, अन्यत्र वाक्यान्तरे 'आत्मा वा इदमेक एवाग्र आसी'दित्यादाविव बोध्यम् । उत्तरादपि वाक्यादिदमवगम्यते—आनन्दमयमधिकृत्योत्तरत्र प्रवृत्तात् 'सोऽकामयत बहु स्यां प्रजायेये'त्यादितः ॥

नन्वात्मशब्दः अन्नमयादिष्वपि श्रूयते इति न परमात्मपरत्वमवधारयितुं शक्यते; तत्राह—

**अन्वयादिति चेत् स्यादवधारणात् ॥ ३ । ३ । १७ ॥**

अन्नमयादिष्वप्यात्मशब्दोऽन्वेतीति चेत् अथापि परमात्मपर एवायं

मात्मपर इति नावधारयितुं शक्यते इति चेन्न । स्यादेव परमात्मपरत्व-निश्चयः । कुतः? अवधारणात् । उपक्रमे 'ब्रह्मविदाप्नोति परम्' 'सत्यं ज्ञानमनन्तं ब्रह्म' 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इत्याकाश-कारणतया प्रस्तुतः परमात्मा सुखेन बुद्धाववधार्यते हि स्थूलारुन्धती-न्यायेन। अन्नमयादिक्रमेण पूर्वपूर्वतः अवतार्यात्मदृष्टिमन्तत आनन्दमये प्रतिष्ठापयति श्रुतिः । तदेवमवधारणात् आत्मशब्दोऽत्र परमात्मपर इति निश्चेतुं शक्यत एव ॥ १७ ॥

(अ. स.) सर्वासु ब्रह्मविद्यासु किमानन्दादयो गुणाः ।
धर्म्यैक्यादुपसंहार्या न वेत्येतद्विचार्यते ॥ १ ॥

पूर्वपक्षः—

ननु ते नोपसंहार्यास्तत्र तत्राऽश्रुता यतः ।
तेषामप्युपसंहारे कथं विद्याव्यवस्थितिः ॥ २ ॥

सिद्धान्तः—

अत्रोच्यते परं ब्रह्म यदुपास्यतया श्रुतम् ।
आनन्दत्वादिधर्मेण विना न तदुपस्थितिः ॥ ३ ॥
तत् सर्वत्रोपसंहार्यास्ते स्वरूपनिरूपकाः ।
नापृथक्सिद्धतामात्रादुपसंहार्यता भवेत् ॥ ४ ॥
अर्थोपस्थित्यनुबन्धित्वं निमित्तं ह्युपसंहृतौ ।
तस्मात् सर्वत्र सर्वेषां प्रसजेन्नोपसंहृतिः ॥ ५ ॥
निरूपितस्वरूपस्य ये गुणाः स्युर्विशेषकाः ।
ते यत्र यत्र श्रूयन्ते तत्र तत्र व्यवस्थिताः ॥ ६ ॥

---

स्यात् । उपक्रमे 'आत्मन आकाशः संभूत' इति आकाशादिसकलकार्यवर्ग-हेतुतया समुपक्रान्तस्यैव ह्यवधारणमुत्तरत्रानन्दमयान्तेषु क्रियते । अतोऽवधा-रणात् अयमात्मशब्दः परमात्मपर एव ॥ १७ ॥

इति प्रदीपे आनन्दाद्यधिकरणम् ॥ ४ ॥

ये तु प्रियशिरस्त्वाद्या रूप्यन्ते केवलं तु ते ।
अन्यथा तु प्रसङ्गः स्याद्ब्रह्मणि स्थौल्यकार्श्ययोः ॥ ७ ॥
अनात्मधर्मस्थौल्यादेरुपपत्तिर्न चात्मनि ।
आत्मशब्दः श्रूयते च मुख्यो ब्रह्मणि कारणे ॥ ८ ॥

इति भाष्ये आनन्दाद्यधिकरणम् ॥ ४ ॥

---

## कार्याख्यानादपूर्वम् ॥ ३ । ३ । १८ ॥

अथ पूर्वप्रस्तुतप्राणविद्याशेषभूतमिह विचार्यते । छान्दोग्ये ज्यैष्ठ्यश्रैष्ठ्यनिरूपणान्तरं श्रूयते—'स होवाच किं मे वासो भविष्यतीति, आप इति होचुः तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्बुको ह वासो भवति अनग्नो भवति' इति । तथा वाजसनेयके माध्यन्दिनशाखायां श्रूयते 'आपो वासः तद्विद्वांसःश्रोत्रिया अशिष्यन्त आचामन्त्यशित्वा चाचामन्ति एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते, तस्मादेवंविदशिष्यन्नाचामे'दिति । अत्र संशयः—प्राणविद्याङ्गभूतमाचमानन्तरं विधीयते उत स्मृतिप्राप्ताचमने प्राणवासस्त्वदृष्टिमात्रमिति ।

---

## कार्याख्यानादपूर्वम् ॥ ३ । ३ । १८ ॥

छान्दोग्ये वाजसनेये च ज्यैष्ठ्यादिगुणकप्राणोपासनलक्षणा प्राणविद्या श्रूयते । तत्रेदमपि श्रूयते 'सहोवाच किं मे वासो भविष्यतीति आप इति होचुः तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्भुको ह वासो भवति अनग्नो भवती'ति, 'आपो वास इति तद्विद्वांस' इत्यादि च । अत्र किं प्राणविद्याङ्गतया आचमनान्तरं विधीयते उत आचम्यमानास्वप्सु प्राणवासस्त्वदृष्टिर्विधीयते इति संशये उच्यते । नाचमनान्तरं विधीयते आचम्यमानास्वप्सु प्राणवासस्त्वचिन्तनस्य कार्यस्यैवेहाख्यानात् । इदमेवत्वपूर्वम्—अप्राप्तम् । आचमनं हि स्मृतितः प्राप्तमेव । आचमनान्तरं विधीयते इति तु न हार्दं श्रुतेः । अत एव छान्दोग्ये 'पुरस्तादुपरिष्टाच्चाद्भिः परिदधती'त्येव श्रूयते ॥ १८ ॥

इति प्रदीपे कार्याख्यानाधिकरणम् ॥ ५ ॥

अत्राह—आचामेदिति विधिश्रवणादाचमनं विधीयते। नन्वाचमनं सामान्यतः स्मृत्यैव प्राप्तम्। सत्यम्। प्राणविद्याङ्गमाचमानन्तरं विधीयते। ननु 'किं मे वासः' इति पृष्टैर्वागादिभिरापो वासः इत्यपां प्राणवासस्त्वमुच्यते, 'अशिष्यन्त आचामन्त्यशित्वा चाचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्त' इति। विधिस्तु न श्रूयते। नन्वपूर्वोऽयमर्थो याऽप्सु वासस्त्वदृष्टिः। स्तुत्यर्थमेतत्। श्रूयमाणस्य विधेर्वैयर्थ्यकल्पनानौचित्यात्, अप्सु वासस्त्वदृष्टावपि विधिरिष्यतां वा। श्रूयमाणविधिबलादाचमनान्तरं प्राणविद्याङ्गं विधीयते इति युक्तम्। अत्रोच्यते। कार्याख्यानादपूर्वम्। आचमनं सामान्यतः प्राप्तमेव। अपूर्वम्—अप्राप्तम्। अप्राप्तमेव तु विधेयम्। अप्राप्तं चाप्सु प्राणवासस्त्वानुसन्धानमेव। तस्मात् श्रूयमाणो विधिस्तत्रैव योज्यः। उभयत्र विध्याश्रयणे वाक्यभेदः स्यात्। अपां प्राणवासस्त्वदृष्टेरर्थवादः श्रूयते 'एतमेव तदनमनग्नं कुर्वत' इति। अतस्तद्दृष्टौ विधिरिति गम्यते। न चाचमनविधिप्रापकः कश्चिदर्थवादः। न च स्तुतिपरत्वाश्रयणं युक्तम्। वैयर्थ्यापातात्। तस्मात् 'एवंविदशिष्यन्नाचामे'दित्यत्र श्रूयमाणो विधिर्वेदन एव योज्यः। प्राणविद्यानिष्ठेन स्मृतिप्राप्ताचमने प्राणवासस्त्वदृष्टिर्विधेयेत्येतत्। 'एवंविदशिष्यन्नाचामे'दित्यस्यायमर्थः—एवंवित्सन् आचामेदिति। पादौ प्रक्षाल्याचामेत् समित्पाणिर्गुरुमभिगच्छेदित्यत्र पादप्रक्षालनपूर्वकत्वादिकमिव स्मृतिप्राप्ताचमने एवंवेदनपूर्वकत्वं नियम्यते। तथा च सिद्धं नाचमनमपूर्वं विधीयत इति ॥ १८ ॥

(अ.सं.) श्रूयते प्राणविद्यायां किं मे वासो भविष्यति।
आपो ह तस्मादाचामन्त्यश्नन्तः पूर्वमुत्तरम् ॥ १ ॥
तस्मादनग्नो भवति प्राणो लाभेन वाससः।
अशनात् पूर्वमाचामेत् आचामेच्च ततः परम् ॥ २ ॥
अनग्नो भवति प्राणो वासःप्राप्तेरिति क्वचित्।

पूर्वपक्षः—

अत्राह प्राणविद्याङ्गमिदमाचमनान्तरम् ॥ ३ ॥

विधिश्रुतेर्बलीयस्त्वादनग्नत्ववचःस्तुतिः ।

सिद्धान्तः—

अत्रोच्यते स्मृतिप्राप्तान्नान्यदत्र विधीयते ॥ ४ ॥
किन्त्वप्स्वाचम्यमानासु प्राणवासस्त्वभावना ।
अपूर्वे तु विधिर्योज्यः प्राप्ते तु तदनन्वयः ॥ ५ ॥

इति भाष्ये कार्याख्यानाधिकरणम् ॥ ५ ॥

---

## समान एवं चाभेदात् ॥ ३ । ३ । १९ ॥

वाजसनेयके शतपथब्राह्मणे प्रथमम्, अग्निरहस्ये च शाण्डिल्यविद्या श्रूयते 'स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपमाकाशात्मानं कामरूपिणं मनोजवसं सत्यसङ्कल्पं सत्यधृतिं सर्वगन्धं सर्वरस'मिति । तत्रैव बृहदारण्यके श्रूयते—'मनोमयोऽयं पुरुषो भाः सत्यं तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति' इति । अत्र संशयः—किमिह विद्या भिद्यते उत नेति । अत्राह—भिद्यत एव । कस्मात्? गुणभेदेन रूपभेदात् । अग्निरहस्ये हि आकाशात्मत्वं—आकाशवद्व्यापकत्वम्, सत्यसङ्कल्पत्वं च गुणः श्रूयते । अन्यत्र तु व्रीहियवदृष्टान्तगम्यमणुत्वं वशित्वमीशानत्वं च, तद्गुणभेदाद्रूपभेद इति । अत्रोच्यते—समान एवं चाभेदात्—

---

### समान एवं चाभेदात् ॥ ३ । ३ । १९ ॥

एकस्यामेव शाखायामुभयत्र शाण्डिल्यविद्या आम्नाता । एकत्र 'आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपं सत्यसङ्कल्पमाकाशात्मानमि'ति । अन्यत्र श्रूयते—'मनोमयोऽयं पुरुषो भाः सत्यं तस्मिन् अन्तर्हृदये व्रीहिर्वा यवो वा स एष सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति' इति । सेयं शाण्डिल्यविद्या एकस्यामेव शाखायामुभयत्रोक्ताऽप्येकैव, उभयत्र मनोमयत्वादिके उपास्यरूपे समाने सति वशित्वादीनामपि सत्यसङ्कल्पत्वतोऽनतिरेकात् । ये नाम वशित्वादयोऽधिकाः श्रूयन्ते, न ते सत्यसङ्कल्पत्वतो भिद्यन्ते, ते हि तस्यैव विततयः, न ह्यवशी अनीश्वरो वा सत्यसङ्कल्पो भवेत् ॥ १९ ॥

इति प्रदीपे समानाधिकरणम् ॥ ६ ॥

मनोमयत्वादिके उभयत्र समाने सति विद्यैक्यप्रत्यभिज्ञानात्तद्विरोधिगुणानामश्रवणात् वशित्वसत्यसङ्कल्पत्वयोरभेदात् न विद्याभेदः । आकाशात्मत्वं तु प्रकाशमानस्वरूपत्वमेवेति न विरोधगन्धोऽपि । व्रीहियवदृष्टान्तश्च सूक्ष्मतया सर्वत्र स्थित्युपपादकः ॥ १९ ॥

(अ. सं.) मनोमयत्वादिगुणब्रह्मोपासनलक्षणा ।
शाण्डिल्यविद्योभयत्र श्रूयमाणा विचार्यते ॥ १ ॥
आह शाण्डिल्यविद्येयं द्विविधा गुणभेदतः ।
एकत्र सत्यसङ्कल्पत्वं वशित्वमितरत्र तु ॥ २ ॥
सत्यं तथाऽपि सैकैव न भेदो गुणयोस्तयोः ।
नैव ह्यसत्यसङ्कल्पो वशी भवति कश्चन ॥ ३ ॥
सत्यसङ्कल्पतायास्तद्वशित्वं नातिरिच्यते ।
हार्दच्छिद्रस्थितो ध्येयो वशित्वादिगुणो द्वयोः ॥ ४ ॥

इति भाष्ये समानाधिकरणम् ॥ ६ ॥

---

## सम्बन्धादेवमन्यत्रापि ॥ ३ । ३ । २० ॥

बृहदारण्यके श्रूयते—'सत्यं ब्रह्म' इत्युपक्रम्य—'तद्यत्सत्यमसौ स आदित्यः य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षिन् पुरुष'

---

### संबन्धादेवमन्यत्रापि ॥ ३ । ३ । २० ॥

छान्दोग्ये 'सत्यमित्युपासते' इत्युपक्रम्य श्रूयते—'तद्यत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षिन् पुरुष' इत्यारभ्य 'तस्य भूरिति शिरः भुवरिति बाहू सुवरिति प्रतिष्ठे'ति । एवं आदित्येऽक्षिणि च व्याहृतिशरीरकत्वेनोपास्यतया श्रुतस्य सत्यशब्दवाच्यस्य ब्रह्मणो नामद्वयमुत्तरत्र श्राव्यते—'तस्योपनिषदहरित्यधिदैवतम्,' 'तस्योपनिषदहमित्यध्यात्मम्' इति । अत्रोपास्यस्य सत्यस्य ब्रह्मणः आदित्यमण्डले अक्षिणि च संबन्धादुपास्यैक्येन एते नाम्नी न स्थानभेदेन नियते । किन्तु अनियते । उभयमप्युभयत्र विकल्पेन योज्यम् । अन्यत्राप्येवमेव हि—शाण्डिल्यविद्यायामप्युपास्यैक्येन वशित्वादिगुणानामुपसंहारो हि क्रियते ॥ २० ॥

इत्युपास्यं सत्यं ब्रह्म निर्दिश्य तस्य 'भूरिति शिरः××× भुवरिति बाहू ××× स्वरिति प्रतिष्ठा' इति व्याहृतिशरीरकत्वमुक्त्वा, द्वे नामनी चोपासनशेषतया आम्नाते 'तस्योपनिषदहरिति ××× तस्योपनिषदहमिति'। अत्र संशयः—इमे द्वे नामनी यथास्थानमधिदैवतमहरित्येव अध्यात्ममहमित्येवेति नियते, उतोभयत्रानियमेनोपसंहार्ये इति। तत्राह—यथा मनोमयत्वादिगुणसम्बन्धात् शाण्डिल्यविद्याया ऐक्यम्, तथा तत्समनन्तरपूर्वं 'तद्यत्सत्यमसौ स आदित्यः' इत्यादिना आम्नातायाः सत्यब्रह्मोपासनाया अपि उपास्यतद्गुणसम्बन्धादैक्यमेव। व्याहृतिशरीरकत्वगुणविशिष्टोपास्यैक्यादिति ॥ २० ॥

अत्रोच्यते—

## न वा विशेषात् ॥ ३ । ३ । २१ ॥

नैवैक्यम्—विशेषात्—स्थानभेदेन रूपभेदात् नामभेदाच्च। आदित्यस्थानस्थितस्यैव अहरिति नाम, अक्षिस्थानस्थितस्यैवाहमिति नाम। व्याहृतिशरीरकत्वस्यैक्येऽपि स्थानभेदस्य तत्प्रयुक्तनामभेदस्य च सत्त्वाद्विद्या भिद्यत एव। 'तस्योपनिषदहरिति' इत्यत्र तच्छब्दो न केवलं पुरुषपरामर्शी, अपि तु पूर्वप्रस्तुतादित्यस्थानकपरामर्शी। एवं 'तस्याहम्' इत्यत्रापि दक्षिणाक्षिस्थानकपरामर्शी ॥ २१ ॥

---

अत्राह—

## न वा विशेषात् ॥ ३ । ३ । २१ ॥

वाशब्द एवार्थे—नैव नाम्नी अनियते। नोभयत्रोभे नाम्नी विकल्पेन उपसंहार्ये। कस्मात्?, विशेषात्—उपास्यस्वरूपस्यैक्येऽपि स्थानभेदाद्विद्याभेदात्। नात्र विद्यैक्यम्, येन नाम्नोरनियमः स्यात्, किन्तु यत्र श्रूयते तत्रैव तत्तन्नामानुसन्धेयम् ॥ २१ ॥

## दर्शयति च ॥ ३ । ३ । २२ ॥

अन्यत्र विद्यायां स्थानभेदेन विद्याभेदात् गुणानामनुपसंहार्यतां श्रुतिर्दर्शयति । तद्यथा छान्दोग्ये 'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः' इत्यादित्यस्थपुरुषोपासनमुक्त्वा 'अथ य एषोऽक्षिणि पुरुषो दृश्यते' इत्यक्षिस्थपुरुषोपासनं प्रस्तुत्य 'तस्यैतस्य तदेव रूपं यदमुष्य रूप'-मित्यादिना रूपनामातिदेशः क्रियते । क्रियमाणोऽयं रूपाद्यतिदेशः स्थानभेदाद्विद्याभेदेन गुणानामनुपसंहार्यतां गमयति । अन्यथा रूपादीनां सिद्धेरतिदेशवैयर्थ्यप्रसङ्गात् । अप्राप्तस्य ह्यतिदेशः ॥ २२ ॥

(अ. स.) 'सत्यं ब्रह्मे'त्युपक्रम्य बृहदारण्यकश्रुतौ ।

सत्यस्य ब्रह्मणः सूर्यमण्डले दक्षिणेऽक्षिणि ॥ १ ॥
प्रस्तूयोपासनां नाम्नी प्रोक्ते तस्य क्रमादुभे ।
अहरित्यहमित्येते नियते वाऽव्यवस्थिते ॥ २ ॥

पूर्वपक्षः—

अत्राहोपास्यरूपैक्यात् सम्बन्धादुभयत्र च ।
विद्यैक्यादुपसंहार्ये छन्दतस्ते द्वयोरपि ॥ ३ ॥

सिद्धान्तः—

अत्रोच्यते स्थानभेदाद्रूपस्याप्यतिदेशतः ।
न विद्यैक्यं ततो नाम्नी नियते ते यथाश्रुतम् ॥ ४ ॥

इति भाष्ये सम्बन्धाधिकरणम् ॥ ७ ॥

---

## दर्शयति च ॥ ३ । ३ । २२ ॥

'तस्य तदेव रूपं यदमुष्य रूपं' इति रूपातिदेशः स्थानभेदे श्रूयते । सोऽयमतिदेशो विद्याभेदं दर्शयति । विद्यैक्ये ह्यतिदेशो न युज्यते । वैयर्थ्यात् ॥ २२ ॥

इति प्रदीपे संबन्धाधिकरणम् ॥ ७ ॥

## संभृतिद्युव्याप्त्यपि चातः ॥ ३ । ३ । २३ ॥

स्थानभेदात् नाम्नोर्नियम उक्तः । तत एव अनारभ्याधीतयोः संभृतिद्युव्याप्त्योर्नियम इहोच्यते । तैत्तिरीयकेऽन्यत्र च श्रूयते–'ब्रह्म ज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान' इति वीर्यसंभृतिः द्युव्याप्तिश्च । एतयोः अनारभ्याधीतयोः सर्वास्वपि विद्यास्वन्वय उचितो न वेति । आह–उचित इति । कस्मात्? उपास्यैक्यात् गुणानां चोपासनोपकारकत्वात् तत्र तत्र श्रूयमाणेषु उपासनाविधिषु अनारभ्याधीतानामुपसंहारः समुचित इति । अत्रोच्यते— संभृतिः–वीर्याणां संभृतिः द्युव्याप्तिश्चेत्यनयोः समाहारः संभृतिद्युव्याप्ति । नेत्यनुवर्तते । यथा नादित्यस्थपुरुषोपासने अक्षिस्थपुरुषोपासने तथाऽन्यास्वप्यल्पायतनकोपासनासु तदेतत् नोपसंहर्तुं शक्यते । अतश्च–स्थानविशेषादेव । न ह्यल्पायतनकत्वेनोपास्यमाने द्युव्याप्तिगुणकत्वमुपसंहर्तुं शक्यते । विरोधात् । अतो यस्यामविरोधः, तस्यामेवोपसंहर्तुं योग्यम् । द्युव्याप्तिसाहचर्याच्च संभृतेरपि नोपसंहारः सर्वत्र । यत्र तदन्वयस्तत्रैव तत्सहपठितस्येति ॥ २३ ॥

(अ. स.) ब्रह्मणि श्रूयमाणाया द्युव्याप्तेर्वीर्यसम्भृतेः ।
अनारभ्याप्यधीतायाः सर्वविद्यासु नान्वयः ॥ १ ॥

---

तैत्तिरीयके श्रूयते—'ब्रह्म ज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान' इति । अत्र श्रूयमाणं संभृतिद्युव्याप्तिप्रभृति अनारभ्याधीततया सर्वासु ब्रह्मविद्यासूपसंहार्यमित्याशङ्कायामुच्यते—

## संभृतिद्युव्याप्त्यपि चातः ॥ ३ । ३ । २३ ॥

अतः–महत्त्वाल्पत्वनिबन्धनस्थानभेदान्न सर्वत्रोपसंहार्यम्, अशक्यत्वात् । न हि हृदयाद्यल्पस्थानकोपासनेषु द्युव्याप्तिरुपसंहर्तुं शक्यते । तत्सहपाठात् संभृतिरपि द्युव्याप्तेरन्यत्र नोपसंहर्तुं शक्यते ॥ २३ ॥

इति प्रदीपे संभृत्यधिकरणम् ॥ ८ ॥

अल्पायतनकत्वस्य द्युव्याप्तेश्च विरोधतः ।
अल्पस्थानोपासनायामुपसंहृत्यसम्भवात् ॥ २ ॥
अतो दहरविद्यादौ द्युव्याप्तेर्नान्वयो भवेत् ।
तया सह श्रूयमाणा साऽपि नान्वेति सम्भृतिः ॥ ३ ॥

इति भाष्ये सम्भृत्यधिकरणम् ॥ ८ ॥

---

## पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥३।३।२४॥

तैत्तिरीयके 'तस्यैवंविदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिः' इत्यादिना पुरुषविद्या श्रूयते । छान्दोग्ये च 'पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणी'त्यादिना। सेयं शाखयोरुभयोः श्रूयमाणा पुरुषविद्या किमभिन्ना उत भिन्नेति संशयः। अत्राह—अभिन्ना, पुरुषविद्येति संज्ञैक्यात् यज्ञावयवकल्प-

---

'पुरुषविद्या द्वयोः शाखयोः श्रूयते, तत्र छान्दोग्ये 'पुरुषो वा व यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातः सवन'मित्यादिना, तैत्तिरीये 'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हि' रित्यादिना । पुरुषविद्येत्याख्यैक्यात् पुरुषानुबन्धिषु यज्ञावयवत्वकल्पनासामान्याद्विद्यैक्यमित्याशङ्कां परिहरन्नाह—

**पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥ ३ । ३ । २४ ॥**

पुरुषविद्यायामाख्यैक्येऽपि भेद एव, एकेषां शाखायामुक्तानां गुणानामन्येषां शाखास्वनाम्नानात् । तैत्तिरीयानां शाखासु यजमानपत्न्यादिपरिकल्पनमुरःप्रभृतिपुरुषावयवानां यज्ञाङ्गत्वपरिकल्पनं यदाम्नातं न तत् छान्दोग्ये आम्नायते । छान्दोग्ये यदाम्नातमायुषो विभागेषु प्रातःसवनत्वादिकल्पनं न तत्तैत्तिरीयके । उपक्रान्तब्रह्मविद्याङ्गतया 'तस्यैवं विदुष' इत्यादिना पुरुषविद्या तैत्तरीये आम्नाता सा त्वङ्गिफलकैव, छान्दोग्ये तु दीर्घायुःफलिका सा इति च फलभेदाद्विद्या भिन्नैव ॥ २४ ॥

इति प्रदीपे पुरुषविद्याधिकरणम् ॥ ९ ॥

नासाम्यात् फलैक्याच्च । पुरुषविद्यायाः फलं हि चिरायुष्ट्वम् 'प्रह षोडशं वर्षशतं जीवती'ति छान्दोग्ये श्रूयते । तैत्तिरीयके तु तत्फलं न श्रूयते । अश्रवणाच्च तदेव फलं तत्रोपसंहार्यम् ।

अत्रोच्यते—पुरुषविद्यायामपि—शाखाद्वयसमाम्नातायां पुरुषविद्यायामपि मिथो भेदोऽस्त्येव रूपभेदात् । कथम् ? इतरेषामनाम्नानात् शाखान्तरे आम्नातानामितरेषां विशेषाणां शाखान्तरे अनाम्नानात् । तद्यथा—तैत्तिरीये हि 'यत् सायं प्रातर्मध्यन्दिनं च तानि सवनानीत्या' दिनावयवेषु सवनत्वकल्पना, छान्दोग्ये तु 'यानि चतुर्विंशतिवर्षाणी'-त्यादिना पुरुषायुषे सवनत्वकल्पना, तथा एकत्र यजमानपत्न्यादि-कल्पना, अन्यत्र न सा । तदेवं रूपभेदात् विद्या भिद्यते । फलसंयोगश्च भिन्नः । छान्दोग्ये 'प्रह षोडशं वर्षशतं जीवती'ति चिरायुष्ट्वं फलं श्रूयते । तैत्तिरीये तु ब्रह्मविद्याफलान्नान्यत् फलं श्रूयते । पूर्वं 'ब्रह्मणे त्वामहसे ओमि'ति ब्रह्मविद्यामुक्त्वा 'य एवं वेद ब्रह्मणो महिमानमाप्नोति' इति तत्फलं चाभिधाय 'तस्यैवं विदुष' इति पूर्वोक्तब्रह्मविद्यानिष्ठं परामृश्य यज्ञकल्पनया ब्रह्मविद्याङ्गभूतेयं पुरुषविद्येति गम्यते । अतश्च यदङ्गिफलं ब्रह्ममहिमावाप्तिः तदेवास्याः पुरुषविद्यायाः फलम् । अनुवाकान्ते च तदेव फलमुपसंह्रियते । तत् फलसंयोगभेदाच्च भिन्नैव ॥ २४ ॥

( अ. स. ) याऽसौ पुरुषविद्येति श्रूयते शाखयोर्द्वयोः ।
फलभेदाद्रूपभेदान्नैका भवितुमर्हति ॥ १ ॥
ब्रह्मविद्याङ्गभूता तु तैत्तिरीये श्रुता हि सा ।
अन्यत्र श्रूयमाणा तु पूर्णायुष्यफला मता ॥ २ ॥
यज्ञावयवतैकत्र पुंसामायुषि कल्प्यते ।
प्रातःकालादिकेऽन्यत्र तस्माद्रूपभिदा स्थिता ॥ ३ ॥

इति भाष्ये पुरुषविद्याधिकरणम् ॥ ९ ॥

तैत्तिरीयके समाम्नातायाः पुरुषविद्याया ब्रह्मविद्यासान्निध्यात् तदङ्गत्वं पूर्वं समर्थितम् । अथ विद्यासान्निध्याद्वेधादिमन्त्राणां विद्यासु विनियोगः स्यात् इत्याशङ्का निराक्रियते ।

## वेधाद्यर्थभेदात् ॥ ३ । ३ । २५ ॥

आथर्वणिका उपनिषदारम्भे 'शुक्रं प्रविध्य हृदयं प्रविध्ये'त्यादिकान्मन्त्रानधीयते । काठकास्तैत्तिरीयकाश्च 'शं नो मित्रः शं वरुणः' 'सहनाववत्वि'त्यादिकान्मन्त्रानधीयते । अत्र संशयः, किमेषां मन्त्राणामुपनिषदध्ययनाङ्गत्वमात्रं, उत विद्यास्वप्यन्वय इति । आह— विद्यास्वप्यन्वयः सान्निध्यादिति । अत्रोच्यते—'शुक्रं प्रविध्य हृदयं प्रविध्ये'त्यादिनाऽर्थो हि शत्रुहृदयवेधादिलक्षणः प्रतीयते, तथा 'शं नो मित्र' इत्यत्र 'ऋतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवत्वि'ति गुरुशिष्योरवनं प्रार्थ्यते । 'सहनाववत्वि'त्यत्राप्येवमेव । मन्त्राणामेषामर्थविशेषप्रकाशनसामर्थ्याल्लिङ्गादध्ययनाद्यङ्गत्वमवगम्यते, तन्न विद्यासु संबन्धः । अत्र वेधग्रहणं दृष्टान्ततया, यथा शत्रुहृदयवेधार्थको मन्त्रविशेषः सत्यपि सान्निध्ये अर्थप्रकाशनसामर्थ्यादभिचारे विनियोगं प्राप्नोति, तथा शं न इत्यादिमन्त्राणामध्ययनाङ्गतैव न विद्यासु उपयोग इति ॥ २५ ॥

---

## वेधाद्यर्थभेदात् ॥ ३ । ३ । २५ ॥

आथर्वणिकानामुपनिषदारम्भे 'शुक्रं प्रविध्य हृदयं प्रविध्ये'ति मन्त्रः श्रूयते । तैत्तिरीयकानामुपनिषदारम्भे 'शं नो मित्र' इति । एवं तत्र तत्रोपनिषदारम्भे ते ते मन्त्रविशेषाः पठ्यन्ते । विद्याप्रकरणे श्रवणमात्रान्न तेषां विद्याङ्गता । वेधाद्यर्थभेदात् । 'शुक्रं प्रविध्ये'त्यनेन प्रतीयमानोऽर्थो विद्यातोऽत्यन्तभिन्नः, तदर्थपर्यालोचने तस्याभिचारे विनियोगोऽवगम्यते । 'शं नो मित्रः शं वरुण' इत्यस्यार्थपर्यालोचने अध्ययनाङ्गत्वं विज्ञायते । तन्न विद्यायामुपयोगः ॥ २५ ॥

इति प्रदीपे वेधाद्यधिकरणम् ॥ १० ॥

(अ. स.) तत्र तत्रोपनिषदां पठितानामुपक्रमे ।
'शं न' इत्यादिमन्त्राणां विनियोगो विचार्यते ॥ १ ॥
'शुक्रं प्रविध्य हृदयं प्रविध्ये'त्यादयो यथा ।
सान्निध्येऽपि न विद्याङ्गं प्रवेधाद्यर्थभेदतः ॥ २ ॥
तथैतेऽपि न विद्याङ्गं शान्तिपाठाय केवलम् ।
स्वाध्यायाध्ययनाङ्गत्वं लिङ्गादेषां च गम्यते ॥ ३ ॥

इति भाष्ये वेधाद्यधिकरणम् ॥ १० ॥

---

## हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॥ ३ । ३ । २६ ॥

छान्दोग्ये श्रूयते 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य। धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवानि' इति। अनेन गम्यते उपासकस्य मुमुक्षोः पापविधूननादिचिन्तनं विद्याङ्गमिति । आथर्वणिकानां शाखासु श्रूयते—'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती'ति । अन्यत्र श्रूयते 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति । अन्यत्र—

---

### हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॥ ३ । ३ । २६ ॥

'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति कस्यांचित् शाखायां विदुषः पुण्यपापप्रहाणमात्रं श्रूयते; अन्यस्यां 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्या'मिति पुण्यपापप्रवेशस्थानमात्रं श्रुतम्, अन्यत्रोभयमपि—'तत्सुकृतदुष्कृते धुनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति अप्रिया दुष्कृतमुपयन्ति' इति । अनेन ब्रह्मविद्याङ्गतया हानिचिन्तनमुपायनचिन्तनमुभयचिन्तनं यथासम्भवं मुमुक्षुभिः कार्यमिति प्राप्ते उच्यते—हानौ तु केवलायां श्रूयमाणायामुपायनमपि तत्रोपसंहार्यम् । हानिवाक्यशेषत्वादुपायनवाक्यस्य । उपायनं प्रवेशः । अत्र निदर्शनानि—

'तत्सुकृतदुष्कृते धुनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति अप्रिया दुष्कृत' मिति । तदेवं कस्यांचित् शाखायां पुण्यपापयोर्हानमात्रम्, कस्यांचित्त्यक्तयोस्तयोः प्रियाप्रियकर्तृकमुपादानमात्रम्, कस्यांचित हानमुपादानं च श्रूयते । तथा चात्र संशयः—हानचिन्तनमुपादानचिन्तनमुभयमुपासकेन कार्यम्, उत विकल्प इति । अत्राह—विकल्प एव । हानमात्रस्य क्वचित् क्वचिदुपादानमात्रस्य क्वचिदुभयस्य च श्रवणात्, पृथगाम्नानसामर्थ्यात् । इति । अत्रोच्यते—हानौ तूपायनशब्दशेषत्वात्—हानौ—पुण्यपापहानिमात्रे श्रूयमाणे तत्रोपायनमुपसंहार्यम् । उपायनशब्दस्य हानिशब्दशेषत्वात् । त्यक्तस्यैव ह्युपायनम् । हानावित्येतदुपायनस्योपलक्षकम् । केवलमुपायनं यत्र श्रूयते तत्र हानेरुपसंहारः कार्यः । न केवलं हानिचिन्तनं न केवलमुपायनचिन्तनं वा कार्यम् । किन्तूभयचिन्तनं कार्यमिति भावः । ननु प्रदेशान्तरे आम्नातानां वाक्यानां प्रदेशान्तराम्नातवाक्यशेषता कथमित्यत्र निदर्शनान्याह—कुशेति । कुशाः—उद्गातॄणां प्रस्तावकर्मणि विनियुक्ता उदुम्बरदारुशलाकाः । छन्दांसि—देवप्रकाशका असुरप्रकाशकाश्च कर्मविशेषे क्रमेण प्रयोक्तव्या मन्त्रविशेषाः । स्तुतिः—उत-

---

'कुशा वानस्पत्या' इति सामान्यवाक्यस्य शाखान्तरस्थं 'औदुंबर्यः कुशा' इति वाक्यं शेषभूतं भवति । छन्दोभिः स्तुवीत' इत्यस्य 'देवच्छन्दांसि पूर्वे'मिति शाखान्तरे श्रूयमाणमपि क्रमविशेषावबोधकतया शेषभूतं भवति । 'षोडशिनः स्तोत्रमुपाकरोती'ति स्तुतिविधायकवाक्यस्य कालविशेषावबोधकतया शाखान्तरे श्रूयमाणमपि 'समयाविषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोती'ति वाक्यं शेषभूतं भवति । 'ऋत्विज उपगायन्ती'ति वाक्यस्य च शाखान्तरस्थं 'नाध्वर्युरुपगाये'दिति वाक्यं शेषभूतं भवति । तथा शाखान्तरस्थे अप्युपायनहानिवाक्ये शेषशेषिभावमापद्येते । तदेतदुक्तम्—'अपि तु वाक्यशेषः स्यात् अन्याय्यत्वाद्विकल्पस्य' इति ॥ २६ ॥

इति प्रदीपे हान्यधिकरणम् ॥ ११ ॥

थ्यस्तोत्रानन्तरं सूर्यास्तमयकाले सन्निहिते समारम्भणीयं स्तोत्रम् । उपगानम्–उद्गातृषु स्तुवत्सु अध्वर्युव्यतिरिक्तैः कैश्चन ऋत्विग्भिः कर्तव्यं हो इति शब्दोच्चारणम् । विशेषश्चैषां शाखान्तरस्थवाक्यैकवाक्यतया संपद्यते । तद्यथा—'वानस्पत्याः कुशाः' इत्यस्य कालापिशाखासु श्रूयमाणस्य 'औदुंबर्यः कुशा' इत्येतद्वाक्यं शाट्यायनिनां शाखासु श्रूयमाणं शेषतामापद्यते । तथा 'देवासुराणां छन्दांसी'ति वाक्येन देवच्छन्दसामसुरच्छन्दसां चाविशेषेण प्राप्तौ 'देवच्छन्दांसि पूर्व'मिति वाक्यं क्रमविशेषं विदधत् 'देवासुराणां छन्दांसी'ति वाक्यस्य शेषभूतं भवति । तथा —'हिरण्मयेन षोडशिनः स्तोत्रमुपाकरोति' इत्यस्य 'समयाविषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोती'ति विशेषप्रापकं वाक्यं शेषतां भजति । तथा–'ऋत्विज उपगायन्ती'ति वाक्यस्य ऋत्विक्सामान्यप्रापकस्य 'नाध्वर्युरुपगाये'दिति वाक्यमध्वर्युव्यतिरिक्तऋत्विग्विषयकत्वावबोधकं शेषभूतं भवति । एवमेव केवलहानोपपादकस्य केवलोपायनोपपादकवाक्यस्य च मिथ एकवाक्यतया उभयप्रापकत्वमेव समाश्रयणीयम् ॥ २६ ॥

(अ. स.) ब्रह्मोपासननिष्ठेन पुण्यपापविधूननम् ।
विधूतयोस्तयोस्तावत् प्रवेशः स्वसुहृद्द्विषोः ॥ १ ॥
अवश्यं ब्रह्मणः प्राप्तेः प्रागेव द्राक् भविष्यति ।
इति स्मर्तव्यमसकृत् इत्यत्रेदं विचिन्त्यते ॥ २ ॥
श्रूयते हानिमात्रं तु क्वचित् क्वचिदुपायनम् ।
क्वचित्तदुभयं तस्मात् विकल्पस्तद्विचिन्तने ॥ ३ ॥
अत्रोच्यते हानिवाक्यं श्रूयतेऽन्यत्र यद्यपि ।
अथापि तच्छेषतया प्रवृत्तोपायनश्रुतिः ॥ ४ ॥
तस्मादेकार्थतासिद्धेर्विकल्पो नात्र युज्यते ।
विकल्पायुक्तताऽप्युक्ता वाक्यशेषत्वसंभवे ॥ ५ ॥

इति भाष्ये हान्यधिकरणम् ॥ ११ ॥

## सांपराये तर्तव्याभावात् तथा ह्यन्ये ॥ ३।३।२७॥

अथ सुकृतदुष्कृतयोर्हानं कदेत्येतद्विचार्यते । किं देहवियोगकाले देहवियोगानन्तरं च, उत देहवियोगकाल एव । अत्राह—देहवियोगकाले ततः पश्चाच्च । श्रूयते चोभयथा—कौषीतकिनां शाखासु 'स एतं देवयानं पन्थानमापद्याग्निलोकं गच्छति' इत्युपक्रम्य 'स आगच्छति विरजां नदीं तां मनसाऽत्येति तत्सुकृतदुष्कृते धूनुते' इति । अनेन वाक्येनावगम्यते ब्रह्मलोकमभिगच्छतो मध्ये मार्गे पुण्यपापविधूननम् । अन्यत्र श्रूयते 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवानि' इति । अनेन वाक्येन देहवियोगसमय एव पुण्यपापविधूननमिति । तथाऽन्यत्र श्रूयते—'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्या'मिति । अनेन च गम्यते पुत्राणां दायप्राप्तिसमय एव पुण्यपापयोरुपासकेन विधूतयोः सुहृद्द्विषतोः सङ्क्रम इति । तथा चोभयश्रुत्यनुरोधात् शरीरवियोगसमय एव कार्त्स्न्येन न पुण्यपापविधून-

---

तच्च पुण्यपापयोर्हानं शरीरवियोगकाल एवेति 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवानी'त्यनेन गम्यते । अध्वनीति च 'स एतं देवयानं पन्थानमापद्याग्निलोकं गच्छति × × × स आगच्छति विरजां नदीं तां मनसाऽत्येति तत्सुकृतदुष्कृते धूनुते' इत्यनेन वाक्यान्तरेण गम्यते । तत् वाक्यद्वयानुरोधेन शरीरपातसमये केषांचित् केषांचित् मार्गे इत्युभयथा हानं चिन्तनीयमित्याशङ्कायामुच्यते—

**सांपराये तर्तव्याभावात् तथा ह्यन्ये ॥ ३ । ३ । २७ ॥**

सांपराये एव—मरणसमय एव सकलपुण्यपापहानम् । अस्य विदुषः शरीरपाततः पश्चात् तर्तव्यस्य—पुण्यपापाभ्यां भोक्तव्यस्याभावात् । सति हि तस्मिन् तदवशेषः स्यात्, यस्याध्वनि हानं वक्तव्यमापतेत् । 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' इति चान्ये पठन्ति ॥ २७ ॥

नम्, किन्तु केषांचित् तदा, अवशिष्टानां मार्गे इति । अत्रोच्यते । देहवियोगकाल एव निरवशेषं पुण्यपापयोर्हानम् । कस्मात् ? तर्तव्याभावात् । तीर्णमेव सर्वं प्रारब्धम् । प्रारब्धफलं सर्वं भुक्तमेव हि । न हि भोक्तव्यमवशिष्यते । येन पुण्यं पापं वाऽनुवर्तेत । तथा ह्यन्ये– अन्ये शाखिनः, तथाहि–भोक्तव्याभावमेव हि अधीयते–'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ।' 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति ॥ २७ ॥

## छन्दत उभयाविरोधात् ॥ ३ । ३ । २८ ॥

'स एतं देवयानं पन्थानम्' 'अश्व इव रोमाणि विधूये'ति श्रुतिद्वयाविरोधात् छन्दतः–पाठक्रममतिलङ्घ्यापि अर्थाविरोधेन यथेच्छं 'तत्सुकृतदुष्कृते धुनुते' इत्येतद्वाक्यम् 'स एतं देवयानं पन्थान'मित्यतः प्रागेव नेयम् । पाठक्रमादर्थक्रमो हि बलीयान् ॥ २८ ॥

शङ्कते—

## गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥३।३।२९ ॥

उभयथा–देहवियोगकाले ततः पश्चाच्चेत्युभयथा पुण्यपापयोर्वि-

---

**छन्दत उभयाविरोधात् ॥ ३ । ३ । २८ ॥**

उभयस्य अर्थस्वभावस्य श्रुतिवाक्यस्य चाविरोधाय पाठक्रममनादृत्य छन्दतः यथेष्टं 'देवयानं पन्थानमापद्ये'त्यतः प्रागेव 'तत् सुकृतदुष्कृते धूनुते' इत्यस्यान्वयो वाच्यः । इति ॥ २८ ॥

पूर्वपक्षी शङ्कते—

**गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ ३ । ३ । २९ ॥**

उभयथा–देहवियोगकाले कानिचित् कर्माणि अध्वनि च कानिचित् हीयन्ते इति उभयथा हानिस्वीकारे एव देवयानगतेरर्थवत्त्वम् । अन्यथा हि देवयानगतिविरोधः । सर्वकर्मणि देहवियोगकाल एव प्रक्षीणे सति सूक्ष्मदेहस्याप्यननुवृत्तेः । सति हि कर्मशेषे तद्बलेन तदनुवृत्तिः शक्येत वक्तुम् ॥ २९ ॥

धूननस्वीकार एव गतेः—देवयानगतेः श्रूयमाणाया अर्थवत्त्वम् । अन्यथा हि विरोधः—देहवियोगकाल एव सर्वकर्मणां प्रक्षये देवयानमार्गेण गमनविरोधः सूक्ष्मशरीरस्यापि विनाशप्रसङ्गात् सूक्ष्मशरीरयोगोऽपि हि कर्माधीनः । असति तस्मिन् केवलस्य जीवस्य गमनं नोपपद्येत ॥ २९ ॥

परिहरति—

## उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३ । ३ । ३० ॥

देहादुत्क्रान्तिसमय एव सर्वकर्मप्रक्षय उपपन्नः । ननु प्रक्षीणकर्मणः सूक्ष्मशरीरानुगतिः कथम्? तां विना देवयानं नोपपद्यते । नैतत् । कर्मणि प्रक्षीणेऽपि तल्लक्षणार्थोपलब्धेः—तल्लक्षणस्य—तज्जातीयस्य अकर्मलभ्य-जातीयस्य देहधारणरूपस्यार्थस्य श्रुतावुपलब्धेः । तथा हि श्रूयते—'परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' 'स तत्र पर्येति जक्षत् क्रीडन् रममाणः' 'स स्वराड् भवति' 'सर्वेषु लोकेषु कामचारो भवति'

---

अत्रोच्यते—

**उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्** ॥ ३ । ३ । ३० ॥

देहपातकाल एवोपपन्नः सर्वकर्मप्रक्षयः, तल्लक्षणार्थस्य—देवयानगतिलक्षण-स्यार्थस्य लोक इवोपलब्धेः । प्रक्षीणेषु सर्वकर्मसु सूक्ष्मदेहान्वयस्याप्यसं-भवेन कथं गतिरुपपद्यते इति तु नाशङ्क्यम्, सूक्ष्मदेहो ह्यस्य विद्यामाहात्म्या-दनुवर्तते । विद्याया ह्येष महिमा, यद्विदुषं गमयति परं ब्रह्म देवयानेन । तत् देवयानेन यावदेष विरजां नदीं तरति, तावत् विद्या स्वकार्यायानुवर्तयति सूक्ष्मदेहम् । लोके सस्यसमृद्ध्यर्थमापूरितं तटाकं सलिलेन संपन्नायां सस्य-समृद्धौ पश्चादनुवर्तयन्ति प्रजाः । तन्निमित्तोपक्षयेऽपि प्रयोजनान्तरायानुवृ-त्तिर्लोके दृष्टा । विद्याया बलं च विद्यया परमभक्तिलक्षणया प्रसन्नस्य परमात्मनः प्रसादविशेष एव, सह्येनं स्वसमीपं नयन् अध्वगत्युपपत्तयेऽनु-वर्तयति सूक्ष्मदेहं अथ विरजां प्रापय्याऽप्राकृतदेशं यदा गमयति स्वासाधारणं तदा विगमयति सूक्ष्मदेहसंबन्धं प्राकृतयोगम् । अथ परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते ॥ ३० ॥

'स एकधा भवति त्रिधा भवती'ति । तस्मात् कर्मसु प्रक्षीणेष्वपि विद्यैव ब्रह्मलोकगमनाय स्थापयति सूक्ष्मशरीरम् । अपूर्वमप्राकृतं विद्यया प्रसन्नो भगवान् ददातीति चापरे । अत्रार्थे निदर्शनमुदाहरति—लोकवदिति । यथा लोके अन्येषां सर्वेषां साधनसापेक्षमपि महाराजसमाश्रयाणां तन्निरपेक्षं महाराजाश्रयणबलादेवार्थजातं सिध्यति, तथा परब्रह्मोपासीनानां तदुपासनबलादेव लोकदृष्टसाधननिरपेक्षार्थसिद्धिर्भवति ॥ ३० ॥

ननु निष्पन्नब्रह्मविद्यानां वसिष्ठादीनां शरीरपातादनन्तरमपि शरीरान्तरसङ्क्रमः सुखदुःखोपभोगश्च दृश्यते इति देहपातसमय एव विदुषां सर्वकर्मप्रक्षय इत्येतत् कथमित्यत्रोच्यते—

## यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३ । ३ । ३१ ॥

आधिकारिकाणां—तत्तत्पदे येऽधिकृतास्तेषामाधिकारिकाणां अधिकारहेतुभूतप्रारब्धकर्मणो देहपातेऽप्यप्रक्षयात् यावदधिकारं—यावत्प्रारब्धमवस्थितिरेव संसृतौ, न विमोक्षः । प्रारब्धस्य तु न विद्यातः प्रक्षयः, अपितु भोगादेव । सर्वकर्मप्रक्षयो देवयानपथा गतेः प्रागेवेति तत्त्वम् ॥ ३१ ॥

---

ननु विदुषां देहपातसमय एव सर्वकर्मप्रक्षयश्चेत् निष्पन्नविद्यानां वसिष्ठादीनां पुनर्भवो हि स्मर्यते । कथमेतत् । अत्राह—

**यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३ । ३ । ३१ ॥**

आधिकारिकाणां वसिष्ठादिपदे समधिकृतानां निष्पन्नविद्यानामपि यावदधिकारं भवमण्डलेऽवस्थितिरेव न सर्वकर्मप्रक्षयः । अधिकारप्रयोजकप्रारब्धकर्मणामप्रक्षयात् । आधिकारिका वा अन्ये वा सर्वेषां समानोऽयं नियमः—प्रारब्धं यावदिहैव स्थेयमिति ॥ ३१ ॥

इति प्रदीपे सांपरायाधिकरणम् ॥ १२ ॥

---

(अ. स.) वपुर्वियोगकाले वा प्रहाणं पुण्यपापयोः ।
किमर्चिरादिमार्गेऽपीत्येतदत्र विचार्यते ॥ १ ॥

पूर्वपक्षः—

केषाञ्चिद्वपुषः पाते शिष्टानां विरजातटे ।
इदं प्रहाणद्वैविध्यं श्रुतिर्दर्शयति स्वयम् ॥ २ ॥

सिद्धान्तः—

अत्रोच्यते वपुःपातकाल एव, न पथ्यपि ।
पुण्यपापोपायनस्य दायोपायनकालता ॥ ३ ॥
श्रूयमाणा द्रढयति हानेस्तेनैककालताम् ।
शिष्टाभ्यां पुण्यपापाभ्यां किं पथ्यस्य प्रयोजनम् ॥ ४ ॥
अर्चिरादिपदे तावद्बन्धान्मुक्तो हि गच्छति ।
ननु तद्गतये कर्म शिष्यते न ह्यकर्मणः ॥ ५ ॥
भूतसूक्ष्मान्वयो येन गतिरस्योपपद्यते ।
नैवं ब्रह्मोपसंपन्नस्य ननु प्रक्षीणकर्मणः ॥ ६ ॥
देहयोगः श्रूयते च सङ्कल्पैकसमुद्भवः ।
भूतसूक्ष्मान्वयस्तस्माद्युज्यते पथि गच्छतः ॥ ७ ॥
भूतसूक्ष्मपरिष्वङ्गं पथि गत्युपपत्तये ।
विद्यैव स्थापयत्यस्य ननु प्रक्षीणकर्मणः ॥ ८ ॥
परार्थं कल्पितेनापि दृष्टं स्वार्थस्य साधनम् ।
पथि प्रहाणवाक्यं तु योज्यं पूर्वं समन्वयात् ॥ ९ ॥
अपि निष्पन्नविद्यानां तच्छरीराद्वियुज्यताम् ।
न क्षीयते तु प्रारब्धमाधिकारिकताबलात् ॥ १० ॥

इति भाष्ये सांपरायाधिकरणम् ॥ १२ ॥

# अनियमः सर्वेषामविरोधः शब्दानुमाना-भ्याम् ॥ ३ । ३ । ३२ ॥

कर्मप्रक्षयसमयश्चिन्तितः । अथ प्रक्षीणकर्मणो गतिनियमश्चिन्त्यते । पूर्वस्मिन्नधिकरणे गतिश्च प्रसक्ता । उपकोसलविद्यादिषु अर्चिरादिगतिः श्रूयते । सा गतिस्तद्विद्यानिष्ठानामेवेति नियमः, उत न इति संशयः । अत्राह—यस्यां विद्यायां श्रूयते तद्विद्यानिष्ठस्यैव । कस्मात् ? अन्यासु विद्यास्वनाम्नानात् । तस्मात् प्रकरणात् तत्तद्विद्यानिष्ठानामेवार्चिरादिगतिरिति नियमो युक्तः । न च पञ्चाग्निविद्यायां 'ये चेमेऽरण्ये श्रद्धातप इत्युपासते' इति छान्दोग्ये, 'ये चामी अरण्ये श्रद्धां सत्यमुपासते' इति वाजसनेयके च 'ये चे'त्यविशेषेण सर्वेषामेव ब्रह्मविद्यानिष्ठानां निर्देशात् अर्चिरादिगतिः ब्रह्मविद्यानिष्ठानां सर्वेषामेव साधारणीति वाच्यम् । सत्यवदनलक्षणतपोविशेषनिष्ठानामेव प्रकृतत्वान्न तस्याः सर्वसाधारण्यम् । सत्यतपःशब्दौ हि तदर्थे एव रूढौ । इति । अत्रोच्यते—अनियमः—तत्तद्विद्यानिष्ठानामेवेति न नियमः ।

---

अर्चिरादिगतिरुपकोसलविद्यायां श्रूयमाणा तद्विद्यानिष्ठस्यैव नान्यस्य, यस्यां विद्यायां श्रूयते सा तस्यास्तदितरविद्यानिष्ठसाधारणत्वकल्पनस्यान्याय्यत्वादित्यत्राह—

**अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम्॥३।३।३२॥**

अनियमः—नायं नियमः, यस्यां विद्यायां सा श्रूयते तन्निष्ठस्यैव सेति । किंतु विद्यान्तरनिष्ठानामपि सा गतिः साधारणी । तथा सत्येव शब्दानुमानाभ्यां—श्रुतिस्मृतिभ्यामविरोधः । श्रूयते हि ब्रह्मविद्यानिष्ठान् सर्वान् प्रत्यविशेषेण सा गतिः 'ये चेमेऽरण्ये श्रद्धां सत्यमुपासतेऽर्चिषमभिसंभवन्ति' इति । स्मर्यते च 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः' । इति ॥ ३२ ॥

इति प्रदीपेऽनियमाधिकरणम् ॥ १३ ॥

किन्तु सर्वेषामेव ब्रह्मविद्यानिष्ठानां साधारणी सा गतिः । अत एव श्रुतिस्मृतिभ्यामविरोधः । अन्यथा तु विरोधः स्यात् । पञ्चाग्निविद्यायां 'तद्य इत्थं विदु'रिति पञ्चाग्निविद्यानिष्ठान्निर्दिश्य 'ये चेमे' इति ब्रह्मविद्यानिष्ठा अविशेषेण निर्दिश्यन्ते । सत्यतपःशब्दौ च श्रुतौ ब्रह्मणि प्रसिद्धौ । 'सत्यं त्वेव विजिज्ञासितव्यम्' 'सत्यं ज्ञानमनन्तं ब्रह्म' 'तपो ब्रह्म' इति हि श्रूयते । ब्रह्मात्मकस्वात्मोपासकाः पञ्चाग्निविद्यानिष्ठाः, साक्षात् ब्रह्मोपासकास्तेभ्योऽन्येऽधिकारिणो 'ये चामी' इति पृथक् निर्दिश्यन्ते । 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जना' इति च स्मृतिः । तथा चार्चिरादिः ब्रह्मविन्मात्रसाधारणीति सिद्धम् ॥ ३२ ॥

(अ. स.) उपकोसलविद्यायामर्चिरादिगतिः श्रुता ।
साधारणी सा विदुषां सर्वेषामपि वा न वा ॥ १ ॥
विद्यायां श्रूयते यस्यां तन्निष्ठानामेव सा भवेत् ।
इति चेन्न ब्रह्मविद्यानिष्ठान् प्रत्यविशेषतः ॥ २ ॥
'तद्य इत्थं विदुर्ये चे'त्युपक्रम्य गतिश्रुतेः ।
गतिः साधारणी सेयं सर्वेषां विदुषामपि ॥ ३ ॥

इति भाष्येऽनियमाधिकरणम् ॥ १३ ॥

---

## अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३ । ३ । ३३ ॥

बृहदारण्यके श्रूयते—'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छाय'मित्यादि, तथा मुण्डके

---

**अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३ । ३ । ३३ ॥**

'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घ'मिति बृहदारण्यके 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्र'मित्याथर्वणे च अक्ष-

'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णम-चक्षुःश्रोत्रं तदपाणिपाद'मित्यादि । अत्र ये श्रूयन्ते स्थूलत्वादिनिषेधलक्षणा गुणा अक्षरस्य परस्य ब्रह्मणस्तद्धियां—तद्विचिन्तनस्य सर्वासु ब्रह्मविद्यासु अन्वयोऽस्ति न वेति संशयः । आनन्दादीनामिव अस्थूलत्वादीनां सर्वासु ब्रह्मविद्यासूपसंहारः कार्यो न वेत्येतत् ।

अत्राह—न कार्य इति । अक्षरविद्यातोऽन्यत्रानाम्नानात् । अनाम्नातानामप्युपसंहारे अविशेषात् सर्वेषां ब्रह्मगुणानामुपसंहारप्रसङ्गेनोपासनं दुर्घटमापतेत् । न चैते निषेधा आनन्दादिवत् ब्रह्मस्वरूपोपस्थितावनुवर्तन्ते ।

अत्रोच्यते—अक्षरधियां तु । तुशब्दः शङ्कां व्यावर्तयति । अक्षरे उपास्ये ये तदनुबन्धिन्योऽस्थूलत्वादिधियस्तासां सर्वासु ब्रह्मविद्यासु अवरोधः—सङ्ग्रहः कार्यः । कस्मात् ? सामान्यात् तद्भावाच्च—सामान्यमुपास्यस्य ब्रह्मणः सर्वविद्यासु समानत्वं तस्मात् । उपास्यैक्यात् इति यावत् । तस्य अस्थूलत्वादिकस्य च आनन्दादिवत् स्वरूपे भावात् स्वरूपनिरूपकत्वादित्येतत् । न ह्यानन्दत्वादिमात्रं ब्रह्मस्वरूपनिरूपकम्, जीवात्मस्वपि तस्य भावात् । अपि तु हेयप्रत्यनीकत्वविशिष्टमेव तु तत्

---

रस्य परस्य ब्रह्मणोऽसाधारण्येन श्रूयमाणा अस्थूलत्वादयः प्रपञ्चवैलक्षण्यरूपाः सर्वासु ब्रह्मविद्यासूपसंहार्याः, न तु यत्र श्रूयन्ते तत्रैवेति नियमः । उपास्यस्य परब्रह्मणः सर्वविद्यासु सामान्यात्—साधारणत्वात्, अस्थूलत्वादीनां च तद्भावात्—तस्य परब्रह्मणो भावात्—परब्रह्मासाधारणधर्मत्वादिति यावत् । अत्र निदर्शनम्—औपसदवत्—यथा—जामदग्न्यचतूरात्रपुरोडाशाद्युपसद्गुणभूतः सामवेदपठितः 'अग्निर्वै होत्रं वेत्त्वित्यादिको मन्त्रः प्रधानानुवर्तित्वाद्यजुर्वेदीयेनोपांशुत्वेनैव प्रयुज्यते, तथोपास्यस्य प्रधानस्य परब्रह्मणः समानत्वात् सर्वास्वपि ब्रह्मविद्यासूपसंहार्या इति । तदुक्तम्—गुणभूतस्य प्रधानानुवर्तित्वं 'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोग' इति जैमिनिनोक्तम् ॥ ३३ ॥

स्वरूपनिरूपकमसाधारण्यात् । तस्मात् गुणानां प्रधानानुवर्तित्वात् सर्वविद्यास्वपि आनन्दत्वादिवदुपसंहार्या अस्थूलत्वादयोऽपीति । गुणानां प्रधानानुवर्तित्वे दृष्टान्तमाह—औपसदवत्तदुक्तमिति । उपसत्संबन्धी 'अग्निर्वै होत्रं वे'त्वित्यादिको मन्त्रविशेषः सामवेदपठित उपसदङ्गभूतः, स च याजुर्वैदिकप्रधानोपसद्गुणभूततया स्वरे प्रधानानुवर्ती भवति । तस्य मन्त्रस्य सामवेदतया उच्चैःस्वरप्राप्तौ तमुपमृद्य 'उपांशु याजुषाना'मित्युपांशुस्वर एव प्राप्नोति । तदिदं गुणस्य प्रधानानुवर्तित्वमुक्तं पूर्वतन्त्रे 'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः' इति । अयमर्थः—गुणमुख्ययोर्मन्त्रोपसदोः व्यतिक्रमे स्वस्ववेदविहितस्वरप्राप्त्या विरोधे प्रसक्ते मुख्येन प्रधानानुसारेण वेदसंयोगः—स्वरविधायकवेदसंबन्धः । इति ॥ ३३ ॥

ननु—सर्वासु ब्रह्मविद्यासूपास्यस्य ब्रह्मणः प्रधानस्य ऐक्यात् गुणानां च तदनुवर्तित्वनियमात् 'सर्वकर्मा सर्वगन्धः सर्वरस' इत्यादिना श्रूयमाणानां सर्वेषामपि गुणानां सर्वासु ब्रह्मविद्यासु उपसंहार्यत्वापातेन विद्याव्यवस्था व्याहन्येत इत्यत्राह—

## इयदामननात् ॥ ३ । ३ । ३४ ॥

इयतामेवामननात्—सर्वासु विद्यासु आभिमुख्येन मननात् । इदमभिहितं भवति—यैर्गुणैर्विना न धर्मिस्वरूपोपस्थितिस्तेषामेव स्वरूपनिरूपकगुणानां सर्वासु विद्यासु उपसंहारः । नान्येषाम् ।

---

**इयदामननात् ॥ ३ । ३ । ३४ ॥**

न सर्वं सर्वत्रोपसंहार्यमिति ब्रूमः । इयत्तु—'अस्थूल'मित्यादिना श्रूयमाणमस्थूलत्वादिकं तु सर्वास्वपि ब्रह्मविद्यासूपसंहार्यम्, कस्मात्? आमननात्—अनेनास्थूलत्वादिना गुणेनेतरव्यावृत्तिपूर्वकमाभिमुख्येनावबोधनात् । उपास्यस्वरूपं हि इतरविसजातीयत्वेनानुचिन्तनीयम् । तदस्य सर्वविद्यासूपसंहार्यता युक्ता ॥ ३४ ॥

इति प्रदीपेऽक्षरध्यधिकरणम् ॥ १४ ॥

हेयप्रत्यनीकत्वविशिष्टमानन्दत्वाद्येव तु स्वरूपनिरूपकम् । तत् एवं-विधानामियतामेवामननम्, नान्येषामिति ॥ ३४ ॥

(अ. स.) 'अ ण्वस्थूलमह्रस्वमदीर्घं चे'ति ये गुणाः ।
अक्षरब्रह्मणि प्रोक्ता अस्थूलत्वादयः श्रुतौ ॥ १ ॥
अचिद्व्यावर्तकास्ते च वैलक्षण्यावबोधकाः ।
सर्वासु ब्रह्मविद्यासु चिन्तनीयाः प्रकीर्तिताः ॥ २ ॥
इति भाष्येऽक्षरध्यधिकरणम् ॥ १४ ॥

---

## अन्तरा भूतग्रामवत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॥ ३ । ३ । ३५ ॥

बृहदारण्यके श्रूयते—'यत् साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वान्तरस्तन्मे व्याचक्ष्वे'ति उषस्तेः प्रश्नः । प्रतिवचनं चास्य 'यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः, योऽपानेनापानिति स ते आत्मा सर्वान्तरः' इति । तत्रैवोत्तरत्र कहोलकप्रश्नः 'यत्साक्षादपरोक्षात् ब्रह्म

---

### अन्तरा भूतग्रामवत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॥ ३ । ३ । ३५ ॥

बृहदारण्यके उषस्तिप्रश्ने इदमाम्नायते—'यत्साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वान्तरस्तन्मे समाचक्ष्वे'ति, प्रतिवचनं च 'यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः' 'योऽपानेनापानिति स त आत्मा सर्वान्तरः' इति । तथा तत्रैवानुपदं कहोळकप्रश्ने प्रतिवचनमेवमाम्नायते—'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' इति । अत्रेयमाशङ्का—उभयत्र प्रश्नस्यैक-रूप्येऽपि प्रतिवचने भेदात् नैक उभयत्रोक्तः । उषस्तिं प्रति प्रवृत्ते प्रतिवचने अन्तरा—आन्तरत्वेनोक्तिः भूतग्रामवतः—देहात्मना परिणतभूतपञ्चकसंयुक्तस्य स्वात्मन एव—जीवात्मन एव । परमात्मनो हि न भूतग्रामवत्ता । कहोलकं प्रति प्रवृत्तं प्रतिवचनं तु अशनायाद्यतीतस्य परस्येति । इमामाशङ्कां परिहरति इति चेन्नोपदेशवदिति । उभयत्राप्येक एव प्रतिपाद्यते इत्यत्र न काऽप्यनु-

य आत्मा सर्वान्तरस्तन्मे व्याचक्ष्वे'ति । प्रतिवचनं च 'योऽशनाया-
पिपासे शोकं मोहं जरां मृत्युमत्येति एवं हैतमात्मानं विदित्वे'-
त्यादि । अत्र संशयः—किमिह विद्या भिद्यते उत नेति । अत्राह—
भिद्यते, प्रतिवचनपर्यालोचने रूपभेदो हि गम्यते । प्राणनकर्तृत्वगुण-
विशिष्टः प्रथमे, द्वितीये तु अशनायाद्यतीतत्वगुणविशिष्टः । तस्मात्—
उषस्तिप्रतिवचने—अन्तरा—अन्तरात्मतया उक्तः भूतग्रामवत्स्वात्मा—
भूतग्रामस्य करणकलेवरस्य यो नेता स्वात्मा—जीवात्मा स एव । न
चोभयत्र उपास्य एको भवितुमर्हति, एकः प्राणनादिकर्ता, अपरस्तु
अशनायाद्यतीतः । अन्यथा प्रतिवचनभेदानुपपत्तिः । यद्यपि प्रश्न
एकरूपः । अथापि प्रतिवचनभेदात् भिद्यत एवेति ।

अत्रोच्यते—नेति । नोपास्यभेदः । प्रश्नो ह्युभयोरेकरूपः 'यत्
साक्षादपरोक्षात् ब्रह्म यः आत्मा सर्वान्तरः' इति । ब्रह्मशब्दः परमात्मन्येव
मुख्यवृत्तोऽप्यन्यत्रापि आपेक्षिकबृहत्त्वयोगेन प्रवर्तत इति तद्व्यावृत्तये
'साक्षादपरोक्षा'दिति विशेषणम् । अपरोक्षादित्यनेन सर्वत्र सदा सन्नि-
हितत्वं गम्यते । कालतो देशतो विप्रकृष्टं हि परोक्षतामापद्यते ।
साक्षादिति च मुख्यत्वम् । जीवात्मा च न सर्वान्तरः, किन्तु तत्त-
द्भूतग्राममात्रस्य, य आत्मा सर्वान्तर इति तु प्रश्नः । प्रतिवचने चान्ते
'न दृष्टेर्द्रष्टारं पश्येः' इत्यादि श्रूयते । अयमर्थः—यः प्राणेन प्राणिति
इत्यादिना यो मयोक्तः, स चक्षुरादीन्द्रियाधीनवृत्तिक इति त्वया
न भ्रमितव्यम् । अपि तु यः सर्वप्राणिप्राणनादिहेतुः सर्वान्तरः पर-

---

पपत्तिः । उभयत्रोपक्रमोपसंहारयोरेकरूपत्वात् । प्रश्नमुखेन भवत्युपक्रमः ।
प्रश्नश्चोभयत्र समानः । साक्षादपरोक्षात् इति ब्रह्मणो विशेषणद्वयं सर्वान्तर
इत्यात्मनो विशेषणं च जीवं व्यावर्तयति । उभयत्रोपसंहारे च श्रूयते—
'अतोऽन्यदार्त'मिति । सर्वप्राणिप्राणनादिहेतुत्वं च परमात्मन एवासाधारणं
'यः प्राणेन प्राणिती'त्यादिना श्रूयते । प्रश्नावृत्तिप्रतिवचनावृत्तिमात्रेण तु
नोपास्यभेदः । उपदेशवत्—यथा सद्विद्यायां सम्यगवबोधनाय बहुकृत्व उप-
देशस्तथेहापि ॥ ३५ ॥

मात्मा स एवोक्त इति । सुषुप्तिमूर्च्छयोः प्राणव्यापारहेतुरयमेव । अन्यत्र च श्रूयते 'को ह्येवान्यात् कः प्राण्याद्यदेष आकाश आनन्दो न स्या'दिति । तथा 'प्राणस्य प्राणश्चक्षुषश्चक्षुरि'ति 'ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यती'ति च । 'अतोऽन्यदार्त'मिति चोपसंहृतिरुभयत्रैकरूपा । इयानेव तु विशेषः—य एव सर्वप्राणिप्राणनकर्तृत्वेनोक्तः स एव कहोलकप्रश्नप्रतिवचने अशनायाद्यतीतयोक्त इति । विशेषावबोधनायैव तु प्रश्नप्रतिवचनावृत्तिः । अत्र दृष्टान्तमाह—उपदेशवदिति । छान्दोग्ये षष्ठाध्याये सद्विद्यायां 'भूय एव मा भगवान् विज्ञापयत्वि'-त्यादिना उपदेशवत्—उपदेशाभ्यासवत् । तन्नात्र विद्याभेदः ॥ ३५ ॥

## व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३ । ३ । ३६ ॥

उभयत्र साक्षाद्ब्रह्मत्वसर्वान्तरत्वोक्तिसाम्यात् उपसंहारे 'अन्यदार्त'मित्यस्य साम्यात् अशनयाद्यतीतत्वस्य हेयप्रत्यनीकत्वरूपतया सर्वविद्यासाधारण्येन रूपभेदकत्वाभावेन कहोलकप्रश्नप्रतिवचन एव विधिश्रवणेन विधेरेकत्वाच्च विद्यैक्ये सिद्धे उषस्तिकहोलकाभ्यां धीव्यतिहारः कार्यः । उषस्तिना कहोलकप्रश्नप्रतिवचनावगताशनायापिपासाद्यतीतत्वस्यापि धीः कार्या, कहोलकेन उषस्तिप्रश्नप्रतिवचनावगतसर्वप्राणिप्राणनहेतुत्वस्यापि धीः कार्या । एकमेवोपास्यं प्रतिवचनद्वयावगतानि वाक्यानि विशिंषन्ति हि—व्यावर्तयन्ति हीतरतः । न तु रूपभेदमापादयन्ति । इतरवत्—यथा सद्विद्यायां शङ्कानिवारणमुखेन सम्यक् प्रतिपत्तये प्रवृत्ताभ्यां भूयोभूयः प्रश्नप्रतिवचनाभ्यां

---

### व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३ । ३ । ३६ ॥

एवञ्च प्रश्नप्रतिवचनावृत्तावपि उपास्यैक्ये सिद्धे एकत्रोक्तस्यान्यत्रोपसंहारः परस्परं कार्यः । सर्वप्राणिप्राणनहेतुत्वस्य कहोलकप्रतिवचने अशनायाद्यतीतत्वस्योषस्तिप्रतिवचनेऽप्युपसंहारः कार्यः । एकमेव ह्युपास्यं विशिंषन्ति विशेषणानि । इतरवत्—सद्विद्यायामिव । सद्विद्यायां पुनः पुनरुपदेशेन सच्छब्दवाच्यमेकमेव हि विशेष्यते ॥ ३६ ॥

एकमेवोपास्यं बहुधा विशिष्यते, न तु रूपभेदकं किमपि, प्रत्युत प्रतिप्रतिवचनम् 'एषोऽणिमा ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' इति उपसंहारस्यैकरूप्यात् विद्यैक्यमेव ज्ञाप्यते । तथेहापि ॥ ३६ ॥

ननु इतरवदिति निदर्शनं नोपपद्यते । तत्रापि प्रश्नप्रतिवचनभेदात् विद्यया भिन्नयैव भाव्यम्, इत्यत्राह—

## सैव हि सत्यादयः ॥ ३ । ३ । ३७ ॥

या सच्छब्दवाच्या सकलकारणभूता 'सेयं देवतैक्षत' इत्यादिना प्रथममुपक्रान्ता सैव प्रतिप्रतिवचनमनुसंबन्ध्यते । यस्मात् 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' इति सत्यादयः श्रूयन्ते । तस्मात् सद्विद्या एकैव ॥ ३७ ॥

(अ. सं.) श्रूयते बृहदारण्ये प्रत्युक्ती प्रश्नयोः क्रमात् ।
यः प्राणनादिहेतुः स आत्मा सर्वान्तरस्त्विति ॥ १ ॥
अशनायादिरहित आत्मा सर्वान्तरस्त्वसौ ।
अत्र विद्याविभेदोऽस्ति न वेत्येतद्विचार्यते ॥ २ ॥

पूर्वपक्षः—

आह जीवः प्रत्यगात्मा भूतग्रामान्तरस्थितः ।
प्रथमे तु प्रतिवचस्यात्माऽऽन्तर इतीर्यते ॥ ३ ॥

---

ननु तत्र वा कथमेकमेव विशेष्यते इत्यवगम्यते—

**सैव हि सत्यादयः ॥ ३ । ३ । ३७ ॥**

सद्विद्यायां 'सदेवे'त्युपक्रम्य श्रूयमाणायां प्रत्युपदेशं 'तत्सत्यं स आत्मे'ति सत्यादयो हि श्रूयन्ते । या सच्छब्दवाच्या परा देवता प्रस्तुता सैव स्फुटावबोधनाय पुनः पुनरुपदिश्यते ॥ ३७ ॥

इति प्रदीपे अन्तरत्वाधिकरणम् ॥ १५ ॥

प्राणनादिक्रियाहेतुः स एव करणान्वितः ।
अशनायादिरहितः परमात्मेतरत्र तु ॥ ४ ॥
उपास्यरूपभेदेन तत् विद्या भिद्यते मिथः ।

सिद्धान्तः—

अत्रोच्यते चोभयत्र परमात्मैव कीर्त्यते ॥ ५ ॥
तस्मिन्नेव तु सा मुख्या प्राणनादिषु कर्तृता ।
निरस्यते जीवशङ्का 'न दृष्टे'रिति वाक्यतः ॥ ६ ॥
सर्वान्तरत्वं तस्यैव जीवेषु तदनन्वयात् ।
प्रश्नावेकार्थविषयावेकार्थे चोपसंहृती ॥ ७ ॥
विशेषप्रतिपत्त्यर्थं पुनः प्रश्नः प्रवर्तते ।
सद्विद्यायां यथा भूयः प्रश्नाः प्रतिवचांस्यपि ॥ ८ ॥

इति भाष्ये अन्तरत्वाधिकरणम् ॥ १५ ॥

---

## कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३ । ३ । ३८ ॥

छान्दोग्ये श्रूयते 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्' इत्यादि । वाज-

---

छान्दोग्ये श्रूयते—'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाश' इति । बृहदारण्यके तु 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशान' इति । अनयोरेकत्राकाशः सत्यकामत्वादि-गुणविशिष्ट उपास्य उच्यते । अन्यत्राकाशे शयानो वशित्वादिगुणविशिष्टः, अतो रूपभेदाद्विद्याभेद इति शङ्कायामाह—

### कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३ । ३ । ३८ ॥

इतरत्र तत्र च बृहदारण्यके छान्दोग्ये च कामाद्येव—सत्यकामत्वादिक-मेव, सत्यकामत्वादिगुणविशिष्टमाकाशमेकमेवोपास्यमुच्यते । उभयत्र हृदया-यतनादयस्त एव श्रूयन्ते । ननु हृदयमायतनमेकम्, अथापि एकत्र हृदया-

सनेयके श्रूयते 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः' इत्यादि । अत्र संशयः—किमिह विद्या भिद्यते उत नेति । आह—भिद्यते, रूपभेदात् । एकत्र हृदयान्तरवस्थित आकाश उपास्य उच्यते । अन्यत्र आकाशे शयान उपास्य उच्यते । उपास्यगुणाश्चैकत्र अपहतपाप्मत्वादयः, अन्यत्र वशित्वादयः । इति ।

अत्रोच्यते—इतरत्र वाजसनेके तत्र च छान्दोग्ये कामादि—सत्यकामत्वादिगुणजातमेवोपास्यरूपम्, सत्यकामत्वादिगुणविशिष्टं ब्रह्मैवोपास्यम्, सत्यसङ्कल्पत्वस्य विशेषा एव वशित्वादय इति तत्साहचर्यात् सत्यकामत्वादयो वाजसनेयकेऽप्युन्नेयाः । प्रकाशगुणयोगादाकाशशब्देन ब्रह्म तत्र निर्दिश्यते । तदेतत् दहराधिकरण एव निर्णीतम् । वाजसनेयके च शयनाधारतया श्रूयमाण आकाशो हृत्सुषिररूपो भूताकाश इति व्यक्तमवगम्यते, शयानस्य वशित्वादिश्रवणात् । तदुभयत्रायतनादिकं त्वेकम् । हृदयायतनत्वं हृदयाकाशायतनत्वमिति तु न भिद्यते । आयतनादिभ्यश्चोभयत्र श्रूयमाणेभ्यो विद्यैक्यमवगम्यते । हृदयायतनत्वमुभयत्र समानम्, तथा सेतुत्वविधरणादिकं च । तथा हि—छान्दोग्ये—'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय तस्माद्वा एतं सेतुं तीर्त्वा' इति, वाजसनेयके च 'एष सेतुर्विधरण एषां लोकानामसंभेदाय' इति श्रूयते । तथा फलसंयोगश्च समानः 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' 'अभयं वै ब्रह्म भवती'त्युभयत्र ब्रह्मप्राप्तेः श्रवणात् ॥ ३८ ॥

---

यतनमाकाशम्, अन्यत्र तु तस्मिन्नाकाशे शयानमन्यत् । न । आकाशे इति सप्तम्यन्तेन हृदयपुण्डरीके यत् सूक्ष्मं सुषिरं यदन्यत्र श्रुतं तदेवोच्यते, न तु छान्दोग्ये श्रुतमाकाशम् । तद्धि कामानां सत्यसङ्कल्पत्वादीनामाश्रयतयोच्यते । ये च वशित्वादयः ते सत्यकामत्वसत्यसङ्कल्पत्वादेर्विततिरूपा इति न रूपभेदः ॥ ३८ ॥

ननु इतरत्र च कामादीत्यनुपपन्नम् । निषिध्यन्ते हि गुणा वाजसनेयके तत्रैव 'मनसैवानुद्रष्टव्यं नेह नानाऽस्ति किञ्चन' 'एकधैवानुद्रष्टव्यम्' 'स एष नेतिनेतीत्यात्मा' इति । अत्राह–

## आदरादलोपः ॥ ३ । ३ । ३९ ॥

सर्वासां श्रुतीनां परस्य ब्रह्मणो गुणेष्वादरात् अस्यां विद्यायां तस्य गुणस्य लोपो नैव घटेत, अपि तु अलोप एव उपसंग्रह एव। अस्यामेव विद्यायां 'तस्मिन् यदन्तस्तदन्वेष्टव्यम्' 'एष आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' 'सर्वस्य वशी सर्वस्येशानः' 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाये'ति गुणेष्वादरः स्पष्टं विज्ञायते। अन्यत्रापि श्रूयते–'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्यादि । विनाऽऽदरं कथं श्रुतिर्गुणानुपदिशेत् । आप्ततमा श्रुतिर्नातात्त्विकमादिशेत् । न चान्यतः प्राप्तगुणमनूद्य प्रतिषेधतीति वक्तुं शक्यम्, अलौकिकस्यार्थस्यान्यतोऽनवबोधात् । 'य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति', 'य इहात्मानमननुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेष्वकामचारो भवती'ति गुणवेदनतद्वेदनयोः स्तुतिनिन्दाभ्यां गुणेषु श्रुतेरादरो गम्यते । तस्मात् दहरविद्या उभयत्र

---

ननु छान्दोग्ये श्रूयमाणा दहरविद्या सगुणोपासनरूपा । फलविशेषार्थं गुणानां कल्पितानामन्वयस्तत्र । वाजसनेयके तु निर्गुणब्रह्मविद्यैव प्रतिपाद्यते, यत्तत्र 'नेह नानाऽस्ति किञ्चन' 'एकधैवानुद्रष्टव्यम्' 'एष नेति नेतीत्यात्मा' इति गुणनिषेधः श्रूयते, इत्याशङ्कायामाह—

## आदरादलोपः ॥ ३ । ३ । ३९ ॥

न गुणानां लोपः । आदराद्धि गुणान् श्रावयति । श्रुतिरप्राप्तान् अपूर्वान् गुणान्विदधाति, सैव तान् प्रतिषेधतीति चानुपपन्नम् । श्रुतेर्भ्रान्ततापातात् ॥ ३९ ॥

श्रूयमाणा एकैव । नेति नेतीति निषेधश्रुतेश्च गुणविधायकश्रुत्यनुरोधेनैवार्थो वर्णनीयः । सर्वस्य ब्रह्मात्मकतया तदनात्मकवस्तुनिषेध एव नानात्वनिषेधश्रुतेस्तात्पर्यम् । लोकदृष्टवस्तुगताः प्रकारा इति नेति निषिध्यन्ते । तदिदं वैलक्षण्यं 'अग्राह्यो नहि गृह्यते अविशीर्यो नहि शीर्यते' इति उपपाद्यते च ॥ ३९ ॥

ननु—'तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवती'त्यादिना सत्यसङ्कल्पत्वादिगुणविशिष्टोपासनफलं श्रूयते । कामतः सञ्चरणं च संसारिणामेव फलम् । न तु मुक्तानाम् । अतो मुमुक्षुणा सत्यसङ्कल्पत्वादिगुणविशिष्टोपासनं नैव कार्यमिति न मुमुक्षुणा ते गुणा उपसंहार्या इति चेदाह—

## उपस्थितेऽतस्तद्वचनात् ॥ ३ । ३ । ४० ॥

नेदं सांसारिकफलम् । उपस्थिते—परंब्रह्म समुपस्थिते प्राप्ते मुक्ते, अतः तत्प्राप्तेरेव हेतोः, तद्वचनात् तस्य सर्वलोकसञ्चरणस्य वचनात् । 'अथ य एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' 'एष आत्मा ××× अथ य आत्मा स सेतुः ××× तस्माद्वा एतं सेतुं तीर्त्वाऽन्धः सन्ननन्धो भवति ××× सकृद्विभातो ह्येष ब्रह्मलोकः ××× तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकः, तेषां सर्वेषु लोकेषु कामचारो भवति ।' 'परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र

---

उपस्थितेऽतस्तद्वचनात् ॥ ३ । ३ । ४० ॥

ननु—सगुणोपासकानां कामचारादिफलश्रुतेः, तस्य च फलस्य ब्रह्मविद्याफलत्वानुपपत्तेर्न सत्यसङ्कल्पत्वादयो गुणा मुमुक्षुभिरुपादेया इत्यत्राह—उपस्थिते—परं ब्रह्मोपस्थिते—परं ज्योतिरुपसन्ने मुक्ते अत एव कारणात् तद्वचनात्—'सर्वेषु लोकेषु कामचारो भवती'ति ऐश्वर्यविशेषस्याभिधानात् मुमुक्षुणा ब्रह्मविद्यायामुपादेया एव सत्यसङ्कल्पत्वादयो गुणाः ॥ ४० ॥

इति प्रदीपे कामाद्यधिकरणम् ॥ १६ ॥

पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वे'ति परंज्योतिरुपसंपन्नस्य आविर्भूतस्वरूपस्य तदुपसत्तिकार्यतया हि तत्फलं श्रूयते । तस्मात् गुणविशिष्टोपासनान्मोक्षसिद्धेः मुमुक्षुणा सत्यकामत्वादिगुणा उपासने उपसंहर्तुं योग्या एव ॥ ४० ॥

( अ. स. ) छान्दोग्ये बृहदारण्ये दहराकाशगोचरा ।
या चेयं श्रूयते विद्या किमेका, नेति चिन्त्यते ॥ १ ॥
एकत्र दहराकाश उपास्यः श्रूयते ननु ।
अन्यत्र शेते यस्तस्मिन् स उपास्यः प्रतीयते ॥ २ ॥
अत्रोच्यते न भिन्ना सा रूपस्थानाद्यभेदतः ।
समन्तात्काशमानस्य तस्यैव परमात्मनः ॥ ३ ॥
हृदयस्थत्वमेकत्रान्यत्र तत्स्थनभःस्थता ।
नैतावता स्थानभेदः कामा अपि त एव हि ॥ ४ ॥
कामानां नापि लोपोऽत्र श्राव्यन्ते ते हि सादरम् ।
'नाना ने'ति निषेधस्तु सर्वस्यैकात्मकत्वतः ॥ ५ ॥
इति भाष्ये कामाद्यधिकरणम् ॥ १६ ॥

---

## तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ३ । ३ । ४१ ॥

'ओमित्येतदक्षरमुद्गीथमुपासीते'त्यादिना विधीयमानानि उद्गीथोपासनानि किमुद्गीथद्वारा कर्मस्वङ्गतामापद्यन्ते उत नेति विचार्यते । अत्राह–'जुह्वा जुहोती'त्यनेन होमसाधनत्वेन विहितां जुहूमनूद्य

---

### तन्निर्धारणानियमः तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ३ । ३ ॥ ४१ ॥

'ओमित्येतदक्षरमुद्गीथमुपासीते'त्यादीनि कर्माङ्गविषयकाण्युपासनानि श्रूयन्ते, तानि किं कर्मसु नियतानि उतानियतानीत्यत्रोच्यते–तस्य कर्माङ्गभूतस्योद्गीथस्य यन्निर्धारणं नितरां मनसि धारणमवस्थापनं ध्यानम्, तस्यानियमः–

प्रकरणान्तरगतं 'यस्य पर्णमयी जुहू'रिति वाक्यं पर्णमयीत्वं तस्या विदधाति। तेन यथा पर्णता जुहूद्वारा क्रत्वङ्गं भवति। तथा प्रकरणान्तरविहितमपि उद्गीथोपासनमुद्गीथद्वारा क्रतावङ्गभावमापद्यते। तथा च उद्गीथोपासनमवश्यं क्रतुनिष्ठेन कार्यमेव। ननु श्रूयते पृथक् फलम्—'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवती'ति। पृथक् फलश्रवणात् नास्य क्रत्वङ्गता अपि तु गोदोहनादिवत् पुरुषार्थतैवेति चेत्, न। जुहूद्वारा पर्णताया इव कर्माङ्गभूतोद्गीथद्वारा उद्गीथोपासनस्य कर्माङ्गत्वे सिद्धे 'न स पापं श्लोकं शृणोती'ति वाक्यस्य पर्णतार्थवादतेव 'यदेव विद्यया करोती'त्यस्यापि अर्थवादतैवेति।

**अत्रोच्यते**—तन्निर्धारणानियमः—तस्य—उद्गीथस्य निर्धारणं—मनस्यवस्थापनम्, तन्निध्यानमित्येतत्, तस्यानियम एव। उद्गीथोपासनस्य सर्वत्र क्रतुषूपसंहार्यत्वानियमः। कुतः। तद्दृष्टेः—अनियमस्य दृष्टेः—दर्शनात्—श्रुतावुपलम्भात् 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' इति। श्रूयते चोपासनफलं वीर्यवत्तरत्वलक्षणं 'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवती'ति। अयं च नार्थवादः केवलम्। पुरुषार्थत्वावधारणात्। वीर्यवत्तरता च कर्मणः प्रबलेन कर्मान्तरेणाप्रतिबद्धता। अनुष्ठितोऽपि क्रतुः प्रबलेन केनापि पूर्वेण समुद्भूतेन प्रतिरुद्धः स्वफलं सपदि नोत्पादयितुमीष्टे। कृते चोद्गीथोपासने तदप्रतिबन्धः सिध्यति क्रतोर्विद्या फलमिति ॥ ४१ ॥

---

अङ्गस्येव अङ्गविषयकोपासनस्य पर्णतादिवन्न नियमः। किन्तु गोदोहनादिवदनियम एव। कस्मादिदमवगम्यते—तद्दृष्टेः तस्योपासनेऽनियमस्य दृष्टेः 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेदे'ति श्रवणात्। पृथक्—अङ्गिफलात्पृथगेव हि अप्रतिबन्धाख्यं फलं श्रूयते 'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवतीति ॥ ४१ ॥

इति प्रदीपे तन्निर्धारणानियमाधिकरणम् ॥ १७ ॥

( अ. स. ) छान्दोग्ये श्रूयते तावत् कर्माङ्गालम्ब्युपासनम् ।
'ओमित्यक्षरमुद्गीथमुपासीते'ति वाक्यतः ॥ १ ॥
न कर्मस्वस्य नैयत्यं नह्यङ्गं कर्मणामिदम् ।
'तेनोभौ कुरुतो वेद यश्चैवं न च वेद यः' ॥ २ ॥
इति कर्मस्वधिकृतिः श्रूयतेऽविदुषोऽपि हि ।
उपासनफलं चापि श्रूयते पृथगेव हि ॥ ३ ॥
विद्यया यत्कृतं कर्म वीर्यवत्तरताऽस्य या ।
फलस्याप्रतिबन्धस्तु वीर्यवत्तरतोच्यते ॥ ४ ॥
इति भाष्ये तन्निर्धारणानियमाधिकरणम् ॥ १७ ॥

---

## प्रदानवदेव तदुक्तम् ॥ ३ । ३ । ४२ ॥

कर्माद्यधिकरणे दहरविद्या विचारिता तद्विद्यानुबन्ध्यन्यदिह विचार्यते । समनन्तरपूर्वाधिकरणं तु प्रासङ्गिकम् । 'तद्य इहात्मानमनुविद्य

---

### प्रदानवदेव तदुक्तम् ॥ ३ । ३ । ४२ ॥

छान्दोग्ये दहरविद्यायां श्रूयते—'तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' इति । अत्र दहराकाशोपासनविधानानन्तरं 'एतांश्च सत्यान् कामानि'ति गुणानामुपास्यता श्राव्यते । दहराकाशस्यैव परमात्मस्वरूपस्यैते गुणाः । गुणानामेषां चिन्तनस्य गुणिनं विना कर्तुमशक्यतया पुनरपि दहराकाशस्योक्तगुणविशिष्टतयोपासने आवृत्तिः कार्या, पूर्वं स्वरूपेणोपासनम्, तस्यैव गुणविशिष्टतया पुनरुपासनमिति । एवमावृत्तौ निदर्शनम्—प्रदानवदिति । 'इन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेत् इन्द्रायाधिराजायेन्द्राय स्वराज्ञे' इति श्रूयमाणराजत्वादिगुणभेदात् इन्द्रस्य त्यागोद्देश्यस्य धर्मिण ऐक्येऽपि देवताभेदमभिप्रेत्य पुरोडाशप्रदानस्यावृत्तिर्भवति यथा तथेहोपास्यस्य गुणोपासनेष्वावृत्तिः । तच्चेदं गुणभेदनिबन्धनं देवतानानात्वमुक्तं सङ्कर्षकाण्डे 'नाना वा देवता पृथक्त्वा'दिति ॥ ४२ ॥

इति प्रदीपे प्रदानाधिकरणम् ॥ १८ ॥

---

व्रजन्त्येतांश्च सत्यान् कामा'नित्यत्र प्रथममात्मनो दहराकाशस्योपासनम् 'आत्मानमनुविद्य'त्यनेनोक्त्वा 'एतांश्च सत्यान् कामानि'ति गुणोपासनमभिधीयते। अत्र संशयः—किं दहराकाशस्य परमात्मनो धर्मिणो गुणोपासनेऽप्यावर्तनं पृथक् कार्यमुत नेति। आह—न पृथक् प्रतिगुणोपासनं तत्तद्गुणधर्मितया तस्यावृत्तिः कार्या। सकृदेव तदुपासनं समुचितम्। इदमभिहितं भवति—यद्यपि 'आत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामानि'ति पृथगुपासनं वाक्यतः प्रतीयते अथापि उपास्यस्य दहराकाशस्य धर्मिण ऐक्यात् तत्तद्गुणविशिष्टतदुपासनेनैव तत्रैणैव धर्मिधर्मोभयोपासनसिद्धेः। पृथक् धर्मचिन्तनमनु धर्मिचिन्तनं नैव कार्यमिति।

**अत्रोच्यते**—पृथगेव प्रतिगुणचिन्तनं दहराकाशस्य अपहतपाप्मत्वादितत्तद्गुणधर्मितया चिन्तनं कार्यमेव। आत्मानमनुविद्येत्यनेन प्राप्तं दहराकाशस्योपासनं आनन्दत्वादिस्वरूपोपस्थापकधर्ममुखेन। एतांश्च सत्यान्कामानित्यनेन प्राप्तं तु तत्तद्गुणविशिष्टतयेति प्रतिगुणचिन्तनं गुणिचिन्तनमावर्तनीयम्। कस्मात्? उपास्याकारभेदात्। यद्यपि धर्मी दहराकाश एकः, अथापि गुणभेदात् स भिद्यते। प्रथमं दहराकाशस्य हृदयपुण्डरीकावस्थितस्य स्वेनानन्दत्वेन रूपेणोपासनम्। अथ अपहतपाप्मा, विजरः, विशोकः, इति च तत्तद्गुणविशिष्टतयेति रूपं भिद्यत एव। तदिदं निदर्शनोक्त्या निरूप्यते—प्रदानवदेव तदुक्तमिति। प्रदानं हविषः, तस्य चावृत्तिः 'इन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेत् इन्द्रायाधिराजायेन्द्राय स्वराज्ञे' इत्यत्र श्रूयमाणविशेषणभेदात् देवताभेदसिद्धेः कार्या भवति। तदुक्तम्—पूर्वतन्त्रे 'नाना वा देवता पृथक्त्वा'दिति। 'इन्द्राय राज्ञे' इत्यादिवचनसिद्धा त्रिपुरोडाशा काचिदिष्टिः, सेयं त्रैधातवीयेष्टिरुच्यते। अस्यामिष्टौ त्रयाणां पुरोडाशानां युगपदवदानवत् संप्रदानमपि युगपदेवेति 'अपृथक् संप्रदानमवदानैकत्वा'दिति पूर्वपक्षं कृत्वा 'नाना वा देवता पृथ-

क्त्वा'दित्यनेन राजत्वाधिराजत्वादिभिर्विशेषणैर्देवताभेदमभिप्रेत्य प्रदानावृत्तिः सिद्धान्तिता । तद्वदिहापि बोध्यम् ॥ ४२ ॥

(अ. स.) श्रूयते दहराकाशगुणानामप्युपासनम् ।
तत्र किं दहराकाशस्यास्ति धर्मितयाऽन्वयः ॥ १ ॥
आह–तस्योपासनं तु प्राप्तं वाक्यान्तरेण तत् ।
पुनस्तस्यात्र चावृत्तेरनौचित्यादनन्वयः ॥ २ ॥
अत्रोच्यते किमावृत्तावनौचित्यमिहोच्यताम् ।
प्रदानावृत्तिवद्युक्ता गुण्यावृत्तिर्गुणस्मृतौ ॥ ३ ॥
विशेष्यदेवतैक्येऽपि विशेषणविभेदतः ।
देवताभेदमाश्रित्य प्रदानावृत्तिरीरिता ॥ ४ ॥
स्वरूपेणोपासनात्तु विशिष्टोपासनं त्विदम् ।
पृथग्भूतं तदावृत्तेरर्थवत्त्वं विभाव्यताम् ॥ ५ ॥

इति भाष्ये प्रदानाधिकरणम् ॥ १८ ॥

---

## लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ३ । ३ । ४३ ॥

नारायणीये श्रूयते–'सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम् । विश्वं नारायणं देवमक्षरं परमं प्रभुम् ।' इत्यारभ्य 'सोऽक्षरः परमः स्वराडि'त्यन्तम् । अत्र संशयः–किमिदं प्रकरणपूर्वानुवाकगतदहरविद्यावाक्ये-

---

तैत्तरीयके दहरविद्याप्रकरणे इदमाम्नायते–'सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम् । × × विश्वतः परमं नित्यं विश्वं नारायणं' इत्यारभ्य 'सोऽक्षरः परमः स्वरा'डित्यन्तम् । इदं दहरविद्योपास्यदेवताविशेषनिर्धारणार्थमिति प्राप्ते उच्यते––

### लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ३ । ३ । ४३ ॥

इदं वाक्यं सकलपरविद्योपास्यविशेषनिर्धारकमेव । कस्मात् ? लिङ्गभूयस्त्वात्–सर्वब्रह्मविद्यासाधारण्ये भूयांसि हि लिङ्गानि–चिह्नानि अक्षर-शम्भु-शिव-परब्रह्म-परज्योतिः-परतत्त्व-परमात्मादितत्तत्पदविशेषलक्षणानि समुपल-

नैकवाक्यतामापद्य नारायणस्य दहरविद्योपास्यत्वं गमयति, उत स्वतन्त्र-वाक्यं भूत्वा सर्वविद्योपास्यत्वं नारायणस्य गमयति इति ।

आह—दहरवाक्यैकवाक्यतया दहरविद्योपास्यतां गमयति । पूर्वानुवाके 'दह्रं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् । तत्रापि दह्रं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम् ।' इति दहरविद्या प्रकृता, तस्मात् प्रकरणबलात्तदेकवाक्यतया समनन्तरानुवाक्यगतमिदं वाक्यं दहरविद्योपास्यतामात्रमवगमयति न सर्वविद्योपास्यताम्, अस्मिन्नप्यनुवाके 'पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम् ।' इति हृदयपुण्डरीकं श्रूयते, ततश्च प्रकरणैक्यं सिध्यतीति ।

अत्रोच्यते । लिङ्गभूयस्त्वात् । लिङ्गं—ज्ञापकं नारायणस्य सर्वविद्योपास्यताज्ञापकम्, तच्च वाक्यलक्षणम्, तेषामत्र भूयस्त्वात् । अक्षरविद्याप्रभृतिषु तत्र तत्र अक्षरपरब्रह्मपरमात्मपरज्योतिः-परतत्त्वशम्भुशिवादिशब्दैर्निर्दिश्योपास्यतया यद्विहितं तस्यैव नारायणत्वविधायकानां वाक्यानां भूयस्त्वात् नारायणस्यैव सर्वविद्योपास्यत्वमत्र गम्यते । तानि वाक्यानि यथा—'विश्वं नारायणं देवमक्षरं परमं प्रभुम्' 'नारायणः परं ब्रह्म तत्त्वं नारायणः परः' 'नारायणं महाज्ञेयं विश्वात्मानं परायणं' 'नारायणपरो ज्योतिरात्मा नारायणः परः' 'शाश्वतं शिवमच्युतम्' इत्यादीनि । प्रकरणाल्लिङ्गं वाक्यं च बलीयः । तदपि—बलीयस्त्वं चोक्तं पूर्वतन्त्रे 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये परदौर्बल्यमर्थविप्रकर्षा'दिति । यत्तु 'पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुख'मिति हृदयपुण्डरीकश्रवणं दहरविद्याशेषतामस्यानुवाकस्य गमयतीति । तन्न । उक्तेन वाक्यबलेन नारायणस्य सर्वविद्योपास्यत्वेऽवधृते दहरविद्योपास्यत्वमपि तस्यैवेत्येतन्मात्रज्ञापने तत्पर्यवस्यति । तस्मात् सर्वविद्योपास्यत्वं नारायणस्य विदधात्ययमनुवाकः ।

---

भ्यन्ते, तैस्तैः पदैरनूद्य स च नारायण इति देवताविशेषोऽवधार्यते । प्रकरणाच्च लिङ्गं बलीयः । तदपि—लिङ्गस्य बलीयस्त्वं प्रकरणादुक्तं पूर्वकाण्डे ॥ ४३ ॥

इति प्रदीपे लिङ्गभूयस्त्वाधिकरणम् ॥ १९ ॥

ननु 'सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम्' इति द्वितीयाश्रवणात् पूर्वानुवाके श्रूयमाणेनोपासिनाऽन्वयः अवश्यमभ्युपेयः । तथा चास्य दहरविद्याशेषत्वं सिध्यतीति चेत् । नैतत् । पूर्वानुवाके हि–उपासीतेति न श्रूयते, अपि तु 'तस्मिन्यदन्तस्तदुपासितव्य'मिति । कृत्यप्रत्ययेन च कर्मणोऽभिधानान्न द्वितीया घटेत । अस्मिंश्च उपासीतेति न श्रूयते । येनोपासिनाऽन्वय इति वक्तुं शक्येत । प्रथमान्तमेव तु सर्वं श्रूयते । तस्मात् प्रथमार्थे द्वितीयेत्येव युक्तम् । अन्ते च श्रूयते–'तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः । स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्' इति । अनेन च सर्वविद्योपास्यत्वं नारायणे निर्धार्यते ॥४२॥

(अ. स.) 'सहस्रशीर्ष'मित्यादिवाक्यहार्दं विचार्यते ।
नारायणानुवाके तत् श्रूयते तैत्तिरीयके ॥ १ ॥
इदं दहरविद्यायाः प्रत्यभिज्ञापकैः पदैः ।
दहं विशोकं गगनमित्याद्यैस्तु समन्वितम् ॥ २ ॥
उपास्यत्वेनाभिहितो योऽसौ दहरविद्यया ।
स नारायण एवेति विशेषमवधारयत् ॥ ३ ॥
तस्या दहरविद्यायाः शेषभूतं प्रवर्तते ।
अत्रोच्यते ब्रह्मविद्यामात्रशेषत्वमस्य तु ॥ ४ ॥
तच्चिह्नवाक्यभूयस्त्वात् वाक्यं हि बलवत्तरम् ।
बलीयस्त्वं प्रकरणात् वाक्यस्योक्तं हि दृश्यते ॥ ५ ॥
सर्वासु ब्रह्मविद्यासु श्रीमान् नारायणः परः ।
उपास्य इति वेदान्तहार्दमित्यत्र साधितम् ॥ ६ ॥

इति भाष्ये लिङ्गभूयस्त्वाधिकरणम् ॥ १९ ॥

# पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत् ॥ ३ । ३ । ४४ ॥

प्रबलेन वाक्यप्रमाणेन नारायणानुवाकस्य प्रकरणतोऽवगम्यमानं दहरविद्यामात्रशेषत्वं निरस्तम् । इह च प्रकरणेनावगम्यमानं मनश्चितादीनां क्रियामयक्रत्वङ्गत्वं प्रबलप्रमाणाबाधितमित्याशङ्क्य निरस्यते इति पूर्वाधिकरणेनास्याधिकरणस्य सङ्गतिः । शतपथब्राह्मणे अग्निरहस्ये—'तत् षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीनर्कान् मनोमयान्मनश्चितो वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचित' इति मनश्चितादयोऽग्नयः श्रूयन्ते । ते चैते इष्टकचितस्थानापन्नाः । पुरुषायुषे शतवर्षपरिमिते एकैकस्मिन् दिने जायमाना मानसवृत्तिसमुदाया अग्नित्वेनोपास्याः, ते च मनश्चिताः संहत्य षट्त्रिंशत्सहस्रं संपद्यन्ते । एवमेव वाक्चिताः—अनुदिनं जायमानवाग्व्यापारसमुदाया अग्नित्वेनोपास्यमानाः षट्त्रिंशत्सहस्रं संपद्यन्ते । एवमेव प्राणचितादयः । कर्मचिताः—कायिकव्यापाराः । अग्निचिताः—जाठराग्निव्यापारा

---

**पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत् ॥३।३।४४॥**

वाजसनेयके अग्निरहस्ये श्रूयते—'मनश्चितो वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचित' इति । एते हि मनश्चितादयोऽग्नयः कर्मसापेक्षाः, स्वदेशे क्रतोर्विधानाभावेऽपि पूर्वत्र 'असद्वा इदमग्रे आसी'दित्यादिना इष्टकचिताग्नेः प्रकृतत्वात् तेषां च क्रियामयक्रत्वनुप्रवेशनियमेन, तत्प्रकरणात् तेनेष्टकचिताग्निना पूर्वेण विकल्पमर्हन्ति, तदेतदुच्यते—पूर्वविकल्पः प्रकरणादिति । पूर्वेणैषां विकल्पः प्रकरणादवगम्यते इत्यर्थः । ननु सांपादिकानां विद्यामयानां मनश्चितादीनां कथं क्रियामयेन विकल्पः ? उच्यते, सत्यं सांपादिकाः, अथापि क्रियाः स्युः, तत्र निदर्शनम्—मानसवदिति । यथा द्वादशाहे कर्मविशेषेऽविवाक्ये दशमे दिने संपाद्यमानानां मानसानां—केवलमनोनिष्पाद्यानां ग्रहणासादनस्तोत्रशस्त्रप्रभृतीनामङ्गतया क्रियामयक्रतौ क्रियारूपता तथेहापीति ॥ ४४ ॥

बोध्याः । अर्कान्—अर्चनीयानित्यर्थः । त एते मनश्चितादयः किं विद्यामयक्रत्वङ्गभूताः, उत क्रियामयक्रत्वङ्गभूता इति संशये—आह—क्रियामयक्रत्वङ्गभूता एव । कथम् ? । यद्यपि स्ववाक्ये न क्रियामयक्रतुः श्रूयते । अथापि पूर्वं 'असद्वा इदमग्र आसी'दित्यादिना इष्टकचिताग्नेः प्रकृतत्वात् तस्य च क्रियामयक्रत्वव्यभिचरितत्वेन क्रियामयक्रतोरुपस्थितितः सन्निहितत्वात् प्रकरणात् क्रियामयक्रत्वङ्गता मनश्चितादीनां युक्ता । 'तेषामेकैक एव तावान्यावानसौ पूर्व' इति तत्कार्यातिदेशाच्च मनश्चितादीनामिष्टकचितादिना विकल्पेन क्रियामयक्रत्वङ्गभाव उपपद्यते । इति । तदिदमभिप्रेत्याह—पूर्वविकल्पः प्रकरणात् स्यात् क्रियेति । मनश्चितादयः प्रकरणात् पूर्वेणेष्टकचितेन विकल्प्यमानाः क्रियामयक्रत्वङ्गभावं प्राप्य क्रियारूपा एव स्युः । तत्र निदर्शनं मानसवदिति । मानसग्रहवदित्यर्थः । द्वादशाहस्य दशममहरविवाक्यमुच्यते । स्तोत्रशस्त्रादिषु विस्पष्टवाक्यराहित्यात् । तस्मिन्नहनि मानसग्रहो विहितः । यस्मिन् यागे ग्रहणासादनस्तोत्रशस्त्रहवनप्रत्याहरणभक्षणानि मानसान्येव, मनसैव निष्पाद्यन्ते । सोऽयं मानसग्रहो विद्यामयोऽपि क्रियामयक्रत्वङ्गतया यथा क्रियारूप एव भवति तथेति यावत् ॥ ४४ ॥

## अतिदेशाच्च ॥ ३ । ३ । ४५ ॥

'तेषामेकैक एव तावान् यावानसौ पूर्वः' इति इष्टकचिताग्निवीर्यस्यातिदेशाच्चेष्टकचितैर्मनश्चितानां विकल्पसिद्ध्या क्रियामयक्रत्वङ्गत्वं सिध्यति ॥ ४५ ॥

---

इतश्च मनश्चितादीनां क्रियारूपत्वं गम्यते—

## अतिदेशाच्च ॥ ३ । ३ । ४५ ॥

'तेषामेकैक एव तावान् यावानसौ पूर्व' इति इष्टकचिताग्नेः वीर्यस्यातिदेशात् । अतिदेशश्चायं विकल्पं गमयति । विकल्पतश्च क्रियारूपत्वम् ॥ ४५ ॥

अत्रोच्यते—

## विद्यैव तु निर्धारणाद्दर्शनाच्च ॥ ३ । ३ । ४६ ॥

तुशब्दात् पक्षो व्यावर्त्यते । मनश्चितादयो विद्यैव—विद्यामयक्रत्वन्वयिन एव । न तु क्रियामयक्रत्वन्वयिनः । कस्मात्? । निर्धारणात् 'ते हैते विद्याचित एव विद्यया हैवैते एवंविदश्चिता भवन्ती'ति निर्धारणश्रवणात् । ननु विद्याचित एवेत्यवधारणेन क्रियामयक्रत्वन्वयित्वव्यावृत्तिः कथम्? । मनोवागादिव्यापाराणामिष्टकानामिव चयनानुपपत्तेः । मनसैव केवलं संपादितत्वेन मनश्चितादीनां विद्यामयत्वे सिद्धेऽपि पुनः 'ते हैते विद्याचित एवे'त्यादिश्रवणं क्रियामयान्वयित्वं व्यावर्तयति । दर्शनाच्च—अत्रैव श्रूयते विद्यामयः क्रतुः एतेषामनुबन्धी—'तेन मनसैवाधीयन्त मनसैवाचीयन्त मनसैतेषु ग्रहा अगृह्यन्त मनसा स्तुवन्त मनसा शंसन् यत्किं च यज्ञे कर्म क्रियते यत्किंच यज्ञीयं कर्म मनसैव तेषु मनोमयेषु मनश्चित्सु मनोमयमक्रियत' इति । तत् क्रतुरपि विद्यामयोऽत्र दृश्यते । तस्मात् विद्यामयक्रत्वन्वयिन एवैते । ननु 'मनसैव यजन्ते' इति यजिर्न श्रूयते, तत् कथमुच्यते विद्यामयः क्रतुः श्रूयते इति । नैतत् । असत्यपि यजिना निर्देशे 'यत्किंच यज्ञे कर्म क्रियते

---

अत्रोच्यते—

### विद्यैव तु निर्धारणाद्दर्शनाच्च ॥ ३ । ३ । ४६ ॥

तुशब्देन पूर्वः पक्षो व्यावर्त्यते । मनश्चितादयो विद्यैव—विद्यामयक्रत्वङ्गभूता एव । 'ते हैते विद्याचित एव' इति एवकारेण निर्धारणात् । मानसचाक्षुषादिव्यापाररूपाणामेषां मनसैव संपाद्यमानानां इष्टकानामिव चयनासंभवेन विद्यारूपत्वे सिद्धेऽपि विद्याचित एवेत्यवधारणं विद्यामयक्रत्वनुप्रवेशमेव गमयति । तत्रैव 'मनसैवाधीयन्त मनसैवाचीयन्त मनसैवेषु ग्रहा अगृह्यन्त मनसाऽस्तुवन् मनसा शंसन् यत्किञ्च यज्ञे कर्म क्रियते यत्किञ्च यज्ञीयं कर्म मनसैव तन्मनोमयेषु मनश्चित्सु मनोमयमक्रियत' इति मनोमयस्य क्रतोर्दर्शनाच्च ॥ ४६ ॥

यत्किंच यज्ञीयं कर्म मनसैव तेषु मनोमयेषु ××× मनोमयमक्रियत' इति श्रवणात् श्रुतप्राय एव विद्यामयः क्रतुः । यज्ञानुबन्धिनः सर्वस्य ग्रहणात् सोऽप्युन्नीयते इति ॥ ४६ ॥

नन्वथाप्यत्र विधेरश्रवणात् फलसंबन्धाप्रतीतेश्च इष्टकचिताग्न्युपस्थापितक्रियामयक्रतावेवान्वये संभवति विद्यामयक्रत्वन्वयकल्पना नोपपद्यत इत्यत्राह—

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ३ । ३ । ४७ ॥

प्रकरणापेक्षया श्रुत्यादीनां बलीयस्त्वात् विद्यामयक्रत्वन्वयस्य नैव बाधः । इदमभिहितं भवति । 'ते हैते विद्याचित एव' 'विद्यया हैवैते एवंविदश्चिता भवन्ति' इति श्रुतिः । एवकारश्रुतेः क्रियामयक्रत्वन्वयो बाध्यते । एते—मनश्चितादयः एवंविदः पुरुषस्य चिता भवन्ति, कया? विद्ययैव—विद्यामयान्वयेनैव, प्रयोजनस्य हेतुत्वविवक्षया तृतीया । विद्यामयक्रत्वन्वयायैव । श्रुतिश्च प्रकरणात् बलीयसी । 'तान् हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्ति' इति च लिङ्गम् । एवंविदे—विद्यामयक्रतुमतः कृते सर्वाणि भूतानि सर्वदा चिन्वन्ति इत्यर्थः। सर्वभूतकर्तृकत्वेन सर्वकालव्यापित्वेन मनसा भाव्यमानस्य चयनस्य परिमितकर्तृकालकक्रियामयेष्टकचितसंबन्धिक्रियामयक्रत्वन्वयो हि नोपपद्यते । लिङ्गं च प्रकरणात् बलीयः । तथा वाक्यं च 'एवंविदे चिन्वन्ती'ति । समभिव्याहारो हि वाक्यम् ॥ ४७ ॥

---

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ३ । ३ । ४७ ॥

ननु क्रियामयक्रतुप्रकरणपठितत्वात् प्रकरणेन विद्यामयक्रत्वन्वयो बाध्यते। अत्रोच्यते, न तेन बाधः । श्रुत्यादीनां—श्रुतिवाक्यलिङ्गानां प्रकरणात् बलीयस्त्वात् । श्रुतिस्तावत्—'ते हैते विद्याचित एवे'ति । वाक्यं च 'विद्यया हैवैत एवंविदश्चिता भवन्ती'ति । लिङ्गं च 'तान् हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपत' इति ॥ ४७ ॥

विधिप्रत्ययाश्रवणात् फलान्तराप्रतीतेश्च क्रियामयक्रतोरन्यो विद्यामयः क्रतुर्न सम्भवतीत्यत्राह—

## अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववत् दृष्टश्च तदुक्तम् ॥ ३ । ३ । ४८ ॥

'मनसैषु ग्रहा अगृह्यन्त मनसा स्तुवन्त मनसा शंसन्' इत्यादिना ये यज्ञानुबन्धिनः स्तोत्रशस्त्रादयः प्रतिपादिताः, तेभ्यो हेतुभ्यः इष्टकचितान्वयिनः क्रियामयक्रतोरन्यो विद्यामयक्रतुरत्रावगम्यते । आदिशब्देन पूर्वोक्ताः श्रुत्यादयो गृह्यन्ते । प्रज्ञान्तरपृथक्त्ववत्—प्रज्ञा–उपासना, उपसनान्तरवत्, यथा दहरविद्याद्युपासनाभेदः क्रियामयक्रतोः पृथग्भूतः श्रुत्यादिभिरवगम्यते तथैव विद्यामयक्रतुरपीति यावत् । एवं चानुबन्धादिभ्यः क्रियामयाद्विद्यामये यज्ञे पृथग्भूतेऽवगते सति तत्र विधिरश्रुतोऽपि कल्प्यः । एवं कल्प्यमानो विधिरन्यत्र दृष्टश्च, अप्राप्तेऽर्थे विधिकल्पनं हि दृष्टम् । तदुक्तं 'वचनानि त्वपूर्वत्वा'दिति । 'तेषामेकैक एव तावान् यावानसौ पूर्वः' इत्यनेनातिदेशेन इष्टकचितानेर्यत्फलं तदेवास्य मनश्चितादेः फलमित्यवगम्यते ॥ ४८ ॥

---

ननु विधिर्न श्रूयते, तथा फलसंबन्धश्च न श्रूयते, कथं क्रियामयक्रतोः पृथग्भूतो विद्यामयः क्रतुः सिध्येत् । उच्यते—

## अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववत् दृष्टश्च तदुक्तम् ॥ ३ । ३ । ४८ ॥

क्रत्वनुबन्धिनां ग्रहस्तोत्रशस्त्रादीनां 'मनसैषु ग्रहा अगृह्यन्ते'त्यादिना श्रवणात् पूर्वोक्तश्रुत्यादिभिश्च क्रियामयक्रतोः पृथक्त्वेन विद्यामयक्रतुः सिध्यत्येव । पार्थक्यं च प्रज्ञान्तरपृथक्त्ववत् । यथा प्रज्ञान्तरस्य दहरविद्यादेः क्रियामयक्रतोः पृथक्त्वं स्पष्टम्; एवं विद्यामयानामेषां क्रियारूपात् पृथक्त्वं स्पष्टमेव । विधिरश्रूयमाणोऽपि कल्प्य एव, अनुवादसरूपेष्वपि वाक्येष्वपूर्वत्वात् कल्प्यमानो विधिर्दृष्टः । विधिकल्पनं दृष्टमिति यावत् । तदुक्तं—'वचनानि त्वपूर्वत्वा'दिति ॥ ४८ ॥

ननु इष्टकचिताग्नेर्यत्फलं तस्य मनश्चितादिष्वतिदेशात् इष्टकचितस्य येन क्रतुद्वारेण यत् फलं तेन द्वारेण तदस्य फलमित्यवगमात् तयोर्विकल्पोऽवगम्यते इति चेत्तत्राह—

## न सामान्यादप्युपलब्धेर्मृत्युवत् नहि लोकापत्तिः ॥ ३ । ३ । ४९ ॥

न अतिदेशमात्रेण अवान्तरव्यापारेणाप्येकरूपेण भाव्यमिति । येन द्वारेण यत्फलं जनयति तेन द्वारेणैव तत्फलं जनयतीति न ह्यस्ति नियमः । सामान्यादप्यतिदेशोपलब्धेः—केनचिदंशेन साम्यमात्रेण तदुपलब्धेः । यथा 'स एष एव मृत्युर्य एष एतस्मिन् मण्डले पुरुषः' इति मण्डलपुरुषे मृत्युत्वातिदेशः संहर्तृत्वसामान्यात् क्रियते, न हि लोकापत्तिः—लोकतोऽपि न साम्यनियमः । तत् इष्टकचिताग्नेः क्रियामयक्रतुद्वारेण यत्फलम्, मनश्चिताग्नेः विद्यामयक्रतुद्वारेण तत्फलं सिध्यतीति फलमात्रातिदेशे न काप्यत्र क्षतिः ॥ ४९ ॥

---

## न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ३ । ३ । ४९ ॥

ननु 'तेषामेकैक एव तावानि'त्यादिना योऽयमतिदेशस्तेनेष्टकचितैर्मनश्चितादीनां सादृश्यावगमादवान्तरव्यापारेणाप्येकेन भाव्यमिति क्रियामयक्रतावेवानुप्रवेशो युक्त इति चेन्न । सामान्यात्—यस्मात् कस्माच्चिदपि सामान्यात् समानधर्मयोगमात्रादपि सादृश्योपलब्धेः । सामान्यं चेह इष्टकचितानां क्रियामयक्रतुद्वारा यथा फलं, सांपादिकानामेषां मनश्चितादीनां विद्यामयक्रतुद्वारा तथा फलमिति । 'स एष मृत्युर्य एष एतस्मिन्मण्डले पुरुषः' इत्यत्र मृत्युशब्देनोपात्त इत्येतावता मण्डलस्थपुरुषस्य न मृत्युलोकस्थित्यपेक्षाऽपि, संहर्तृत्वमात्रेण मृत्युसादृश्योपपत्तेः । तथा प्रकृतेऽपि ॥ ४९ ॥

## परेण च शब्दस्य ताद्विध्यं भूयस्त्वा-त्त्वनुबन्धः ॥ ३ । ३ । ५० ॥

अग्निरहस्ये परेण ब्राह्मणेन, शब्दस्य—मनश्चिताद्यभिधायकशब्दस्य, ताद्विध्यम्—विद्यामयावबोधकत्वमवगम्यते । चकारः पूर्वसमुच्चायकः । यथा पूर्वेण तथा परेण चेत्यर्थः । उत्तरब्राह्मणे श्रूयते—'अयं वाव लोकः एषोऽग्निचितस्तस्याप एव परिश्रिताः' इत्यादि । अत्र चितेऽग्नौ पृथिवीदृष्टिर्विधीयते, अग्निपरिषेचनजले समुद्रदृष्टिर्विधीयते । एवं 'मनुष्याय जुष्मत्य इष्टका' इत्यादिनाऽप्यनुबन्धिषु भूलोकादितत्तद्वस्तुविशेषदृष्टयो विधीयन्ते । अतो मनश्चितादीनां विद्यामयानुबन्धित्वमेव युक्तम् । अन्ते च 'स यो हैतदेवं वेद लोकं पृणानमेनं भूतमेतत्सर्वमभिसंपद्यते' इति पृथक्फलमपि श्रूयते । नन्वेवं सति बृहदारण्यके एव मनश्चितादीनामनुबन्धो युक्तः न तु अग्निरहस्ये । तत्राह—भूयस्त्वात्त्वनुबन्धः—मनश्चितादिषु संपाद्यमानानामभ्यङ्गानां भूयस्त्वादग्निरहस्ये एव तत्सान्निध्यादनुबन्धः ॥ ५० ॥

---

## परेण च शब्दस्य ताद्विध्यं भूयस्त्वा-त्त्वनुबन्धः ॥ ३ । ३ । ५० ॥

किञ्च परेण—उत्तरेण वाक्यसन्दर्भेण—शब्दस्य मनश्चितादिवाचकशब्दस्य ताद्विध्यं—विद्यामयक्रत्वनुबन्धित्वमवगम्यते । 'स यो ह वैतदेवं वेद लोकं पृणानमेनं भूतमेतत्सर्वमभिसंपद्यते' इत्यादिना परेण सन्दर्भेण विद्याफलश्रवणात् । नन्वेवं सति विद्याप्रकरणे बृहदारण्यकेऽस्य मनश्चितादेः पाठः समुचितः, किमिति क्रियाप्रकरणेऽत्राग्निरहस्ये पाठः? अत्राह । भूयस्त्वादिहानुबन्धः—मनश्चितादिषु संपादनीयानामभ्यङ्गानां भूयस्त्वादिहानुबन्धः ॥ ५० ॥

इति प्रदीपे पूर्वविकल्पाधिकरणम् ॥ २० ॥

( अ. स. ) मनश्चिताद्यः केचित् श्रुताः सांपादिकाग्नयः ।
विनियोगस्तु वक्तव्यस्तेषां तावत् क्वचित् क्रतौ ॥ १ ॥
सन्निधौ तस्य वाक्यस्य क्रतुर्नैको विधीयते ।
पूर्ववाक्ये श्रूयमाणैस्तैरिष्टकचिताग्निभिः ॥ २ ॥
नियतक्रतुसंबन्धैर्विकल्पस्तैषु संभवात् ।
क्रियामयक्रतावेषां प्रवेशो ननु युज्यते ॥ ३ ॥
दशमेऽह्नि द्वादशाहे दृश्यते मानसान्वयः ।
किञ्चेष्टकचिताग्नीनां वीर्यमेष्वतिदिश्यते ॥ ४ ॥
अत्रोच्यते समावेश एषां विद्यामयक्रतौ ।
निर्धारणश्रुते'र्विद्याचित एवे'ति वाक्यतः ॥ ५ ॥
अत्रैव श्रूयते चैषां शेषी विद्यामयः क्रतुः ।
यज्ञीयं क्रियते कर्म यदिष्टकचिताग्निषु ॥ ६ ॥
मनश्चितेषु तत्सर्वं श्राव्यते मनसेति हि ।
श्रुत्यादीनां बलीयस्त्वात् बाधः प्रकरणान्न च ॥ ७ ॥
यज्ञानुबन्धिनो ये च स्तोत्रशस्त्रग्रहादयः ।
श्रूयन्ते मानसा यस्मात्कल्प्यो विद्याक्रतोर्विधिः ॥ ८ ॥
अत एव पृथक्त्वं च प्रज्ञान्तरपृथक्त्ववत् ।
न चातिदेशमात्रेण साम्यं सर्वांशतो भवेत् ॥ ९ ॥
न तल्लोकस्थितिरपि मृत्युतौल्येन गम्यते ।
परेण ब्राह्मणेनास्य विशिष्टफलबोधिना ॥ १० ॥
मनश्चितादिकाग्नीनां विद्यार्थत्वं च गम्यते ।
क्रियाप्रकरणे पाठो भूयस्त्वात्त्वनुबन्धिनाम् ॥ ११ ॥

इति भाष्ये पूर्वविकल्पाधिकरणम् ॥ २० ॥

---

## एक आत्मनः शरीरे भावात् ॥ ३ । ३ । ५१ ॥

पूर्वम् 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्चे'त्यनेन सर्वास्वपि परविद्यासु उपास्यस्येवोपासकस्यापि चिन्तनीयत्वमुक्तम् । तत्रोपासकः तदानीन्तनज्ञातृत्वमात्राकारेण चिन्तनीयः, उत मुक्तावाविर्भविष्यताऽपहतपाप्मत्वाद्याकारेणापि इति संशयः । तत्र एके आहुः—ज्ञातृत्वकर्तृत्वाद्याकारमात्रेणोपासकस्वरूपचिन्तनमेव युक्तम् । आत्मनः शरीरे भावात्—उपासनकर्तुरस्यात्मनः उपासनसमये शरीर एव भावात् । ज्ञातृत्वादेरेव च तादात्विकत्वात् । अपहतपाप्मत्वादिकं हि व्यपेतबन्धस्याशरीरस्य । नहि फलार्थी क्रतुनिष्ठः उपायानुष्ठानदशायां भाव्युपेयाकारविशिष्टमात्मानमनुचिन्तयति । ज्ञातृत्वकर्तृत्वमात्रेणैव तु चिन्तयति । तदेवमेवात्राप्युपासकः उपासनसमये यद्रूपमात्मनः समनुभूयमानं तेनैवाकारेणात्मानमनुचिन्तयेत् । तावतैवोपायनिष्पत्तेः । ननु तत्क्रतुन्यायेन फलसंपत्तेरवश्यमपहतपाप्मत्वादिरूपेण स्वस्वरूपं चिन्तनीयम् । नैतत् । स च न्यायः उपास्यविषयो न तूपासकविषय इति ॥ ५१ ॥

अत्रोच्यते—

## व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॥ ३ । ३ । ५२ ॥

नतु—नैव, ज्ञातृत्वमात्रं चिन्तनीयमित्येतन्नैव युक्तम् । किन्तु

---

प्रासङ्गिको मनश्चितविचारः । उपास्यं प्रक्तम् । परमात्मन इवोपास्यस्योपासकस्य स्वस्य स्वरूपमप्युपासकेन चिन्तनीयम् । तत्र विचार्यते—स्वस्य स्वरूपं केन प्रकारेण विचिन्त्यमिति । अत्राह—

**एक आत्मनः शरीरे भावात् ॥ ३ । ३ । ५१ ॥**

एकः—एकप्रकारः, येन ज्ञातृत्वकर्तृत्वादिप्रकारेण कर्मनिष्ठैरात्मा विचिन्त्यते तेनैव प्रकारेण विद्यानिष्ठैरपि विचिन्त्यो नान्येन प्रकारेण । आत्मनोऽस्य शरीरे भावात् । शरीरे वर्तमानो हि तथैवोपलभ्यते—ज्ञाता कर्तेति ॥ ५१ ॥

अत्रोच्यते—

**व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॥ ३ । ३ । ५२ ॥**

न तु—नैकप्रकार उपास्यः, ज्ञातृत्वमात्राकारो नोपास्यः, किन्तु व्यति-

व्यतिरेकः–बद्धावस्थातो यो व्यतिरेकः–वैलक्षण्यमपहतपाप्मत्वादि तदप्युपासनसमये विचिन्त्यम् । कस्मात् ? तद्भावभावित्वात्–तद्भावस्य व्यतिरिक्तभावस्य अपहतपाप्मत्वादेर्भावित्वात् । तथोपासनसमये स्वात्मस्वरूपाननुसन्धाने तत्स्वरूपाविर्भावो हि नैव भवेत् । यथोपासनं हि फलम् । उपास्यकोटौ उपास्यविशेषणतया उपासकस्यात्मापि ह्यनुप्रविष्टः । स्वशरीरकतयाऽपि हि परंब्रह्मोपास्यम् । अपहतपाप्मत्वादिविशिष्टस्वात्मशरीरकपरमात्मोपासनत एव तु अपहतपाप्मत्वादिविशिष्टस्वस्वरूपाविर्भावो भवेत् । श्रूयते च–'एवं क्रतुर्ह्यमुं लोकं प्राप्याभिसंभवितास्मी'ति । उपलब्धिवत्–यथा ब्रह्मोपलब्धिर्विहिता यथावस्थितब्रह्मस्वरूपविषया, तथाऽऽत्मोपलब्धिरपि यथावस्थितात्मस्वरूपविषयैव ॥५२॥

(अ. स.) उपासकः स्वस्वरूपं केन रूपेण चिन्तयेत् ।
ज्ञातृत्वादिप्रकारेण स्वं रूपं नन्वनुसरेत् ॥ १ ॥
ज्ञाता कर्ता ह्यसावात्मा शरीरमधितिष्ठति ।
अत्रोच्यत इतो मुक्तो येन त्वाविर्भविष्यति ॥ २ ॥
स्वेन तेन हि रूपेण स्वात्मानमनुचिन्तयेत् ।
तच्चापहतपाप्मत्वसत्यसङ्कल्पतादिकम् ॥ ३ ॥

इति भाष्ये शरीरे भावाधिकरणम् ॥ २१ ॥

---

रेकः–संसरणदशायामुपलभ्यमानात् आकारात् विशेषः–अपहतपाप्मत्वादिर्विशुद्धोऽप्यवश्यमुपास्यः । विशुद्धेनापहतपाप्मत्वादिना रूपेणोपास्यः । कस्मात् । तद्भावभावित्वात्–तद्भावस्य–व्यतिरेकभावस्य भावित्वात्–मोक्षदशायां भावित्वात् । साधनदशायां चेत्तथा नोपास्येत, पश्चात्तथाऽऽविर्भावो न घटेत । 'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवती'ति यथोपासनं फलविधानात् । उपलब्धिवत्–ब्रह्मणः प्राप्यस्य यथा तदसाधारणेन रूपेणोपलब्धिरुपासनं, तथैव प्राप्तुः स्वस्यापि स्वाभाविकेनासाधारणेन रूपेणोपासनं विधेयम् । ब्रह्मणः शरीरतया स्वात्मनोऽपि विशेषणत्वात् प्रत्यगात्मनोऽप्यस्त्येव प्राप्यकोटावप्यन्वयः ॥ ५२ ॥

इति प्रदीपे शरीरे भावाधिकरणम् ॥ २१ ॥

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ३ । ३ । ५३ ॥

'ओमित्येतदक्षरमुद्गीथमुपासीत' 'लोकेषु पञ्चविधं सामोपासीत' 'उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थं इयमेव पृथिवी' इत्यादिभिः कर्माङ्गावबद्धाः—कर्माङ्गविषयका उपासना विधीयन्ते। अत्र संशयः—कर्माङ्गविषयकोपासनाविशेषाः प्रतिशाखं कर्माङ्गोद्गीथादिषु संबन्ध्यन्ते उत नेति। ननु सर्ववेदान्तप्रत्ययन्यायेनैव निर्णयसंभवात् पृथगधिकरणारम्भो व्यर्थः। नैवम्। शाखाभेदेन स्वरभेदात् नैकविषयतेति स्यादिह शङ्कावसरः। अत्राह—न प्रतिशाखमन्वयः। उद्गीथस्योद्गीथत्वेन सामान्यधर्मेणैक्येऽपि स्वरभेदेनोद्गीथव्यक्तीनां भेदात् 'उद्गीथमुपासीते'ति यस्यां शाखायां श्रूयते तच्छाखीय एवोद्गीथः सान्निध्यादुद्गीथशब्देनोपस्थाप्यते नेतर इति तदुपासनस्यैव विधिगोचरतया न तदुपासनस्य प्रतिशाखमन्वय इति। अत्रोच्यते। तुशब्देन पूर्वपक्षो व्यावर्त्यते। अङ्गावबद्धाः उपासनविशेषाः तत्तच्छाखास्वेव व्यवस्थिता इति नायं नियमः। किन्तु प्रतिवेदम्—प्रतिशाखम्। उद्गीथत्वेन सामान्यधर्मेण सकलशाखास्थोऽप्युद्गीथः स्वरतो भिन्नोऽप्युपस्थाप्यत एवोद्गीथशब्देनोपासनविधिवाक्यस्थेन। तत् प्रतिशाखं तदन्वयो युक्तः ॥ ५३ ॥

---

**अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ३ । ३ । ५३ ॥**

'ओमित्येतदक्षरमुद्गीथमुपासीते'त्यादिना छान्दोग्ये क्रत्वङ्गावबद्धाः—क्रत्वङ्गविषयका या उपासना विहितास्ताः यत्र श्रुतास्तास्वेव शाखासु नान्यत्रेति नायं नियमः। अपि तु प्रतिवेदम्—सर्वास्वपि शाखासु संबध्यन्ते। हीति प्रसिद्धौ। उद्गीथमुपासीतेत्यत्रोद्गीथशब्दः सामान्यपरो हि ॥ ५३ ॥

## मन्त्रादिवद्वाऽविरोधः ॥ ३ । ३ । ५४ ॥

मन्त्रादीनामिवाविरोधः । वेदान्तरोत्पन्नानाम् 'अग्निर्वै होत्र'मित्यादिमन्त्राणां शेषिणः क्रतोरेकत्वेन वेदान्तरे परिग्रहो दृष्टः, तथेहापीत्यविरोधः । आदिशब्दात् जात्यादिपरिग्रहः । 'अजोऽग्नीषोमीय' इति शाखान्तरविहितच्छागजातेः 'यदग्नीषोमीयं पशुमालभते' इति पशुमात्रमुपदिशति शाखान्तरे परिग्रहो दृष्टः, तथेहापीति ॥ ५४ ॥

(अ. स.) क्रत्वङ्गभूतोद्गीथादिगोचरोपासनाः खलु ।
शाखाभेदेन नियता उताहो नेति चिन्त्यते ॥ १ ॥
शाखाभेदेऽप्यभेदेन प्रधानस्याङ्गिनः क्रतोः ।
तदङ्गविषया यान्ति शाखाभेदेऽपि मन्त्रवत् ॥ २ ॥

इति भाष्ये अङ्गावबद्धाधिकरणम् ॥ २२ ॥

---

## भूम्नः क्रतुवज्यायस्त्वं तथा हि दर्शयति ॥ ३ । ३ । ५५ ॥

पूर्वस्मिन्नधिकरणे सामोद्गीथादि प्रस्तुतम् । तत्र साम्नः समस्तस्य व्यस्तस्य चोपासनं श्रुतम्, तद्वत् वैश्वानरविद्यायामपि वैश्वानरस्य द्युमूर्धादिसमस्तावयवकस्य व्यस्तावयवकस्य चोपासनं श्रूयमाणं युज्यते

---

**मन्त्रादिवद्वाऽविरोधः ॥ ३ । ३ । ५४ ॥**

मन्त्रादीनामेकशाखायां श्रूयमाणानामपि यथा शाखान्तरीयक्रतुसंबन्धेऽविरोधः तथाऽत्रापि ॥ ५४ ॥

इति प्रदीपे अङ्गावबद्धाधिकरणम् ॥ २२ ॥

---

**भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ३ । ३ । ५५ ॥**

'प्राचीनशाल औपमन्यव' इत्यारभ्य वैश्वानरविद्या श्रूयते । इयं च द्युलोकादिभिः पृथिव्यन्तैर्विभागैः मूर्धादिपादान्तावयवविभागविशिष्टतया परमात्मोपासनलक्षणा । तत्र प्रथमं द्युलोकाद्येकैकावयवकवैश्वानरोपासन-

इति शङ्कायामिदमधिकरणमिति सङ्गतिः। वैश्वानरविद्या छान्दोग्ये श्रूयते–'औपमन्यव कं त्वमात्मानमुपास्से इति दिवमेव भगवो राजन्निति × × × प्राचीनयोग्य कं त्वमात्मानमुपास्से इति आदित्यमेव भगवो राजन्निति × × × वैयाघ्रपद्य कं त्वमात्मानमुपास्से इति वायुमेव भगवो राजन्निति ××× शर्कराक्ष्य कं त्वमात्मानमुपास्से इति आकाशमेव भगवो राजन्निति ××× वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति अप एव भगवो राजन्निति ××× गौतम कं त्वमात्मानमुपास्स इति पृथिवीमेव भगवो राजन्निति। तान् होवाच एते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसोऽन्नमत्थ यस्त्वेवमेतं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेषात्मस्वन्नमत्ती'ति। अनेन विज्ञायते द्युलोकादिषु वैश्वानरस्य मूर्धादिदृष्टिः कार्येति। अत्र संशयः–वैश्वानरस्य द्युलोकाद्यवयवकतया श्रूयमाणस्य द्युलोकमूर्धकत्वेनोपासनं आदित्यचक्षुष्कत्वेनोपासनमित्येवंरीत्या तत्तदवयवकत्वेन व्यस्तमुपासनं कार्यम्, उत 'यस्त्वेवमेतं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमात्मानमुपास्ते' इत्यपि श्रवणात् व्यस्तं समस्तं च कार्यम्, आहोस्वित् द्युलोकादिपृथिव्यन्तावयवकत्वेन समस्तस्यैवोपासनं कार्यम्। इति। अत्राह–'अत्स्यन्नं पश्यसि प्रिय'मिति तत्र तत्र प्रत्युपासनं फलश्रवणात् प्रत्येकमेवोपासनं कार्यम्। 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मान'मिति तु विहितस्य तत्तदवयवकोपासनस्योप-

---

मौपमन्यवादिभिः क्रियमाणं श्रूयते। उपसंहारे तु द्युलोकादिपृथिव्यन्तैः समस्तैर्मूर्धादिपादान्तावयवविशिष्टस्योपासनं विधीयते। तत्रेदमुच्यते–भूम्नः–समस्तोपासनस्यैव ज्यायस्त्वं–श्रैष्ठ्यं मुमुक्षुभिरादरणीयत्वलक्षणम्, व्यस्तोपासनस्य तु क्रतुवत् अल्पत्वम्–अनुपादेयत्वलक्षणम्। तथा हि 'मूर्धा ते व्यपतिष्य'दित्यादिना व्यस्तोपासनं विनिन्दन्ती श्रुतिः समस्तोपासनस्य श्रैष्ठ्यं दर्शयति॥ ५५॥

इति प्रदीपे भूमज्यायस्त्वाधिकरणम्॥ २३॥

संहारमात्रम् । अपरस्त्वाह—'तस्य सर्वेषु लोकेषु कामचारो भवती'ति फलान्तरश्रवणात् समस्तोपासनमपि कार्यमिति । अत्रोच्यते—भूम्न एवोपासनं कार्यम् । समस्तस्यैवोपासनं कार्यम् । भूमा—बहु । एकैकमल्पम्, समस्तं तु बहु । समस्तोपासनस्यैव ज्यायस्त्वम्—श्रैष्ठ्यम् । श्रैष्ठ्यं च प्रामाणिकत्वम् । समस्तोपासनमेव तु श्रुत्यनुमतम् । कथमेतदवगम्यते? उपक्रमप्रभृत्युपसंहारपर्यन्तपर्यालोचनात् । उपक्रमे हि श्रूयते—'प्राचीनशाल औपमन्यव' इत्युपक्रम्य 'आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहि' इति वैश्वानरात्मविविदिषया औपमन्यवप्रभृतीनामुद्दालकषष्ठानां कैकयसमीपागमनं, प्रत्येकम् 'औपमन्यव कं त्वमात्मानमुपास्से' इत्यादिना कैकयेन अविदितांशावबोधनेन प्रतिबोधितानां तेषां द्युलोकप्रभृतिपृथिव्यन्तशरीरकतया परमात्मनोऽवबोधनम्, अन्ते च 'यस्त्वेवमेतं प्रादेशमात्रमभिविमानमि'त्युपसंहारवाक्येन द्युलोकादिपृथिव्यन्तावयवकतया वैश्वानरस्य परमात्मन उपासनस्य फलविशेषावबोधनं चेति । अनेन वाक्यैकवाक्यतया समस्तोपासनमेव श्रुतिरवगमयतीति गम्यते । एकैकावयवकोपासनतत्फलश्रवणं तु समस्तोपासनातत्फलैकदेशानुवादमात्रम् । क्रतुवत्—जातेष्टिवत् । 'वैश्वानरमेकादशकपालं निर्वपेत् पुत्रे जाते' इत्युपक्रम्य श्रूयते—'यस्मिन् जाते एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवती'ति । आभ्यामुपक्रमोपसंहाराभ्यां वाक्यैकवाक्यत्वेन महावाक्यत्वेऽवगते यथा 'यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति, यन्नवकपालस्त्रिवृतैवास्मिंस्तेजो दधाति, यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति, यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति, यत् द्वादशकपालो जगत्यैवास्मिन् पशून् दधाति' इत्येतेषां वाक्यानां द्वादशकपालपुरोडाशतत्फलैकदेशानुवादरूपत्वं पूर्वतन्त्रे निर्णीतं तथेहापीति । तथा दर्शयति च व्यस्तोपासनेष्वनर्थम्—'मूर्धा ते व्यपतिष्यत् यन्मां नागमिष्यः' इति । ननु भूमविद्यायामेव प्रथमं नामाद्युपासनविधिवत् वैश्वानरविद्यायां व्यस्तोपासनविधिः किं न स्यात् । नैवम् । तत्र नामाद्युपासननिन्दा नास्ति, इह तु व्यस्तोपासनं निन्द्यते इति ॥५५॥

(अ. स.) द्युलोकादिपृथिव्यन्तलोकत्रयशरीरकः ।
उपास्यः परमात्माऽसौ वैश्वानर इति श्रुतः ॥ १ ॥
द्युलोकादिषु मूर्धादिभावना चात्र रूपिता ।
वैश्वानरोपासनेऽस्मिन्निदमद्य विचार्यते ॥ २ ॥
तत्तल्लोकावयवकव्यस्तोपासनमेव वा ।
समस्तलोकावयवसमस्तोपासनं च वा ॥ ३ ॥
कार्यं समस्तावयवोपासनं त्वेकमेव वा ।

पूर्वपक्षः—

आह कार्यं व्यस्तमेव पृथक् तत्तत्फलश्रुतेः ॥ ४ ॥
समस्तकीर्तनं यत्तु स्यादस्यैवोपसंहृतिः ।
अथवाऽप्युभयं कार्यं फलश्रुत्यविरोधतः ॥ ५ ॥

सिद्धान्तः—

अत्रोच्यते श्रूयते हिं व्यस्तोपास्तेरनर्थता ।
समस्तोपासनं त्वेव कार्यं यत्तु पृथक्फलम् ॥ ६ ॥
समस्तान्तर्गतांशानां फलं स्यादान्तरालिकम् ।
व्यस्तानुकीर्तनं चैतत् क्रताविव च युज्यते ॥ ७ ॥

इति भाष्ये भूमज्यायस्त्वाधिकरणम् ॥ २३ ॥

---

## नाना शब्दादिभेदात् ॥ ३ । ३ । ५६ ॥

मोक्षसाधनतया श्रूयमाणानां सद्विद्यादहरविद्याशाण्डिल्यविद्या-वैश्वानरविद्याभूमविद्यादिकानां विद्यानामैक्यमुत भेद इति विचार्यते ।

---

### नाना शब्दादिभेदात् ॥ ३ । ३ । ५६ ॥

ब्रह्मप्राप्तिफलिका ब्रह्मावलम्बिन्यो दहरादिविद्याः, विषयस्वरूपैक्यात् फलैक्याच्चाभिन्ना इति शङ्कां परिहरति । इमा ब्रह्मप्राप्तिफलिका ब्रह्मावलम्बिन्यो विद्या नाना—भिन्ना एव, शब्दादीनां—शब्दान्तराभ्याससङ्ख्यागुण-प्रक्रियानामधेयानां भेदात् ॥ ५६ ॥

इति प्रदीपे शब्दादिभेदाधिकरणम् ॥ २४ ॥

अत्राह–विद्यानामैक्यमेव, कस्मात् भेदे प्रमाणाभावात् । ननु विद्यात उपासीत ध्यायीत इति विधीयमाना भिद्यन्ते । न । ते हि शब्दाः पर्यायभूताः असकृदावृत्तप्रत्ययावबोधकाः । स च प्रत्ययो वेद्यस्य ब्रह्मण एकत्वात् एक एव, फलं चैकम् । तन्न विद्यानां भेदः । अत्रोच्यते–नाना–मोक्षसाधनतया विधीयमाना विद्या विभिन्ना एव, कस्मात्? शब्दादिभेदात्–विद्याविभेदावबोधकशब्दान्तरादिसद्भावात् । उपासीत ध्यायीतेत्यादीनां पर्यायत्वेऽपि तत्तत्प्रकरणावगतापहतपाप्मत्वजगत्कारणत्वादिभिन्नभिन्नविशेषणविशिष्टविषयकप्रत्ययावृत्त्यवबोधकतया विभेदात् । धियां स्वतो निराकाराणामाकारयोगेनैव हि विशेषः । अग्नौ हविःप्रक्षेपलक्षणस्य जुहोत्यर्थस्यैकत्वेऽपि उद्देश्यदेवताभेदेन भेदः संप्रतिपन्नो हि । आदिशब्दादभ्यासादयो गृह्यन्ते ।

पूर्वं 'चोदनाद्यविशेषा'दित्यादिना विद्याविशेषाणां शाखाभेदेन भेदाभेदचिन्तनं यत्कृतं तदिदं करिष्यमाणं विद्यासामान्यभेदचिन्तनमिदमुपजीव्यैव । अविशेषपुनःश्रवणस्य प्रकरणभेदस्य च विद्याभेदहेतुत्वे सिद्धे सति हि विद्याविशेषे भेदाभेदचिन्तावतारः । यद्यपि कर्मकाण्डेनैव प्रकरणादेर्भेदकत्वावगमः सिद्धः । इह पुनस्तेन भेदसमर्थनमविधेयज्ञानस्य मोक्षसाधनत्वनिरासद्योतनाय ॥ ५६ ॥

पूर्वपक्षः—

(अ. स.) सर्वासां परविद्यानामैक्यं रूपफलैक्यतः ।
फलं हि मुक्तिः सर्वासामुपास्यं ब्रह्म तत् परम् ॥ १ ॥

सिद्धान्तः—

मैवं नानैव यत्तासां नैक्यं शब्दादिभेदतः ।
विद्युपास्त्यादयः शब्दा यद्यप्येकार्थवाचकाः ॥ २ ॥
तथाऽपि ता विभिद्यन्ते विशेषस्यावबोधनात् ।
विधेयभेदकाश्चैते शब्दाभ्यासगुणादयः ॥ ३ ॥

इति भाष्ये शब्दादिभेदाधिकरणम् ॥ २४ ॥

## विकल्पोऽविशिष्टफलत्वात् ॥ ३ । ३ । ५७ ॥

विद्यानां मोक्षसाधनीभूतानां नानात्वं समर्थितम् । अत्र तासां समुच्चयः संभवति उत नेति विचार्यते । अत्राह–समुच्चयः संभवति, एकस्मिन् फले नानासाधनानुष्ठाने अविरोधात्, स्वर्गार्थे यागदानहोमाद्यनेकानुष्ठानस्य दर्शनात् । अत्रोच्यते–विद्यानां मुक्तिफलकानां विकल्प एव । अविशिष्टफलत्वात्–फले विशेषाभावात् । ब्रह्मसंपत्तौ फले नहि विशेषः । अनवधिकातिशयानन्दब्रह्मानुभवो हि विद्यायाः फलम् । एकस्या अनुष्ठितायाः यत्फलं तदेवान्यस्या अपि । स्वर्गादेः फलस्य परिच्छिन्नतया तद्भूयस्त्वाकाङ्क्षया तत्साधनानां समुच्चयो युज्यते । मुक्तिफले तु न तथा, अपरिच्छिन्नब्रह्मानुभवरूपत्वादनावृत्तेश्च । तस्यैकयैव विद्यया निष्पत्तेः ॥ ५७ ॥

## काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ३ । ३ । ५८ ॥

काम्यास्तु–स्वर्गादिफलसाधनीभूतास्तु यथाकामं समुच्चीयेरन् ।

---

### विकल्पोऽविशिष्टफलत्वात् ॥ ३ । ३ । ५७ ॥

आसां ब्रह्मविद्यानामविशिष्टफलत्वात्–फले विशेषाभावाद्विकल्प एव न समुच्चयः ॥ ५७ ॥

### काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ३ । ३ । ५८ ॥

एकफलका अपि काम्याः कर्मभेदा उपासनभेदा वा समुच्चीयेरन्न वा समुच्चीयेरन् । विकल्पेरन् वा । स्वर्गादीनां फलानां कालतो देशतश्च सातिशयत्वेन चिरकालानुभवापेक्षया तत्साधनानां समुच्चयः स्यात् । असत्यां त्वतिशयाधानकामनायां न साधनान्तरसमुच्चयः । ब्रह्मप्राप्तेस्तु निरतिशयनित्यफलत्वात् न साधनसमुच्चयावसरः । अतो विकल्पे यः पूर्वं हेतुरुक्तस्तस्य काम्येष्वभावात् यथाकामं समुच्चयस्तदभावो वा ॥ ५८ ॥

इति प्रदीपे विकल्पाधिकरणम् ॥ २५ ॥

नन्नान्विकल्पेरन् वा । यदि फलभूयस्त्वाकाङ्क्षा तदा समुच्चीयेरन्, यदि न, तर्हि न समुच्चीयेरन्, विकल्प एव । पूर्वहेतोः समुच्चयासंभव-हेतोरपरिमितत्वस्याभावात् ॥ ५८ ॥

(अ. स.) अविशेषात् फले त्वासां विद्यानां न समुच्चयः ।
मुक्तौ चेत्तारतम्यं स्याद्भवेदपि समुच्चयः ॥ १ ॥
अतो विकल्प एवासां विद्यानामिति सुस्थितम् ।
काम्यानां तु यथाकामं घटेत च समुच्चयः ॥ २ ॥

इति भाष्ये विकल्पाधिकरणम् ॥ २५ ॥

## अङ्गेषु यथाश्रयभावः ॥ ३ । ३ । ५९ ॥

ऋत्वङ्गभूतोद्गीथेषु या विद्याः 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यादिना विहिताः, ताः ऋत्वङ्गवत् नियमेनानुष्ठेया उत यथाकाम-मिति विचार्यते । यद्यपि 'तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम्' इति पूर्वमेवानियमः समर्थितः । अथापि तदेव पुनराशङ्क्य दृढीक्रियते ।

अत्राह—यथाश्रयभावः—आश्रयो विषयः, यथाविषयभावः, विष-यस्याङ्गस्येव भावः—नियमभावः । अङ्गवत् तद्विषयकमुपासनमपि नियमेन कार्यम् । 'ओमित्येतदक्षरमुद्गीथमुपासीते'ति विधिवाक्ये 'गोदोहनेन पशुकामस्य प्रणये'दित्यत्रेव फलस्याश्रवणात् । तत् विधिवाक्यतो निय-मेनानुष्ठेयत्वे प्राप्ते 'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवती'ति वाक्यं स्थलान्तरस्थमनुवादरूपमर्थवादमात्रे पर्यवस्यति । तस्मात्

---

* अङ्गेषु यथाश्रयभावः ॥ ३ । ३ । ५९ ॥

अङ्गेषु—ऋत्वङ्गेषु उद्गीथेषु यान्युपासनानि—'ओमित्येतदक्षरमुद्गीथमुपासी-ते'त्यादिना विहितानि तेषां यथाश्रयभावः—आश्रयः—उपासनाश्रयः उपासना-विषयः उद्गीथः तस्य यो भावः ऋत्वङ्गभावः, तमनतिक्रम्यैव भावः । उप-सनानामप्युपास्यवत् ऋत्वङ्गतैवेत्येतत् । तथा चोपासनस्य नियमेन कर्तव्यत्वं प्राप्तम् ॥ ५९ ॥

क्रत्वङ्गभूतोद्गीथवत् तद्विषयकोपासनविशेषा अपि तद्द्वारा क्रतावङ्ग-भावमापद्यन्ते इति नियमेनानुष्ठेयाः ॥ ५९ ॥

## शिष्टेश्च ॥ ३ । ३ । ६० ॥

'गोदोहनेन पशुकामस्य प्रणये'दित्यत्रेव न कामना काऽपि निमित्तं श्राव्यते । किन्तु 'उद्गीथमुपासीते'ति विधीयते । शिष्टिः शासनं विधिः । तस्मात् क्रत्वङ्गत्वमुपासनस्य सिध्यति ॥ ६० ॥

## समाहारात् ॥ ३ । ३ । ६१ ॥

समाहारः—समाधानम् । छान्दोग्ये श्रूयते 'अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ' इति । उद्गीथः—उद्गीथावयव ओङ्कारः प्रणवः—होतृशंसनीयानामृचामन्ते प्रयुज्यमान ओंकारः, तयोरनयो-रैक्योपासनमनेन विहितम् । जातु दुरुद्गीथं चेत् प्रसजेत्—ऐक्यभाव-नाहीनं चेदुद्गानम्, तदा वेदनविहीनोद्गानजन्यं दोषं होतृषदनात्—होत्रा सम्यक् प्रयुक्तात् शंसनात् अनुसमाहरति—समादधाति, इति वेदनविहीनोद्गानकृतदोषपरिहरणश्रवणात् उद्गीथोपासनस्य नियमो गम्यते ॥ ६१ ॥

## गुणसाधारण्यश्रुतेश्च ॥ ३ । ३ । ६२ ॥

गुणस्य—उपासनगुणत्वेनावगतस्य प्रणवस्य साधारण्यश्रुतेः—कर्माङ्ग-

---

### शिष्टेश्च ॥ ३ । ३ । ६० ॥

शिष्टिः—शासनं, विधिः । 'ओमित्येतदक्षरमुद्गीथमुपासीते'ति विधेश्च अव-श्यकर्तव्यता गम्यते ॥ ६० ॥

### समाहारात् ॥ ३ । ३ । ६१ ॥

'होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरती'ति, दुरुद्गीथस्य उपासनरहितस्यो-द्गीथस्य समाहरणं—अन्येन समाधानं श्रूयते । तस्मादुद्गीथोपासनस्यावश्यविधे-यतासिद्ध्या क्रत्वङ्गत्वं सिद्ध्यति ॥ ६१ ॥

### गुणसाधारण्यश्रुतेश्च ॥ ३ । ३ । ६२ ॥

उपासनायां गुणभूतस्य विषयतया गुणभूतस्य 'तेनेयं त्रयी विद्या वर्तते

भूताऽऽश्रावणादिष्वनुगतिश्रुतेः । छान्दोग्ये श्रूयते—'तेनेयं त्रयी विद्या वर्तते ओमित्याश्रावयति ओमिति शंसति ओमित्युद्गायती'ति । अत्र तेनेत्यनेन प्रकृतपरामर्शिना उपासनागुणभूत एव प्रणवो बोध्यते । समनन्तरपूर्ववाक्ये 'य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते' इति प्रणवोपासना हि प्रकृता । तथा च सोपासनस्य प्रणवस्यैव क्रत्वङ्गाश्रवणादिष्वन्वयात् उद्गीथोपासनस्य उद्गीथवत् कर्मसु नियम इति ॥ ६२ ॥

अत्रोच्यते—

## न वा तत्सहभावाश्रुतेः ॥ ३ । ३ । ६३ ॥

वाशब्द एवार्थः । नैव नियमः । तत्सहभावस्य—तेनोद्गीथेन सहभावनियमस्योपासने अश्रुतेः । ननु 'उद्गीथमुपासीते'त्यत्र अधिकार्यन्तराप्रतीतेः उद्गीथस्येव तदुपासनस्यापि नियमो गम्यते इति चेन्नैतत् । तत्र तदश्रवणेऽपि तत्रैवोत्तरत्र 'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवती'ति फलान्तरश्रवणादधिकार्यन्तरप्रतीतेः । तत् गोदोहनादिवदनियम एव । ननु—वीर्यवत्तरत्वश्रुतिरपापश्लोकश्रवणश्रुतिवदर्थवाद-

---

ओमित्याश्रवयत्योमिति शंसत्योमित्युद्गायती'ति कर्मसु आश्रवणादिषु साधारण्यस्य श्रुतेः । 'तेनेयं त्रयी विद्या वर्तत' इत्यत्र तच्छब्दः प्रकृतपरामर्शितया उपासनागोचरं प्रणवमेव हि परामृशति । न केवलं प्रणवम् । अतो गम्यते क्रत्वङ्गत्वमुपासनस्य ॥ ६२ ॥

अत्रोच्यते—

### न वा तत्सहभावाश्रुतेः ॥ ३ । ३ । ६३ ॥

वाशब्देन पूर्वः पक्षो व्यावर्त्यते । नैवोद्गीथोपासनस्य क्रत्वङ्गता, तत्सहभावाश्रुतेः । तस्योद्गीथोपासनस्य सहभावः क्रतुना सह नियमेन भावो न श्रूयते, येनाङ्गता गम्येत । यद्यप्युपासीतेति सामान्यतः श्रूयते । अथाप्यनुपदं 'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवती'ति वीर्यवत्तरत्वलक्षणफलान्तरश्रवणात् तत्कामोऽधिकारी गम्यते इति नोद्गीथस्येव तदुपासनस्य क्रत्वङ्गतेति ॥ ६३ ॥

मात्रम् । वाक्यान्तरस्थत्वात् । नैवम् । स्ववाक्यस्थत्वं वाक्यान्तरस्थत्वं वा न फलत्वाफलत्वयोः प्रयोजकम्, किन्तु विलम्बमात्रं विलम्बद्वयं चेति । पर्णतावाक्ये हि विलंबद्वयम्–अपापश्लोकश्रवणं प्रति पर्णताया हेतुत्वाश्रवणेन तत्कल्प्यमित्येको विलंबः, अपापश्लोकश्रवणं च वाक्यान्तरस्थमिति तस्य फलत्वं च कल्प्यमिति अपरो विलंब इति । गोदोहनवाक्ये तु फलं स्ववाक्य एव श्रूयते, तद्धेतुत्वमात्रं गोदोहने कल्प्यमिति विलम्बमात्रम् । अतो विलंबद्वयात् पर्णतावाक्ये स्वरससिद्धमङ्गत्वं न बाध्यते । गोदोहनवाक्ये तु विलम्बद्वयाभावेनाङ्गत्वं बाध्यते । तथा विद्यया करोतीत्यस्मिन्नपि वाक्ये पर्णतावाक्य इव विलंबद्वयाभावात् नार्थवादतेति ॥ ६३ ॥

## दर्शनाच्च ॥ ३ । ३ । ६४ ॥

विद्याया अनियमं श्रुतिर्दर्शयति च । 'एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षती'ति । ब्रह्मणो वेदनेनैव यज्ञयजमानप्रभृतीनां संरक्षणश्रवणेन उद्गातृप्रभृतीनां वेदनानियमो गम्यते । तत्र यज्ञस्य रक्षणमङ्गवैकल्यजनितदोषपरिहरणम्, यजमानस्य रक्षणं अप्रतिबद्धफलत्वम्, ऋत्विजां रक्षणं स्वरादिप्रस्खलनजनितदोषपरिहरणम्, इदं सर्वं ब्रह्मणो वेदनेन भवतीति श्रावयन्ती श्रुतिः उद्गात्रादीनां वेदनानियमं व्यक्तं गमयतीति । एतेन यच्च समाहारादित्युक्तं

---

### दर्शनाच्च ॥ ३ । ३ । ६४ ॥

उद्गीथोपासनस्योपादानानियमो दृश्यते च । 'एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्च वै ऋत्विजोऽभिरक्षती'ति ब्रह्मणो वेदनं वेदनविहीनान् सर्वानभिरक्षतीत्यनेनोद्गातृप्रभृतीनां वेदनानियमो हि स्पष्टं प्रतीयते । तदुद्गीथोपासनस्य न नियमतः क्रत्वङ्गतेति सिद्धम् ॥ ६४ ॥

इति प्रदीपे यथाश्रयभावाधिकरणम् ॥ २६ ॥

इति ब्रह्ममीमांसाऽर्थप्रदीपे तृतीयस्याध्यायस्य तृतीयः पादः ।

लिङ्गम्, तत्तु प्रायिकं बोध्यम् । 'होतृषदनाद्धैव दुरुद्गीथमनुसंहरती'-त्येतदपि यत्र कृताद्युद्गीथोपासनं फलार्थं सङ्कल्प्य तद्रहितोद्गानं कृतं तद्विषयकमित्येतत् ॥ ६४ ॥

( अ. स. ) निरूपितार्थदार्ढ्याय पुनरेतद्विचार्यते ।

**पूर्वपक्षः—**

अङ्गं क्रतोर्यथोद्गीथस्तथैव तदुपासनम् ॥ १ ॥
अधिकार्यन्तरानुक्तेः स्ववाक्ये च फलाश्रुतेः ।
उपासीतोद्गीथमिति क्रत्वङ्गालम्बशासनात् ॥ २ ॥
विद्याहीनोद्गीथदोषपरिहारश्रुतेरपि ।
उपासनागुणीभूतोद्गीथांशप्रणवस्य च ॥ ३ ॥
तेनेयमित्युपक्रम्य कर्मस्वन्वयबोधनात् ।

**सिद्धान्तः—**

अत्रोच्यतेऽस्या विद्यायाः श्रूयतेऽनुपदं फलम् ॥ ४ ॥
अधिकार्यपि तत्कामो गम्यते तु फलश्रुतेः ।
गोदोहस्येव विद्यायाः फलमन्यदिति स्थितम् ॥ ५ ॥
न चोद्गीथोपासनस्य दृष्टा क्रत्वङ्गताश्रुतिः ।
विद्वान् ब्रह्मा सर्वदोषान् श्रूयते हरतीत्यपि ॥ ६ ॥

इति भाष्ये यथाश्रयभावाधिकरणम् ॥ २६ ॥

इति ब्रह्ममीमांसाभाष्ये तृतीयस्याध्यायस्य तृतीयः पादः ।

पूर्वस्मिन् विद्या विचिन्तिता। अथ तदङ्गं विचारयन् विद्याया अङ्गित्वं समर्थयति प्रथमम्। विद्याया एकत्वनानात्वचिन्ता समनन्तरपूर्वाधिकरणे कृता, अस्मिन्नधिकरणे विद्यायाः पुरुषार्थहेतुत्वं विचिन्त्यते।

**पुरुषार्थोऽतःशब्दादिति बादरायणः ॥ ३ । ४ । १ ॥**

पुरुषार्थोऽतः—विद्यातः। अवधारणगर्भो निर्देशः। विद्यात एव। न तु कर्मणः। कस्मादिदमवगम्यते? शब्दात्। श्रूयते हि—'ब्रह्मविदाप्नोति परम्' 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते' इत्यादिरौपनिषदः शब्दः। स्वमतत्वदर्शनेन सिद्धान्तत्वमस्य पक्षस्य द्रढयन् आह—'इति बादरायण' इति ॥ १ ॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

**शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥ ३ । ४ । २ ॥**

सत्यं 'ब्रह्मविदाप्नोती'त्यादिना विद्यातः पुरुषार्थवादः श्रूयते, शेषत्वात्तु—क्रतुशेषत्वात्तु अङ्गिफलमङ्गेऽनूद्यते। क्रतोः कर्ता जीवः,

---

**पुरुषार्थोऽतःशब्दादिति बादरायणः ॥ ३ । ४ । १ ॥**

विचारिता विद्या। अथ विद्यातः फलसिद्धिं समर्थयितुं विचार्यते। पुरुषार्थोऽतः—विद्यातः सिध्यति। निःश्रेयसलक्षणे पुरुषार्थे विद्यैव साधनमिति यावत्। शब्दादिदमवगम्यते। तथा हि शब्दः 'ब्रह्मविदाप्नोति परम्', 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये'ति। इति बादारायणः ॥१॥

पक्षान्तरं निरस्यन्ननुवदति—

**शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥३।४।२॥**

यः पुरुषार्थवादो विद्यायाः, स तु न साक्षात्, किन्तु क्रतुशेषत्वात्, विद्या हि कर्मणः कर्तुर्जीवात्मनः संस्करणलक्षणा। जीवस्य ब्रह्मणोऽनन्यत्वात् ब्रह्मविद्या भवति कर्तुर्जीवस्य संस्करणम्। अतश्च व्रीहिप्रोक्षणादिवत् क्रतुशेषत्वाद्विद्यायाः फलश्रुतिर्यथाऽन्येषु द्रव्यादिषु तथाऽर्थवादमात्रमिति जैमिनिर्मन्यते। तदुक्तम्—'द्रव्यगुणसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यादि'ति ॥ २ ॥

तत्स्वरूपविज्ञानं च तस्य संस्कारः । यथा व्रीहेर्द्रव्यस्य क्रत्वङ्गस्य प्रोक्षणं तत्संस्काररूपतया व्रीहिद्वारा क्रत्वङ्गम्, तथा क्रतावङ्गभूतस्य कर्तुरात्मनः तत्स्वरूपविज्ञानं तत्संस्करणरूपतया कर्तृद्वारा क्रत्वङ्गं भवति । उपनिषदश्च कर्तुरात्मनः स्वरूपमवगमयन्त्यः क्रतोरङ्गिनः फलं क्रतुशेषभूते विज्ञाने उपचारतोऽनुवदन्ति । तस्मात् विद्यातः पुरुषार्थश्रुतिरर्थवादमात्रम् । यथाऽन्येषु—द्रव्यादिष्विति जैमिनिराचार्यो मन्यते । ननु उपनिषद्भिर्ब्रह्मावबोध्यते, तच्च कर्तुर्जीवादन्यदेव । तन्न विद्या कर्तुरात्मनः संस्कारः । नैवम् । 'तत्त्वमसी'त्यादिभिर्जीवादनन्यदेव ब्रह्मेति ह्यवबोध्यते ॥ २ ॥

विद्यायाः क्रतुशेषत्वे लिङ्गमाह—

## आचारदर्शनात् ॥ ३ । ४ । ३ ॥

दृश्यते हि जनकादीनां ब्रह्मविदामप्याचारः कर्मप्रधानः । 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इति च स्मर्यते । तथा केकयो नामाश्वपतिरात्मविदामग्रेसरः कर्मनिष्ठ आसीदिति च श्रूयते—'यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि' इति । तत् श्रूयमाणात् स्मर्यमाणाच्च लिङ्गात् विद्या क्रतुशेषभूतैवेति विज्ञायते ॥ ३ ॥

## तच्छ्रुतेः ॥ ३ । ४ । ४ ॥

न केवलं लिङ्गम्, श्रुतिश्च विद्यायाः क्रत्वङ्गत्वे प्रमाणम् । 'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवती'ति विद्यायाः क्रत्वङ्गता हि श्रूयते । विद्ययेति च सामान्यनिर्देशः । प्रकरणादुद्गीथविद्याविशेषपरता तु नोचिता । सामान्यश्रुतेर्बलीयस्त्वात् ॥ ४ ॥

---

### आचारदर्शनात् ॥ ३ । ४ । ३ ॥

ब्रह्मविदामपि जनकादीनामाचारश्च कर्मनिष्ठायामेव दृश्यते । अयमाचारो विद्यायाः क्रतुशेषत्वे भवति लिङ्गम् ॥ ३ ॥

### तच्छ्रुतेः ॥ ३ । ४ । ४ ॥

'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवती'ति विद्यायाः कर्मशेषत्वं श्रूयते च ॥ ४ ॥

## समन्वारम्भणात् ॥ ३ । ४ । ५ ॥

समन्वारम्भणम्–साहित्येन फलाधानाय प्रवर्तनम् । श्रूयते च 'तं विद्याकर्मणी समन्वारभेते' इति । तं–परलोकमभियान्तं पुरुषं इहानुष्ठिते विद्याकर्मणी समन्वारभेते–फलाधानायानुवर्तेते । तदिदं द्वन्द्वावगतमनुवर्तनं विद्यायाः क्रत्वङ्गतां ज्ञापयति ॥ ५ ॥

## तद्वतो विधानात् ॥ ३ । ४ । ६ ॥

विद्यावतः कर्मणो विधानाच्च विद्या कर्मणोऽङ्गभूतैव । तथा हि श्रूयते—'आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुंबे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधत्' इति । अत्र अधीत्येत्यध्ययनवतः कर्मविधानम् । अध्ययनं चार्थज्ञानपर्यन्तम्, अर्थज्ञानं च विद्येति ॥ ६ ॥

## नियमात् ॥ ३ । ४ । ७ ॥

'कुर्वन्नेवेह कर्माणी'ति विद्यावतोऽपि कर्मणामनुष्ठेयत्वनियमश्रवणाच्च विद्या क्रत्वङ्गभूतैव ॥ ७ ॥

---

### समन्वारम्भणात् ॥ ३ । ४ । ५ ॥

'तं विद्याकर्मणी समन्वारभेते' विद्याकर्मणोर्मिलितयोः फलाधायकत्वश्रवणात् कर्माङ्गत्वं विद्याया गम्यते ॥ ५ ॥

### तद्वतो विधानात् ॥ ३ । ४ । ६ ॥

इतश्च विद्या कर्मणोऽङ्गमिति गम्यते । अध्ययनवतो हि कर्म विधीयते 'आचार्यकुलाद्वेदमधीत्ये'त्यारभ्य 'शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधत्' इत्यन्तेन । अध्ययनं चार्थज्ञानलक्षणमिति विद्यैव सा ॥ ६ ॥

### नियमात् ॥ ३ । ४ । ७ ॥

'कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः' इति कर्मणो नियमश्च श्रूयते ॥ ७ ॥

अत्रोच्यते—

**अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्॥३।४।८॥**

तुशब्देन पूर्वपक्षो व्यावर्त्यते । बादरायणस्य विद्यातः पुरुषार्थ इत्येव मतम् । कस्मात्?, कर्मणां कर्तुर्जीवादधिकस्यैव वेद्यत्वोपदेशात् । उपदेशश्च श्रुतौ दृश्यते, तथा हि—'कारणं तु ध्येयः' 'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ।' 'भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः' 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपालः एष सेतुर्विधरण एषां लोकानामसंभेदाय' 'यः सर्वज्ञः सर्ववित्' इत्यादिः । श्रूयमाणमिदमैश्वर्यं न जीवात्मनि, न च तस्मिन्विशुद्धेऽपि । अतो विद्यावेद्यं परंब्रह्म जीवात्मनोऽर्थान्तरभूतमेवेति न क्रत्वङ्गता विद्यायाः । परस्य ब्रह्मणो जीवादन्यत्वे श्रुतिशतसमधिगते सति तत्त्वमस्यादिवाक्यस्याभेदावबोधकत्वाश्रयणेन व्याख्यानमत्यन्तविरुद्धम् । तच्च शरीरशरीरिभावनिबन्धनमेवेति च प्राग्व्याख्यातम् । 'अधिकं तु भेदनिर्देशा'दिति पूर्वोक्तो भेदः पुनरिह स्मार्यते ॥ ८ ॥

यदुक्तं ब्रह्मविदामपि कर्मनिष्ठादर्शनं विद्यायाः क्रतुशेषत्वे लिङ्गमिति, तत्राह—

**तुल्यं तु दर्शनम् ॥ ३ । ४ । ९ ॥**

ब्रह्मविदां कर्मानुष्ठानस्येव तदननुष्ठानस्यापि दर्शनं तुल्यम् । तथा

---

अत्रोच्यते—

**अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ३ । ४ । ८ ॥**

तुशब्दः पक्षं व्यावर्तयति । न विद्या कर्मणोऽङ्गम् । नहि ब्रह्मविद्या कर्तुः संस्करणं भवितुमर्हति । ब्रह्म हि कर्तुर्जीवादधिकत्वेन स्वरूपस्वभावाभ्यामुत्कृष्टत्वेनोपदिष्टम् । तस्मात् बादरायणस्यैवमेव मतं विद्यातः पुरुषार्थ इति । दृष्टं च परस्य ब्रह्मणो जीवादधिकत्वं तत्र तत्र श्रुतिषु ॥ ८ ॥

**तुल्यं तु दर्शनम् ॥ ३ । ४ । ९ ॥**

ब्रह्मविदां कर्मस्वादरदर्शनमिव, कर्मस्वनादरदर्शनमपि तुल्यम् । तथा

हि श्रूयते—'ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे' इति । तत् विद्या न कर्माङ्गम् । ननु ब्रह्मविदां कर्मानुष्ठानं कथमुपपद्यते? फलाभिसन्धिरहितस्य विद्यावर्धकतयोपपत्तिः ॥ ९ ॥

यदुक्तं 'यदेव विद्यया करोती'ति श्रुतिर्विद्यायाः क्रत्वङ्गतां श्रावयतीति तत्राह—

## असार्वत्रिकी ॥ ३ । ४ । १० ॥

'यदेव विद्यया करोती'तीयं श्रुतिर्न सार्वत्रिकी—न सर्वविद्याविषयिणी; अपि तु विद्याविशेषविषयिणी । विद्याविशेषश्चोद्गीथविद्या । यदेवेत्यत्र यच्छब्दो ह्यनिर्धारितविशेषः । 'उद्गीथमुपासीते'त्यनेन प्रकृतेन भवति विशेषावधारणम् । विद्यया क्रियमाणे वीर्यवत्तरत्वमवगम्यते । तेन चातथाभूते वीर्यवत्तरत्वाभावमात्रं गम्यते, नतु अकृतप्रायता । यत्करोति तद्विद्ययेति यदि श्रूयेत तदा संभाव्येत विद्याविरहितस्य कृतस्याप्यकृतप्रायता ॥ १० ॥

---

चानादरः श्रूयते—'ऋषयः कावषेयाः किमर्था वयमध्येष्यामः किमर्था वयं यक्ष्यामहे' इति । तस्मात् विद्या न कर्मणामङ्गम् । ननु तौल्ये कथं निश्चयः । इत्थम् । फलाभिसन्धिरहितानां कर्मणां विद्याङ्गतया विदुषामपि कर्माचरणमुपपन्नम् । फलकामनया क्रियमाणानां कर्मणां तु त्यागः, विद्यायामनङ्गत्वादिति ॥ ९ ॥

## असार्वत्रिकी ॥ ३ । ४ । १० ॥

यदुक्तं 'यदेव विद्यया करोती'त्यनेन विद्याङ्गकत्वं कर्मणोऽवगम्यते इति । तन्न । असार्वत्रिकी सा श्रुतिः । उद्गीथविद्यामात्रमधिकृत्य हि सा प्रवृत्ता । कथं सा विद्यासामान्यस्य कर्माङ्गत्वं ज्ञापयितुं प्रभवेत् । यत्करोति तत्सर्वं विद्ययेति नावगम्यते, यद्विद्यया करोति तद्वीर्यवत्तरं भवतीति । वीर्यवत्तरत्वकामनायामसत्यां तस्या अनुपयोगो गम्यते ॥ १० ॥

यत्पुनरुक्तं समन्वारम्भणश्रुत्या विद्यायाः कर्माङ्गत्वमवगम्यते इति, तत्राह—

## विभागः शतवत् ॥ ३ । ४ । ११ ॥

**विभागः—विद्याकर्मणोः फलाधाने कार्ये विभागः । विद्या स्वफलजननायैनमन्वेति, कर्म च स्वफलजननायैनमन्वेति, संभूय नैकं फलं जनयतः, विद्या एकस्मै फलाय कर्म चान्यस्मै फलाय । शतवत्—क्षेत्ररत्नविक्रयिणं पुरुषं शतद्वयमन्वेतीत्युक्ते यथा शतं क्षेत्रार्थं शतं रत्नार्थमित्यवगम्यते तथेति । इदमभिहितं भवति । 'तं विद्याकर्मणी समन्वारभेते' इतीयं श्रुतिः सांसारिकफलविषया, पुरुषेण परत्र फलमिच्छता यदुपासनं कृतं यच्च कर्म कृतं तदुभयं स्वस्वफलजननाय परेतमेनमनुगच्छत इति ॥ ११ ॥**

## अध्ययनमात्रवतः ॥ ३ । ४ । १२ ॥

'आचार्यकुलाद्वेदमधीत्य' इतीयं श्रुतिर्न विद्यायाः कर्माङ्गतामवगमयति । अधीत्येत्यनेनाक्षरराशिग्रहणलक्षणाध्ययनमात्रानन्तर्यं ह्युच्यते । अध्ययनं नार्थज्ञानपर्यन्तमित्यन्यत्र व्यवस्थापितम् । नन्वध्ययनमक्षरराशिग्रहणमात्रं चेत् अभ्युदयनिःश्रेयसयोः कथं प्रवृत्तिः । साङ्गाध्य-

---

### विभागः शतवत् ॥ ३ । ४ । ११ ॥

'तं विद्याकर्मणी समन्वारभेते' इत्यनेन नोभयोर्मिलितयोरेकफलत्वमवगम्यते । विभाग एव—स्वफलाय विद्या स्वफलाय च कर्म समन्वारभते इति विभाग एव गम्यते । शतवत्—क्षेत्ररत्नविक्रयिणं शतद्वयमन्वेतीत्युक्ते शतं क्षेत्रार्थं शतं रत्नार्थमिति यथा विभागः, तथेहापि ॥ ११ ॥

### अध्ययनमात्रवतः ॥ ३ । ४ । १२ ॥

यदुक्तं विद्यावतः कर्मविधानाद्विद्या कर्माङ्गमिति । नैतदुपपद्यते । वेदमधीत्येत्यध्ययनमात्रवतो हि तद्विधानम् । अध्ययनं चाक्षरराशिग्रहणम् । आपातप्रतिपन्नयोश्च कर्मब्रह्मणोस्तन्निर्णयाय प्रवृत्तः कर्मार्थी कर्मज्ञाने मोक्षार्थी च ब्रह्मज्ञाने इति न विद्यायाः कर्माङ्गत्वमनेन सिध्यति ॥ १२ ॥

यनात् तदर्थावधारणसंभवात् । अध्ययनविधेरर्थज्ञानपर्यन्तत्वेऽपि न ततो विद्यावतः कर्म विहितं भवति । विद्या ह्युपासनलक्षणा अर्थज्ञानादन्यैव ॥ १२ ॥

## नाविशेषात् ॥ ३ । ४ । १३ ॥

'कुर्वन्नेवेहे'तीयं श्रुतिर्विद्यायाः कर्माङ्गत्वमवगमयतीत्येतन्नोपपद्यते । अविशेषात्—कर्मणो विद्याङ्गत्वेऽपि कर्मणो नियमेनानुष्ठेयत्वश्रवणोपपत्तेः ॥ १३ ॥

## स्तुतयेऽनुमतिर्वा ॥ ३ । ४ । १४ ॥

'कुर्वन्नेवे'ति श्रुतिर्विद्यास्तुतये कर्मणामनुमतिर्वा—वाशब्द एवार्थः । विद्यानिष्ठः पुरुषः कर्म कुर्वन्नपि न लिप्यते, तस्मात् यावज्जीवं कर्म कुर्यान्नामेति विद्या स्तुता भवति । 'ईशाऽऽवास्य'मिति च विद्या प्रकृता ॥ १४ ॥

## कामकारेण चैके ॥ ३ । ४ । १५ ॥

एके शाखिनः विद्यानिष्ठानां कामकारेण स्वेच्छया गार्हस्थ्यत्याग-

---

### नाविशेषात् ॥ ३ । ४ । १३ ॥

'कुर्वन्नेवेह कर्माणी'तिश्रुतेः कर्मैव पुरुषार्थसाधनमिति गम्यते इत्येतन्न युज्यते। अविशेषात्—विद्यायाः कर्माङ्गत्वपक्षे कर्मणो विद्याङ्गत्वपक्षे च कर्मणो नियमेनानुष्ठेयत्वश्रवणोपपत्तेः । यावद्विद्यानिष्पत्ति विद्याङ्गतया मुमुक्षुणा कर्म कार्यमेव हि ॥ १३ ॥

### स्तुतयेऽनुमतिर्वा ॥ ३ । ४ । १४ ॥

विदुषाऽपि यावज्जीवं कर्मानुष्ठीयताम् । क्रियमाणं कामसङ्कल्पवर्जितं कर्म विदुषि पुरुषे न लिप्यते इत्यभ्यनुज्ञामात्रमेव वा । अभ्यनुज्ञा च विद्यायाः स्तुतये ॥ १४ ॥

### कामकारेण चैके ॥ ३ । ४ । १५ ॥

एके शाखिनः कामकारेण—स्वेच्छया गार्हस्थ्यत्यागमधीयते । 'एतद्ध स्म

माचक्षते । तथा हि श्रूयते—'किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः' इति । विद्यायाः कर्माङ्गत्वे नेयं श्रुतिरुपपद्यते ॥ १५ ॥

## उपमर्दं च ॥ ३ । ४ । १६ ॥

पुण्यापुण्यलक्षणानां सर्वेषां कर्मणामुपमर्दं विद्यया श्रावयति श्रुतिः—'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इति । श्रुतिरियं विद्यायाः कर्माङ्गत्वं न सहते ॥ १६ ॥

## ऊर्ध्वरेतस्सु च शब्दे हि ॥ ३ । ४ । १७ ॥

ऊर्ध्वरेतस्स्वप्याश्रमेषु विद्यादर्शनात् तेषां चाग्निहोत्रादिष्वनधिकारान्न विद्या कर्माङ्गम् । ऊर्ध्वरेतस आश्रमा वैदिके शब्दे दृश्यन्ते हि—'त्रयो धर्मस्कन्धाः ×××× तप एव द्वितीयः तृतीयो ब्रह्मचार्याचार्यकुलवासी' 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ती'ति ॥ १७ ॥

---

वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो वयं येषां नोऽयमात्माऽयं लोकः ।' इति ॥ १५ ॥

### उपमर्दं च ॥ ३ । ४ । १६ ॥

एके शाखिनः 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इति विद्यया कर्मणामुपमर्दं चाऽधीयते, तत् विद्याया एव प्राधान्यम् ॥ १६ ॥

### ऊर्ध्वरेतस्सु च शब्दे हि ॥ ३ । ४ । १७ ॥

वैदिके शब्दे ऊर्द्ध्वरेतस्स्वपि—अग्निहोत्ररहितेष्वप्याश्रमेषु विद्यान्वयः श्रूयते । तथा च शब्दः—'त्रयो धर्मस्कन्धाः—यज्ञोऽध्ययनं दानमिति प्रथमः, तप एव द्वितीयः, ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्, सर्व एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति' 'ये चेमेऽरण्ये श्रद्धातप इत्युपासते तेऽर्चिषमभिसंभवन्ति' 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ती'ति ॥ १७ ॥

## परामर्शं जैमिनिरचोदनाच्चापवदति हि ॥ ३ । ४ । १८ ॥

जैमिनिराचार्यो मन्यते 'त्रयो धर्मस्कन्धा' इत्यनेन धर्मस्कन्धाः परामृश्यन्ते केवलम्—अनुवादमात्रम्, न हि तद्वाक्यं चोदकम्, तस्मादूर्ध्वरेतस आश्रमा न सन्ति। इदमभिहितं भवति—प्रस्तुतस्योद्गीथोपासनस्य स्तुतये प्रवृत्तं 'त्रयो धर्मस्कन्धा' इत्यादिवाक्यम्। 'ब्रह्मसंस्थोऽमृतत्वमेती'ति ह्युपसंहारे स्तूयते। तदाश्रमविभागविधायकं नेदं वाक्यमित्यस्य वाक्यस्य ऊर्ध्वरेतस्स्वाश्रमेषु न प्रामाण्यम्। श्रुतिरपवदति च पारिव्रज्यम्—'वीरहा वा एष देवानां योऽग्निमुद्वासयते' इति ॥१८॥

## अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ ३ । ४ । १९ ॥

ऊर्ध्वरेतस आश्रमा न सन्तीत्येतत् जैमितेर्मतं भगवान् बादरायणो न मन्यते। किन्तु गृहस्थाश्रमस्येवेतरेषामप्युपादेयतामेव मन्यते। उपादेयत्वे साम्यश्रुतेः। 'त्रयो धर्मस्कन्धा' इति त्रेधा विभज्य श्रूय-

---

**परामर्शं जैमिनिरचोदनाच्चापवदति हि ॥ ३ । ४ । १८ ॥**

जैमिनिमतेनाशङ्कते—ननु 'त्रयो धर्मस्कन्धा' इत्येतद्वाक्यमूर्ध्वरेतसां परामर्शमात्रं करोति, न तु तान् विधत्ते, न हि तत्र चोदना श्रूयते। तस्मादचोदनात् प्रणवेन ब्रह्मोपासनं स्तौति केवलम्। एवमेव 'ये चेमेरण्ये' इत्याद्यपि। अपवदति च श्रुतिरूर्ध्वरेतस आश्रमान् 'वीरहा वा एष देवानां योऽग्निमुद्वासयति' इति ॥ १८ ॥

स्वमतेन परिहरति—

**अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ ३ । ४ । १९ ॥**

बादरायणस्तु गृहस्थाश्रमवदाश्रमान्तरस्यापि अनुष्ठेयत्वं मन्यते। कस्मात् 'त्रयो धर्मस्कन्धा' इत्यत्र अनुष्ठेयत्वे साम्यश्रुतेः। विधिस्तत्र न श्रूयते इति तु तुल्यं गृहस्थाश्रमस्यापि, अन्यतश्चेत्प्राप्तिः, अस्यापि तथा। अग्न्युद्वासननिन्दा त्वविरक्तविषया ॥ १९ ॥

माणेष्वेषु अन्यतमा एव ह्यूर्ध्वरेतसोऽपि । 'तप एव द्वितीय' इति तपःप्रधानाश्रमो ह्यूर्ध्वरेतसाम् । द्वितीय इति निर्देशात् यज्ञाध्ययनदानप्रचुरात् गृहस्थाश्रमादन्योऽयमिति च व्यक्तं गम्यते । तपःप्रधानौ च द्वावाश्रमौ वानप्रस्थसंन्यासौ, तृतीयश्च नैष्ठिकः, त्रयाणामेषां स्वस्वाश्रमधर्मनिष्ठया पुण्यलोकावाप्तिः, ब्रह्मनिष्ठया तु अमृतत्वप्राप्तिरिति । न च सन्न्यासाश्रमप्रापकं नेह विधिवचनमिति वाच्यम्; तुल्यं तत् गृहस्थाश्रमस्यापि । अन्यतः प्राप्तिरिति चेत्तदस्यापि तुल्यम् । फलतश्च साम्यम्; आश्रमधर्मानुष्ठानेन पुण्यलोकाप्तिर्ब्रह्मनिष्ठयाऽमृतत्वप्राप्तिरिति । 'वीरहा वा एष भवती'ति निन्दा तु गृहस्थाश्रमे सतोऽग्निं सन्त्यजतः ॥ १९ ॥

'त्रयो धर्मस्कन्धा' इत्यादेरनुवादरूपतामभ्युपेत्य साम्यश्रुतेरुपादेयत्वं संन्यासाश्रमस्योपपादितम् । अथ प्रापकतामेवाह—

## विधिर्वा धारणवत् ॥ ३ । ४ । २० ॥

विधिर्वा—विधिरेव, 'त्रयो धर्मस्कन्धा' इत्येतद्वाक्यं विधायकमेव धर्मस्कन्धानामाश्रमाणाम् । अपूर्वत्वात् । धारणवत्—यथा दिष्टाग्निहोत्रे 'अधस्तात् समिधं धारयन्ननुद्रवेदुपरि देवेभ्यो धारयति' इत्यत्र उपरिधारणस्यापूर्वत्वात् धारयतीत्यनुवादरूपेऽपि वाक्ये विधिः कल्प्यते, तथेहापीति । यद्यप्याश्रमविधायकं वाक्यमन्यत्र श्रूयते 'ब्रह्मचर्यं समाप्य गृही भवेत् गृहाद्वनी भूत्वा प्रव्रजेत्' इति । अथाप्यसन्तमिव विभाव्यात्र विध्याश्रयणम् । 'यावज्जीवमग्निहोत्रं जुहोती'त्याद्या अविरक्तविषया वेदितव्याः ॥ २० ॥

---

**विधिर्वा धारणवत् ॥ ३ । ४ । २० ॥**

'उपरि हि देवेभ्यो धारयती'त्यत्र विध्यश्रवणेऽपि उपरिधारणस्याप्राप्तत्वेन यथा विधिराश्रीयते तथा प्रव्रजन्तीत्यत्रापि विधिराश्रयणीयः । वाशब्द एवार्थः ॥ २० ॥

इति प्रदीपे पुरुषार्थाधिकरणम् ॥ १ ॥

( अ. स. ) ब्रह्मवित्परमाप्नोतीत्यादिविद्याफलश्रुतेः ।
पुरुषार्थो विद्ययेति भगवान् बादरायणः ॥ १ ॥

## पूर्वपक्षः—

जैमिनिस्त्वाह विद्यायाः क्रतुशेषत्वमञ्जसा ।
विद्या क्रतोः शेषभूता विद्या संस्करणं यतः ॥ २ ॥
द्रव्यस्य प्रोक्षणेनेव कर्तुर्ज्ञानेन संस्क्रिया ।
स्वात्मयाथात्म्यविज्ञानात् कर्ता संस्क्रियते ननु ॥ ३ ॥
अनन्यो ब्रह्मणश्चायं कर्ता जीवः श्रुतौ श्रुतः ।
तत् ब्रह्मवेदनं नान्यत कर्तृयाथात्म्यवेदनात् ॥ ४ ॥
अर्थवादः केवलं तु श्रूयमाणा फलश्रुतिः ।
अपि ब्रह्मविदां कर्मस्वाचारश्च प्रदृश्यते ॥ ५ ॥
यदेव विद्ययेत्यादौ विद्यायाः क्रतुशेषता ।
गरीयस्या प्रकरणात् ननु श्रुत्यैव गम्यते ॥ ६ ॥
किं च विद्याकर्मणोश्च समन्वारम्भणश्रुतेः ।
विद्यावतोऽधिकृत्यैव कर्मणां च विधानतः ॥ ७ ॥
कुर्वन्नेवेह कर्माणीत्येवं नियमदर्शनात् ।
अपि कर्माङ्गभावस्तु विद्याया ननु युज्यते ॥ ८ ॥

## सिद्धान्तः—

नैतत् वेद्यं परं ब्रह्म जीवादर्थान्तरं श्रुतेः ।
तद्विद्या कर्तृसंस्काररूपेत्येतदसङ्गतम् ॥ ९ ॥
आचारदर्शनं तुल्यं कर्मानादरणश्रुतेः ।
यदेव विद्ययेत्यादिश्रुतिः सार्वत्रिकी न च ॥ १० ॥
समन्वारम्भणं नापि क्रत्वङ्गत्वनियामकम् ।
स्वं स्वं हि फलमाधातुं समन्वारम्भणं तयोः ॥ ११ ॥
यच्च वेदानधीत्येति तेन विद्या न चोच्यते ।
किन्त्वध्ययनमात्रं तु विद्या तूपासनात्मिका ॥ १२ ॥

कुर्वन्नेवेति नियमो विद्याङ्गत्वेन कर्मणाम् ।
विदुषां कर्मभिर्लेपो नैवेति स्तुतयेऽपि वा ॥ १३ ॥
श्रूयते चात्मकामानां भूयान् कर्मस्वनादरः ।
कर्मणामुपमर्दं च विद्यया श्रुतिराह हि ॥ १४ ॥
विद्यायामधिकारश्च श्रूयते चोर्ध्वरेतसाम् ।
न च क्रतुस्तेषु विद्या कथं क्रत्वङ्गतां भजेत् ॥ १५ ॥
कर्मत्यागापवादाच्च सन्न्यासादेरचोदनात् ।
विद्या क्रत्वङ्गमेवेति मन्यते जैमिनिर्मुनिः ॥ १६ ॥
अप्राप्तत्वाद्विधिस्तु स्यादूर्ध्वरेतस आश्रमिणः ।
गृहस्थनैष्ठिकादीनां समानैव विधेयता ॥ १७ ॥
कर्मत्यागापवादो यः सोऽविरक्तैकगोचरः ।
तत्पुमर्थो विद्ययेति भगवान् बादरायणः ॥ १८ ॥
इति भाष्ये पुरुषार्थाधिकरणम् ॥ १ ॥

---

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ ३ । ४ । २१ ॥

इदमाम्नायते छान्दोग्ये 'स एष रसानां रसतमः परमः परार्ध्योऽष्टमो य उद्गीथः' इति । अत्र—उद्गीथे रसतमत्वदृष्टिर्विधीयते उत उद्गीथस्तुतिमात्रम् । आह—स्तुतिमात्रम्, कस्मात्?, उपादानात्

---

**स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ ३ । ४ । २१ ॥**

छान्दोग्ये उद्गीथं प्रक्रम्य श्रूयते—'स एष रसानां रसतमः परमः परार्ध्योऽष्टमो य उद्गीथ' इति । अत्र उद्गीथे रसतमत्वरूपणं स्तुतिमात्रम् । यथा—'इयमेव जुहू'रिति जुहूमुपादाय इयमेवेति पृथिवीत्वरूपणं स्तुतिमात्रं तथा य उद्गीथ इत्युद्गीथपदेनोद्गीथमुपादाय रसतम इति निरूपणात् स्तुतिमात्रम् । न तु तद्दृष्टिविधानम् । इति चेन्न । अपूर्वत्वात्—न स्तुतिरूपमेतत् । सिद्धेन तु स्तुतिः । इह श्रूयमाणं रसतमत्वमपूर्वमिति अपूर्वत्वात् तद्दृष्टिविधिरेव ॥२१॥

रसानां रसतमः य उद्गीथ इति क्रत्वङ्गभूतस्योद्गीथस्योपादानात् । यथा 'इयमेव जुहूः स्वर्गो लोक आहवनीयः' इत्यत्र क्रत्वङ्गभूतं जुह्वादिकं निर्दिश्य इयमेवेत्यादिना पृथिवीत्वादिकं रूप्यते, तच्च स्तुतिमात्रं तथेहापि । ननु–एवंजातीयकवाक्यानामुद्गीथोपासनपरत्वे सन्दिग्धे कथं गोदोहनादिवदनियमः प्राक् समर्थितः । सत्यम् । एषां वाक्याना-मुपासनपरत्वं सिद्धवत्कृत्य गोदोहनादिवदनियमः समर्थितः । इह तूपासनपरत्वं समर्थ्यते । प्रासङ्गिकश्चायं विचारः । पूर्वाधिकरणे पूर्व-पक्षबीजं स्तुतिमात्रमिति । इहापि तदेवेति स्तुतिप्रसङ्गात् सङ्गतिः । अत्रोच्यते–इति चेन्नेति । न स्तुतिमात्रम् । अप्राप्तत्वात् । रसतमत्वं ह्युद्गीथे प्रमाणान्तरेणाप्राप्तम् । प्राप्तेनैव तु स्तुतिः । नन्वप्राप्तगुणविधाने-नापि स्तुतिर्दृष्टा । सत्यम् । तेन च गुणेन योग्येन भाव्यम् । नाऽयोग्येन । रसतमत्वमुद्गीथे नान्वययोग्यम् । ननु मुख्यवृत्त्योपस्थितस्यायोग्य-त्वेऽपि अमुख्यवृत्त्युपस्थापितगुणान्वये योग्यता स्यात् । नैवम् । अमुख्य-वृत्त्युपस्थापितगुणावबोधनेन स्तुतित्वकल्पनापेक्षया मुख्यवृत्त्युपस्थापित-रसतमत्वरूपणेन तद्दृष्टिविधानमित्येव तु युक्तम् । अपूर्वत्वात् । ननु 'इयमेव जुहू'रित्यत्रापि पृथिवीत्वदृष्टिविधानमित्येव किं न स्यात् । नैवम् । विधिप्रकरणसन्निधानादेकवाक्यतया स्तुतिपरत्वं 'इयमेव जुहू'रित्यस्य युक्तम् । इह नोद्गीथविधिसान्निध्यम्, येनैकवाक्यता-श्रयणेन तत्स्तुतिपरत्वमाश्रीयेत । तस्मात् उद्गीथे रसतमत्वदृष्टिविधा-यकमेवैतद्वाक्यम् ॥ २१ ॥

## भावशब्दाच्च ॥ ३ । ४ । २२ ॥

सन्निहितश्च 'उपासीते'ति उपासनविध्यवबोधको विधिप्रत्ययान्तः

---

**भावशब्दाच्च ॥ ३ । ४ । २२ ॥**

अस्ति चात्र भावशब्दः–उपासीतेति विधिप्रत्ययान्तः क्रियावाची शब्दः । 'ओमित्येतदक्षरमुद्गीथमुपासीत तस्योपव्याख्यान'मित्युपक्रम्य श्रूयते–'एषां

क्रियाभिधायकः शब्दः । ततश्च रसतमत्वदृष्टिरेवात्र विधीयते । नोद्गीथस्तुतिमात्रम् ॥ २२ ॥

(अ. स.) उद्गीथे रसतमताश्रुतिः स्तुतौ वाथ दृष्टौ वा ।
स्तुतिमात्रं जुह्वादौ पृथिवीत्वादिश्रुतिर्यद्वत् ॥ १ ॥
नैवमपूर्वतया रसतमता दृष्ट्यै निरूप्यते तु तथा ।
क्रत्वङ्गोद्गीथविधेर्न सन्निधिस्तत्स्तुतिर्नेयम् ॥ २ ॥
किन्तूद्गीथोपासनविधिसान्निध्यादुपासनार्थैव ।
उद्गीथोपास्तिभिदा विद्यासाम्याद्विचारिता चेह ॥ ३ ॥

इति भाष्ये स्तुतिमात्राधिकरणम् ॥ २ ॥

---

## पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ ३ । ४ । २३ ॥

'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम' 'श्वेतुकेतुर्हारुणेय आसे'त्येवमादिराख्यायिका उपनिषत्स्वाम्नायते। ता एता आख्यायिकाः किं पारिप्लवार्था उत विद्यार्था इति । अश्वमेधयागे राज्ञो यजमानस्य पुरतः अध्वर्युणा वैदिकानि आख्यानानि वक्तव्यानि, तदिदं पारिप्लवाख्यं कर्म 'पारिप्लवमाचक्षीत' इति विहितम् । अत्राह—

---

भूतानां पृथिवी रसः' इत्यादि 'स एष रसानां रसतम' इत्यन्तम् । तस्मात् रसतमत्वदृष्टिविधानपरमेवेदं वाक्यम् ॥ २२ ॥

इति प्रदीपे स्तुतिमात्राधिकरणम् ॥ २ ॥

---

**पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ ३ । ४ । २३ ॥**

तत्र तत्रोपनिषत्सु 'प्रतर्दनो ह दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम' 'अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः' इत्याद्या आख्यायिकाः श्रूयन्ते, ताः किं विद्यास्तुत्यर्था उत पारिप्लवार्था इत्येतद्विचार्यते । आह—पारिप्लवार्थाः 'आख्यानानि शंसन्ती'ति पारिप्लवे आख्यायिकानां विनियोगश्रवणात् इति । अत्रोच्यते—इति चेन्नेति । विशेषितत्वात्—'आख्यानानि शंसन्ती'-

पारिप्लवार्था एता आख्यायिकाः । उपक्रमे–'सर्वाण्याख्यानानि शंसन्ती'ति असङ्कोचेन विनियोगश्रवणात् । इति । अत्रोच्यते–न विशेषितत्वादिति । नैता आख्यायिकाः पारिप्लवार्थाः । उपक्रमे श्रूयमाणस्य सर्वशब्दस्य वाक्यशेषे विशेषश्रवणात् सङ्कोचावश्यंभावात् । तथा हि वाक्यशेषः–'प्रथमेऽहनि मनुर्वैवस्वतो राजा ××× द्वितीयेऽहनि यमो वैवस्वतो राजा' इत्यादिः । शाखानामानन्त्यात् आख्यायिकानामप्यानन्त्येन सर्वाख्यानानां शंसनं च दुष्करम् । सङ्कोचस्यावश्यंभावे वाक्यशेषानुरोधेन सङ्कोचस्य न्याय्यत्वादुपनिषदि श्रूयमाणानामाख्यायिकानां न पारिप्लवार्थता । अपि तु सन्निहितविद्यास्तुत्यर्थतैव ॥ २३ ॥

## तथा चैकवाक्योपबन्धात् ॥ ३ । ४ । २४ ॥

'सोऽरोदीत्' इत्यस्य सन्निहितकर्मविध्येकवाक्यतया कर्मस्तुत्यर्थतेव एतासामपि आख्यायिकानां सन्निहितविद्याविधायकवाक्यैकवाक्यतोपबन्धेन विद्यास्तुत्यर्थतैव युक्ता न पारिप्लवार्थता ॥ २४ ॥

(अ. स.) 'श्वेतकेतुर्हारुणेय' इत्याद्याख्यायिकास्तु याः ।
पारिप्लवार्थाः किं वा ताः विध्यर्था इति चिन्त्यते ॥ १ ॥
आद्य परिप्लवार्थास्तास्तत्र तद्विनियोगतः ।
नैवं विध्येकवाक्यत्वात् विद्यास्तुतय एव ताः ॥ २ ॥
पारिप्लवे शंसनीया नियता अपरास्तु ताः ।
मनुर्वैवस्वतो नामेत्यादिना परिकीर्तिताः ॥ ३ ॥

इति भाष्ये पारिप्लवाधिकरणम् ॥ ३ ॥

---

त्युक्त्वाऽनुपदं 'मनुर्वैवस्वतो राजे'त्यादिना पारिप्लवे विनियोज्यानामाख्यायिकाविशेषाणां विशेषतः श्रवणात् औपनिषदानामाख्यायिकानां विद्यायामेव विनियोगः स्तुत्यर्थतया ॥ २३ ॥

## तथा चैकवाक्योपबन्धात् ॥ ३ । ४ । २४ ॥

सन्निहितविद्यावबोधकवाक्यैकवाक्यतयोपनिबन्धश्च तथा सत्येव सिध्यति ॥ २४ ॥

इति प्रदीपे पारिप्लवार्थाधिकरणम् ॥ ३ ॥

## अत एव चाग्नेन्धनाद्यनपेक्षा ॥ ३ । ४ । २५ ॥

पुरुषार्थाधिकरणे ऊर्ध्वरेतस आश्रमिणः सन्तीत्युक्तम् । तेषां विद्यायामधिकारोऽस्ति वा नास्तीत्येतद्विचार्यते । समनन्तरपूर्वाधिकरणद्वयं तु स्तुतिप्रसङ्गादवान्तरसङ्गतिविशेषात् प्राप्तम् । विद्यायाः कर्माङ्गकत्वात् कर्मणां चाग्निसाध्यतया ऊर्ध्वरेतसामग्नावनधिकारात् न विद्यायामधिकारस्तेषामित्याशङ्कायामाह—अत एव—यतो वेदान्तवाक्येषु 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' 'यदिच्छन्तो ब्रह्मचर्यं चरन्ति' 'ये चेमेऽरण्ये श्रद्धातप इत्युपासते' 'ब्रह्मसंस्थोऽमृतत्वमेति' इति ऊर्ध्वरेतसामाश्रमिणामपि विद्यायामधिकारः श्रूयते । अत एव हेतोर्विद्याऽग्नीन्धनाद्यनपेक्षाऽपि आश्रमविशेषनिष्ठानधिकारिणोऽपेक्ष्य भवति । अग्नेरिन्धनमाधानम्—अग्नीन्धनम् । स्वाश्रमविहितकर्मसापेक्षतया च कर्माङ्गकत्वं विद्याया अक्षतम् ॥ २५ ॥

(अ. स.) निरग्निकानां विद्यायां नाधिकार इति त्वसत् ।
विद्यायामधिकारस्योर्ध्वरेतस्स्वपि च श्रुतेः ॥ १ ॥
अग्नीन्धनानपेक्षैव विद्या तेषु प्रवर्तते ।
विद्याया अङ्गसिद्धिस्तु तत्तदाश्रमकर्मभिः ॥ २ ॥

इति भाष्ये अग्नीन्धनाद्यधिकरणम् ॥ ४ ॥

---

## अत एव चाग्नीन्धनाद्यनपेक्षा ॥ ३ । ४ । २५ ॥

ऊर्ध्वरेतसां विद्यायामधिकारोऽस्तीति यदुक्तं तदेव शङ्कानिरसनमुखेन दृढीक्रियते । ननु ऊर्ध्वरेतसां यज्ञादावनधिकारात्तदङ्गकविद्यायां न तेषामधिकारः । तत्रोच्यते 'अत एव—यत एव 'ब्रह्मसंस्थोऽमृतत्वमेति' 'ये चेमेऽरण्ये श्रद्धातप इत्युपासते' 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इति ऊर्ध्वरेतसामपि ब्रह्मविद्यायामधिकारः श्रूयते अत एव तेषु विषये ब्रह्मविद्याऽग्नीन्धनाद्यनपेक्षैव—अग्निहोत्राद्यनपेक्षैव ॥ २५ ॥

इति प्रदीपेऽग्नीन्धनाद्यधिकरणम् ॥ ४ ॥

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ ३ । ४ । २६ ॥

विद्यायाः अग्नीन्धनाद्यनपेक्षत्वे ऊर्ध्वरेतसोऽपेक्ष्येव सर्वानपेक्ष्य तदनपेक्षत्वं स्यादित्यत्राह—सर्वापेक्षा चेति । गृहस्थेषु विषये अग्नीन्धनादिसर्वकर्मसापेक्षैव, कस्मात् ? यज्ञादिश्रुतेः—'यज्ञेन दानेन तपसाऽनाशकेन ब्राह्मणा विविदिषन्ती'ति वेदनस्य यज्ञादिसापेक्षताश्रुतेः । ननु विविदिषन्तीति विविदिषासाधनत्वमेवावगम्यते । न । असिना जिघांसतीत्यत्रेव धात्वर्थे एव साधनत्वमवगम्यते । नतु सन्नर्थे । ननु वेदनस्य वाक्यजन्यतया न कर्मणां तत्रापेक्षा । न । वाक्यजन्यज्ञानादन्यद्देवोपासनात्मकं ज्ञानं मोक्षसाधनम् । सा च विद्या विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययधारालक्षणाऽहरहरभ्यासाधेयातिशयाऽन्तःकरणनैर्मल्यसाध्या तदाधायककर्मसापेक्षैव । अश्ववत्—यथाऽश्वः स्वयं गमनसाधनभूतोऽपि परिकरभूतप्रग्रहादिसापेक्षः । तथा विद्या कर्मसापेक्षा । अहरहरनुष्ठीयमानैः स्ववर्णाश्रमोचितैः कर्मभिर्विशोध्यते ह्यन्तःकरणं विद्यावृद्ध्यनुगुणम् ॥ २६ ॥

( अ. स. ) यज्ञादिसर्वसापेक्षा विद्या गृहिषु वर्तते ।
यज्ञादिभिर्विविदिषा साधनैः श्रूयते यतः ॥ १ ॥
अपेक्षते परिकरं यथाऽश्वो गतिसाधनम् ।
वर्णाश्रमोचितं कर्म तथा विद्याऽप्यपेक्षते ॥ २ ॥

इति भाष्ये सर्वापेक्षाधिकरणम् ॥ ५ ॥

---

ननु तर्हि अग्नीन्धनाद्यनपेक्षैव सा सर्वेष्वप्याश्रमेषु, इत्यत्राह—

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ ३ । ४ । २६ ॥

अश्वो गमनसाधनभूतोऽपि यथा स्वपरिकरबन्धनादिकमपेक्षते तथा विद्या स्वयं मोक्षे साधनीभूताऽपि यज्ञादिकमाश्रमोचितं कर्मापेक्षत एव । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने'ति यज्ञाद्याश्रमकर्मसापेक्षत्वश्रवणात् । ऊर्ध्वरेतस्सु यज्ञादावनधिकरात्, विद्यायाः अग्नीन्धनानपेक्षत्वेऽपि अग्नीन्धननिरपेक्षकर्मान्तरसापेक्षतास्त्येवेति न क्षतिः ॥ २६ ॥

इति प्रदीपे सर्वापेक्षाधिकरणम् ॥ ५ ॥

## शमदमाद्युपेतः स्यात् तथाऽपि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् ॥ ३ । ४ । २७ ॥

ननु 'यज्ञेन दानेने'ति श्रुत्या कर्मसापेक्षता विद्याया अवगम्यते । 'शान्तो दान्त' इत्यनेन शमादिसापेक्षता च गम्यते । उभयसापेक्षता च दुर्घटा, उभयोर्विरोधात् । यज्ञादिकर्म इन्द्रियप्रवृत्तिसंपाद्यम्, शमादि च तदुपरतिलक्षणम्। **अत्रोच्यते**—तथापि—विद्यायाः कर्मसापेक्षत्वेऽपि विद्यायां प्रवृत्तः शमदमाद्युपेतः स्यात्, कस्मात् ?, तद्विधेः—'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत्' इति शमादेर्विधानात् विद्याङ्गतया तेषामवश्यानुष्ठेयत्वात् । इदमुक्तं भवति—विद्या ह्युपासनरूपा विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहलक्षणा विक्षिप्तचित्तैर्दुःसंपादा शमादिकमपेक्षत एव । यज्ञादि चान्तःकरणविशुद्धये अपेक्ष्यत एव। न च तयोर्विरोधः। विषयभेदात्। विहितव्यतिरिक्तविषयत्वात् शमस्य। न च विहितमपि कर्म अनुदिनमनुष्ठीयमानमिन्द्रियव्यापृतिरूपतया वासनामापादयत् चेतसो व्याक्षेपमेव कारयेत्; तत् शमदमादिसिद्धिः कथमिति वाच्यम् । ईश्वराराधनरूपतया क्रियमाणं हि वासनोपशमायैव प्रभवति । तदुभयोरविरोधात् शमदमादीनामप्यङ्गत्वमविरुद्धम् ॥ २७ ॥

---

### शमदमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् ॥ ३ । ४ । २७ ॥

तथाऽपि—इन्द्रियव्यापृतिगर्भयज्ञादिकर्मसापेक्षत्वेऽपि विद्यायाः तन्निष्ठः शमदमाद्युपेतः स्यात्, तदङ्गतया तद्विधेः—विद्याङ्गतया 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्ये'दिति शमदमादेर्विधानात्, तेषां शमादीनामवश्यानुष्ठेयत्वात् । शमश्चाविहितविषयेभ्यो विनिवृत्तिरिति यज्ञादिस्वाश्रमधर्मानुष्ठानं न शमप्रच्युतिकरम् ॥ २७ ॥

**इति प्रदीपे शमाद्यधिकरणम् ॥ ६ ॥**

---

( अ. स. ) भाव्यं शमाद्युपेतेन विद्यानिष्ठेन तद्विधेः ।
चित्तावधानसंपत्त्यै कल्पते हि शमादिकम् ॥ १ ॥
विरोधश्च शमादीनां नैव विद्याङ्गकर्मभिः ।
विद्याङ्गं विहितं कर्म निषिद्धेभ्यः शमादि तु ॥ २ ॥
तत् युज्यते चाधिकारो विद्यायां गृहिणामपि ।
विहितेषु प्रवृत्त्या च निषिद्धेष्वप्रवृत्तितः ॥ ३ ॥
इति भाष्ये शमाद्यधिकरणम् ॥ ६ ॥

---

शमादेर्विद्याङ्गत्वमुक्तम् । तत्प्रसङ्गात् भोजनविषये यः शमः स विचार्यते—

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ ३ । ४ । २८ ॥

इदमाम्नायते प्राणविद्यायाम्—'न ह वा एवंविदि किंचनानन्नं भवति' 'न ह वा अस्यानन्नं जग्धं भवति न ह वाऽनन्नं परिगृहीतं भवति' इति । अत्र श्रूयमाणा प्राणविदः सर्वान्नानुमतिः किं सर्वदा उत प्राणात्यय एव । आह—सर्वदैवेति । प्राणविदमधिकृत्य विशेषतः श्रवणात् । प्राणविद एव चेत् सर्वदा सर्वान्नानुमतिः किंपुनर्न्यायेन ब्रह्मविदस्तत्सिद्धिरिति पूर्वपक्षिणो हार्दम् । अत्रोच्यते-श्रूयमाणेयं

---

**सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ ३ । ४ । २८ ॥**

छान्दोग्ये प्राणविद्यायां 'न ह वाऽस्यानन्नं जग्धं भवति' 'नानन्नं परिगृहीतं भवति' 'न ह वैवंविदि किञ्चनानन्नं भवति' इति सर्वान्नानुमतिश्रवणात् विदुषो यस्य कस्यचिदन्नभक्षणेऽपि न दोषः इत्यत्राह—सर्वान्नानुमतिर्ब्रह्मविद्यानिष्ठानां प्राणात्ययप्रसङ्गे एव, न तदापदोऽन्यत्र, तद्दर्शनात्—प्राणात्यय एव तस्याग्राह्यान्नभक्षणस्य श्रुतौ दर्शनात् । उषस्तेश्चाक्रायणस्य ब्रह्मविद्यानिष्ठस्य प्राणात्ययावसरे प्राणसंरक्षणाय हस्तिपकेभ्योऽन्नग्रहणं तद्दत्तं तैः प्रदत्तपानीयप्रतिषेधश्च छान्दोग्ये श्रूयते । तस्माद्विदुषामपि आपदोऽन्यत्र न सर्वान्नानुमतिः । प्राणविद्यानिष्ठस्य या सर्वान्नानुमतिः साऽप्यापद्येव ॥२८॥

सर्वान्नानुमतिः प्राणात्यय एव, न सर्वदा । ब्रह्मविदोऽपि प्राणात्यये एव तस्य–अभोज्यान्नभोजनस्य श्रुतौ दर्शनात् । तथा च श्रूयते–'सहेभ्यं कुलमाषान् खादन्तं विभिक्षे तं होवाच नेतोऽन्ये विद्यन्ते यच्च ये मे इमे उपनिहिता इति, एतेषां मे देहीति होवाच तानस्मै प्रददौ । हन्तानुपानमिति, उच्छिष्टं वै मे पीतं स्यादिति होवाच, न स्विदेतेऽप्युच्छिष्टा इति, न वाऽजीविष्यमिमानखादन्निति होवाच कामो मे उदपान'मिति । अत्र इभ्यस्योषस्तेर्ब्रह्मविदश्चोक्तिप्रत्युक्तिपर्यालोचनया ब्रह्मविदोऽपि प्राणात्यय एव सर्वान्नानुमतिरिति अवगम्यते । उषस्तिश्चाक्रायणो ब्रह्मवित् इभ्येन भुक्तावशिष्टान् उच्छिष्टतया अभोज्यत्वेन ज्ञापितानपि भिक्षितवान् 'एतेषां मे देही'ति । अथेभ्येन दीयमानाः पीतावशिष्टा अपस्तु न गृहीतवान् । आह चेदम्–'नवा अजीविष्यमिमानखादन्, कामो मे उदपानम्, उच्छिष्टं वै पीतं स्या'दिति । ब्रह्मविदामपि सर्वान्नानुमतिः प्राणात्यये चेत् किमु वक्तव्यं प्राणविदः । तस्मात् प्राणविदः श्रूयमाणा सर्वान्नानुमतिः प्राणात्यय एव बोध्या ॥ २८ ॥

## अबाधाच्च ॥ ३ । ४ । २९ ॥

सर्वान्नानुमतेः प्राणात्ययमात्रविषयत्वे सत्येव आहारशुद्धेः ध्रुवानुस्मृतिहेतुत्वेन श्रूयमाणाया अबाधः, अन्यथा बाधः स्यात् । श्रूयते च 'आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः' इति ॥ २९ ॥

## अपि स्मर्यते ॥ ३ । ४ । ३० ॥

स्मर्यते च प्राणसंशयादन्यत्र सर्वान्नानुमतिनिषेधः । 'प्राणसंशय-

---

**अबाधाच्च ॥ ३ । ४ । २९ ॥**

'अहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृति'रिति ध्रुवानुस्मरणलक्षणब्रह्मविद्यायाः साधनतया श्रूयमाणाया आहारशुद्धेरबाधः प्राणात्ययमात्रे सर्वान्नानुमतेरेव भवति । अन्यथा बाधो भवेत् ॥ २९ ॥

**अपि स्मर्यते ॥ ३ । ४ । ३० ॥**

'प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा' इति सर्वान्नानुमतिरापद्येव स्मर्यते ॥ ३० ॥

मापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा' इति ॥ ३० ॥

## शब्दश्चातोऽकामकारे ॥ ३ । ४ । ३१ ॥

यतः सर्वान्नानुमतिर्ब्रह्मविदोऽपि प्राणात्ययमात्रविषया, अत एव श्रुतौ श्रूयमाणः कामकारप्रतिषेधकः शब्दः सङ्गच्छते। तथा हि श्रुतिः— 'तस्मात् ब्राह्मणः सुरां न पिबति पाप्मना नोत्सृजा' इति ॥ ३१ ॥

(अ. स.) श्रूयते प्राणविद्यायां सर्वान्नानुमतिस्तु या ।
सा तु प्राणात्यये प्राप्ते नापदोऽन्यत्र सा मता ॥ १ ॥
उषस्तेर्ब्रह्मनिष्ठस्य यदभक्ष्यान्नभक्षणम् ।
आपद्येव श्रुतं प्राणविद्यानिष्ठस्य किं पुनः ॥ २ ॥
आहारशुद्धौ सत्त्वस्य शुद्धिः श्रुत्या हि बोध्यते ।
अभक्ष्यभक्षणेऽदोषमापद्येव स्मरन्ति च ॥ ३ ॥
संहितायां कठानां च कामकारो निषिध्यते ॥ ४ ॥

इति भाष्ये सर्वान्नानुमत्यधिकरणम् ॥ ७ ॥

---

## विहितत्वाच्चाश्रमकर्मापि ॥ ३ । ४ । ३२ ॥

कर्मणां विद्याङ्गत्वमुक्तम्, अथ विद्याङ्गत्वे आश्रमाङ्गत्वं संभवति वा नेति विचार्यते। आश्रमाङ्गत्वे केवलाश्रमिभिरप्यनुष्ठेयत्वं सिध्यति,

---

### शब्दश्चातोऽकामकारे ॥ ३ । ४ । ३१ ॥

अत एव शब्दः श्रूयते अकामकारे—स्वेच्छाचरणे, 'तस्मात् ब्राह्मणः सुरां न पिबेत् पाप्मनोत्सृजा' इति ॥ ३१ ॥

इति प्रदीपे सर्वान्नानुमत्यधिकरणम् ॥ ७ ॥

---

### विहितत्वाच्चाश्रमकर्मापि ॥ ३ । ४ । ३२ ॥
### सहकारित्वेन च ॥ ३ । ४ । ३३ ॥
### सर्वथाऽपि त एवोभयलिङ्गात् ॥ ३ । ४ । ३४ ॥

अग्निहोत्रादि 'यावज्जीवमग्निहोत्रं जुहोती'त्यादिना विहितत्वादाश्रमाङ्गं

अतथात्वे तैरननुष्ठेयत्वम् । आह–विद्याङ्गतया नाश्रमाङ्गत्वम् । आश्रमाङ्गत्वे च स्वीक्रियमाणे नित्यानित्यफलसंयोगविरोधः प्रसज्येत । अत्रोच्यते–विद्याङ्गभूतं कर्म भवत्याश्रमकर्मापि, कस्मात्?, विहितत्वात्–आश्रमिणोऽधिकृत्य 'यावज्जीवमग्निहोत्रं जुहोती'त्यादिना विहितत्वात् । तत् केवलाश्रमिभिरवश्यमनुष्ठेयानि । यावज्जीवमिति जीवनं निमित्तीकृत्य विहितत्वात् आश्रमाङ्गत्वं व्यक्तम् ॥ ३२ ॥

## सहकारित्वेन च ॥ ३ । ४ । ३३ ॥

विद्यासहकारित्वेन च विधीयन्ते कर्माणि 'यज्ञेन दानेन तपसाऽनाशकेने'त्यादिना । विद्यासहकारित्वं विद्यानिष्पादनद्वारेण । तदेवमुभयथाविधानात् विनियोगपृथक्त्वन्यायेन नित्याग्निहोत्रकाम्याग्निहोत्रवत् उभयार्थत्वं युज्यते । नित्यानित्यसंयोगस्यापि नावसरः ॥ ३२ ॥

## सर्वथाऽपि त एवोभयलिङ्गात् ॥ ३ । ४ । ३४ ॥

सर्वथाऽपि–आश्रमाङ्गत्वे कर्माङ्गत्वेऽपि, यज्ञादयस्त एव ये आश्रमाङ्गभूतास्त एव विद्याङ्गभूता अपि, न कर्मस्वरूपे भेदः । उभयत्र–कर्माङ्गतावबोधके विद्याङ्गतावबोधके च यज्ञादिशब्देनैव प्रत्यभिज्ञाप्यमानत्वाल्लिङ्गात् ॥ ३४ ॥

## अनभिभवं च दर्शयति ॥ ३ । ४ । ३५ ॥

विद्यायाः अनभिभवम्–पापकर्मभिरप्रतिबन्धलक्षणमनभिभवम्

---

कर्मापि भवति 'यज्ञेन दानेन' 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह' त्यादिना विद्यासहकारित्वश्रवणात् विद्याङ्गमपि भवति । उभयथाऽपि त एवाग्निहोत्रादयः, नाश्रमाङ्गेभ्यो यज्ञादिभ्यो विद्याङ्गतया पृथगनुष्ठेयाः । किन्तु तन्त्रेण । उभयत्र श्रुतौ यज्ञादिशब्दैः प्रत्यभिज्ञानाल्लिङ्गात् ॥ ३२ ॥ ३३ ॥ ३४ ॥

### अनभिभवं च दर्शयति ॥ ३ । ४ । ३५ ॥

'धर्मेण पापमपनुदती'ति श्रुतिरनभिभवं विद्याया अनभिभवं–विद्योत्पत्तिप्रतिबन्धकपापापनोदनरूपं कर्मफलं दर्शयति ॥ ३५ ॥

इति प्रदीपे विहितत्वाधिकरणम् ॥ ८ ॥

श्रुतिर्दर्शयति–'धर्मेण पापमपनुदती'ति । यज्ञादयो धर्माः अनभिसंहितफला अनुष्ठीयमानाः अन्वहं चित्तशुद्धिं वर्धयन्तो विद्यानिष्पत्तये प्रभवन्तीति त एव यज्ञादयो विद्याङ्गभूता अपि भवन्ति ॥ ३५ ॥

विद्याङ्गभूतयज्ञादेः स्यान्नवाश्रमकर्मता ।
आह विद्याङ्गभूतस्य न स्यादाश्रमकर्मता ॥ १ ॥
यत् नित्यानित्यसंयोगविरोधः प्रसजेत्तदा ।
अत्रोच्यतेऽग्निहोत्रादेर्यावज्जीवं विधानतः ॥ २ ॥
यज्ञेनेत्यादिवाक्येन विद्यासाधनताश्रुतेः ।
सिध्यत्याश्रमधर्मत्वं विद्याङ्गत्वं च कर्मसु ॥ ३ ॥
विनियोगपृथक्त्वेन युज्यते चोभयार्थता ।
सर्वथा नैव भेदोऽस्ति कर्मणोरुभयोरपि ॥ ४ ॥
यज्ञशब्देनोभयत्र कर्मणामवबोधनात् ।
धर्मेणैवानभिभवो विद्यायाः श्रूयतेऽपि च ॥ ५ ॥

इति भाष्ये विहितत्वाधिकरणम् ॥ ८ ॥

---

## अन्तरा चापि तु तद्दृष्टेः ॥ ३ । ४ । ३६ ॥

आश्रमप्रसङ्गादनाश्रमिणां विद्याधिकारोऽस्ति वा नेति विचार्यते । ये विधुराः–अगृहीतदारा विनष्टदारा वा अप्रव्रजिता गृहात्, तेषां ब्रह्मविद्यायामधिकारोऽस्ति उत न । आह–नेति, कस्मात् ? विधुराणामग्नावनधिकारेण यज्ञेऽनधिकारात् विद्याङ्गभूतकर्मानुष्ठानासंभवेन अङ्गिनोऽनिष्पत्तेः । अत्रोच्यते–अन्तरा चापि तु–तुशब्दात् पूर्वपक्षो व्यावर्त्यते । चशब्द एवार्थः । अन्तराऽपि आश्रमानन्तराऽपि आश्रमान्वि-

---

अनाश्रमिणामपि ब्रह्मविद्यायामधिकारोऽस्तीत्युच्यते—

**अन्तरा चापि तु तद्दृष्टेः ॥ ३ । ४ । ३६ ॥**

आश्रममन्तराऽपि–आश्रमं विनाऽपि, आश्रमरहितेष्वपि रैक्कादिषु तद्दृष्टेः–विद्यादर्शनादनाश्रमिणामप्यस्ति विद्यायामधिकारः ॥ ३६ ॥

नाऽपि अनाश्रमिणामपि अधिकारोऽस्त्येव विद्यायाम् । तद्दृष्टेः—अनाश्रमिषु रैक्वभीष्मादिषु तस्याः—ब्रह्मविद्याया दर्शनात् । न च नियमः कर्मणाङ्गभूतेन यज्ञेनैव भाव्यमिति । 'दानेन तपसे'त्यपि श्रवणात् । तस्मात् आश्रम्यनाश्रमिसाधारणदानतपोजपादिलक्षणैः कर्मभिर्विद्यानुग्रहसंभवः ॥ ३६ ॥

## अपि स्मर्यते ॥ ३ । ४ । ३७ ॥

जपेनैवानाश्रमिसाधारणेन विद्यानुग्रहः स्मर्यते च । 'जप्येनापि च संसिध्येत् ब्राह्मणो नात्र संशयः । कुर्यादन्यन्न वा कुर्यात् मैत्रो ब्राह्मण उच्यते ॥' इति । संसिद्धिश्चात्र विद्यासिद्धिः ॥ ३७ ॥

## विशेषानुग्रहश्च ॥ ३ । ४ । ३८ ॥

श्रूयते च अनाश्रमिसाधारणैर्धर्मविशेषैर्विद्याया अनुग्रहः 'तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विच्छे'दिति ॥ ३८ ॥

## अतस्त्वितरत् ज्यायो लिङ्गाच्च ॥ ३ । ४ । ३९ ॥

ननु—यदि अनाश्रमिसाधारणैर्विद्यानुग्रहः सुशकः, तर्हि सर्वैरेव विविदिषुभिः आश्रमक्षमैरपि आश्रमा उपेक्ष्येरन्, तथा च सति

---

**अपि स्मर्यते ॥ ३ । ४ । ३७ ॥**

नन्वानाश्रमिणां विद्याङ्गभूतकर्मण्यनधिकारात् कथं विद्यायामधिकारः । उच्यते । आश्रमाभावेन तत्प्रयुक्तकर्माभावेऽपि वर्णधर्मस्यैव विद्याङ्गत्वेन ततो विद्यायामधिकारसंभवात् । स्मर्यते च जपादिना तत्सिद्धिः—'जप्येनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः' ॥ ३७ ॥

**विशेषानुग्रहश्च ॥ ३ । ४ । ३८ ॥**

तपःप्रभृतिभिर्विशेषैः आश्रम्यनाश्रमिसाधारणैर्विद्याया अनुग्रहः श्रूयते च—'तपसा ब्रह्मचर्येण श्रद्धया विद्यया चात्मानमन्विच्छे'दिति ॥ ३८ ॥

**अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३ । ४ । ३९ ॥**

अतः अनाश्रमित्वादितरत्तु, आश्रमित्वं, ज्यायः विद्याङ्गभूता धर्मा आश्रमिणां हि भूयांसो भवन्ति आश्रमधर्मा वर्णधर्माश्चेति । लिङ्गात्—स्मृतेः,

'यज्ञेने'ति श्रुतिरपार्था स्यात्, तत्राह—अतस्त्विति । अतः—निराश्रमित्वादाश्रमित्वमेव ज्यायः । कस्मात्? लिङ्गाच्च—लिङ्गमिति स्मृतिरुच्यते । चशब्द एवार्थे । स्मृतेरेवेत्यर्थः । स्मर्यते चाश्रमित्वस्योपादेयत्वम् 'अनाश्रमी न तिष्ठेत्तु क्षणमेकमपि द्विजः' इति । इदं च वचनमनापद्विषयकम् । आपदि तु अनाश्रमित्वमभ्यनुज्ञायत एव ॥ ३९ ॥

(अ. सं.) विधुराणां च विद्यायामधिकारस्तु वर्तते ।
असंभवेऽपि यज्ञादेरग्निसाध्यस्य कर्मणः ॥ १ ॥
जपादिनाऽपि विद्याङ्गकर्मणस्तेषु संभवात् ।
रैक्कादयो ब्रह्मविदः श्रूयन्ते विधुरा ननु ॥ २ ॥

इति भाष्ये विधुराधिकरणम् ॥ ९ ॥

---

## तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥ ३ । ४ । ४० ॥

ननु विधुराणां चेदनाश्रमिणामपि विद्यायामधिकारस्तर्हि आश्रमभ्रष्टानामपि विद्यायामधिकारः किं न स्यात्? । तत्रोच्यते—तद्भूत-

---

इदमवगम्यते। तथा हि—'अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः' इति । इदं च वचनं धर्मभूयस्त्वाभिप्रायेण ॥ ३९ ॥

इति प्रदीपे विधुराधिकरणम् ॥ ९ ॥

---

## तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥ ३ । ४ । ४० ॥

नैष्ठिकवानप्रस्थसंन्यस्तानां ततः प्रच्यवेऽपि विधुरवत् वर्णधर्ममात्रेण ब्रह्मविद्योपकारसंभवात् विद्यायामधिकारः स्यादित्यत्रोच्यते—तद्भूतस्य—नैष्ठिकादिभावं प्राप्तस्य अतद्भावः—तद्भावराहित्यं नैव योग्यम् । कस्मात्? अतद्भावेभ्यो नियमात्—'अत्यन्तमाचार्यकुले आत्मानमवसादयन्' 'अरण्यमियात्ततो न पुनरेयात्' 'समाप्याग्नीन्न पुनरावर्तये'दिति नैष्ठिकादीनां ततः प्रच्युत्यावस्थानस्य निषेधात् । जैमिनेरप्येतदेव मतम् ॥ ४० ॥

स्येति । तद्भूतस्योर्ध्वरेतस्त्वैकान्तं नैष्ठिकब्रह्मचर्यं पारिव्रज्यं वा प्राप्तस्य नातद्भावः, अतद्भावः—ततः प्रच्यवेनातद्भावस्थितिः नैव । तद्रूपाभावेभ्यो नियमात्—तद्रूपं प्राप्तस्य तद्रूपाभावेभ्यो नियमात् । मृतदारस्यागृहीतदारस्य च अनाश्रमितया स्थितिरप्रतिषिद्धा, न तथा तथाभूतस्यातथाभावेन स्थितिरभ्यनुज्ञायते, किन्तु ततो नियम्यते । निषिध्यते इत्येतत् । तथा च वचनानि—'अरण्यमियात्ततो न पुनरेयात्' 'सन्न्यस्याग्निं न पुनरावर्तयेत्' 'ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्' इति । जैमिनेरपीदमेव मतम् ॥ ४० ॥

## नचाधिकारिकमपि पतनानुमानात्तद-योगात् ॥ ३ । ४ । ४१ ॥

ननु प्रच्युतानामपि ततः प्रायश्चित्तेन भवति विद्यायामधिकारः, अस्ति च प्रायश्चित्तमधिकारिलक्षणोक्तम् 'अवकीर्णिपशुश्च तद्व'दिति । अत्रोच्यते—न चेति । आधिकारिकमपि—अधिकारलक्षणोक्तमपि प्रायश्चित्तमेतेषु नैव घटते, पतनानुमानात्—अनुमानं स्मृतिः पतनस्मृतेः । तथा हि—'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः । प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा' इति । अतस्तदयोगात् प्रायश्चित्तस्यायोगात् । तस्मात् नास्ति तेषां ब्रह्मविद्यायामधिकारः । आधिकारिकं प्रायश्चित्तं तूपकुर्वाणब्रह्मचारिविषयम् ॥ ४१ ॥

---

## न चाधिकारिकमपि पतनानुमानात् तदयोगात् ॥ ३ । ४ । ४१ ॥

अधिकारे प्रोक्तमवकीर्णिप्रायश्चित्तं नैष्ठिकादीनां ततः प्रच्युतानां नैव घटेत, तेषां पतनानुमानात्—पतनस्मरणात्—'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः । प्रायश्चित्तं न पश्यामि येन शुद्ध्येत् स आत्महा' इति पातित्यस्य प्रायश्चित्तानपनोद्यस्य स्मरणात् ॥ ४१ ॥

**उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ॥ ३ । ४ । ४२ ॥**

एके आहुः—नैष्ठिकात् ब्रह्मचर्यात् प्रच्यवनमुपपातकमेव, न तु महापातकम्, तस्यास्योपपातकस्य प्रायश्चित्तसद्भावमशने इव—मध्वशने इव चाहुः। तदुक्तं सर्तृभिः—'उत्तरेषां चैतदविरोधि' इति। अयमर्थः—एतत्—उपकुर्वाणस्य यो नियम उक्तः, यच्च तदतिलङ्घने प्रायश्चित्तमुक्तं तत् उत्तरेषां चाश्रमाणां समानम्, परं यदविरोधि स्वाश्रमतः, इति। तथा चोपकुर्वाणस्येव नैष्ठिकस्यापि प्रायश्चित्तसंभवात् ब्रह्मविद्यायामधिकारः संभवतीति ॥ ४२ ॥

**बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॥ ३ । ४ । ४३ ॥**

तुशब्देनान्येषां पक्षो व्यावर्त्यते। नैष्ठिकव्रतात् प्रच्युता उभयथाऽपि—उपपातकित्वे महापातकित्वेऽपि बहिरेव कर्माधिकाराद्भ्रष्टा एव। न तेषां प्रायश्चित्तापनोद्यपापता। स्मृतेराचाराच्च—'प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा' इति हि स्मृतिः, आचारश्च शिष्टानाम्। शिष्टा हि नैष्ठिकव्रतात् प्रच्युतं बहिष्कुर्वन्ति। अतस्तेषां नास्ति ब्रह्मविद्यायामधिकारः ॥ ४३ ॥

---

**उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ॥ ३ । ४ । ४२ ॥**

एके मन्यन्ते नैष्ठिकादीनां तत आश्रमात् प्रच्यवनं—उपपूर्वं पातकं उपपातकमेव न महापातकम्। तत्र अशनवत्। मध्वशनादाविवोपकुर्वाणस्यापि प्रायश्चित्तस्य भावः—सद्भावः इति। तदुक्तम् 'उत्तरेषां चैतदविरोधी'ति। एतत् उपकुर्वाणस्य यो धर्मः यच्च प्रायश्चित्तं तदेतत्सर्वं उत्तरेषां च—नैष्ठिकादीनां समानमित्यर्थः ॥ ४२ ॥

**बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॥ ३ । ४ । ४३ ॥**

तुशब्दः परेषां पक्षं व्यावर्तयति। उभयथाऽपि—महापातकं वा तद्भवतु उपपातकं वा, उभयथाऽपि ते—नैष्ठिकाद्याश्रमतः प्रच्युताः बहिरेव—बहिर्भूता एव शास्त्रीयाधिकारात्। न तेषां पुनरभ्युत्थानावसरः। स्मृतेराचाराच्चैतदवगम्यते ॥ ४३ ॥

इति प्रदीपे तद्भूताधिकरणम् ॥ १० ॥

(अ. स.) विद्यायां नैष्ठिकादीनां प्रच्युतानां स्वधर्मतः ।
नाधिकारो विधुरवत् पातकित्वाद्विशेषतः ॥ १ ॥
प्रायश्चित्तेनानपोह्यपापा ह्येते प्रकीर्तिताः ।
बहिर्भूताः सर्वथैते स्मृतेराचारतोऽपि च ॥ २ ॥

इति भाष्ये तद्भूताधिकरणम् ॥ १० ॥

---

## स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ३ । ४ । ४४ ॥

उद्गीथोपासनं किं यजमानकर्तृकमुत ऋत्विक्कर्तृकमित्येतद्विचार्यते । विचारश्चायं प्रासङ्गिकः । पूर्वं प्रकृता ह्युपासनाधिकारिणः । अत्राह— उद्गीथाद्युपासनं स्वामिनो यजमानस्यैव कार्यम्, कस्मात्?, फलश्रुतेः— उद्गीथोपासनस्य यत् वीर्यवत्तरत्वं फलाप्रतिबन्धलक्षणं श्रूयते, तत् यजमानस्यैव फलम्, फलभाजो यजमानस्यैव तत्कार्यं यदुद्गीथोपासनम् । अन्यत्रापि य उपास्ते तस्यैवोपासनफलं दृष्टम् । ननु ऋत्विजो यजमानेन क्रीताः, सत्यम्, अङ्गानुष्ठानाय तु ते क्रीताः, न तु उपासनार्थमपि । उपासनं ह्यन्यफलकम् । प्रधाने तस्मिन् कर्तृत्वं यजमानस्यैव युक्तम् । न च गोदोहनादिकमिव ऋत्विक्कार्यमेवेदमिति शङ्क्यम् । ऋत्विक्कर्तृकप्रणयनाश्रयस्य गोदोहनादेः पृथक्कृत्य यजमानेनोपादातुमशक्यत्वात् तस्य ऋत्विक्कर्तृकत्वं युक्तम् । उपासनस्य तु उद्गीथादिभ्यः पृथक्कृत्य यजमानेन कर्तुं शक्यत्वात् यजमानस्यैव कार्यमुद्गीथोपासनम् । इत्यात्रेयो मन्यते ॥ ४४ ॥

---

### स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ३ । ४ । ४४ ॥

उद्गीथाद्यङ्गोपासनं यद्विहितं तत् स्वामिनः—यजमानस्य, यजमानेनैव कार्यम् । 'यदेव विद्यया करोति तदेव वीर्यवत्तर'मित्यादिना फलश्रुतेः । फलं हि यजमानस्य, अतः तत्साधनमुपासनं तेनैव कार्यमित्यात्रेयो मन्यते ॥४४॥

अत्र सिद्धान्तमाह—

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥ ३ । ४ । ४५ ॥

औडुलोमिराचार्यो मन्यते उद्गीथोपासनमप्यार्त्विज्यमेव । ऋत्विक्कार्यमेव, तस्मै हि—साङ्गस्य फलसाधनस्य क्रतोर्निष्पादनाय हि स यजमानेन परिक्रियते । क्रत्वङ्गाश्रयतया क्रत्वनुबन्धितदुपासनं तेनैव कर्तव्यम् । 'ऋत्विजो वृणीते' 'ऋत्विग्भ्यो दक्षिणां ददाती'त्यादिना क्रत्वनुबन्धिसर्वकर्मनिष्पादनायैव हि यजमानेन ऋत्विजः क्रीता भवन्तीति व्यक्तमवगम्यते । अथ तत्कर्म कायिकं वा वाचिकं वा मानसिकं वा सर्वं ऋत्विजैव कार्यम् । अङ्गानुबन्धितया अग्र्यप्रायन्यायेन च तस्यैव कार्यम् । क्रत्वधिकृताधिकारत्वाच्च यजमानफलाधायकमप्यनेनैव कार्यम् । 'तस्मादुह वैवंविदुद्गाता ब्रूयात् कं ते काममागायानी'त्यादिभिरप्यवगम्यत इदम् । तस्मादार्त्विज्यमेवोद्गीथोपासनम् ॥ ४५ ॥

( अ. स. ) उद्गीथोपासनं केन कार्यमित्यद्य चिन्त्यते ।

फलस्य स्वामिगामित्वात् तत्कार्यं स्वामिनेति चेत् ॥ १ ॥
नैवं तदृत्विजा कार्यं स क्रीतः स्वामिना ननु ।
साङ्गश्च सानुबन्धश्च संपाद्यस्तेन तु क्रतुः ॥ २ ॥

इति भाष्ये स्वाम्यधिकरणम् ॥ ११ ॥

---

**आर्त्विज्यमित्यौडुलोमिः तस्मै हि परिक्रियते ॥ ३ । ४ । ४५ ॥**

आत्रेयमतमौडुलोमिमतेन निरस्यति । उद्गीथाद्युपासनं क्रत्वङ्गविषयकं ऋत्विजैव विधेयम् । तस्मै हि—साङ्गयागनिष्पादनाय हि सः ऋत्विक् यजमानेन परिक्रियते—दक्षिणालक्षणेन मूल्येन व्रियते । अतो यजमानस्य फलाय सर्वं क्रतुसंबन्ध्यनेनैव विधेयम्, इत्यौडुलोमिः । अयमेव च स्वपक्षः ॥४५॥

इति प्रदीपे स्वाम्यधिकरणम् ॥ ११ ॥

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ३ । ४ । ४६ ॥

पूर्वं कर्मणः शमादेश्चाङ्गत्वं चिन्तितम् । इदानीं अङ्गान्तरं चिन्त्यते । इदमाम्नायते कहोलकब्राह्मणे—'तस्मात् पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्, पाण्डित्यं च बाल्यं च निर्विद्याथ मुनिः' इति । अत्र मुनिरित्यनेन मौनं विधीयते उतानूद्यते इति संशयः । अत्राह—मौनमिह पाण्डित्यपर्यायभूतमनूद्यते । मुनिपदप्रवृत्तिनिमित्तं मौनं उक्तात् पाण्डित्यान्नार्थान्तरम् । विधिश्च न श्रूयते इति ।

**अत्रोच्यते**—सहकार्यन्तरेति । अत्र मुनिपदप्रवृत्तिनिमित्तं मननम् । श्रुतार्थावधारणाय यन्मननं रागप्राप्तं 'श्रोतव्यो मन्तव्य' इत्यनेनोक्तं ततोऽन्यदिदम् । पाण्डित्यबाल्याभ्यामनन्तरमुपादानात् । पाण्डित्यं च श्रवणमननाभ्यां जायमानं परमात्मनो यथावस्थितस्वरूपस्वभावावधारणम् । बाल्यं च स्वपाण्डित्यानाविष्करणम् । तदुभयसिद्ध्यानन्तर्यं

---

### सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ३ । ४ । ४६ ॥

'तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः' इत्यत्र 'मुनिः' इत्यनेन, तद्वतः—विद्यावतः सहकार्यन्तरं—विद्यायां सहकार्यन्तरं मौनं विधीयते, विध्यादिवत्—विधीयते इति विधिर्यज्ञादिकर्म, आदिशब्दात् शमदमादयः, यज्ञादिवत् मौनं सहकारि । एतच्च तृतीयं—उक्ताभ्यां पाण्डित्यबाल्याभ्यां तृतीयमिदं सहकारि मौनम् । मौनं च मननशीलता । पक्षेण मुनिशब्दो मननशीले व्यासादौ वर्तते । मननं चेदं न श्रवणानन्तरप्राप्तं मननम् । किन्तु ततोऽप्यर्थान्तरभूतं ध्येयस्वरूपस्य पुनः पुनर्मननम् । इदं च ध्याननिष्पत्तौ सहकारि । पाण्डित्यं श्रवणमननसमनन्तरभावि परमात्मनो यथावस्थितस्वरूपविनिश्चयः । बाल्यं च सूत्रकार एव विवेचयिष्यति । अप्राप्तत्वाच्च मुनिः स्यादिति विधिर्योज्यः ॥ ४६ ॥

'अथ मुनि'रित्यनेन मौनं गम्यते । मौनं च शुभाश्रयसंशीलनं पुनः-पुनस्तदनुस्मरणम् । तदिदं मौनं विद्याया ध्यानलक्षणाया आश्रमकर्मादिवदङ्गं भवति । तदिदमभिप्रेत्याह–तद्वतः–विद्यावतः विद्यानिष्ठस्य विध्यादिवत्–विधीयते इति विधिः आश्रमधर्मः, तदादिवत्–आश्रमधर्मः शमादिश्चेति द्वयं यथाऽङ्गं तद्वत् सहकार्यन्तरविधिः–विधीयते इति विधिः–विधीयमानं सहकार्यन्तरमेतत् मौनं तृतीयम्, मुनिशब्दो हि मननशीलत्वेन प्रवृत्तिनिमित्तेन व्यासादिषु पक्षेण प्रयुज्यते । उपास्यालम्बनभूतशुभाश्रयसंशीलनेन हि ध्याननिष्पत्तिः । तस्मात् ध्यानाङ्गं मौनमिह विधीयते । तिष्ठासेदित्यस्यानुषङ्गेण मुनिस्तिष्ठासेदित्यन्वयः ॥ ४६ ॥

ननु सेयं मौनादिसहकारिसंपत्तिसाध्या विद्या सर्वाश्रमसाधारणी स्यात् । तर्हि छान्दोग्ये 'स खल्वेवं वर्तयन्यावदायुष'मिति गार्हस्थ्यधर्मेणोपसंहारः कथम् ? तत्राह—

## कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ३ । ४ । ४७ ॥

कृत्स्नस्य यज्ञादिसहकारिकलापस्य गृहस्थाश्रमे सद्भावात् अङ्गपौष्कल्यमभिप्रेत्य गार्हस्थ्येनोपसंहारः । न त्वाश्रमान्तरेऽनधिकारमभिप्रेत्य । यद्वा–कृत्स्नेषु आश्रमेषु विद्याधिकारसद्भावात् यथासंभवं गृहस्थधर्मेणोपसंहारः न तु इतरेष्वनधिकारमभिप्रेत्येति ॥ ४७ ॥

---

### कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ३ । ४ । ४७ ॥

छान्दोग्ये श्रूयते—'कुटुंबे शुचौ देशे स्वाध्यायमधीयान' इत्यारभ्य 'स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते' इति । अत्र गृहस्थधर्मेण स्थितस्यापुनरावृत्तिश्रवणाद्विद्यायामधिकारो नोर्ध्वरेतसामिति गम्यते चेदुच्यते–गृहिणोपसंहारस्तु कृत्स्नभावात् । कृत्स्नेषु आश्रमिष्वप्यस्य भावात् आश्रमिष्वन्यतमेनोपसंहारः । अतो नाश्रमान्तरनिष्ठस्यानधिकारः सिध्येत् ४७

## मौनवदितरेषामप्युपदेशात् ॥ ३ । ४ । ४८ ॥

ननु मौनमिदमङ्गत्वेन विधीयमानं 'ब्राह्मणः पुत्रैषणायाश्च लोकैषणायाश्च वित्तैषणायाश्च व्युत्थाय भिक्षाचर्यं चरन्ती'ति पारिव्रज्यं प्रस्तुत्य प्रतिपाद्यते 'पाण्डित्यं निर्विद्ये'त्यादिना। तस्मात् पाण्डित्यबाल्यमौनादिसहकारिसापेक्षेयं विद्या संन्यासिनामेव, पूर्वप्रकरणात्, इत्यत्राह—मौनवत्—पारिव्रज्यैकान्तधर्मनिरूपणपूर्वकं विद्याङ्गभूतमौनाद्युपदेशवत् इतरेषामप्याश्रमाणां साधारण्येन ब्रह्मविद्योपदेशात्। तथा हि श्रूयते—'त्रयो धर्मस्कन्धाः यज्ञोऽध्ययनं दान'मिति गृहस्थाश्रमादिकं प्रतिपाद्य 'ब्रह्मसंस्थोऽमृतत्वमेती'ति । तस्माद्युक्तो मौनतृतीयः पाण्डित्यादिः विद्यासहकारीति ॥ ४८ ॥

( अ. स. ) यत् 'पाण्डित्यं च बाल्यं च निर्विद्याथ मुनि'रित्यति ।

अत्र मौनमनूद्यं वा विधेयं वेति चिन्त्यते ॥ १ ॥
अनूद्यते यतो मौनं पाण्डित्यान्नातिरिच्यते ।
अत्रैव पूर्ववाक्ये तत् पाण्डित्यं विहितं ननु ॥ २ ॥
नानूद्यते यतो मौनं पाण्डित्यादतिरिच्यते ।
श्रवणान्मननात्प्राप्तपाण्डित्यं ब्राह्मणं प्रति ॥ ३ ॥

---

### मौनवदितरेषामप्युपदेशात् ॥ ३ । ४ । ४८ ॥

तथा—'ब्राह्मणः पुत्रैषणाया वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरती'ति पारिव्रज्यधर्मोपदेशपूर्वकं 'पाण्डित्यं निर्विद्ये'त्यादिना मौनोपदेशेन संन्यासिनामेव ब्रह्मविद्यायामधिकार इत्यपि न । 'त्रयो धर्मस्कन्धा' इत्यादिना सर्वानप्याश्रमान् निर्दिश्य 'ब्रह्मसंस्थोऽमृतत्वमेती'ति तेषु यो ब्रह्मसंस्थः सोऽमृतत्वमेतीति मौनवदितरेषामपि विद्याधिकारोपदेशात् । तत् सर्वेषामेवाश्रमाणां विद्यायामधिकारः सिध्यति । 'अथ मुनिर्भवती'ति मौनलक्षणतृतीयसहकार्यन्तरविधानमात्रम् ॥ ४८ ॥

इति प्रदीपे सहकार्यन्तरविध्यधिकरणम् ॥ १२ ॥

मौनं तृतीयं विद्यायाः सहकारि विधीयते ।
आलम्बनानुसरणं तच्च ध्यानोपकारकम् ॥ ४ ॥
गार्हस्थ्येनोपसंहारः छान्दोग्ये श्रूयते तु यः ।
स च सर्वेष्वाश्रमेषु विद्याधिकृतिसंभवात् ॥ ५ ॥
सर्वैषणाविमुक्तस्य भिक्षाचरणपूर्वकः ।
मौनोपदेशः सोऽयं च सर्वेषामुपलक्षकः ॥ ६ ॥
श्रवणात् ब्रह्मसंस्थाया धर्मस्कन्धेष्वपि त्रिषु ।
तत्फलस्यापि मोक्षस्य सर्वत्रैव च सम्भवात् ॥ ७ ॥

इति भाष्ये सहकार्यन्तरविध्यधिकरणम् ॥ १२ ॥

---

## अनाविष्कुर्वन्नन्वयात् ॥ ३ । ४ । ४९ ॥

'तस्मात् पाण्डित्यं निर्विद्य बाल्येन तिष्ठासे'दित्यत्रोपादेयतया श्रूयमाणं बाल्यं किं बालकर्मभूतं कामचारकामभक्षादि, उत दम्भादिरहितत्वम् । अत्राह–कामचारादिकं बाल्यं विदुषोपादेयम्, नियमाश्चेतरविषयाः । अनधिकृतविद्या अतत्त्वज्ञा ये तान् प्रत्येव तु नियमः इदं भोज्यमिदं नेत्यादिः । इति । अत्रोच्यते–'बाल्येन तिष्ठासे'दित्यनेन विवक्षितस्त्वर्थोऽयमेव पाण्डित्यमनाविष्कुर्वन् बाल इव तिष्ठेदिति । अस्यैवार्थस्य विद्यानिष्ठेष्वन्वयात्, कामचारादेरनन्वयात् । श्रूयते हि

---

**अनाविष्कुर्वन्नन्वयात्** ॥ ३ । ४ । ४९ ॥

'बाल्येन तिष्ठासे'दिति विधीयमानं न कामचारकामभक्षणादिरूपम् । किन्तु पाण्डित्यस्यानाविष्करणं दम्भादिराहित्यम् । बालस्य ह्ययं स्वभावः, तस्मात् 'बाल्येन तिष्ठासे'दित्यस्यानाविष्कुर्वन् तिष्ठेदित्येवार्थः । अनाविष्करणस्यैव विद्याप्रकरणेऽन्वयात् कामचारादि तु विरुद्धम् । तथा च श्रुतिः 'नाविरतो दुश्चरितात् नाशान्तो नासमाहितः । नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात्' इति ॥ ४९ ॥

इति प्रदीपेऽनाविष्काराधिकरणम् ॥ १३ ॥

विद्यानिष्ठानधिकृत्य दुश्चरितप्रतिषेधः—'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः। नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात्' इति ॥४९॥

(अ. स.). यत्तु 'बाल्येन तिष्ठासे'दिति बाल्यं विधीयते ।
तत् किन्तु कामचारत्वं किं वा विगतदम्भता ॥ १ ॥
आह शास्त्रीयनियमो विद्याहीने प्रवर्तते ।
विदुषां कामचारत्वं न दोषायोपकल्पते ॥ २ ॥
अत्रोच्यते 'नाविरत' इत्यादिश्रुतिवाक्यतः ।
विद्यावतोऽधिकृत्यापि कामाचारनिषेधतः ॥ ३ ॥
अनाविष्कृतपाण्डित्या विनयावनता स्थितिः ।
विवक्षितात्र बाल्येन तिष्ठासेदिति वाक्यतः ॥ ४ ॥

इति भाष्येऽनाविष्काराधिकरणम् ॥ १३ ॥

---

## ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ३ । ४ । ५० ॥

द्विविधा विद्या—अभ्युदयसाधनीभूता निःश्रेयससाधनीभूता च । तयोरभ्युदयसाधनीभूतां विद्यामधिकृत्य विचार्यते—किमभ्युदयसाधनीभूता विद्या स्वनिष्पादकसुकृतसमनन्तरमेव जायते उत विलम्बेनापीत्यनियमः। अत्राह—साधननिष्पत्त्यन्तरं विलम्बे मानाभावात् तत्समन-

---

**ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात्॥ ३ । ४ । ५० ॥**

येयमभ्युदयफला विद्या सा स्वसिद्धेरनन्तरमेव फलं निष्पादयेदिति न नियमः, अप्रस्तुतप्रतिबन्धे—प्रबलविरोधिनि कर्मान्तररूपे प्रतिबन्धे प्रस्तुते फलायोन्मुखे सति न स्यादस्मिन्नेव जन्मनि । अप्रस्तुते तु स्यादेवानुपदम् । तद्दर्शनात् । संपन्नस्यापि साधनस्य प्रतिबन्धकेन प्रबलेनोपरोधस्य दर्शनात् । श्रूयते हि 'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति' इति । अनेन गम्यते प्रबलेनोपरोधः सम्भवतीति ॥ ५० ॥

इति प्रदीपे ऐहिकाधिकरणम् ॥ १४ ॥

---

न्तरमेवेति । अत्रोच्यते—ऐहिकम्–अभ्युदयसाधनभूतमुपासनम्, मुक्तिफलापेक्षया सर्वं पारलौकिकमैहिकं चैहिकमित्युच्यते । सत्यपि स्वसाधने सुकृते अप्रस्तुतप्रतिबन्धे एव सपदि जायेत, प्रबलकर्मान्तरेण प्रतिबन्धे तु प्रस्तुते विलंबेनैव प्रतिबन्धककर्मफलभोगानन्तरमेवेत्य-नियमः । तद्दर्शनात्–प्रबलकर्मान्तरोपरोधः श्रुतौ दृश्यते हि–'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवती'ति । वीयवत्तरत्वश्रुतेर्गम्यते प्रबलेन कर्मान्तरेणोपरोधः सुकृतस्यापि ॥ ५० ॥

इति भाष्ये ऐहिकाधिकरणम् ॥ १४ ॥

---

## एवं मुक्तिफलानियमस्तदवस्थावधृते-स्तदवस्थावधृतेः ॥ ३ । ४ । ५१ ॥

निःश्रेयससाधनीभूता विद्या स्वसाधनीभूतकर्मणामनुष्ठानसमनन्तर-मेव समुत्पद्यते उत विलंबेनापीत्यनियमः । अत्राह–समनन्तरमेवेति । कस्मात् ? । मुक्तिफलकविद्याङ्गभूतानां कर्मणामितरकर्मभ्यः प्रबलत्वात् एषां स्वकार्याधाने विलंबहेत्वभावात् समनन्तरमेव विद्यानिष्पत्तिरिति । अत्रोच्यते–मुक्तिफलानियमः–अभ्युदयफलकविद्याया इव स्वसाधन-कर्मभ्यः समुत्पत्तावनियम एव । तदवस्थावधृतेः–अत्रापि प्रतिबन्धस-द्भावतदभावरूपावस्थयोरवधृतेः सत्त्वात् । अप्रतिबन्धे सपदि, ब्रह्मवि-दपचारादिप्रबलप्रतिबन्धे तु विलंबत इति । आवृत्तिरध्यायसमाप्तौ ॥५१॥

---




## एवं मुक्तिफलानियमस्तदवस्थाव-धृतेस्तदवस्थावधृतेः ॥ ३ । ४ । ५१ ॥

एवं मुक्तिसाधनीभूताऽपि ब्रह्मविद्या निष्पन्नाऽपि तच्छरीरावसान एव मुक्तिं फलं प्रयच्छतीति नायं नियमः । तदवस्थावधृतेः–प्रतिबन्धसद्भावास-द्भावरूपावस्थाभेदस्यावधृतेः समानत्वात् । असति प्रारब्धशेषे सपद्येव साध-येत् । सति तु यावत्प्रारब्धानां भोगेनावसानं तावन्न स्वफलाय कल्पेत । अतो

(अ. स.) विद्या या ह्यैहिकफला निःश्रेयसफला च या ।
स्वनुष्ठितैरपि स्वाङ्गकर्मभिर्द्राङ्न सिध्यति ॥ १ ॥
प्रबले सति पूर्वस्मिन् कर्मणि प्रतिबन्धके ।
यावत्तस्य व्यपगमं विद्यासामग्र्यसिद्धितः ॥ २ ॥
तस्मिन्नसति सामग्रीसन्निधानात्तु सिध्यति ।
तत्सत्त्वतदसत्त्वाभ्यां तन्नैयत्यं हि दुर्घटम् ॥ ३ ॥
'यदेव विद्यये'त्यादिवीर्यवत्तरताश्रुतेः ।
कर्मणां प्रतिबन्धो हि प्रबलैरवगम्यते ॥ ४ ॥
अपचारो ब्रह्मविदां विद्यायाः प्रतिबन्धकः ।
तस्मात्तद्व्यतिरेके द्राक् ब्रह्मविद्या च सिध्यति ॥ ५ ॥
(इति ऐहिकमुक्तिफलाधिकरणद्वयार्थसङ्ग्रहः)
इति ब्रह्ममीमांसाभाष्ये तृतीयस्याध्यायस्य चतुर्थः पादः ॥

---

मुक्तिफलाया अपि विद्यायाः स्वफलनिष्पादनेऽनियमः । अध्यायसमाप्त्यर्थं अभ्यासः ॥ ५१ ॥

इति प्रदीपे मुक्तिफलाधिकरणम् ॥ १५ ॥

इति ब्रह्मसूत्रार्थप्रदीपे तृतीयस्याध्यायस्य चतुर्थः पादः ।

# चतुर्थोऽध्यायः ।

तृतीये विद्या विचारिता साङ्गा। अथ फलं विचार्यते। तत्र प्रथमं विद्यास्वरूपं विशोध्यते अज्ञातांशज्ञापनाय । प्रधानस्तु फलविचारः। विद्याया भक्तिरूपतया भक्तेश्च प्रेमातिशयरूपत्वेन रस्यतया फलाद्‌विशेषश्च व्यज्यते फलेन सह विचारात् ।

## आवृत्तिरसकृदुपदेशात् ॥ ४ । १ । १ ॥

अत्र संशयः—उपायतया विधीयमानं वेदनं सकृदनुष्ठेयमुतासकृदिति । अत्राह—सकृदेव । 'ब्रह्म वेद ब्रह्मैव भवती'ति वेदनमात्रं हि साधनं श्रूयते । सकृत् कृतेनाप्यनुष्ठितो हि भवति शास्त्रार्थः । न चास्ति प्रमाणमसकृदनुष्ठेयत्वे। न चावघातादिवत् दृष्टविधया साधनं वेदनम्, येनासकृदनुष्ठेयता सिध्येदपि। कर्मेव वेदनमपि भगवदाराधनरूपतया भवति फलसाधनम्। सकृदनुष्ठितेनापि भगवानाराधितो भवेदेवेति । अत्रोच्यते—असकृदावृत्तिर्वेदनस्य बोध्या । असकृदावृत्तं वेदनं शास्त्रेण साधनतया प्रतीयमानोऽर्थः । कुतः?, उपदेशात्—ध्यानोपासनपर्यायतया वेदनस्योपदेशात् । तथा हि—'ओमित्येवं ध्यायथात्मानम्' 'आत्मानमेव लोकमुपासीत' 'निचाय्य तं मृत्युमुखात्प्रमुच्यते' इत्यादिभिः साधनतया विहितं ध्यानमेव 'ब्रह्म वेदे'त्यादिषु

---

अथ ब्रह्मप्राप्तिसाधनतया श्रूयमाणाया विद्यायाः स्वरूपं विशोध्यते—

**आवृत्तिरसकृदुपदेशात् ॥ ४ । १ । १ ॥**

'ब्रह्मविदाप्नोति परम्' इत्यादिना सामान्यशब्देन श्रूयमाणं ब्रह्मवेदनं ध्यानलक्षणमसदावृत्ताविच्छिन्नानुस्मरणमित्याह—आवृत्तिः—न केवलं सकृत् सञ्जातं ब्रह्मवेदनं फलाय कल्पते । आवृत्तिः—तस्याभ्यासः, पुनः पुनरनुस्यूतानुवृत्तिः कार्या। असकृदुपदेशात्—'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' 'आत्मानमेव लोकमुपासीत' इति वेदनस्यासकृत् कर्तव्यतयोपदेशात्। ध्यानं ह्यसकृदावृत्तं तैलधारावदनुस्यूतमनुस्मरणम् । तस्मात् विशेषशब्दश्रवणात् वेदनादिसामान्यशब्दा विशेषपरा एव ॥ १ ॥

सामान्यशब्देनोपदिश्यते । तथा—विदिना उपक्रान्तोऽर्थः उपासिना उपासिनोपक्रान्तोऽर्थः विदिना चोपसंह्रियते । 'मनो ब्रह्मेत्युपासीते'-त्युपक्रमः 'य एवं वेदे'त्युपसंहारः, 'यस्तद्वेद यत्स वेदे' त्युपक्रमः 'यां देवतामुपास्से' इत्युपसंहारः । ध्यानं चासकृदनुस्मरणमविच्छिन्नधारम् ॥ १ ॥

इतश्चायमर्थः सिध्यति—

## लिङ्गाच्च ॥ ४ । १ । २ ॥

लिङ्गशब्देन स्मृतिरिह विवक्षिता । इतरमूलसापेक्षप्रामाण्यात् साधर्म्यात् । तथा हि स्मृतिः—'तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिःपृहा । तद्ध्यानं प्रथमैः षड्भिरङ्गैर्निष्पाद्यते तथा' इति ॥ २ ॥

( अ. स. ) समाप्तः साधनाध्यायः फलाध्यायः प्रवर्तते ।

विद्या विचारिता पूर्वमङ्गेन सह साधनम् ॥ १ ॥
विद्याफलं चतुर्थेऽस्मिन् प्राधान्येन विचार्यते ।
विद्याया भक्तिरूपत्वात् रस्यत्वात् फलतौल्यतः ॥ २ ॥
युक्तं फलविचारेण सह विद्याविशोधनम् ।
साधनत्वं वेदनस्य यद्वेदान्ते समीरितम् ॥ ३ ॥
सकृद्विधेयं किंवा तदसकृद्वेति चिन्त्यते ।
सकृद्वेदनमात्रेण विहितस्य कृतत्वतः ॥ ४ ॥
दृष्टद्वारोपकारस्याप्यभावादवघातवत् ।
ज्योतिष्टोमादिवच्चास्य सकृदेव विधेयता ॥ ५ ॥

---

## लिङ्गाच्च ॥ ४ । १ । २ ॥

अस्ति च लिङ्गम्—स्मृतिः । 'तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्पृहा । तद्ध्यानं प्रथमैः षड्भिरङ्गैर्निष्पाद्यते तथे'ति ॥ २ ॥

इति प्रदीपे आवृत्त्यधिकरणम् ॥ १ ॥

मैवं त्वसकृदावृत्तं वेदनं ननु साधनम् ।
ध्यानोपासनशब्दाभ्यां वेदनं हि विशिष्यते ॥ ६ ॥
उपक्रमोपसंहारौ श्रूयेते विद्युपास्तितः ।
ध्यानं च तैलधारावदनुस्यूता स्मृतिः स्मृता ॥ ७ ॥

इति भाष्ये आवृत्त्यधिकरणम् ॥ १ ॥

---

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ४ । १ । ३ ॥

वेदनमसकृदावृत्तमुपासनमित्युक्तम् । अथोपास्यं विचार्यते । उपास्यं परंब्रह्म उपासितुरन्यत्वेनोपास्यम्, उतोपासितुरात्मत्वेन [ अहंग्रहेणोपास्यः उत स्वतन्त्रतयेत्येतत् । ] आह—अन्यत्वेनैवोपास्यः । उपास्योपासकयोरत्यन्तभेदो हि श्रूयते तत्र तत्र 'ज्ञाज्ञौ द्वावजावीशनीशौ' 'द्वा सुपर्णा सयुजा सखायौ' 'अनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशम्' इति । उक्तं च पूर्वम्—'अधिकं तु भेदनिर्देशात्' 'अधिकोपदेशात्' 'नेतरोऽनुपपत्तेः' इति । अत्रोच्यते—सत्यमुभयोर्मिथो भेदः । अथापि न गवाश्वयोरिवात्यन्तभेदः । आत्मा खल्वयं सर्वस्य यः सर्वान्तरः । तदुपास्यं परंब्रह्म उपासकस्यान्तरात्मा, तमपेक्ष्यायमुपासकः शरीरं भवति, तदात्मेत्येवोपासीत—अहंग्रहेणैवोपासीत । तथैवोपगच्छन्त्युपासकाः 'त्वं वा अहमस्मि भगवो देवते

---

आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ४ । १ । ३ ॥

यद्यप्युपासक उपास्यात् परमात्मनोऽर्थान्तरभूतः अथापि प्रजा राजानं यथाऽत्यन्तपृथक्त्वेनोपासते तथा नोपासीत । किन्तु—स्वस्यायमात्मेति तत्त्वतो जानन् तदात्मकोऽहमिति बुद्ध्या ब्रह्माहमस्मीत्युपासीत । उपासका हि पूर्वे उपासनसमये 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते' इति उपगच्छन्ति । इमं परस्य ब्रह्मणः सर्वात्मभावं 'यः पृथिव्यां तिष्ठन्' इत्याद्याः श्रुतयो ग्राहयन्ति च ॥ ३ ॥

इति प्रदीप आत्मत्वोपासनाधिकरणम् ॥ २ ॥

---

अहं वै त्वमसि भगवो देवते' इति । आत्मग्रहणं चाहमित्येव । श्रुतयश्च तस्य सर्वान्तरात्मतां ग्राहयन्ति–'यः पृथिव्यां तिष्ठन्' 'य आत्मनि तिष्ठ'न्नित्यादिना । शरीरात्मभावेनैव चोपास्योपासकयोः अहमस्मीति सामानाधिकरण्येन निर्देशः, न तु स्वरूपैक्येन । 'पृथगात्मानं प्रेरितारं च मत्वा' इति पार्थक्यनिर्देशात् ॥ ३ ॥

(अ. स.) सोऽहमसीत्यात्मदृष्ट्या ब्रह्मोपासीत वा न वा ।
न मुमुक्षुरुपासीत जीवादत्यन्तभेदतः ॥ १ ॥
उपासीत स्वात्मदृष्ट्या स ह्यात्मा सकलस्य च ।
तस्य सर्वान्तरात्मत्वं श्रुतयो ग्राहयन्ति हि ॥ २ ॥
अत एवाहंब्रह्मोऽपि तस्मिन्नेनोपगच्छति ।
गिरां धियां च सर्वासां मुख्या सर्वतनौ गतिः ॥ ३ ॥
त्वं वाहमस्म्यहं त्वं वेत्युपगच्छन्त्युपासकाः ।
तस्मादात्मतया दृष्टिर्भेदे सत्यपि सङ्गता ॥ ४ ॥
इति भाष्ये आत्मत्वोपासनाधिकरणम् ॥ २ ॥

---

## न प्रतीके न हि सः ॥ ४ । १ । ४ ॥

ननु–'मनो ब्रह्मेत्युपासीत' 'यो नाम ब्रह्मेत्युपास्ते' इत्यादिप्रतीकोपासनेष्वपि ब्रह्मोपासनत्वसाम्यादात्मत्वेनोपासनं कार्यमित्यत्राह–नेति । प्रतीके न–नात्मत्वेनोपासनम् । मनःप्रभृतिप्रतीकमेव तु तत्रोपास्यम् । स च नोपासितुरात्मा । मन एव खल्वुपास्यते 'ब्रह्मेद'मिति । उपास्यं चेत् ब्रह्म तस्य सर्वान्तरात्मत्वेन तत्रात्मत्वेनोपासनं युज्येत नान्यत्र ॥४॥

---

### न प्रतीके न हि सः ॥ ४ । १ । ४ ॥

'मनो ब्रह्मेत्युपासीते'त्यादिषु उपास्यतया श्रूयमाणे ब्रह्मदृष्ट्यालम्बनभूते मनःप्रभृतिप्रतीके नात्मतयोपासनं कार्यम् । उपास्यः प्रतीको न हि सः–यः सर्वान्तरात्मभूतः ॥ ४ ॥

ननु—तत्रापि ब्रह्मैवोपास्यं मनस्त्वादिना । तत् आत्मत्वेनोपासनमपि तत्र युज्यते, इत्यत्राह—

**ब्रह्मदृष्टिरुत्कर्षात् ॥ ४ । १ । ५ ॥**

न ब्रह्मणि मनस्त्वदृष्टिर्युक्ता, उत्कृष्टदृष्टिर्ह्युपासनम्, नापकृष्टदृष्टिः । अपकृष्टं च मनो ब्रह्मणः, तन्मनस्येव ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

(अ. स.) 'मनो ब्रह्मेत्युपासीते'त्येवमादावुपासने ।
ब्रह्मोपासनसामान्यादात्मदृष्टिर्न युज्यते ॥ १ ॥
तत्र ब्रह्मतयोपास्यं प्रतीकं मन एव तु ।
उपासकस्य नात्मा तत्, तत् सा दृष्टिर्न युज्यते ॥ २ ॥
न ब्रह्मणि मनोदृष्टिर्ब्रह्मदृष्टिस्तु चेतसि ।
फलायोत्कृष्टदृष्टिः स्यान्नचोत्कृष्टेऽपकृष्टधीः ॥ ३ ॥

इति भाष्ये प्रतीकाधिकरणम् ॥ ३ ॥

---

**आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ४ । १ । ६ ॥**

इदमाम्नायते छान्दोग्ये—'य एवासौ तपति तमुद्गीथमुपासीते'-

---

ननु 'मनो ब्रह्मेत्युपासीते'त्यादिना विधीयमानमुपासनमपि ब्रह्मोपासनमेव, 'ब्रह्मोपासीते'ति हि श्रूयते । तत्राह—

**ब्रह्मदृष्टिरुत्कर्षात् ॥ ४ । १ । ५ ॥**

उपासीतेति विधीयमाने मनसः कर्मत्वश्रवणादुपास्यं मनः, तच्च मनः ब्रह्मदृष्ट्योपासीतेति ब्रह्मेत्युपासीतेति इति शब्दः श्रूयते । अपकृष्टे उत्कृष्टदृष्टिर्ह्युपासनम्, न तूत्कृष्टे अपकृष्टदृष्टिः । तदुत्कर्षात् मनसि ब्रह्मदृष्टिः, न तु ब्रह्मणि मनोदृष्टिः । तस्मादियमुपासना प्रतीकोपासनैवेति नात्रात्मतयोपासनस्य प्रसङ्गः ॥ ५ ॥

इति प्रदीपे प्रतीकाधिकरणम् ॥ ३ ॥

---

**आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ४ । १ । ६ ॥**

'य एवासौ तपति तमुद्गीथमुपासीते'त्यादिना श्रूयमाणान्युपासनान्युद्गीथा-

त्यादि । अत्र संशयः—किमादित्ये उद्गीथदृष्टिरुतोद्गीथे आदित्यदृष्टिः कार्येति । आह—आदित्ये उद्गीथदृष्टिः कार्या । कर्मण एव फलसाधनत्वेन प्रकर्षात् तदङ्गोद्गीथदृष्टेरेवाऽऽदित्ये न्याय्यत्वात् इति । अत्रोच्यते । कर्मणोऽङ्गे उद्गीथे आदित्यादिदृष्टयः कार्याः । अपकृष्टे उत्कृष्टदृष्टिश्चोद्गीथे आदित्यदृष्ट्यैवोपपद्यते । कर्मणः कर्मसमाराध्या देवता ह्युत्कृष्टा । फलसाधनता च कर्मणामाराध्यद्वारेणैव ॥ ६ ॥

(अ. स.) 'तमुद्गीथमुपासीते'त्येवमाद्यावुपासने ।
देवतोद्गीथयोः कस्य कस्मिन् दृष्टिर्विधीयते ॥ १ ॥
ननूत्कृष्टं फलात् कर्म साधनं तत्र तत् खलु ।
तत् तदङ्गोद्गीथदृष्टिरादित्यादौ तु युज्यते ॥ २ ॥
नैतन्न्याय्यं कर्मणोऽपि ननूत्कृष्टा तु देवता ।
कर्मणः फलहेतुत्वं देवताराधनत्वतः ॥ ३ ॥
कर्मणा सुप्रसन्ना हि फलं यच्छति देवता ।
तदादित्यादिधीर्युक्ता कर्माङ्गोद्गीथ एव तु ॥ ४ ॥

इति भाष्ये आदित्यादिमत्यधिकरणम् ॥ ४ ॥

---

## आसीनः संभवात् ॥ ४ । १ । ७ ॥

निःश्रेयससाधनीभूतं वेदनमुपासनात्मकमित्युक्तम् । तच्च ध्यानं

---

दिषु कर्माङ्गेषु आदित्यादिदृष्टिरूपाण्येव, तथासत्येवोपपत्तिरुपासनस्य । आदित्यादयो हि देवताः कर्माङ्गभूतेभ्य उद्गीथादिभ्य उत्कृष्टाः । अत एव दृष्टिविशेषसंस्कृतैरुद्गीथादिभिरङ्गैः सुनिष्पन्नैः कर्मभिः प्रकृष्टफलोत्पत्त्युपपत्तिश्च ॥६॥

इति प्रदीपे आदित्यादिमत्यधिकरणम् ॥ ४ ॥

---

उपासकः तिष्ठन् आसीनः शयानो वोपासीतेत्यनियमः उत नियमः, नियमे च कथमित्यत्राह—

### आसीनः संभवात् ॥ ४ । १ । ७ ॥

आसीन एवोपासीत । तथासत्येवोपासनस्य संभवात् । उपासनं हि ध्यानं

शयानेन गच्छता तिष्ठताऽऽसीनेन वा कर्तुं शक्यत इत्यासीनेनैव कर्तव्यमित्यनियम इति प्राप्ते उच्यते—आसीन एव कुर्यात्, तथा सत्येव ध्यानस्य संभवात् । चित्तैकाग्र्यं हि न शयानस्य गच्छतस्तिष्ठतो वा भवेत् ॥ ७ ॥

## ध्यानाच्च ॥ ४ । १ । ८ ॥

चस्त्वर्थे । निःश्रेयससाधनतया विहितं तु ध्यानम् । 'निदिध्यासितव्य' इति श्रवणात् । तच्च ध्येयैकालम्बिनिरन्तरानुस्मरणात्मकम् चित्तैकाग्र्यसाध्यम् ॥ ८ ॥

## अचलत्वं चापेक्ष्य ॥ ४ । १ । ९ ॥

ऐकाग्र्ये निश्चलताऽपेक्ष्यते, तदैकाग्र्यसाध्यं ध्यानं निश्चलत्वसापेक्षम्, अत एव पृथिव्यादिषु निश्चलत्वमपेक्ष्य 'ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षं ध्यायतीव द्यौ'रिति ध्यातृत्वमुत्प्रेक्ष्यते । तच्च निश्चलत्वमासीनस्यैव घटते न तिष्ठतो गच्छतो वा ॥ ९ ॥

## स्मरन्ति च ॥ ४ । १ । १० ॥

स्मर्यते चासननियमः—'शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।

---

चित्तैकाग्र्यसाध्यम्, तच्चासीनस्यैव घटते । तिष्ठतश्चित्तविक्षेपस्य शयानस्य निद्रायाश्च प्रसङ्गात् ॥ ७ ॥

### ध्यानाच्च ॥ ४ । १ । ८ ॥

'ध्यायीते'ति ध्यानं हि विधीयते । ध्यानं चानुस्यूतं ध्येयैकालम्बनमनुस्मरणम्, तच्चासति चित्तैकाग्र्ये न घटेत । तच्चासीनस्यैव घटते ॥ ८ ॥

### अचलत्वं चापेक्ष्य ॥ ४ । १ । ९ ॥

ध्याने चाचलत्वं—निष्कम्पत्वमप्यपेक्षितम्, निष्कम्पतामपेक्ष्य च 'ध्यायतीव पृथिवी ध्यायतीवान्तरिक्ष'मिति अचलेषु पृथिव्यादिषु ध्यानकर्तृत्वोत्प्रेक्षणम् ॥ ९ ॥

### स्मरन्ति च ॥ ४ । १ । १० ॥

'शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः । नात्युच्छ्रितं नातिनीचं चेला-

नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरम् । तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः । उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये' इति॥१०॥

## यत्रैकाग्रता तत्राविशेषात् ॥ ४ । १ । ११ ॥

आसननियमवत् न देशकालविशेषनियमः । परमेतदेव यदा यत्रैकाग्रता मनसः, तदा तत्र योगं युञ्ज्यादिति । 'मनोऽनुकूल' इति हि वाक्यशेषः ॥ ११ ॥

(अ. स.) आसीन एव ध्यायेद्वा किं वाऽयं नियमो न वा ।
नन्वयं नियमो नास्मिन् चित्तवृत्त्यास्य सिद्धितः ॥ १ ॥
अत्रोच्यते ननु ध्याने चित्तैकाग्र्यमपेक्ष्यते ।
आसीनस्यैव तत्सिद्धेर्नियमोऽयमपेक्ष्यते ॥ २ ॥
तदप्येकाग्रचित्तत्वं निश्चलस्यैव सिध्यति ।
अनासीनस्य नैश्चल्यं न कथञ्चन सम्भवेत् ॥ ३ ॥
नैश्चल्यादेव पृथिवी ध्यायतीवेति चोच्यते ।
'उपविश्यासने युञ्ज्या'दित्यपि स्मर्यते यतः ॥ ४ ॥
न देशकालनियमश्चित्तैकाग्र्यं त्वपेक्ष्यते ।
तस्मादासीन एवायं कुर्याद्ध्यानमतन्द्रितः ॥ ५ ॥

इति भाष्ये आसीनाधिकरणम् ॥ ५ ॥

---

जिनकुशोत्तरम् । तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः । उपविश्यासने युञ्ज्यात् योगमात्मविशुद्धये' इति च स्मर्यते ॥ १० ॥

## यत्रैकाग्रता तत्राविशेषात् ॥ ४ । १ । ११ ॥

देशविशेषकालविशेषयोरश्रवणात् यो देशः कालो वा एकाग्रताया उपकारकः तत्र देशे तत्र काले आसीनो ध्यानं कुर्यात् ॥ ११ ॥

इति प्रदीपे आसीनाधिकरणम् ॥ ५ ॥

## आप्रयाणात् तत्रापि हि दृष्टम् ॥ ४ । १ । १२ ॥

इदमुपासनं ध्यानलक्षणमेकस्मिन्नहनि कर्तव्यं उताऽऽशरीरपातं कर्तव्यम्, अत्राह–आशरीरपातं कर्तव्यमिति न नियमः। एकस्मिन्नहनि कृतेनैव शास्त्रार्थनिष्पत्तेः। अथ चेदिच्छा क्रियताम्। विधिस्तु नेति। **अत्रोच्यते**–आप्रयाणात्–देहपातं यावत् उपासनं विधेयम्। तत्रापि हि दृष्टम्–आरम्भदिनान्तरं मध्यकालेऽपि प्रयाणदिनं यावत् उपासनं दृष्टम्–शास्त्रेषु कर्तव्यतया दृष्टम्। श्रूयते हि–'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते' इति ॥ १२ ॥

( अ. स. ) किमाप्रयाणं ध्यायीत किं वाथ दिनमात्रकम्।
एकेनाह्ना कृतेनापि शास्त्रार्थस्य कृतत्वतः ॥ १ ॥
आप्रयाणं नैव कार्यमिति चेत्तन्न युज्यते।
कालमल्पं कृतं ध्यानं न फलाय प्रकल्पते ॥ २ ॥
आप्रयाणं तु कर्तव्यमन्यथा नान्तिमस्मृतिः।
कर्तव्यता श्रूयते च यावदायुषमस्य हि ॥ ३ ॥

इति भाष्ये आप्रयाणाधिकरणम् ॥ ६ ॥

---

## आप्रयाणात्तत्रापि हि दृष्टम् ॥ ४ । १ । १२ ॥

इदं चापवर्गसाधनीभूतमुपासनमाप्रयाणात्–शरीरपातं यावत् कर्तव्यम्। तत्रापि उपासनारम्भकालतः पश्चात् शरीरपाततः प्राक् यो मध्यः कालस्तत्रापि काले तदुपासनं कर्तव्यतया श्रुतौ दृष्टं हि। तथा च श्रुतिः–'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते' इति ॥ १२ ॥

इति प्रदीपे आप्रयाणाधिकरणम् ॥ ६ ॥

# तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ ४ । १ । १३ ॥

विद्यास्वरूपं विशोधितम् । अथ विद्याफलस्वरूपं विचार्यते । विद्याधिगमे उत्तराघस्याश्लेषः पूर्वाघस्य विनाशश्च श्रूयते—'एवंविदि पापं कर्म न श्लिष्यते' 'तस्यैवात्मा पदवित्तं विदित्वा न कर्मणा लिप्यते पापकेन' 'यथैषीकातूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति । अत्र संशयः—किं विद्यया पूर्वाघस्य नाशो भवेन्न वेति । आह—न भवेत् । 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति कृतस्य कर्मणो भोगेनैव क्षयस्मरणात् । विद्यया विनाशश्रुतिस्तु विद्यास्तुतिपरा इति । अत्रोच्यते—तदधिगमे—तस्या विद्याया अधिगमे उत्तरपूर्वाघयोरश्लेषविनाशौ भवतः । उत्तरस्य विद्याधिगमादनन्तरभाविनः प्रामादिकस्य पापस्य विद्यामाहात्म्यादश्लेषः फलजननशक्तिप्रतिरोधः, पूर्वस्य विनाशः फलजननशक्तिविनाशनम् । श्रूयते च तयोर्व्यपदेशः—उपदेशः 'एवंविदि पापं कर्म न श्लिष्यते' 'यथैषीकातूलमग्नौ प्रोतं प्रदूयेत' इति । 'नाभुक्तं क्षीयते कर्मे'त्येतत्तु कर्मणः फलजननशक्तेर्दार्ढ्यनिरूपणपरम् । अतो न तेनाश्लेषविनाशश्रुतिविरोधः । विषयविभे-

---

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ ४ । १ । १३ ॥

तस्या ब्रह्मविद्याया अधिगमे सति—निष्पत्तौ सत्यां, निष्पन्नायां ब्रह्मविद्यायामिति यावत्, विद्याबलात् उत्तराघस्य प्रामादिकस्याश्लेषः पूर्वाघस्य सर्वस्य सञ्चितस्य विनाशश्च भवतः । तद्व्यपदेशात्—श्रुतौ तयोरश्लेषविनाशयोर्व्यपदेशात् । तथा च श्रुतिः—'तद्यथा पुष्करपलाशे आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते ।' 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति ॥ १३ ॥

इति प्रदीपे तदधिगमाधिकरणम् ॥ ७ ॥

दात् । कर्मणां फलजननशक्तिश्च फलप्रदस्य परमात्मनः सङ्कल्पविशेष एव । स च विद्यया प्रसन्नः सपद्युन्निनीषत्येनम् ॥ १३ ॥

( अ. स. ) किं विद्ययाऽश्लेषनाशौ स्यातां पूर्वोत्तराघयोः ।
नाभुक्तं क्षीयते कर्म विनाशो विद्यया कथम् ॥ १ ॥
विद्यया पापनाशस्य श्रुतिर्विद्याप्रशस्तये ।
अत्रोच्यते नार्थवादो विद्याया महिमा ह्ययम् ॥ २ ॥
पूर्वोत्तराघसंश्लेषविनाशनसमर्थता ।
उत्पत्स्यमानशक्तेर्यो निरोधोऽश्लेष उच्यते ॥ ३ ॥
उत्पन्नशक्तिनाशस्तु कर्मणां नाश उच्यते ।
नाभुक्तं नश्यतीत्येतत् फलदार्ढ्यप्रदर्शकम् ॥ ४ ॥
ननु प्रायश्चित्तनाश्यं विद्यया क्षीयते कथम् ।
पवित्राणां पवित्रं हि विद्या सर्वाघनाशिनी ॥ ५ ॥
भगवन्निग्रहान्नान्यत् पापमस्ति तु किश्चन ।
प्रसन्ने विद्यया तस्मिन् निग्रहावसरः कुतः ॥ ६ ॥

इति भाष्ये तदधिगमाधिकरणम् ॥ ७ ॥

---

## इतरस्याप्येवमसंश्लेषः पाते तु ॥ ४ । १ । १४ ॥

पापादितरस्य पुण्यस्याप्येवमसंश्लेषो बोध्यः । पापस्येव पुण्यस्यापि मुक्तिविरोधित्वेनाघशब्दवाच्यता युक्ता । श्रूयते च पुण्यस्यापि

---

**इतरस्याप्येवमसंश्लेषः पाते तु ॥ ४ । १ । १४ ॥**

इतरस्यापि पुण्यस्यापि एवमेवेव पापस्येवासंश्लेषविनाशौ विद्याबलात् स्याताम् । तथा हि श्रूयते 'तत् सुकृतदुष्कृते धूनुते' इत्यादि । अत्रायं विशेषः—विद्यानिष्पत्त्यर्थं शरीरानुवृत्तये तद्धारणौपयिकं यत्पुण्यं कृतं स्यात् तस्य तु पाते—शरीरपाते, सत्येव । शरीरपतनानन्तरं नाश इति भावः ॥ १४ ॥

इति प्रदीपे इतराधिकरणम् ॥ ८ ॥

---

विनाशः । 'सर्वे पाप्मानो निवर्तन्ते' 'तत्सुकृतदुष्कृते धूनुते' इति । यत्तु सुकृतं विद्यानिष्ठैरपि विद्यानिष्पत्त्यानुकूल्याय कृतं वृष्ट्यन्नाधायकम्, तत्तु पाते प्रारब्धशरीरपाते सति सपदि नश्यति । इतरेषामप्येवमित्ययमतिदेशः पुण्यस्य विहितकार्यत्वात् विद्ययाऽविरोधाशङ्कापरिहाराय ॥ १४ ॥

(अ. स.) एवमेवाश्लेषनाशौ पुण्यानामपि विद्यया ।
पुण्यत्वमधिकाशङ्काबीजं येनातिदिश्यते ॥ १ ॥
स्वर्गादिप्रापकं पुण्यमपि पापं प्रकीर्तितम् ।
मुमुक्षुदृष्ट्या तच्चास्य विद्यातो लुप्यते विदः ॥ २ ॥

इति भाष्ये इतराधिकरणम् ॥ ८ ॥

---

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ ४ । १ । १५ ॥

यावश्लेषविनाशावुक्तौ तौ प्रारब्धेतरविषयौ, किं वा सर्वविषयौ । आह–सर्वविषयौ, 'सर्वे पाप्मानः प्रदूयन्ते' इति अविशेषेण श्रवणात् । ननु निष्पन्नविद्यानामपि शरीरस्थितिरनुवर्तते एव । सत्यम् । कुलालचक्रभ्रमणन्यायेन तदुपपत्तेः । अत्रोच्यते–अनारब्धकार्ये एव तु ते, विद्यया ययोरश्लेषविनाशौ । 'यावन्न विमोक्ष्ये अथ संपत्स्ये' इति शरीरपातावधेः श्रवणात् । तत् शरीरस्थित्याधायककर्मणः प्रारब्धस्य न विद्यया क्षयः ॥ १५ ॥

---

### अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ ४ । १ । १५ ॥

ययोर्विद्याबलादश्लेषविनाशावुक्तौ ते च अनारब्धकार्ये एव–आरब्धकार्याभ्यां पुण्यपापाभ्यामन्ये एव तु पूर्वे सञ्चिते । तदवधेः–मोक्षस्य शरीरपातावधेः श्रुतेः । तथा च श्रूयते–'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति । प्रारब्धकार्यं हि भूमावुप्तमिव बीजं कार्यमजनयित्वा न नश्यतीति शरीरपातविलम्बापेक्षा ॥ १५ ॥

इति प्रदीपे अनारब्धकार्याधिकरणम् ॥ ९ ॥

(अ. स.) विद्यया क्षीयते कर्म सर्वं किं वाऽवशिष्यते ।
अविशेषात् सर्वमेव क्षीयते नावशिष्यते ॥ १ ॥
तथा हि 'सर्वे पाप्मानः प्रदूयन्ते' इति श्रुतिः ।
कुलालचक्रभ्रमिवत् शरीरमनुवर्तते ॥ २ ॥
नैवं प्रारब्धतोऽन्यत्तु सर्वं कर्म विनश्यति ।
तत्तु भोगैकनाश्यं यद्भोगाय वपुषः स्थितिः ॥ ३ ॥
इति भाष्ये अनारब्धकार्याधिकरणम् ॥ ९ ॥

---

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ ४।१।१६ ॥

ननु—पूर्वम् 'इतरस्याप्यश्लेष' इत्यनेन पुण्यस्याप्यसंश्लेष उक्तः । एतेन गम्यते विद्यानिष्ठस्य पुण्यमपि हेयमिति । एवं सति अग्निहोत्रस्यापि सुकृतत्वाविशेषान्मुमुक्षुणा विद्यानिष्ठेन न नियमेन विधेयं तत् । अत्रोच्यते—अग्निहोत्रादि तु विद्यानिष्ठेनावश्यं विधेयम्, तत्कार्यायैव—विद्यारूपकार्यायैव विद्यानिष्पत्तये एव । वर्णाश्रमधर्मा अपेतकामैर्विद्याङ्गतया अनुष्ठेया एवेति यावत् । तद्दर्शनात्—विद्यार्थमनुष्ठेयत्वस्य दर्शनात् । श्रूयते च 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने'ति ॥ १६ ॥

---

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ ४ । १ । १६ ॥

अग्निहोत्रादि यद्यावज्जीवं विहितं कर्म तत्तु विद्यानिष्ठेन विद्याया अहरहरभ्यासाधेयातिशयाया आप्रयाणादनुवर्तनीयायाश्च चित्तशुद्धिसापेक्षतया विहिताकरणे चित्तकालुष्यप्रसङ्गात्—तत्कार्यायैव विद्यानिष्पत्तिलक्षणकार्यायैवावश्यमनुष्ठेयम् । तद्दर्शनात्—विद्यानिष्ठैरग्निहोत्रादेः कर्तव्यत्वदर्शनात् । तथा च श्रुतिः, 'यज्ञेन दानेन तपसानाशकेन ब्राह्मणा विविदिषन्ती'ति ॥ १६ ॥

ननु—विद्यार्थं विधेयमग्निहोत्रादिसुकृतम्, अन्यच्च सुकृतं फलभोगेन विनष्टम्, प्रारब्धं तु भोगैकनाश्यम्, अथ किमवशिष्टं विद्यया यस्य विनाश उच्यते, किं वा 'सुहृदः साधुकृत्या'मित्यस्य विषयः, तत्राह—

## अतोऽन्याऽपि ह्येकेषामुभयोः ॥ ४ । १ । १७ ॥

अतः—विद्याङ्गभूतात् सुकृतात् प्रारब्धाच्चान्या अनिष्पादितभोगा साधुकृत्या असङ्ख्याता अस्त्येव । कथमेतत्? प्रबलकर्मान्तरप्रतिरुद्ध-शक्तयोऽत एवापरिपक्वाः साधुकृत्या हि अनादेः कालात् संसरतोऽस्य सन्त्येव । उभयोः—पूर्वोत्तरयोः एकेषां शाखिनां यदिदं वचनं 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्या'मिति, तदेवंविधसाधुकृत्याविष-यम्, विनाशवचनं चैतद्विषयम् ॥ १७ ॥

ननु—साधुकृत्या प्रतिरुद्धवीर्या भवतीत्यत्र किं मानम्? अत्राह—

## यदेव विद्ययेति हि ॥ ४ । १ । १८ ॥

'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवती'ति श्रुतिर्हि विद्यावि-

---

**अतोऽन्यापि ह्येकेषामुभयोः ॥ ४ । १ । १७ ॥**

ननु यदिदमग्निहोत्राद्यनुष्ठीयमानं विद्यानिष्ठेन तद्विद्योत्पादने विनियुज्यते, यान्यप्यन्यानि पुण्यान्यनुष्ठितानि तानि च स्वर्गादिस्वफलजनने उपयुज्यन्ते, भुक्तावशिष्टानि तु पुनर्भवाय । अथ कान्यविशिष्यन्ते, यदवलम्बा—'सुहृदः साधुकृत्यां द्विषन्तः पापकृत्या'मिति श्रुतिः स्यात् । तत्राह—'अतोऽन्यापी'ति । अतोऽग्निहोत्रादेरन्या चित्तशुद्धावनुपयुक्ता भुक्तात् भुक्तशिष्टाच्चान्या प्रबलप्रति-बन्धककर्मान्तरप्रतिरुद्धफला उभयोः—पूर्वोत्तरयोर्मध्ये साधुकृत्या पापकृत्या चास्त्येव । तदवलम्बना च एकेषां शाखिनां शाखासु 'सुहृदः साधुकृत्यां द्विषन्तः पापकृत्या'मिति श्रूयते ॥ १७ ॥

ननु प्रतिबद्धफलाऽस्तीति कथं गम्यते—

**यदेव विद्ययेति हि ॥ ४ । १ । १८ ॥**

'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवती'ति श्रुतेः कर्मणां प्रबल-कर्मान्तरोपरोधो हि गम्यते ॥ १८ ॥

**इति प्रदीपे अग्निहोत्राधिकरणम् ॥ १० ॥**

रहितानां—उद्गीथादिविद्यापूर्वकमकृतानां प्रबलकर्मान्तरोपरुद्धतां गमयति । पूर्वोक्तमेव पुनः शङ्कानिवृत्तयेऽत्र स्मार्यते स्म ॥ १८ ॥

(अ. स.) अश्लेषो वा विनाशो वा कर्मणां यदि विद्यया ।
किमर्थमग्निहोत्रादिविद्यानिष्ठोऽनुतिष्ठतु ॥ १ ॥
विद्यानिष्पत्तयेऽवश्यमनुष्ठेयं तु तेन तत् ।
यज्ञादेः करणीयत्वं विद्यार्थं श्रूयते ननु ॥ २ ॥
क्रियमाणं तु विद्यायै कृतं यत् भुक्तमेव तु ।
अथ विद्याविनाश्यं किं प्राप्तिः कस्यारिमित्रयोः ॥ ३ ॥
प्रतिबद्धफलं कर्म प्रबलैरन्यकर्मभिः ।
अनादिकालानुस्यूतं सञ्चितं बहु वर्तते ॥ ४ ॥
तदेव विद्यया नाश्यं सङ्क्रान्तिरपि तस्य हि ।
'यदेव विद्यये'त्यादिश्रुत्यैतदवगम्यते ॥ ५ ॥

इति भाष्येऽग्निहोत्राधिकरणम् ॥ १० ॥

---

## भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते ॥ ४ । १ । १९ ॥

ननु—येषामश्लेषविनाशौ तेभ्य इतरेषां शरीरसंबन्धाधायकानां विद्यानिष्पत्तिशरीरावसान एव विनाशः, उत तच्छरीरावसाने शरीरान्तरावसाने वेत्यनियमः । अत्राह—विद्यानिष्पत्तिशरीरावसान एव; 'यावन्न विमोक्ष्ये अथ संपत्स्ये' इति शरीरवियोगमात्रावधित्वश्रवणात् । अत्रोच्यते—इतरे विद्याविनाश्यादन्ये भोगैकनाश्ये पुण्यपापे तु

---

**भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते ॥ ४ । १ । १९ ॥**

इतरे—ये प्रारब्धकार्ये ते भोगेन क्षपयित्वा अथ ब्रह्म संपद्यते ब्रह्म प्राप्नोति ॥ १९ ॥

इति प्रदीपे इतरक्षपणाधिकरणम् ॥ ११ ॥

इति ब्रह्मसूत्रार्थप्रदीपे चतुर्थस्याध्यायस्य प्रथमः पादः ।

---

भोगेन क्षपयित्वैव विमुक्तो भवति । तच्चेत् प्रारब्धं जन्मान्तराधायकं समधिकं स्यात् शरीरान्तरावसाने, यदि न, तच्छरीरावसान एव । तस्मान्न नियमस्तच्छरीरावसान एवेति ॥ १९ ॥

(अ. स.) विद्योत्पत्तिशरीरान्ते प्रारब्धं क्षीयतेऽखिलम् ।
किं वा न वेति चिन्तायामयमत्र विनिर्णयः ॥ १ ॥
तद्देहान्तेऽन्यदेहान्त इत्येष नियमो न हि ।
यावद्भोगावसानं तु प्रारब्धमनुवर्तते ॥ २ ॥
भोगावसानं यद्देहे तद्देहान्ते तु तत्क्षयः ।
अथ मोक्षं समाप्नोति देहपातावधिश्रुतेः ॥ ३ ॥

इति भाष्ये इतरक्षपणाधिकरणम् ॥ ११ ॥

इति ब्रह्ममीमांसाभाष्ये चतुर्थस्याध्यायस्य प्रथमः पादः ।

---

अथ विदुषो गतिं विचारयितुं प्रथमं गत्युपक्रमं विचारयति । गतेरुपक्रमः शरीरादुत्क्रान्तिः ।

## वाङ्मनसि दर्शनात् शब्दाच्च ॥ ४ । २ । १ ॥

इदमाम्नायते छान्दोग्ये—'अस्य पुरुषस्य सोम्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणः तेजसि तेजः परस्यां देवताया'मिति । अत्र

---

अथ विदुषो गतिप्रकारं विचारयन्नुपक्रमते—

**वाङ्मनसि दर्शनात् शब्दाच्च ॥ ४ । २ । १ ॥**

इतः शरीरान्निष्क्रमिष्यतो जीवस्य प्रथमं वागिन्द्रियं स्वस्थानाद्विनिष्क्रम्य मनसि संयुज्यते । स्वयं स्वकार्यमकुर्वत् मनसा सह संश्लिष्यते । दृश्यते चैतत् लोकतः । अन्तिमसमये मुमूर्षुः पुरुषः उपरतसकलेन्द्रियव्यापारः केवलेन मनोव्यापारेणोपलक्षितो हि भवति । न च वृत्त्युपरममात्रम् । शब्दाच्च वागादीनां स्वरूपतो मनसि संश्लेषविशेषोऽवगम्यते । तथा च शब्दः—'सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते' इति । संपत्तिश्चात्र संश्लेषविशेषो न तु लयः, न हि वागादेर्मन उपादानम्, उपादान एव तु लयः ॥ १ ॥

श्रूयमाणा वाचो मनसि संपत्तिः वाच एव, वाग्वृत्तेर्वा । आह–वाग्वृत्तेरेव । वाचो मनसि संपत्तिर्हि न युज्यते, न हि वाचो मनः प्रकृतिः । कार्यस्य प्रकृतौ हि संपत्तिरुचिता । ननु वाग्वृत्तेर्वा कथम् । उच्यते । यद्यपि वाग्वृत्तिर्वाचि । अथापि तस्याः कारणं मनः । मनस्तदा वाग्वृत्तिं न जनयतीति वाग्वृत्तेर्मनसि संपत्तिः कथञ्चिदुपपद्यते इति । अत्रोच्यते–वाच एव मनसि संपत्तिरिह विवक्षिता । संपत्तिर्हि संश्लेषविशेषमात्रम् । स्वव्यापारोपरतिपूर्वकं वाक् मनसि संयुज्यते । उपरतिर्वाचो मुमूर्षोर्मनसः प्रवृत्तिश्च दृश्यते हि । वाङ्मनसि संपद्यत इति शब्दश्च वाचः साक्षान्मनसि संपत्तिं बोधयति । संपत्तिशब्दश्च संयोगविशेषार्थकः ॥ १ ॥

## अत एव सर्वाण्यनु ॥ ४ । २ । २ ॥

यस्माद्वाचो मनसि संपत्तिःसंश्लेषविशेषरूपोपपद्यते अत एव सर्वाणि इन्द्रियाणि वाचमनु मनसि संपद्यन्ते इत्यपि युज्यते । तथा हि श्रूयते– 'तस्मादुपशान्ततेजा अपुनर्भवमिन्द्रियैः मनसि संपद्यमानैः' इति ॥ २ ॥

( अ. स. ) देहपातात् पूर्वभावि विद्यायाश्चिन्तितं फलम् ।
ततः पश्चात्तनफलं विदुषश्चिन्त्यते गतिः ॥ १ ॥
वाचो मनसि सम्पत्तिः प्रयतः श्रूयते तु या ।
सा किं वाग्वृत्तिमात्रस्य किं वा वाचो विचार्यते ॥ २ ॥
ननु न प्रकृतिर्वाचो मनस्तस्मिन् कथं नु वाक् ।
सम्पद्येत ततस्तत्र वाग्वृत्त्युपरतिस्तु सा ॥ ३ ॥

---

### अत एव सर्वाण्यनु ॥ ४ । २ । २ ॥

यस्माद्वाचो मनसि संश्लेषमात्रम्, न तु लयः, अत एव वाचमनु सर्वाण्यपीन्द्रियाणि मनसि संपद्यन्ते । 'तस्मादुपशान्ततेजा अपुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः' इति शब्दश्च । अत एव–दर्शनाच्छब्दाच्चैवेति वाऽर्थः ॥ २ ॥

इति प्रदीपे वागधिकरणम् ॥ १ ॥

---

उच्यते नात्र सम्पत्तिरप्ययः किन्तु सङ्गमः ।
वाच एव च सम्पत्तिः श्रूयते सा च युज्यते ॥ ४ ॥
न च वाग्वृत्तिसम्पत्तेर्मनसि स्वरसा गतिः ।
सम्पद्यन्ते वाचमनु श्रोत्रादीन्यपि चेतसि ॥ ५ ॥

इति भाष्ये वागधिकरणम् ॥ १ ॥

---

## तन्मनः प्राण उत्तरात् ॥ ४ । २ । ३ ॥

वाचा समाश्लिष्टं मनः प्राणे संयुज्यते । 'मनः प्राणे' इत्युत्तराद्वाक्यादिदमवगम्यते । ननु किमिति पृथगिदमुच्यते, पूर्वाधिकरणेनैवायमर्थोऽधिगतप्रायः । अस्त्यधिका शङ्का । अन्नं हि प्रकृतिर्मनसः, 'अन्नमयं हि सोम्य मन' इति श्रुतेः । अन्नस्य चापः, 'ता अन्नमसृजन्त' इति श्रुतेः । प्राणस्य चापः, 'आपोमयः प्राण' इति श्रुतेः । प्राणशब्देन चात्रापो लक्ष्यन्ते । तत् परंपरया मनसः प्राणे लयश्रुतिर्युज्यते इति । नैतदेवम् । अन्नमयम्, आपोमयः इत्यत्र मनसः अन्नाप्यायितत्वं प्राणस्य अद्भिरप्यायितत्वमेवोच्यते । न तु तत्तत्प्रकृतिकत्वम् । मनो ह्याहंकारिकम्, प्राणश्चाकाशप्रकृतिकवायुविशेषरूपः । तस्मात् प्राणे मनसः संपत्तिः संयोग एव ॥ ३ ॥

(अ. स.) सम्पद्यते मनः प्राणे वृत्तिमात्रं न तूत्तरात् ।
तस्य तस्मिंश्च सम्पत्तिः संश्लेषः पूर्ववन्मता ॥ १ ॥
मनसोऽन्नमयत्वं यत् प्राणस्याम्मयता च या ।
तत्तदाप्यायितत्वेन न तु तत्प्रकृतित्वतः ॥ २ ॥

इति भाष्ये मनोऽधिकरणम् ॥ २ ॥

---

### तन्मनः प्राण उत्तरात् ॥ ४ । २ । ३ ॥

इन्द्रियसंश्लिष्टं मनः प्राणे संयुज्यते । 'मनः प्राणे' इत्युत्तराद्वाक्यादिदमवगम्यते ॥ ३ ॥

इति प्रदीपे मनोऽधिकरणम् ॥ २ ॥

---

## सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ । २ । ४ ॥

स प्राणः किं तेजसि संपद्यते उताध्यक्षे । अत्राह—तेजस्येवेति युक्तम्, 'प्राणस्तेजसी'ति श्रुतेः । 'मनः प्राणे' इति च पूर्ववाक्यम् । अत्रोच्यते—स प्राणः अध्यक्षे करणाधिपे संयुज्यते । अध्यक्षेन सह संयोगो ह्युपगम्यते श्रुत्यैव । तथा हि श्रूयते 'एवमेवेममात्मानं अन्तकाले सर्वे प्राणा अभिसमायान्ती'ति । तथा—जीवमनु प्राणानामुत्क्रमणं श्रूयते—'तमुत्क्रामन्तं प्राणोऽनूत्क्रामती'ति । अनेन च गम्यते उत्क्रामन् प्राणो जीवेन संयुक्त इति । 'प्राणस्तेजसी'ति श्रुतिस्तु जीवेन सह संयुज्य ततस्तेन सह तेजसि संयुज्यते इत्येतदभिप्रायकम् । अतो नोभयश्रुतिविरोधः ॥ ४ ॥

(अ. स.) प्राणः सम्पद्यते जीवे साक्षादन्यत्र तच्छ्रुतेः ।
जीवेन सह संयुज्य पश्चाद्भूतेषु सङ्गमात् ॥ १ ॥
सेयं प्राणस्तेजसीति श्रुतिरप्युपपद्यते ।
गङ्गां प्रविष्टा यमुना सागरं गच्छतीतिवत् ॥ २ ॥

इति भाष्येऽध्यक्षाधिकरणम् ॥ ३ ॥

---

## सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ । २ । ४ ॥

स च मनःसंश्लिष्टः प्राणः अध्यक्षे स्वस्याधिष्ठातरि जीवे संयुज्यते । तदुपगमादिभ्यः श्रूयमाणेभ्यः इदमवधार्यते—प्राणस्य जीवे उपगमः तावत् 'एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायान्ती'ति । तथा जीवेन सहोत्क्रान्तिः प्राणस्य श्रूयते—'तमुत्क्रामन्तं प्राणोऽनूत्क्रामती'ति । इदमनूत्क्रमणं प्राणस्य जीवेन संश्लेषं गमयति । अन्यत्र—'प्राणस्तेजसी'ति श्रूयमाणा प्राणस्य तेजसि संपत्तिः स्वसंश्लिष्टजीवसंश्लेषाद्बोध्या । अत एवोभयोर्वाक्ययोः समन्वयः ॥४॥

इति प्रदीपेऽध्यक्षाधिकरणम् ॥ ३ ॥

## भूतेषु तच्छ्रुतेः ॥ ४ । २ । ५ ॥

अध्यक्षसंयुक्तस्य प्राणस्य या तेजसि संपत्तिः श्रूयते, सा किं तेजोमात्रे उत मिथःसंश्लिष्टेषु भूतेषु । अत्राह—'प्राणस्तेजसी'ति तेजोमात्रश्रवणात् तेजोमात्र एव । अत्रोच्यते—न तेजोमात्रे अपि तु मिथः संसृष्टेषु भूतेषु । तत्र तत्र सञ्चरतो जीवस्य सर्वभूतमयत्वश्रवणात् 'पृथिवीमयः आपोमयः × × × तेजोमयः' इति ॥ ५ ॥

## नैकस्मिन् दर्शयतो हि ॥ ४ । २ । ६ ॥

नन्वैकैकस्मिन् भूते क्रमशः सम्पत्तावपि जीवस्य सर्वभूतमयत्वश्रुतिरुपपद्यते, तत्राह—नैकस्मिन्—एकस्मिन् भूते संपन्न इत्यनुपपन्नम् । श्रुतिस्मृती एकैकस्य मिथोऽसंश्लिष्टस्य भूतस्य कार्याक्षमत्वं दर्शयतो हि—श्रूयते हि नामरूपव्याकरणाय त्रिवृत्करणम्—'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणी'ति । त्रिवृत्करणं च पञ्चीकरणस्योपलक्षकम् । स्मृतिश्च—'नाना-

---

### भूतेषु तच्छ्रुतेः ॥ ४ । २ । ५ ॥

'प्राणस्तेजसी'ति श्रूयमाणः प्राणस्य तेजसि संश्लेषो न केवले तेजसि, अपि तु भूतेषु—भूतसूक्ष्मपञ्चके, 'पृथिवीमयः आपोमयस्तेजोमय' इति तत्र सञ्चरतो जीवस्य पृथिव्यादिमयत्वश्रवणात् भूतपञ्चकसंश्लेषो हि गम्यते ॥५॥

### नैकस्मिन् दर्शयतो हि ॥ ४ । २ । ६ ॥

ननु—प्रथमं तेजसि तत अप्सु ततः पृथिव्यामिति एकैकस्मिन् क्रमेण संपत्तावपि भूतपञ्चकसंश्लेषः संपद्यते एवेत्यत्राह—एकस्मिंस्तु न, मिथोऽसंश्लिष्टानां भूतानामकार्यकरत्वात्, अकार्यकरतां श्रुतिस्मृती दर्शयतो हि—'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणी'ति, 'नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना । नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः' इति ॥ ६ ॥

इति प्रदीपे भूताधिकरणम् ॥ ४ ॥

वीर्याः पृथग्भूतास्ततस्ते संहतिं विना । नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः' इति । तस्मात् भूतेषु मिथःसंसृष्टेषु सूक्ष्मेषु जीवेन सहितः प्राणः संयुज्यत इत्येव युक्तम् ॥ ६ ॥

(अ. स.) सप्राणो भूतसूक्ष्मेषु जीवः संयुज्यते स तु ।
तेजसीति श्रुतेः सा च भूतपञ्चकलक्षिका ॥ १ ॥
अपञ्चीकृतभूतानामसामर्थ्यं च कर्मसु ।
श्रूयते स्मर्यते चापि तत् भूतेष्विति युज्यते ॥ २ ॥

इति भाष्ये भूताधिकरणम् ॥ ४ ॥

---

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥४।२।७॥

'प्रयतो वाङ्मनसि संपद्यते' इत्यादिना निरूपितेयमुत्क्रान्तिः किमविदुष एव, उत विदुषोऽविदुषश्च समाना, अत्राह—अविदुष एव, कस्मात्? 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवति अत्र ब्रह्म समश्नुते' इति शरीरे सत एवामृतत्वश्रवणात् विदुषोऽनुत्क्रान्तिर्हि गम्यते। अत्रोच्यते—आसृत्युपक्रमात्—सृतिः—गतिः, विदुषोऽसाधारणी गतिः, सा चार्चिरादिः, तस्या उपक्रमः 'शतं

---

**समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ४ । २ । ७ ॥**

सृतिः—मार्गः, स च विदुषोऽसाधारण अर्चिरादिः, तस्य उपक्रमः मूर्धन्यनाडीप्रवेशः । आङ् मर्यादार्थः । सृत्युपक्रमात् प्रागिति यावत् । निष्क्रान्तिर्विदुषोऽविदुषश्च समाना । 'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते' इत्यविशेषेण श्रवणात् । ननु विदुषो न निष्क्रमणम्, 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते' । इति इहैवामृतत्वश्रवणादित्यत्राह—अमृतत्वं चानुपोष्य—अनुपोष्य—देहेन्द्रियादिकमदग्ध्वैव यदमृतत्वं पूर्वोत्तराघाश्लेषविनाशरूपं तावन्मात्रमुच्यते तेन वाक्येन । 'अत्र ब्रह्म समश्नुत' इति च साधनवेलायां संपद्यमानं 'तस्मिन् दृष्टे परावरे' इति श्रूयमाणं ब्रह्मसाक्षात्कारलक्षणम् । अतो विदुषो निष्क्रान्तिरविरुद्धैव ॥७॥

चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका। तयोर्ध्वमायन्नमृतत्वमेति' इति श्रूयमाणं शताधिकया नाड्या निर्गमनं ततः प्राक् । आङिह मर्यादार्थे । समाना विदुषोऽविदुषश्च । श्रूयते च विदुषः शताधिकया नाड्या निष्क्रमणमविदुषां नाड्यन्तरेभ्यो निर्गमनम् 'विष्वङ्ङन्या उत्क्रमणे भवन्ती'ति । 'अथ मर्त्योऽमृतो भवति अत्र ब्रह्म समश्नुते' इति वचनं श्रूयमाणगत्यविरोधेनैव तु नेयम् । तद्यथा—अमृतत्वमनुपोष्यैव—शरीरेन्द्रियसंबन्धमदग्ध्वैव—शरीरेन्द्रियवियोगात्प्रागेव जायमानं पूर्वोत्तराघाश्लेषविनाशरूपम् । 'ब्रह्म समश्नुते' इति चोच्यमानः साधनानुष्ठानसमये जायमानो विशदतमब्रह्मानुभवरूपः । अयमस्या श्रुतेर्भावः—यावन्न व्यपैति मनसः कामनाकालुष्यं तावन्न ब्रह्मसाक्षात्काराय प्रभवति चेतः, यदा सर्वे कामाः हृदि वासनारूपेण स्थिताः प्रकर्षेण मुच्यन्ते, निर्वासनमपयान्ति, तदा अत्रैव शरीरे ब्रह्म समश्नुते—सम्यगनुभवति साक्षात्करोति । अथ साक्षात्कारसमनन्तरं अमृतो भवति—रागद्वेषमोहरहितो प्रक्षीणसकलकामकर्मा च भवति । 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इति हि श्रूयते ॥ ७ ॥

## तदापीतेः संसारव्यपदेशात् ॥ ४ । २ । ८ ॥

तत्—अमृतत्वमनुपोष्यैवेत्येतदेव युक्तम् । पूर्वोत्तराघाश्लेषविनाशरूपमेवामृतत्वम् । आ अपीतेः—ब्रह्मण्यप्ययं यावत्, ब्रह्मसंपत्तितः प्राक्, निष्पन्नायामपि विद्यायां संसारस्यैव व्यपदेशात्—'यावन्न विमोक्ष्ये अथ संपत्स्ये' इति ब्रह्मप्राप्तितः प्राक् देहसंबन्धश्रवणात् ॥८॥

---

### तदापीतेः संसारव्यपदेशात् ॥ ४ । २ । ८ ॥

तत्—तदेवाभ्युपगन्तव्यम् । 'अथ मर्त्योऽमृतो भवती'त्यनेन विवक्षितममृतत्वं तदेव सर्वकर्मप्रक्षयलक्षणमेव इत्येवावश्यमभ्युपगन्तव्यम् । कस्मात् ? आपीतेः संसारव्यपदेशात्—आ अपीतेः, अप्ययतः प्राक्, अप्ययश्चार्चिरादिना ब्रह्मप्राप्तिलक्षणः । ततः प्राक् 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति संसारव्यपदेशात् ॥ ८ ॥

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ४ । २ । ९ ॥

अस्ति तु विदुषोऽपि परब्रह्मप्राप्तेः प्राक् स्थूलशरीरवियोगानन्तरमपि सूक्ष्मं शरीरम् । प्रमाणतश्च तथोपलब्धेः—अर्चिरादिना मार्गेण ब्रह्मलोकं गच्छतो मध्ये मार्गे चन्द्रमःसंवादश्रुतेश्च सूक्ष्मदेहसम्बन्धोपलब्धेः॥९॥

## नोपमर्देनातः ॥ ४ । २ । १० ॥

अत एव 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवति अत्र ब्रह्म समश्नुते' इति श्रुतिः उपमर्देन प्रारब्धपर्यन्तसकलकर्मोपमर्देन जायमानं परब्रह्मप्राप्तिलक्षणममृतत्वं न प्रतिपादयति । किन्तु पूर्वोत्तराघाश्लेषविनाशमात्रम् ॥ १० ॥

## अस्यैव चोपपत्तेरूष्मा ॥ ४ । २ । ११ ॥

अस्ति विदुषोऽपि प्रयतः सूक्ष्मशरीरपरिष्वङ्गः । येन शरीरेणास्यार्चिरादिना गमनम्, अस्य सूक्ष्मशरीरस्योपपत्तेरेव प्रयाणसमये विदुषोऽपि शरीरे ऊष्मा कचित्प्रदेशे उपलभ्यते । तस्मात् विदुषोऽप्यासृत्युपक्रमात् उत्क्रान्तिः समानैव ॥ ११ ॥

---

### सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ४ । २ । ९ ॥

इतश्चामृतत्वमनुपोष्येत्येव सिध्यति, यदनुवर्ततेऽर्चिरादिना यावत्ब्रह्मप्राप्त्यस्य सूक्ष्मं शरीरम् । 'तमागच्छन्तं पृच्छति कोऽसीति, तं प्रतिब्रूया'दिति चन्द्रमसा सह संवादश्रवणात्प्रमाणात्सूक्ष्ममनुवर्तत इति हि गम्यते । विना तत् संवादासंभवात् । यावत्सूक्ष्मदेहसंबन्धं बद्ध एव तु सः ॥ ९ ॥

### नोपमर्देनातः ॥ ४ । २ । १० ॥

यतः सूक्ष्मशरीरेण विदुषोऽर्चिरादिगतिरत एव 'अथ मर्त्योऽमृतो भवती'त्यत्र श्रूयमाणममृतत्वं न बन्धोपमर्देन ॥ १० ॥

### अस्यैव चोपपत्तेरूष्मा ॥ ४ । २ । ११ ॥

अस्य सूक्ष्मशरीरस्य स्थूलदेहे उपपत्तेरेव विदुषोऽपि मरणसमये ऊष्मा उपलभ्यते, उत्क्रान्ते तु न तदुपलब्धिः । अतश्चासृत्युपक्रमाद्विदुषोऽविदुषश्च समाना निष्क्रान्तिरिति युक्तम् ॥ ११ ॥

# प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषाम् ॥ ४ । २ । १२ ॥

ननु–'स एतास्तिस्रो मात्राः समभ्याददानो हृदयमेवान्ववक्रामति' इत्यादिना 'तस्मात्पुनरेत्यस्मै लोकाय कर्मणे इति तु कामयमान' इत्यन्तेन कामयमानस्योत्क्रान्तिगत्यागतीर्निरूप्य, 'अथाकामयमानः योऽकामो निष्काम आप्तकाम आत्मकामः न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति' इत्यनेन विदुष उत्क्रान्तिः प्रतिषिध्यते, तस्मात् अविदुष इव विदुषोऽप्युत्क्रान्तिर्न घटते इति चेन्न । तस्यात्मकामस्य प्राणा नोत्क्रामन्तीत्यत्र भवत्यपादानाकाङ्क्षा कस्मादिति । सन्निहितस्तु शारीरः 'आत्मकामोऽकामः' तस्मादुत्क्रान्तिः प्रतिषिध्यते । न शरीरात् । यथा अविदुषो लोकान्तरगतये प्राणानां तेन सहैव स्थितिः तमुत्क्रमन्तमनूत्क्रान्तिः, तथा विदुषोऽपि प्राणानामर्चिरादिगत्युपपत्तये तमनूत्क्रमणं तमनुस्थितिश्च । अयमर्थ एकेषां शाखिनां शाखायां स्पष्टः–'योऽकामो निष्काम आप्तकाम आत्मकामः न तस्मात् प्राणा उत्क्रामन्ती'ति । यच्चार्तभागप्रश्ने श्रूयते–'याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते उदस्मात् प्राणा उत्क्रामन्त्याहो न' इति प्रश्नस्योत्तरम् 'नेति होवाच याज्ञवल्क्य' इति । तच्चाविद्वद्विषयम् । विद्वद्विषयत्वेऽप्युक्त एवार्थः ॥ १२ ॥

---

**प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषाम् ॥ ४ । २ । १२ ॥**

ननु–'अथाकामयमानः–योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति' इति प्राणोत्क्रमणनिषेधाद्विदुष उत्क्रान्तिरनुपपन्नेति चेन्न । शारीरात्–जीवात् प्राणानां विनिष्क्रमणं हि प्रतिषिध्यते, विदुषं शरीराद्वियुज्यार्चिरादिना गच्छन्तमनुयान्ति प्राणा इति यावत्, अन्यथा गत्यनुपपत्तेः एकेषां–माध्यन्दिनानां शाखायामयमर्थः स्पष्टः 'न तस्मात् प्राणा निष्क्रामन्ती'त्यपादानश्रवणात् ॥ १२ ॥

## स्मर्यते च ॥ ४ । २ । १३ ॥

स्मर्यते चोत्क्रान्तिर्विदुषो मूर्धन्यया नाड्या 'ऊर्ध्वमेकः स्थितस्तेषां यो भित्वा सूर्यमण्डलम् । ब्रह्मलोकमतिक्रम्य तेन याति परां गति'मिति ॥ १३ ॥

पूर्वपक्षः—

( अ. स. ) उत्क्रान्तिर्नन्वविदुषां पुनरावृत्तये तु सा ।
अत्रैव ब्रह्मसम्पत्तिर्विदुषां श्रूयते ननु ॥ १ ॥
अमृतत्वं श्रूयते च कामप्रक्षयमात्रतः ।

सिद्धान्तः—

नैवं तुल्येयमुत्क्रान्तिर्विदुषोऽविदुषोऽपि च ॥ २ ॥
नाडीप्रवेशतः पूर्वं तत आरभ्य भिद्यते ।
एकाधिकशतं नाड्यो हृदयान्निःसृता बहिः ॥ ३ ॥
तास्वेका हृदयान्नाडी मूर्धानमभिनिःसृता ।
तया मूर्धन्यया नाड्या निःसरन्नर्चिरादिना ॥ ४ ॥
अमृतत्वमवाप्नोतीत्येवं हि श्रूयते गतिः ।
अनपेतशरीरस्यामृतत्वं श्रूयते तु यत् ॥ ५ ॥
तच्चोत्तराघपूर्वाघाश्लेषनाशात्मकं मतम् ।
न प्राप्यते ब्रह्म यावदर्चिरादिपथक्रमात् ॥ ६ ॥
तावन्नापैति संसारो देहसम्बन्धलक्षणः ।
स्थूलदेहान्निर्गतस्य सूक्ष्मदेहान्वयोऽस्ति च ॥ ७ ॥
अतोऽर्चिरादौ चन्द्रादिसंवाद उपपद्यते ।
विदुषः प्राणनिष्क्रान्तिर्ननु श्रुत्या निषिध्यते ॥ ८ ॥

---

### स्मर्यते च ॥ ४ । २ । १३ ॥

उत्क्रान्तस्यापि विदुषोऽर्चिरादिना गतेः सूक्ष्मशरीरसद्भावः स्मृत्यापि गम्यते 'ऊर्ध्वमेकः स्थितस्तेषां यो भित्वा सूर्यमण्डलम् । ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्' इति ॥ १३ ॥

**इति प्रदीपे आसृत्युपक्रमाधिकरणम् ॥ ५ ॥**

नैवं शरीरान्निष्क्रान्तिः प्राणानां न निषिध्यते ।
किन्तु जीवाद्विनिष्क्रान्ति'र्न तस्मा'दिति हि श्रुतिः ॥ ९ ॥
रुणद्धि प्राणविश्लेषं विद्या स्वफलसिद्धये ।
स्मर्यते विदुषो व्यक्तं नाड्या मूर्धन्ययोद्गमः ॥ १० ॥

इति भाष्ये आसृत्युपक्रमाधिकरणम् ॥ ५ ॥

---

## तानि परे तथा ह्याह ॥ ४ । २ । १४ ॥

तान्येतानि मनःप्राणसंश्लिष्टेन जीवेन परिष्वक्तानि किं कर्मणो विद्यायाः वा फलमाधातुं यान्ति, उत पूर्वं परेण ब्रह्मणा संयुज्यन्ते ? न संयुज्यन्ते । प्रयोजनाभावात् इति चेत् उच्यते—परे परमात्मनि संयुज्यन्ते, तथा ह्याह श्रुतिः । यथाश्रुत्यभ्युपगन्तव्यं नाम । नात्र प्रयोजनचिन्ता समुचिता । श्रुत्यनुरोधात् प्रयोजनं वा कल्प्यम् । यथा सुषुप्तौ परमात्मनि संश्लेषः संसरणायासविश्रान्तये, तथायमपीति । मूर्धन्यनाडीप्रवेशत आरभ्य विदुषो विशेषः । अर्चिरादिना पथा गच्छतो यो देशविशेषे परमात्मनः संश्लेषः स तु विद्यायाः फलभूतः । अयं तु निष्क्रमणसमयसंप्राप्तः ॥ १४ ॥

इति भाष्ये परसम्पत्त्यधिकरणम् ॥ ६ ॥

---

## अविभागो वचनात् ॥ ४ । २ । १५ ॥

सेयं परे संपत्तिः कार्यस्य कारणापत्तिरूपा उताविभागमात्रम् ।

---

### तानि परे तथा ह्याह ॥ ४ । २ । १४ ॥

सकरणग्रामेण सप्राणेन जीवेन परिष्वक्तानि तानि भूतसूक्ष्माणि परे—परमात्मनि संपद्यन्ते । तथा ह्याह श्रुतिः—'तेजः परस्यां देवताया'मिति ॥ १४ ॥

इति प्रदीपे परसम्पत्त्यधिकरणम् ॥ ६ ॥

---

### अविभागो वचनात् ॥ ४ । २ । १५ ॥

इयं च संपत्तिर्न लयरूपा, किन्तु अविभागमात्रम्—नामरूपाद्यभिमान-

उच्यते। अविभागमात्रम्—पृथक्प्रतिपत्त्यनर्हसंश्लेषविशेषमात्रम्। 'वाङ्मनसि संपद्यते' इत्यतोऽनुवर्तमानात् संपद्यते इति वचनादेतदवगम्यते। प्रकृता च संपत्तिरविभाग एव ॥ १५ ॥

( अ. स. ) प्रयतो भूतसूक्ष्माणां किं सम्पत्त्या परे फलम्।
न च निष्क्रमणद्वारं नाडीवत् स परः पुमान्॥ १ ॥
नैवं सभूतसूक्ष्मस्य सम्पत्तिः श्रूयते परे।
सुषुप्ताविव सम्पत्तिर्विश्रामाय च कल्पते ॥ २ ॥
सेयं च परसम्पत्तिः संश्लेषः पूर्ववत् मता।
न कारणापत्तिरूपा लयप्रकरणं न हि ॥ ३ ॥

इति भाष्ये अविभागाधिकरणम् ॥ ७ ॥

( इति परसम्पत्त्यविभागाधिकरणयोरर्थसङ्ग्रहः। )

---

अथ विदुषो विशेष उच्यते—

## तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ ४ । २ । १६ ॥

इदमाम्नायते कठवल्ल्याम्—'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्र-

---

मूलकविभागं विना तत्संश्लेषविशेषलक्षणावस्थितिमात्रम्। वचनात्—पूर्ववाक्ये संपद्यते इति यत् संपत्तिवचनं तस्यैवेहाप्यन्वयात्, तस्य चाविभागेन स्थितिमात्रार्थत्वात्, अनुषक्तस्यार्थान्तराश्रयणे च वैरूप्यात् ॥ १५ ॥

इति प्रदीपेऽविभागाधिकरणम् ॥ ७ ॥

---

## तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ ४ । २ । १६ ॥

उक्ता गतिः साधारणी। अथासाधारणी विदुषो गतिर्विचार्यते। विद्वान्

मणे भवन्ति' इति । अत्र संशयः—विदुषो मूर्धन्ययैव निष्क्रमणमविदुषस्तदन्याभिरित्ययं नियम उपपद्यते न वा । आह—नोपपद्यते । नाडीनामतिसूक्ष्मत्वेन दुर्ज्ञेयत्वात् । श्रुतिश्च यादृच्छिकनिष्क्रमणविषयिणी । अत्रोच्यते । तदोकः—तस्य जीवस्य यदोकः—स्थानं हृदयम्, तदग्रज्वलनं भवति, अग्रस्य ज्वलनं प्रकाशो यस्यैवम्भूतं प्रकाशिताग्रं भवति, कस्मात् अग्रस्य प्रकाशः ? । विद्यासामर्थ्यात्प्रकाशिताग्रं भवति । परमपुरुषोपासनलक्षणया विद्यया हृदयस्याग्रप्रदेशः प्रकाशपदवीमुपयाति । विद्याङ्गभूतगत्यनुस्मरणबलाच्च । अथ स हार्देन परमपुरुषेणानुगृहीतः शताधिकया मूर्धन्यया नाड्या निष्क्रामति । तदेवं विदुषो नाडीप्रकाशसंभवात् मूर्धन्यया गत्युपपत्तिः ॥ १६ ॥

(अ. स.) नाडीनामतिसूक्ष्मत्वात् कथं मूर्धन्यया गतिः ।
सा हि सूक्ष्मतमा नैव प्रकाशपदमाविशेत् ॥ १ ॥
मैवं विद्याफलादस्य हृदयाग्रं प्रकाशते ।
विद्याशेषतया नित्यं गत्यनुस्मरणादपि ॥ २ ॥
उपास्यस्य च हार्दस्य परस्यानुग्रहादयम् ।
याति प्रकाशितद्वारो नाड्या मूर्धन्ययैव सः ॥ ३ ॥

इति भाष्ये तदोकोऽधिकरणम् ॥ ८ ॥

---

शताधिकया 'तासां मूर्धानमभिनिःसृतैका' इति श्रूयमाणया मूर्धन्यया नाड्यैव निष्क्रामति । विद्यासामर्थ्यात्, विद्याशेषभूतं गत्यनुस्मरणम् यत् तद्योगाच्च तदेकोऽग्रज्वलनं भवति—तस्य विदुष आत्मनो जीवस्य यदोकः स्थानं हृदयं तस्य यदग्रं तस्य ज्वलनं—प्रकाशो भवति, तेन प्रकाशितनिर्गमनद्वारः, उपासनया समाराधितेन हार्देन हृदयगुहानिवासेन परमात्मनाऽनुगृहीतः सन् मूर्धन्ययैव निष्क्रामतीति यावत् । हार्दानुग्रहात् विदुषः सुघटं नाम मार्गावबोधनम् ॥ १६ ॥

इति प्रदीपे तदोकोऽधिकरणम् ॥ ८ ॥

## रश्म्यनुसारी ॥ ४ । २ । १७ ॥

'अथ यत्रैतदस्मात् शरीरादुत्क्रामति अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' इत्यनेन मूर्धन्यया शताधिकया नाड्या निष्क्रान्तस्य सूर्यरश्मीननुसृत्यादित्यमण्डलगमनं श्रूयते। निशि मृतस्य विदुषस्तदसंभवेन श्रुतिरियं पाक्षिकीति प्राप्ते उच्यते–रश्म्यनुसार्येवायं गच्छति । श्रूयते चावधारणम् 'अथैतैरेव रश्मिभि'रिति । निशि न सूर्यरश्म्यभावः । अनुभूयते हि ग्रीष्मे तेषामूष्मा । श्रूयते च सर्वदा नाडीरश्मीनामन्योन्यसंबन्धः–'तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं च एवमेवैत आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं च अमुष्मादादित्यात् प्रतायन्ते ते आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते ते अमुष्मिन्नादित्ये सृप्ताः' इति । तस्मात् निश्यपि रश्म्यनुसरणं संभवतीति ॥ १७ ॥

(अ. स.) ननु मूर्धन्यया नाड्या निष्क्रान्तो रविमण्डलम् ।
तद्रश्मीननुसृत्यैव यातीत्येतन्न युज्यते ॥ १ ॥
सूर्यरश्म्यनुसारो हि मृतस्य निशि दुर्घटः ।
मैवं सन्त्येव सूर्यस्य निशायामपि रश्मयः ॥ २ ॥
सूक्ष्मा यतो ग्रीष्मनिशि सन्ताप उपलभ्यते ।
तस्माद्रश्म्यनुसारित्वनियमो युज्यते श्रुतः ॥ ३ ॥

इति भाष्ये रश्म्यनुसाराधिकरणम् ॥ ९ ॥

---

## रश्म्यनुसारी ॥ ४ । २ । १७ ॥

मूर्धन्यया नाड्या निष्क्रान्तः सूर्यरश्मीननुसरन्नेवोर्ध्वं गच्छति । 'अथैतैरेव रश्मिभि'रिति अवधारणं हि श्रूयते । श्रूयते च सूर्यरश्मीनां ऊर्ध्वाधोलोकाभ्यां नियतोऽन्वयः–'तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं च एवमेवैतदादित्यस्य रश्मयः उभौ लोकौ गच्छन्तीमं चामुं च अमुष्मादादित्यात्प्रतायन्ते त आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते अमुष्मिन्नादित्ये सृप्ता' इति ॥ १७ ॥

इति प्रदीपे रश्म्यनुसाराधिकरणम् ॥ ९ ॥

## निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वात् दर्शयति च ॥ ४ । २ । १८ ॥

ननु यद्यपि निश्यपि सन्ति रश्मयः सूक्ष्माः, तदनुसरणेन गतिश्चोपपद्यते । अथापि निशि मृतस्य विदुषो न ब्रह्मप्राप्तिः संभवति । सा हि गर्हिता मरणे । तथा हि स्मर्यते—'दिवा च शुक्लपक्षश्च उत्तरायणमेव च । मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितम्' इति चेन्न । कर्मसंबन्धस्य यावद्देहभावित्वात् । कर्मिणोऽधिकृत्येदं वचनम् । ये प्रक्षीणकर्माणः न तानधिकृत्य प्रवृत्तम् । कर्म तु सञ्चितं सकलं विद्ययैव नष्टम्, प्रारब्धं तु यावद्देहभावि, प्रारब्धफलभूतेन देहेन सुखदुःखभोगात् देहे अत्यन्तमपगते कर्मशेषस्याभावात् विद्यया परं लोकं गच्छतोऽस्य निशि मरणं न गर्हास्पदम् । तथा श्रुतिरपि दर्शयति—'यावन्न विमोक्ष्ये अथ संपत्स्ये' इति ॥ १८ ॥

( अ. स. ) न मुच्यते निशि मृतो निशामरणगर्हणात् ।
मैवं विगर्हणं यत्तदविद्वद्विषयं यतः ॥ १ ॥
प्रक्षीणकर्मणो मुक्तौ विलम्बो विदुषः कुतः ।
प्रारब्धकर्मोपशमे म्रियमाणस्य निश्यपि ॥ २ ॥

इति भाष्ये निशाधिकरणम् ॥ १० ॥

---

## निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ ४ । २ । १८ ॥

'दिवा च शुक्लपक्षश्च उत्तरायणमेव च । मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितम् ।' इति निशि मरणस्य गर्हितत्वात् निशायां मृतस्य विदुषो न ब्रह्मप्राप्तिरिति चेन्न । ब्रह्मप्राप्तिप्रतिबन्धकीभूतानां सर्वेषामेव कर्मणां विद्ययैव प्रक्षीणत्वात् प्रारब्धकर्मसम्बन्धस्य च यावद्देहभावित्वात् चरमदेहे च व्यपेते कर्मशेषस्याभावात् निशि मरणमात्रान्न ब्रह्मप्राप्तौ प्रतिरोधः । सन्ति च निशायामपि सूर्यरश्मयः सूक्ष्माः । निशामरणगर्हणं त्वविद्वद्विषयम् ॥ १८ ॥

इति प्रदीपे निशाधिकरणम् ॥ १० ॥

## अतश्चायने दक्षिणेऽपि ॥ ४ । २ । १९ ॥

यतो निशि मृतस्यापि विदुषो ब्रह्मप्राप्तिः संभवति, अत एव दक्षिणायने मृतस्यापि विदुषः स्यादेव ब्रह्मप्राप्तिः । दक्षिणायने मरणगर्हाया निशि मरणगर्हाया इव कर्मिविषयत्वात् । अतिदेशे निमित्तं तु अधिकाशङ्का । सा च—'अथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छती'ति दक्षिणायने मृतस्य चन्द्रप्राप्तिः श्रूयते, चन्द्रं प्राप्तानां च पुनरावृत्तिरन्यत्र श्रूयते 'तेषां यदा तत्पर्यवैति अथैतमेवाध्वानं पुनर्निवर्तन्ते' इति । तस्मात् दक्षिणायने मृतस्य विदुषोऽपि न ब्रह्मप्राप्तिरिति । सिद्धान्तस्तु—तत्रैव वाक्यशेषे श्रूयते चन्द्रं प्राप्तस्यापि ब्रह्मप्राप्तिः—'एतौ वै सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वान् अभिजयति तस्मात् ब्रह्मणो महिमानमाप्नोति' इति । एतेन विदुषो मध्येमार्गं चन्द्रलोकप्राप्तिर्विश्रान्तिस्थानमात्रमिति गम्यते । न तु कर्मिणामिव भोगस्थानम् । पुनरावृत्तिस्तु कर्मिविषयेत्यविरोधः ॥१९॥

ननु—विदुषामपि मरणकालभेदनियतः पुनरावृत्त्यनावृत्तिलक्षणो विशेषः स्मर्यते—'यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः । प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ । अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः । धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् । तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ।' इति । तत् दक्षिणायने मृतस्य नापुनरावृत्तिलक्षणब्रह्मप्राप्तिरित्यत्राह—

---

### अतश्चायने दक्षिणेऽपि ॥ ४ । २ । १९ ॥

अतश्च—सर्वकर्मणां प्रक्षीणत्वादेव अयने दक्षिणे मृतस्याप्यस्यैव विदुषो ब्रह्मप्राप्तिः ॥ १९ ॥

ननु दक्षिणायनं पुनरावृत्तिकालेषु गण्यते । तथा च स्मृतिः—'धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् । तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते' इति । कथमुच्यते दक्षिणायने मृतस्यापि विदुषो ब्रह्मप्राप्तिरिति । अत्राह—

**योगिनः प्रति स्मर्येते स्मार्ते चैते ॥ ४ । २ । २० ॥**

नात्र फलभेदनियामकौ मरणकालभेदौ स्मर्येते । किन्तु ये योगिन आर्तादिभेदेन चतुर्विधास्तान् प्रति स्मार्ते–अवश्यं स्मर्तव्ये एते सृती मार्गौ स्मर्येते । यौ देवयानपितृयाणशब्दितौ । कालाभिमानिदेवता-भूयस्तया च काल इति निर्देशः । कालाभिमानिघटितमार्गे इति तदर्थः । 'तेऽर्चिषमभिसंभवन्ति' 'ते धूममभिसंभवन्ति' इति श्रुतिनिरूपितौ यौ द्वौ मार्गौ तावेव चात्र प्रत्यभिज्ञायेते ॥ २० ॥

( अ. स. ) ननु स ब्रह्म नाप्नोति मृतो यो दक्षिणायने ।
तस्य चन्द्रमसः प्राप्तिः श्रुतौ हि श्रूयते फलम् ॥ १ ॥
प्रतीक्षितं च भीष्मेण मरणायोत्तरायणम् ।
मैवं तन्महिमख्यात्यै तेन तस्य प्रतीक्षणम् ॥ २ ॥
विदुषश्चन्द्रसम्प्राप्तिर्विश्रान्तिः केवलं पथि ।
ब्रह्मप्राप्तिः फलं तस्य तत्रैव श्रूयते ननु ॥ ३ ॥
प्रारब्धापगमे मुक्तौ न विरोधोऽयनादिकम् ।
स्मर्तव्यौ मार्गभेदौ तु स्मर्येते योगिनः प्रति ॥ ४ ॥
'यत्र काले त्वनावृत्ति'मिति मार्गोऽवबोध्यते ।
कालाभिमानिप्रचुरः कालशब्देन लक्ष्यते ॥ ५ ॥

इति भाष्ये दक्षिणायनाधिकरणम् ॥ ११ ॥

इति ब्रह्ममीमांसाभाष्ये चतुर्थस्याध्यायस्य द्वितीयः पादः ॥

---

**योगिनः प्रति स्मर्येते स्मार्ते चैते ॥ ४ । २ । २० ॥**

योगिनः प्रति प्रत्यहं चिन्तनीये पुनरावृत्त्यपुनरावृत्त्याधायिके द्वे गती स्मृतिषु प्रसिद्धे उच्येते । न तु कालविशेषः । 'यत्र काले त्वि'त्युक्तिर्मार्गस्य कालाभिमानिदेवतासंबन्धाधिक्यात् । अहोरात्रादिशब्दास्तत्तदभिमानिदेवतापराः ॥२०॥

इति प्रदीपे दक्षिणायनाधिकरणम् ॥ ११ ॥

इति ब्रह्मसूत्रार्थप्रदीपे चतुर्थस्याध्यायस्य द्वितीयः पादः ।

विदुषः प्रयतः सकरणग्रामस्य सप्राणस्य सूक्ष्मभूतसंश्लिष्टस्य हार्दानुग्रहेण मूर्धन्यया नाड्या देहाद्विनिष्क्रमणमुक्तम् । अथोत्क्रान्तस्य मार्गश्चिन्त्यते । मार्गस्तावत् श्रुतौ तत्र तत्र श्रूयते । क्वचिदर्चिरुपक्रमकः क्वचिद्वायूपक्रमकः, अर्चिरुपक्रमकेऽप्यल्पो भेदश्च । यथा—छान्दोग्ये 'अथ यदु चैवास्मिन् शव्यं कुर्वन्ति यदु च न अर्चिषमेवाभिसंभवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षात् यान् षडुदङ्केति मासांस्तान् मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याचन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' इति । बृहदारण्यके 'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथा आडम्बरस्य ख'मित्यादि । तत्रैव बृहदारण्यके—'य एवमेतद्विदुर्ये चेमेऽरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य एति तान् मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं वैद्युतात् पुरुषोऽमानवः स एत्य ब्रह्मलोकान् गमयति' इति । कौषीतक्युपनिषदि—'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोक'मिति । अत्र संशयः—ब्रह्मप्राप्तये किमर्चिरादिरेक एव मार्गः, उतान्येऽपि । अत्राह—अन्येऽपि सन्ति मार्गाः, प्रदर्शितश्रुतिभिरेव भेददर्शनात् । अतोऽर्चिरादिनैव गच्छतीति न नियमः, किन्तु अन्येनापीत्यनियम एवेति । अत्रोच्यते—

## अर्चिरादिना तत्प्रथितेः ॥ ४ । ३ । १ ॥

उपासकः अर्चिरादिनैव ब्रह्मलोकमभिगच्छति । तत्प्रथितेः—तस्यैव

---

**अर्चिरादिना तत्प्रथितेः ॥ ४ । ३ । १ ॥**

विदुषो मूर्धन्यया नाड्या निष्क्रान्तस्य यः पन्था ब्रह्मप्राप्तये स विचार्यते । तत्र तत्र भिन्नभिन्नप्रकाराः पन्थानः श्रूयन्ते । छान्दोग्ये 'अथ यदु चैवास्मिन्

ब्रह्मलोकमार्गत्वेन प्रथितेः—प्रसिद्धेः । छान्दोग्ये उपकोसलविद्यायां पञ्चाग्निविद्यायां च अर्चिरादिना उपक्रम्यैव मार्ग एकरूपः श्रूयते । वाजसनेयके पञ्चाग्निविद्यायामपि स एवार्चिरादिमार्गः अल्पभेद आम्नायते । अन्यत्र चार्चिरादिप्रत्यभिज्ञापकादित्यादिसद्भावात् अर्चिरादिरेव सर्वास्वाम्नायते इति निश्चीयते । विद्यासु गुणोपसंहारवदिहापि उक्तानुक्तविचारपूर्वकमुपसंहारो न्याय्यः । तस्मात् देवयानपथे ब्रह्मप्रापके न वैरूप्यमिति मार्ग एक एव ॥ १ ॥

(अ. स.) विदुषः प्रयतो देहाद्विनिष्क्रान्तिर्विचारिता ।
निष्क्रान्तस्य ततस्तस्माद्गतिरत्र विचार्यते ॥ १ ॥

---

शव्यं कुर्वन्ति यदु च न अर्चिषमेवाभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षड्डुदङ्केति मासान् मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथः एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते नावर्तन्ते' इति श्रूयते । तत्रैवान्यत्र 'अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' इति । बृहदारण्यके 'य एवमेतद्विदुर्ये चेमेऽरण्ये श्रद्धातप इत्युपासते तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहः' इत्यादि । अन्यत्र श्रूयते—'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स प्रजापतिलोकं स ब्रह्मलोकं' इति । अन्यत्र श्रूयते—'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा आडंबरस्य ख'मित्यादि । एवं मार्गे प्रकारभेदश्रवणाद्विद्वान् परंब्रह्माभिगच्छन् नैकेन पथा गच्छति, उक्तेषु येन केनापीत्यत्रोच्यते । विदुषो मूर्धन्यया नाड्या निष्क्रान्तस्य ब्रह्मप्राप्तये अर्चिरादिरेक एव पन्थाः । तेनैव स गच्छति । सर्वास्वपि श्रुतिषु तस्या एव प्रथितेः । स एवैकः पन्था न्यूनाधिकभावेन तत्र तत्र प्रतिपाद्यते । अनुक्तस्यान्यत उपसंहारः कार्य इति न वैविध्यं मार्गे ॥ १ ॥

इति प्रदीपेऽर्चिराद्यधिकरणम् ॥ १ ॥

मार्गपर्वसु भेदस्य क्रमभेदस्य च श्रुतेः ।
एकेनैव तु मार्गेण यातीत्येतन्न युज्यते ॥ २ ॥
मैवं सर्वत्रार्चिरादिः प्रत्यभिज्ञायते यतः ।
अर्चिरादिपथेनैव गच्छति ब्रह्मणः पदम् ॥ ३ ॥
अस्यैव ब्रह्ममार्गत्वप्रसिद्धिर्ननु विश्रुता ।
न्यूनोक्तावधिकं ग्राह्यं वाक्यान्तरत एव तु ॥ ४ ॥

इति भाष्ये अर्चिराद्यधिकरणम् ॥ १ ॥

---

## वायुमब्दादविशेषविशेषाभ्याम् ॥ ४ । ३ । २ ॥

एकस्यां शाखायां मासादित्ययोरन्तराले संवत्सरः श्रूयते 'मासेभ्यः संवत्सर'मिति । अपरस्यां तु 'मासेभ्यो देवलोकं देवलोकादादित्य'मिति मासादित्ययोरन्तराले देवलोकः श्रूयते । मार्गस्यैकत्वेन एकत्रानुक्तस्यान्यत उपसंहार्यतया उभावुभयत्रोपसंहार्याविति तु स्थितम् । तदेवमुपसंहार्यत्वे सिद्धे संवत्सरदेवलोकयोर्मध्ये संवत्सरस्य मासेभ्योऽनन्तरत्वमाश्रयणीयम् दिनशुक्लपक्षमासानामुत्तरोत्तरमधिककालानां ग्रहणात्, मासेभ्योऽधिककालत्वाच्च संवत्सरस्य । तथा च स्थितं संवत्सरा-

---

**वायुमब्दादविशेषविशेषाभ्याम् ॥ ४ । ३ । २ ॥**

'तेऽर्चिषमभिसंभवन्त्यर्चिषोऽह'रित्यारभ्य 'मासेभ्यो देवलोकं देवलोकादादित्य'मिति मासेभ्य ऊर्ध्वं आदित्यात्प्राक् देवलोकः श्रूयते । अत्र मासेभ्य ऊर्ध्वश्रुतिः श्रुत्यन्तरानुरोधात् संवत्सरव्यवधानेन बोध्या । परं देवलोकोऽयमपूर्वः श्रूयते । अन्यत्र तु 'स वायुमागच्छती'ति आदित्यात्प्राक् वायुः श्रूयते । स चायं वायुः देवलोकात्परं पूर्वं वा निवेश्य इति शङ्कायामुच्यते—वायुर्न देवलोकेभ्यो भिन्नः, वायुरेव देवानां लोकः स च देवलोक इति अविशेषेण—सामान्यशब्देन क्वचित् श्रूयते । क्वचित्तु 'वायु'मिति स्वेनैव विशेषशब्देन । नातो भेदः । अब्दादनन्तरमादित्यात्प्राक् वायुमागच्छतीति यावत् ॥ २ ॥

इति प्रदीपे वाय्वधिकरणम् ॥ २ ॥

दित्ययोर्मध्ये देवलोक इति । क्वचित् श्रूयते 'आदित्यात्पूर्वं वायुलोकः–'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति' इति । श्रुत्यन्तरेष्वर्चिरादिक्रमेण श्रूयमाणे मार्गे तदविरोधेन वायोरवकाशो वक्तव्यः । तथा सति वायुलोकोऽयं देवलोकादन्यश्चेत् पौर्वापर्यं विनिगमकाभावाद्यथेष्टं गच्छति इत्याश्रयणीयम् । देवलोकादनन्यश्चेत्, नास्य पृथगवकाशकल्पना । तदत्र संशयः–किमयं वायुलोको देवलोकादन्य उतानन्य इति । अत्राह–अन्य एवायम् । अनयोश्च क्रमविशेषानवधारणात् अब्दादनन्तरं क्रमात् वायुलोकदेवलोकौ देवलोकवायुलोकौ वा यथेष्टमिति । अत्रोच्यते–अविशेषविशेषाभ्याम्–अविशेषेण सामान्यरूपेण देवलोकशब्देन श्रुतस्यैव शाखान्तरे वायुत्वेन विशेषेण वायुशब्देन व्यपदेशादर्थान्तराभावात् अब्दादनन्तरं आदित्यतः प्राक् वायुलोकमागच्छतीत्येव सुस्थितम् ॥ २ ॥

(अ. स.) ग्राह्योऽन्यतस्त्वनुक्तोऽपि क्वचित् संवत्सरस्तथा ।
देवलोकः पदव्यैक्यात् मध्ये मासांशुमालिनोः ॥ १ ॥
कालप्रकर्षक्रमतो मासेभ्योऽथ च वत्सरः ।
तत ऊर्ध्वं देवलोकस्ततो भानुरिति क्रमः ॥ २ ॥

पूर्वपक्षः—

श्रूयते तु रवेः पूर्वं वायुः शाखान्तरे क्वचित् ।
तत् देवलोको वायुश्चेत्येतावनियतक्रमौ ॥ ३ ॥

सिद्धान्तः—

मैवं नार्थान्तरं वायुर्देवलोकादयं यतः ।
अविशेषविशेषाभ्यामेक एव हि बोध्यते ॥ ४ ॥

इति भाष्ये वाय्वधिकरणम् ॥ २ ॥

## तटितोऽधि वरुणः संबन्धात् ॥ ४ । ३ । ३ ॥

इदमाम्नायते कौषीतकीनां शाखासु—'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोक'मिति। अत्राग्नेरर्चिःपर्यायतया देवयानस्यार्चिरुपक्रमकत्वं तु निर्विवादम्। श्रुत्यन्तरावगतक्रमाच्च वायोर्दिनपूर्वपक्षषडुदङ्मासाब्दानन्तर्यमपि सुस्थितम्। 'देवलोकादादित्यमादित्याद्वैद्युत'मिति श्रुतिनिर्दिष्टक्रमानुरोधेन एतच्छ्रुतिनिर्दिष्टपाठक्रमबाधेन वायोरुपर्यादित्य इति च स्थितम्। अन्यत्रानुक्तानां वरुणेन्द्रप्रजापतीनामिह श्रूयमाणानां क्व निवेश इति तु इदानीं विचार्यम्। अत्राह—अवश्यं देवयानेऽस्मिन् वरुणादीनां निवेशोऽङ्गीकार्यः। श्रुतेः। तटितः पश्चात्तु नावकाशः, 'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयती'ति वैद्युतस्य ब्रह्मप्रापकत्वश्रवणात्। अर्चिर्दिनपूर्वपक्षषडुदङ्मासाब्दानां क्रमः श्रुत्यन्तरेण सुप्रतिष्ठितो न निरोद्धुं शक्यते। अतः एतच्छ्रुत्युक्तक्रमानुरोधेन वायोरुपर्येव वरुणादीनां निवेश उचित इति। अत्रोच्यते—तटितोऽधि—विद्युत उपरि वरुणो निवेश्यः। तडिद्वरुणयोः संबन्धात्। वरुणो हि

---

## तडितोऽधि वरुणः संबन्धात् ॥ ४ । ३ । ३ ॥

कौषीतकिनां शाखासु श्रूयते—'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकं' इति। एवं श्रूयमाणपाठक्रमानुरोधात् वरुणलोकः वायोरनन्तरं निवेश्य इत्यत्राह—पाठक्रमं बाधित्वाऽर्थक्रमानुरोधात्, तडितोऽधि वरुणो निवेश्यः, संबन्धात्—मेघोदरवर्तित्वेन तडितः मेघनेतृत्वेन च वरुणस्य, तडिद्वरुणयोः संबन्धात्। अर्चिर्लोकादारभ्य तडिदन्तं मार्गक्रमः श्रुत्यन्तरानुरोधान्नियतः। वरुणानन्तरमेतच्छ्रुत्यनुरोधाद्गुणोपसंहारन्यायेन इन्द्रप्रजापतिलोकयोर्निवेशो बोध्यः ॥ ३ ॥

इति प्रदीपे वरुणाधिकरणम् ॥ ३ ॥

जलस्याधिष्ठाता तटिच्च जलधरादाविर्भवति । तदर्थक्रमोऽत्राश्रयणीयः यदा वरुणेन वैद्युतस्यामानवस्य व्यवधानं सोढव्यं भवति तदा इन्द्रप्रजापतिभ्यामपि तत्सोढव्यम् । आगन्तुकानामन्ते निवेश इति न्यायात् ॥३॥

(अ. स.) मार्गेऽर्चिरादावन्यत्र श्रूयन्ते वरुणादयः ।
मध्ये वाय्वर्कयोस्तेषां न युक्तं स्थानकल्पनम् ॥ १ ॥
विद्युता सह सम्बन्धो विश्रुतो वरुणस्य च ।
तद्विद्युतोऽधि वरुणस्ततश्चेन्द्रप्रजापती ॥ २ ॥

इति भाष्ये वरुणाधिकरणम् ॥ ३ ॥

---

## आतिवाहिकास्तल्लिङ्गात् ॥ ४ । ३ । ४ ॥

अर्चिरादयो मार्गचिह्नभूता उत भोगभूमय उत अतिवोढारः । अत्राह–केवलं ब्रह्मगमनमार्गचिह्नभूता एव । यथा नगरं प्रति जिगमिषतो वननदीपर्वतादयः चिह्नतयोपदिश्यन्ते अमुकं वनममुका नदी अमुकः पर्वत इति, तथाऽयमुपदेशः । यद्वा–भोगभूमय एव । नन्वहःप्रभृतीनां कालविशेषाणां कथं भोगभूमित्वम् । 'एत एव लोका यदहोरात्राण्यर्धमासा मासा ऋतवः संवत्सरः' इति वाक्येन अहरादीनां लोकत्वावबोधनात् । कौषीतकीनां शाखासु उपक्रमे 'अग्निलोकमागच्छन्ती'ति च लोकशब्दः श्रूयते । अत्रोच्यते–अर्चिरादयः आतिवाहिका एव–अतिवहनकर्तार एव । उत्तरत्र श्रूयमाणादतिवहनाल्लिङ्गात् । अतिवहनमितो ब्रह्मप्रापणम् । तत्कर्तृत्वमन्ते अमानवपुरुषे श्रूयमाणं

---

### आतिवाहिकास्तल्लिङ्गात् ॥ ४ । ३ । ४ ॥

'तेऽर्चिषमभिसंभवन्ती'त्यादिना श्रूयमाणा अर्चिरादयः केवलं मार्गचिह्नभूता इति शङ्कामपनुदन्नाह–त एते अर्चिराद्यभिमानिदेवताविशेषा आतिवाहिकाः पुरुषाः । अतिवहनकर्तारः पुरुषाः । अतिवहनं च मार्गवशात् स्वस्वलोकं समुपागतानां विदुषां अभिगमनानुगमनाभ्यां स्वस्वलोकं यावन्नयनम् । 'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयती'त्यतो लिङ्गादातिवाहिका इत्येतत् गम्यते ॥ ४ ॥

पूर्वेष्वपि संबध्यते । अर्चिरादिशब्दानां तत्तदभिमानिदेवतापरत्वेनाति-वाहिकत्वोपपत्तिः ॥ ४ ॥

ननु 'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयती'ति श्रुतेर्वैद्युतस्यै-वातिवाहकत्वं गम्यते, तदनन्तरभाविनां वरुणादीनां कथमातिवाहि-कता इत्यत्राह—

## वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ४ । ३ । ५ ॥

ततः—विद्युत उपरि वैद्युतेनैवामानवपुरुषेण ब्रह्मप्रापणम्, तच्छ्रुतेः—तस्य अमानवपुरुषकर्तृकब्रह्मप्रापणस्य श्रुतेः । अतोऽमानवस्यैव ब्रह्म-प्रापकत्वम् । इन्द्रादीनां तु तदनुग्राहकत्वेनातिवाहिकत्वं युज्यते ॥ ५ ॥

(अ. स.) यथा लोके मार्गचिह्नं नदीगिरिवनादिकम् ।
तथार्चिरादिकं चिह्नं परस्य ब्रह्मणः पथि ॥ १ ॥
भूमिर्भोगस्य वेतीयं शङ्का नैवात्र युज्यते ।
क्व भोगावसरोऽस्त्यस्य प्रणष्टाखिलकर्मणः ॥ २ ॥
किन्त्वातिवाहिका देवा अर्चिराद्यभिमानिनः ।
एनान् गमयति ब्रह्म वैद्युतोऽमानवस्त्विति ॥ ३ ॥
श्रूयमाणं प्रापकत्वं पूर्वेष्वपि हि युज्यते ।
तन्नियुक्ताः परेणैते स्वान् स्वं गमयितुं पदम् ॥ ४ ॥

इति भाष्ये आतिवाहिकाधिकरणम् ॥ ४ ॥

---

वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ४ । ३ । ६ ॥

'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयती'ति वैद्युतपुरुषस्यामानवसंज्ञकस्य ब्रह्मगमयितृत्वश्रुतेः, विद्युल्लोकमुपागतमेनं वैद्युत एव ब्रह्म गमयति, तदुपरितना वरुणादयस्तु स्वस्वलोकं यावदनुगमनादिना अनुग्राहकाः केवलम् ॥ ५ ॥

इति प्रदीपे आतिवाहिकाधिकरणम् ॥ ४ ॥

## कार्यं बादरिरस्य गत्युपपत्तेः ॥ ४ । ३ । ६ ॥

गमयितारः अर्चिःप्रभृतयो विचारिताः । अथायमर्चिरादिगणः कान् किं नयतीति विचार्यते । किं कार्यं ब्रह्म हिरण्यगर्भाख्यं तदुपासीनान्नयति, उत परंब्रह्मैव तदुपासकान्, आहोस्वित् परंब्रह्मोपासकान् तदात्मकस्वात्मोपासकांश्च नयति, इति सन्देहे आह बादरिः—नयतीत्युत्तरसूत्रादाकृष्यते । कार्यं ब्रह्म हिरण्यगर्भाख्यं तदुपासीनान्नयति । तथा सत्येव गत्युपपत्तिः—न हि परस्य ब्रह्मणः सर्वत्र व्याप्तस्य नित्यप्राप्तस्य प्राप्यता तत्प्राप्तये गतिर्वोपपद्यते । तस्मात् कार्योपासकान् कार्यं नयति । तत्क्रतुन्यायाच्चोपास्यप्राप्ययोरैक्येन भाव्यम् ॥ ६ ॥

## विशेषितत्वाच्च ॥ ४ । ३ । ७ ॥

'पुरुषोऽमानवः स एत्य ब्रह्मलोकान् गमयती'ति श्रुत्या लोकशब्देन प्राप्यस्य विशेषितत्वात्; तथा बहुवचनेन च । न हि परस्य कश्चित् लोकः लोका वा । लोकवर्गः कार्यतामेवावगमयति ॥ ७ ॥

---

अर्चिरादिरातिवाहिको गणः परंब्रह्म गमयतीत्येतत् परमतेनाक्षिप्य स्वमतेन द्रढयन्नाह—

### कार्यं बादरिरस्य गत्युपपत्तेः ॥ ४ । ३ । ६ ॥

अर्चिरादिरातिवाहिको गणः कार्यं ब्रह्म हिरण्यगर्भाख्यं तदुपासकान् नयति, न तु परंब्रह्म । तद्धि सर्वतः परिपूर्णं नित्यप्राप्तम्, न तत्प्राप्तौ गत्यपेक्षा, गत्युपपत्तिस्तु कार्यब्रह्मण्येवेति बादरिर्मन्यते ॥ ६ ॥

### विशेषितत्वाच्च ॥ ४ । ३ । ७ ॥

'अमानवः स एत्य ब्रह्मलोकान् गमयती'ति श्रुतौ लोकानिति बहुवचनान्तलोकशब्देन ब्रह्मणो विशेषितत्वात्—व्यावर्तितत्वात् । न हि परस्य ब्रह्मणः सन्ति लोकाः । सहि सर्वस्यात्मा ॥ ७ ॥

## सामीप्यात्तु तद्व्यपदेशः ॥ ४ । ३ । ८ ॥

ननु 'स एनान् ब्रह्म गमयती'ति ब्रह्मशब्देन कथं व्यपदेशः ? । उच्यते—परस्य ब्रह्मणः सामीप्यात् तत्कार्यकोटौ अव्यवहितसान्निध्यात् तद्व्यपदेशः—ब्रह्मशब्देन व्यपदेशः । तथा च श्रूयते 'यो ब्रह्माणं विदधाति पूर्वं' इति ॥ ८ ॥

ननु—अर्चिरादिना गतस्यापुनरावृत्तिः श्रूयते, हिरण्यगर्भप्राप्तौ कथमियमुपपद्येत । अत्रोच्यते—

## कार्यात्यये तदध्यक्षेण सहातः परम-भिधानात् ॥ ४ । ३ । ९ ॥

कार्यात्यये—कार्यस्य हिरण्यगर्भलोकस्यात्यये सति तदध्यक्षेण निवृत्ताधिकारेण हिरण्यगर्भेण सह तस्मिन्नेव लोके निष्पन्नब्रह्मविद्यः सन् अतः—तदध्यक्षात्परं—परंब्रह्म प्राप्नोति । तथा श्रुतौ 'ते ब्रह्मलोके तु परान्तकाले परामृताः परिमुच्यन्ति सर्वे' इति अभिधानात् ॥ ९ ॥

---

### सामीप्यात्तु तद्व्यपदेशः ॥ ४ । ३ । ८ ॥

ननु 'स एनान् ब्रह्म गमयती'ति श्रुतौ श्रूयमाणो नपुंसकोऽयं ब्रह्मशब्दः हिरण्यगर्भं नैवावबोधयेत्, तत्परेण पुल्लिङ्गेन तेन भाव्यम्, अत्राह—सामीप्यात्तु तद्व्यपदेशः । नपुंसकेन ब्रह्मशब्देन तस्य हिरण्यगर्भस्य निर्देशः, परब्रह्मणा तस्य प्रथमं सृष्टत्वेन सामीप्यादुपपद्यते, 'यो ब्रह्माणं विदधाति पूर्वं' इति च श्रुतिः ॥ ८ ॥

ननु कार्यं चेदमानवो नयेत्; 'न च पुनरावर्तते' इति श्रुतिविरोधः, कार्यलोकस्य विनाशित्वेन पुनरावृत्तिप्रसङ्गात् तत्राह—

### कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ४ । ३ । ९ ॥

कार्यहिरण्यगर्भलोकस्य विनाशे प्राप्ते तदध्यक्षेण तल्लोकाध्यक्षेण हिरण्यगर्भेन सहातः परं तदीयलोकात्परं उत्तरं श्रेष्ठं परस्य ब्रह्मणो लोकं गच्छन्ति इति श्रुतावभिधानादपुनरावृत्तिश्रुतेरविरोधः । तथा च श्रुतिः 'ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे' इति ॥ ९ ॥

## स्मृतेश्च ॥ ४ । ३ । १० ॥

'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ।' इति स्मृतेश्च कार्यं ब्रह्म प्राप्तानामपि परब्रह्मप्राप्तिसंभवेनापुनरावृत्तिर्घटते ॥ १० ॥

## परं जैमिनिर्मुख्यत्वात् ॥ ४ । ३ । ११ ॥

जैमिनिस्तु मन्यते—परमेव ब्रह्म नयत्यर्चिरादिरातिवाहिको गणः । कस्मात् । मुख्यत्वात्—तस्मिन्नेव ब्रह्मशब्दस्य मुख्यत्वात् । न चात्र कार्ये लक्षणा । बीजाभावात् । न ह्यत्रान्वयानुपपत्तिः । न च तात्पर्यानुपपत्तिः, कार्यपरत्वानिर्णयात् । ननु गत्यन्वयानुपपत्तिरेव लक्षणाबीजं व्यक्तम् । नैतत् । ब्रह्मणो व्यापित्वेऽपि देशविशेषविशिष्टतत्प्राप्तावेव विद्या कार्यधायिका भवति । तथा हि श्रूयते—'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति । सन्ति च परस्य ब्रह्मणो देशविशेषास्तस्य नित्येच्छासिद्धा अप्राकृता लोकाः ॥११॥

## दर्शनाच्च ॥ ४ । ३ । १२ ॥

श्रुतिरपि देवयानेन परब्रह्मप्राप्तिं दर्शयति 'अस्मात् शरीरात्समुत्थाय परं ज्योतिरुपसंपद्ये'ति ॥ १२ ॥

---

### स्मृतेश्च ॥ ४ । ३ । १० ॥

'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पद'मिति स्मृतेश्च ॥ १० ॥

तदेतत् बादरेर्मतं जैमिनिमतेन निरस्यति—

### परं जैमिनिर्मुख्यत्वात् ॥ ४ । ३ । ११ ॥

आतिवाहिकगणः परंब्रह्म तदुपासकान् गमयति—ब्रह्मशब्दस्य तस्मिन्नेव मुख्यत्वात् । इति जैमिनिर्मन्यते ॥ ११ ॥

### दर्शनाच्च ॥ ४ । ३ । १२ ॥

दर्शनम्—श्रुतिः । 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद'मिति परब्रह्मप्राप्त्यवबोधकश्रुतेश्च ॥ १२ ॥

ननु—'प्रजापतेः सभां वेश्म प्रपद्ये' इति प्रत्यभिसन्धानात् अर्चिरादिना पथा कार्यब्रह्मण एव प्राप्तिरिति गम्यते इति चेदत्राह—

## न च कार्ये प्रत्यभिसन्धिः ॥ ४ । ३ । १३ ॥

न चात्र कार्ये प्रत्यभिसन्धिः श्रूयते । किन्तु परस्मिन्नेव ब्रह्मणि । वाक्यशेषे हि श्रूयते—'यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशां यशोऽहमनुप्रापित्सि' इति सर्वात्मभावाभिसन्धानम् । तच्चाविद्यानिवृत्तिपूर्वकसर्वात्मभूतब्रह्मप्राप्त्या हि घटते । पूर्वं च श्रूयते—'अकृतं कृतात्मा ब्रह्मलोकमभिसंभवानी'ति । अकृतं ब्रह्मलोकमिति विशेषणाच्च कार्यं व्यावर्त्यते ॥ १३ ॥

अथ भगवान् बादरायणः स्वमतेन सिद्धान्तमाह—

## अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॥ ४ । ३ । १४ ॥

प्रतीकमालंबनं येषां ते, चिदचिच्छरीरकस्य परस्य ब्रह्मणः चेतनतत्त्वमचेतनतत्त्वं च शरीरतया प्रतीकम्—अवयवो भवति, तद्य ब्रह्मदृष्ट्या

---

ननु 'प्रजापतेः सभां वेश्म प्रपद्ये' इति श्रुतेः प्रजापतेर्हिरण्यगर्भस्य यो लोकः तत्प्राप्तिर्हि गम्यते, तत्राह—

**न च कार्ये प्रत्यभिसन्धिः ॥ ४ । ३ । १३ ॥**

'सभां वेश्म प्रपद्ये' इति येयं प्रत्यभिसन्धिः सेयं न च कार्ये—न हैरण्यगर्भे । प्रजापतिशब्दो ह्यवयवार्थपौष्कल्येन परस्मिन् ब्रह्मण्येव वर्तते । प्रकरणं हि परस्यैव ब्रह्मणः 'ते यदन्तरा तद्ब्रह्मे'तिश्रवणात् ॥ १३ ॥

जैमिनिमतात् स्वमते विशेषं प्रदर्शयन्नाह—

**अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात् तत्क्रतुश्च ॥ ४ । ३ । १४ ॥**

कार्योपासकान् कार्यं नयत्यातिवाहिकगण इत्यपि न । परब्रह्मोपासकानेव परं ब्रह्म नयत्यातिवाहिकगण इत्यपि न । किन्तु अप्रतीकालम्बनान्नयति—अब्रह्म—अन्नादि ये ब्रह्मदृष्ट्योपासते ते प्रतीकालम्बनाः, तेभ्योऽन्ये—ये

उपासते ते प्रतीकोपासकाः । तेभ्योऽन्ये ब्रह्मोपासका ब्रह्मात्मकस्वात्मोपासकाश्च, तानुभयानप्यर्चिरादिरातिवाहिको गणो नयतीति बादरायणो मन्यते। इदमभिहितं भवति—कार्योपासकान् कार्यं ब्रह्म नयतीत्यपि नः परब्रह्मोपासकानेव परं ब्रह्म नयतीत्यपि न । किन्तु साक्षात् ब्रह्मोपासकान्, देहत्रयविलक्षणं विशुद्धं स्वात्मानं परब्रह्मात्मकतया ये उपासते तांश्च नयति । अयमेव च विशेषो जैमिनिमतात् बादरायणमते । एतज्ज्ञापनायैव चाप्रतीकालंबनानिति निर्देशः । उभयथा च दोषात्—बादरिपक्षाश्रयणे जैमिनिपक्षाश्रयणेऽपि दोषात् । बादरिपक्षे 'अस्मात् शरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति श्रुतिविरोधः । जैमिनिपक्षे 'तद्य इत्थं विदु'रिति आत्मोपासकान् 'ये चेमेऽरण्ये श्रद्धातप इत्युपासते' इति परब्रह्मोपासकांश्च निर्दिश्य 'ते

---

साक्षात् परब्रह्मोपासकाः ये च परब्रह्मात्मकस्वात्मोपासकास्तानुभयानपि परं ब्रह्म गमयतीति बादरायणः । कथमिदमवगम्यते—'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ती'ति श्रवणात् । 'तद्य इत्थं विदु'रिति पञ्चाग्निविद्यानिष्ठाः ब्रह्मात्मकस्वात्मोपासकाः, 'ये चेमे अरण्ये श्रद्धातप इत्युपासते' इति च साक्षात् परब्रह्मोपासका हि प्रतिपाद्यन्ते । उभयथा च दोषात्—कार्यमुपासीनान्नयतीति पक्षे 'अस्मात् शरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति श्रुतिविरोधो दोषः, परमेवोपासीनान्नयतीति पक्षे च 'तद्य इत्थं विदुः, ये चेमेऽरण्ये श्रद्धातप इत्युपासते तेऽर्चिषमभिसंभवन्ती'ति श्रुतिविरोधो दोषः । अप्रतीकालम्बनानुभयविधानपि नयतीति पक्षाभ्युपगम एव तत्क्रतुन्यायोपपत्तिश्च । 'यथा क्रतुरस्मिन् पुरुषो भवति तथेतः प्रेत्य भवती'त्यनया श्रुत्या यथोपासनं हि फलसिद्धिर्गम्यते । पञ्चाग्निविद्यानिष्ठा ब्रह्मात्मकविशुद्धस्वात्मोपासकतया अपुनरावृत्तिलक्षणब्रह्मात्मकस्वात्मानुभवं फलं लभन्ते इति युक्तम्, ये चारण्ये श्रद्धातप इत्युपासते साक्षात्परमात्मोपासकास्ते परंब्रह्म प्राप्नुवन्तीति सिद्धमेवैतत् । तस्मात् बादरायणस्यैव मतं समञ्जसम् ॥ १४ ॥

अर्चिषमभिसंभवन्ती'ति उभयेषामर्चिरादिगतिविधानविरोधः । 'ये चेमे' इति पृथगधिकारिनिर्देशात् 'तद्य इत्थं विदु'रिति पञ्चाग्निविद्यानिष्ठाः ब्रह्मात्मकस्वात्मोपासका निदिश्यन्ते इति तु व्यक्तं गम्यते । तत्क्रतुन्यायश्च बादरायणमते एवोपपद्यते । अयं च न्यायः 'यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति' 'तं यथायथोपासते तथैव भवति' इति सिद्धः । कार्योपासकानां ब्रह्मप्राप्तिर्नैव भवेत् । आत्मोपासकानामात्मप्राप्तिः परब्रह्मोपासकानां परब्रह्मप्राप्तिश्च तत्क्रतुन्यायप्राप्ता । पञ्चाग्निविद्यानिष्ठानां चार्चिरादिगतिरुक्तश्रुतिसिद्धैव । पञ्चाग्निविद्यानिष्ठेन क्रियमाणमुपासनं न केवलात्मनः, अपि तु ब्रह्मात्मकत्वेन स्वात्मन इति यथोपासनं ब्रह्मात्मकस्वात्मप्राप्त्या अस्ति ब्रह्मणोऽपि प्राप्तिः । तस्मादुभयान्नयतीति सुस्थितम् ॥ १४ ॥

## विशेषं च दर्शयति ॥ ४ । ३ । १५ ॥

अप्रतीकालंबनेभ्यो विशेषं प्रतीकालंबनानां श्रुतिर्दर्शयति—'यावन्नाम्नो गतं तत्रास्य यथा कामचारो भवती'ति नामादिप्राणपर्यन्तं ये ब्रह्मदृष्ट्योपासते तेषां अर्चिरादिगतिनिरपेक्षं परिमितं फलं हि तत्र श्राव्यते । तस्मात् ये ब्रह्मदृष्ट्या वा केवलं वाऽचिन्मिश्रमिदमुपासते न तेषामर्चि-

---

विशेषं च दर्शयति ॥ ४ । ३ । १५ ॥

अब्रह्मेदमचित्तन्मिश्रं च वस्तु प्रतीकम् । तत् ब्रह्मदृष्ट्या विना तद्दृष्ट्या वा उपासते ये तेषां अप्रतीकालम्बनेभ्यो विशेषं परिमितफलप्राप्तिलक्षणं दर्शयति श्रुतिः 'यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवती'त्यादिका । अनया हि नामादिप्राणपर्यन्तोपासकानामर्चिरादिगतिरहितं पुनरावृत्तिफलमुच्यते । तत् सिद्धमातिवाहिकोऽर्चिरादिगण आत्मानं ब्रह्मात्मकं ये उपासते ये च साक्षात् परंब्रह्मोपासते, तान् सर्वान् ब्रह्म गमयतीति ॥ १५ ॥

इति प्रदीपे कार्याधिकरणम् ॥ ५ ॥

इति ब्रह्मसूत्रार्थप्रदीपे चतुर्थस्याध्यायस्य तृतीयः पादः ।

रादिगतिः । ये तु परं ब्रह्म, परब्रह्मात्मकस्वात्मानं वोपासते तेषामुभयेषामर्चिरादिगतिः संभवतीति निरवद्यम् ॥ १५ ॥

पूर्वपक्षः—

(अ. स.) तन्वर्चिरादिर्नयति कार्यं ब्रह्म परं न तु ।
न तस्य लोको नाध्वा च तद्ध्यभिव्याप्य वर्तते ॥ १ ॥
विशेषः श्रूयते 'ब्रह्मलोकान् गमयती'ति च ।
लोकशब्देन तद्ब्रह्म कार्यमित्येव गम्यते ॥ २ ॥
हिरण्यगर्भः प्राक् सृष्टः परेण ब्रह्मणा यतः ।
तत्सामीप्यात् स तु ब्रह्मशब्देन व्यपदिश्यते ॥ ३ ॥
प्रणष्टे कार्यलोके तु कार्येण ब्रह्मणा सह ।
प्राप्नोति च परं ब्रह्म पुनर्नावर्तते ततः ॥ ४ ॥
अयमर्थः श्रुतौ दृष्टः स्मर्यते च स्मृतावपि ।
तस्मादपुनरावृत्तिश्रुतिरप्युपपद्यते ॥ ५ ॥

मतान्तरम्—

परमेवार्चिरादिस्तु नयतीत्याह जैमिनिः ।
तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्त्या प्रवर्तते ॥ ६ ॥
व्यापिनोऽप्यस्य सन्त्येव देशा अप्राकृताः श्रुताः ।
तद्गत्यैव च निष्पत्तिर्मुक्तस्य स्वस्वरूपतः ॥ ७ ॥
स एष सम्प्रसादोऽस्मादिति श्रुत्या तु गम्यते ।
न च कार्ये प्रत्यभिज्ञा ब्रह्मैव ह्यवबोध्यते ॥ ८ ॥

सिद्धान्तः—

अप्रतीकोपासका ये तान्नयन्त्यर्चिरादयः ।
परं ब्रह्मेति भगवान् मन्यते बादरायणः ॥ ९ ॥
पञ्चाग्निविद्यानिष्ठा ये ब्रह्मात्मस्वात्मचिन्तकाः ।
ये च 'श्रद्धा तप' इति परब्रह्मविचिन्तकाः ॥ १० ॥

अप्रतीकोपासकास्ते तान्नयन्त्युभयानपि ।
श्रुतिव्याकोपदोषस्तु पूर्वयोः पक्षयोर्द्वयोः ॥ ११ ॥
बादरायणपक्षे तु तत्क्रतुन्यायसङ्गमः ।
प्रतीकचिन्तकानां तु श्रूयते च मितं फलम् ॥ १२ ॥

इति भाष्ये कार्याधिकरणम् ॥ ५ ॥

इति ब्रह्ममीमांसाभाष्ये चतुर्थस्याध्यायस्य तृतीयः पादः ॥

---

## सम्पद्याविर्भावः स्वेन शब्दात् ॥ ४ । ४ । १ ॥

पूर्वस्मिन् पादे प्रकृतिवियुक्तब्रह्मात्मकस्वात्मोपासकानां परब्रह्मोपासकानां चार्चिरादिना गतिरपुनरावृत्तिलक्षणा प्रोक्ता । इदानीमर्चिरादिना ब्रह्मप्राप्तानामैश्वर्यं विचार्यते । इदमाम्नायते छान्दोग्ये—'एवमेवैष संप्रसादोऽस्मात् शरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति । अत्र श्रूयमाणा निष्पत्तिः अस्माल्लोकाल्लोकान्तरं गतस्य देवादिरूपसंपत्तिरिव साध्या, उत स्वाभाविकस्वरूपाविर्भावलक्षणा । आह—देवादिरूपवत्साध्यैव । साध्यस्यैव तु पुरुषार्थता, न तु सिद्धस्य । सिद्धमेव तु स्वरूपम् । पुरुषार्थानवबोधकत्वे तु मोक्षशास्त्रस्याप्रवर्तकत्वमापद्येत । अत्रोच्यते—संपद्य परं ज्योतिर्नामोत्यपूर्वं रूपम् । किं तु स्वेन रूपेणाभिनिष्पद्यते—नैसर्गिकेण रूपेणाभिनिष्पद्यते । स्वेनेति

---

**सम्पद्याविर्भावः स्वेन शब्दात् ॥ ४ । ४ । १ ॥**

विदुषो गतिप्रकारो विचारितः । अथ फलस्वरूपं विचार्यते । तत्र—परंज्योतिरुपसन्नस्य या रूपाभिनिष्पत्तिः श्रूयते, सा कर्मिणां स्वर्गादिफलभोगे अपूर्वरूपान्तरयोगवत् निष्पाद्या काप्यपूर्वा इत्याशङ्कां परिहरन्नाह—सम्पद्येति । 'अस्मात् शरीरात् समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इत्यत्र श्रूयमाणा विदुषः परंज्योतिरुपसंपन्नस्य या स्थितिर्भवति, सा नापूर्वा तदानीं निष्पाद्यते, किन्तु—आविर्भावमात्रम्—स्वेनेति शब्दात् । 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति परंज्योतिरुपसंपन्नस्य स्वस्वरूपाविर्भावो हि श्रूयते ॥ १ ॥

शब्दात् । कर्मणा तिरोहितं तस्य स्वरूपं परंज्योतिष उपसंपत्त्याऽऽविर्भवति । तिरोधानापगमे च स्वं रूपमस्य प्रकाशते । मलापनयने मणेरिव प्रभा । प्रभा हि मणेर्नोत्पद्यते । मलेन प्रतिरुद्धप्रसरा तदपनयनेन परितः प्रसरति । तथैवास्य ज्ञानप्रभा कर्मणा प्रतिरुद्धप्रसरा कर्मापगमे युगपत् परितः प्रसरति । ज्ञप्तिस्वरूपमात्रमात्मेति वदतां तु तिरोभावप्रादुर्भावयोरनुपपत्तिः । नतु नैसर्गिकज्ञानानन्दस्वभावमात्मानमभ्युपगच्छताम् । एतेन सिद्धस्यापुरुषार्थतया मोक्षशास्त्रस्य पुरुषार्थानवबोधकत्वमापद्येतेति शङ्का परास्ता ॥ १ ॥

ननु स्वेन रूपेणाभिनिष्पद्यते इति व्याहतम्, स्वरूपं तु सिद्धमेवेति का तस्याभिनिष्पत्तिः । निष्पत्तिर्ह्युत्पत्तिः । न च सिद्धस्य पुरुषार्थता । पुरुषार्थेन हि साध्येन भाव्यम् । इत्यत्र पूर्वसूत्रेण विवक्षितमर्थं विशदीकरोति—

## मुक्तः प्रतिज्ञानात् ॥ ४ । ४ । २ ॥

'परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इत्यनेन प्रतिपाद्यमानो हि मुक्तः—जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयलक्षणकर्मबन्धनाद्विनिर्मुक्तः । 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामी' त्युपक्रम्य प्रतिबोधनादेवं गम्यते । अयं भावः—इन्द्राय आत्मस्वरूपजिज्ञासयोपसन्नाय स्वप्नावस्थसुषुप्त्यवस्थयोः 'नाहमत्र भोग्यं पश्यामि' इति यथावस्थितात्मस्वरूपाप्रकाशेन निर्विण्णाय 'तं ते भूयोऽनुव्याख्यास्यामी' ति प्रतिज्ञापूर्वकं कर्मबन्धनतो विमुक्तः परब्रह्मसंपत्त्या सम्यक् प्रकाशमानानन्दस्वरूपः प्रत्यगात्मा ह्यत्र प्रति-

---

### मुक्तः प्रतिज्ञानात् ॥ ४ । ४ । २ ॥

ननु नित्यसिद्धमस्य स्वरूपमिति केयमुपसंपद्याभिनिष्पत्तिरित्यत्राह—मुक्तो ह्यत्र प्रतिपाद्यते; 'भूयोऽनुव्याख्यास्यामी' ति जाग्रदाद्यवस्थात्रयविनिर्मुक्तस्य शुद्धस्यात्मस्वरूपस्यैवेह प्रतिबोधनात् । नित्यसिद्धमप्यस्यापहतपाप्मत्वादिकं स्वरूपं कर्मणा पूर्वं तिरोहितं, सर्वकर्मप्रक्षये चाविर्भवति । तदभिव्यक्तिमात्रम्, न त्वपूर्वाकारनिष्पत्तिः ॥ २ ॥

बोध्यते। नित्यसिद्धस्वरूपस्याप्यस्यानन्दता कर्मतिरोधानेन न प्रकाशते, तिरोधानप्रक्षये च स्फुटतरं प्रकाशते, यथा रसघनोऽपि कश्चित् भोग्य-पदार्थः अरोचकव्याध्युपहताय न रोचते, व्याध्युपशमे च रोचते, रसाविर्भावात्। सुषुप्तावपि बाह्याभ्यन्तरविषयानवभासेऽपि केवलमहमहमित्येवात्मनः स्वरूपमवभासते, नतु निरवधिकानन्दता। कर्मप्रक्षये च तदवभासः। रस्यतातिशयात् पुरुषार्थता। आनन्दतयैव तु पुरुषार्थता; न तु साध्यतया। नित्यसिद्धस्यापि सम्भवत्येव निवृत्तकर्मबन्धनतया साध्यता च। परितः प्रसर्पति चास्य ज्ञानप्रभा तदेत्युक्तं प्राक् ॥ २ ॥

ननु—स्वर्गादाविवापूर्वसुखसंपत्तिलक्षणेन फलेन भाव्यम्, अभीप्सितसकलकामाप्तिश्रवणात्। नित्यसिद्धस्य फलत्वासंभवाच्चेत्यत्राह—

## आत्मा प्रकरणात् ॥ ४ । ४ । ३ ॥

आत्मा ह्येष स्वत एवापहतपाप्मा सत्यसङ्कल्पश्च। प्रकरणाच्चेदमवगम्यते। 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यङ्कल्प' इति च प्रजापतिवाक्यम्। इदं च प्रत्यगात्मविषयकमिति 'उत्तराच्चेदाविर्भूतस्वरूपस्त्वि'त्यत्रैव निर्णीतम्। तस्मात् स्वाभाविकस्यैव सत्यकामत्वादेः स्वरूपस्य तिरोहितस्य पश्चादाविर्भावात् कामावाप्तिः सत्यसङ्कल्पत्वप्रादुर्भावरूपा श्रूयते। तन्नापूर्वेण केनचिद्रूपेण निष्पद्यते। स्मर्यते चायमर्थः 'यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः। दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा। यथोदपान-

---

### आत्मा प्रकरणात् ॥ ४ । ४ । ३ ॥

ननु 'अपहतपाप्मा विजरो विमृत्यु'रित्यपहतपाप्मत्वादिगुणाष्टकविशिष्टतया श्रूयमाणः परमात्मा, इत्यत्राह—आत्मा—जीवात्मैव ह्यत्रापहतपाप्मत्वादिगुणाष्टकविशिष्टः श्रूयते, अस्यैव हीदं प्रकरणम्। 'उत्तराच्चेदाविर्भूतस्वरूपस्त्वि'ति पूर्वमेवेदं प्रत्यगात्मनः प्रकरणमिति निर्णीतम्। तत् युक्तं तिरोहितमस्य स्वरूपं परमात्मसंपत्तावाविर्भवतीति ॥ ३ ॥

इति प्रदीपे सम्पद्याविर्भावाधिकरणम् ॥ १ ॥

करणात् क्रियते न जलाम्बरम् । सदेव नीयते व्यक्तिमसतः संभवः कुतः । तथा हेयगुणध्वंसादवबोधादयो गुणाः । प्रकाशन्ते न जन्यन्ते नित्या एव हि ते गुणाः ।' इति । तथा च सिद्धं परं ज्योतिरुपसंपन्नस्य नैसर्गिकज्ञानानन्दस्वरूपाविर्भावो भवतीति ॥ ३ ॥

(अ. स.) अस्माच्छरीरादुत्थाय परं ज्योतिरुपेयुषः ।
स्वेन रूपेण निष्पत्तिः सम्प्रसादस्य या श्रुता ॥ १ ॥
अपूर्वरूपसम्बन्धः किं वाऽभिव्यक्तिरेव वा ।
आह साध्येन रूपेण निष्पत्तिरभिधीयते ॥ २ ॥
सिद्धेनैव स्वरूपेण निष्पत्तिरिति बाधितम् ।
उच्यतेऽत्राभिनिष्पत्तिरभिव्यक्तिस्तु केवलम् ॥ ३ ॥
अभिनिष्पद्यते स्वेन रूपेणेति विशेषणात् ।
अभिनिष्पद्यमानस्य प्राक् सत्ता ह्यवगम्यते ॥ ४ ॥
तिरोहितं कर्मणा यन्नैसर्गिकगुणादिकम् ।
परस्य ज्योतिषः प्राप्तौ प्रादुर्भवति तस्य तत् ॥ ५ ॥
सङ्कोचस्तु तिरोभाव आविर्भावो विकासिता ।
प्रकृत्याऽस्य तिरोधिस्तु ब्रह्मप्राप्त्या विकासिता ॥ ६ ॥

इति भाष्ये सम्पद्याविर्भावाधिकरणम् ॥ १ ॥

---

## अविभागेन दृष्टत्वात् ॥ ४ । ४ । ४ ॥

आविर्भूतस्वरूपोऽयं परंब्रह्म किं पार्थक्येनानुभवति, उताविभागेनेति संशयः । आह–पार्थक्येन, कस्मात्? मुक्तस्य परब्रह्मणः साधर्म्यसाम्यसाहित्यानां दर्शनात् । तथा हि वचनानि–'निरञ्जनः परमं साम्यमुपैति' 'मम साधर्म्यमागताः' 'सोऽश्नुते सर्वान् कामान् सह

---

**अविभागेन दृष्टत्वात् ॥ ४ । ४ । ४ ॥**

मुक्तः स्वात्मानमपहतपाप्मत्वादिगुणविशिष्टं परमात्मनः अत्यन्तभिन्नत्वेनानुभवति, किंवा परमात्मनोऽनन्यत्वेनेत्यत्राह–नात्यन्तं पृथक्त्वेन न वा तदनन्यत्वेन, किं तु अविभागेन–परमात्मनः शरीरतया प्रकारतयावस्थितेरेव

ब्रह्मणा विपश्चिता ।' इति । साहित्यादिभिश्च तयोर्भेदोऽवगम्यते । अत्रोच्यते—सत्यपि भेदे सर्वतनोः परस्य ब्रह्मणः सर्वमपृथक्सिद्ध-प्रकारभूतमिति सर्वस्य तत्प्रकारैकस्वभावतया मुक्तः स्वात्मानं तदात्मकतया तदविभक्ततयैव 'ब्रह्माहमस्मी'त्यनुभवति । दृष्टं चैतत् श्रुतौ तदात्मकत्वं सर्वस्य 'तत्त्वमसि' 'अयमात्मा ब्रह्म' 'ऐतदात्म्यमिदं सर्वं' इति । व्यपेतकर्मबन्धस्य आविर्भूतस्वस्वरूपस्य यथावस्थितमात्मानं पश्यतो हि ब्रह्मात्मकोऽहमस्मीत्येव स्वात्मानुभवो भवेत्, नात्यन्तपार्थक्येन । प्रकारप्रकारिभावेनाविभागः 'अवस्थितेरिति काशकृत्स्न' इत्यत्र समर्थितः । साहित्यादीनां तु ब्रह्मात्मकस्वात्मानुभवे न विरोधः ॥ ४ ॥

(अ. स.) कथं मुक्तोऽनुभवति स्वात्मानमिति चिन्त्यते ।

विभक्तमेव स्वात्मानं ब्रह्मणोऽनुभवत्ययम् ॥ १ ॥
यतस्तयोर्मिथो भेदः श्रूयते श्रुतिमूर्धसु ।
सत्य तथाप्ययं तस्मादविभक्तस्तु तत्त्वतः ॥ २ ॥
अन्तर्यामिश्रुतौ व्यक्ताऽस्यापृथक् सिद्धधर्मता ।
आविर्भूतस्वरूपोऽयं यथादर्शनमेव तु ॥ ३ ॥
आत्मानमविभागेन ब्रह्मणोऽनुभवत्ययम् ।
ब्रह्माहमयमस्मीति भेदश्रुत्यविरोधतः ॥ ४ ॥

इति भाष्येऽविभागाधिकरणम् ॥ २ ॥

---

नैसर्गिकतया, परंब्रह्मानुभवन् तदीयदिव्यगुणादीन् यथाऽनुभवति तथैव स्वात्मानमपि, न तु स्वातन्त्र्येण, अविभागेनावस्थितेः श्रुतिषु दृष्टत्वात् । श्रूयते हि शरीरशरीरिभावोऽन्तर्यामिब्राह्मणे, 'तत्त्वमसी'ति च तदनुरोधेनोपदेशः । स्वरूपतः स्वभावतश्च परमात्मनो विलक्षणतया तदनन्यत्वेनानुभवस्य तु प्रसङ्ग एव न ॥ ४ ॥

इति प्रदीपेऽविभागाधिकरणम् ॥ २ ॥

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ४ । ४ । ५ ॥

परं ज्योतिरुपसंपद्य स्वेन रूपेणाविर्भवतीत्येतत् समर्थितं पूर्वम् । तच्च किमपहतपाप्मत्वादिमात्रम्? उत ज्ञप्तिमात्रम्? उताविरोधादुभयमपीति । अत्र परमताभ्यां पूर्वपक्षमाह—ब्राह्मेण—प्रजापतिवाक्ये अपहतपाप्मत्वादिगुणाष्टकं यत् ब्रह्मणो रूपमुक्तं तेनैवायमाविर्भवतीति जैमिनिर्मन्यते । कस्मात्? उपन्यासादिभ्यः—उपन्यस्यन्ते हि मुक्तस्य अपहतपाप्मत्वादयो ब्राह्मस्वभावाः, तथा सत्यसङ्कल्पत्ववितितिरूपा जक्षणादयश्च ॥ ५ ॥

## चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ४ । ४ । ६ ॥

चितितन्मात्रेण—चैतन्यमात्रेण रूपेणाविर्भवति, आत्मनस्तदात्मकत्वात्—चैतन्यमात्रात्मकत्वात् । तथा च श्रुतिः 'एवं वा अरे अयमात्मा कृत्स्नः प्रज्ञानघन एवे'त्यादिः ॥ ६ ॥

---

### ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ४ । ४ । ५ ॥

'स्वेन रूपेणाभिनिष्पद्यते' इति श्रुत्यनुरोधात् स्वरूपाविर्भावः समर्थितः । तच्चास्य स्वं रूपं किं चैतन्यमात्रम्, उतापहतपाप्मत्वादिगुणाष्टकमपि । तत्र प्रथमं परमतमनुवदति—जैमिनिर्मन्यते—ब्राह्मेण रूपेणाविर्भवति । दहरवाक्ये अपहतपाप्मत्वादिकं ब्रह्मसंबन्धितया श्रूयते, तदेवापहतपाप्मत्वादिकमस्यापि नैसर्गिकं रूपं, तत् तेन रूपेणाविर्भवति । तदेतदुपन्यासादिभ्योऽवगम्यते—प्रजापतिवाक्ये अपहतपाप्मत्वादयो जीवात्मसंबन्धितयाऽपि ह्युपन्यस्यन्ते, तथा सत्यसङ्कल्पत्वगुणाधीना जक्षणादयोऽपि ॥ ५ ॥

### चितितन्मात्रेणेत्यौडुलोमिः ॥ ४ । ४ । ६ ॥

चितितन्मात्रेण चैतन्यमात्रेण प्रादुर्भवति नापहतपाप्मत्वादिसत्यसङ्कल्पत्वात्तेन गुणाष्टकेन । तदात्मको ह्येषः । तथा च श्रूयते—'अयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' 'विज्ञानघन एवे'ति । अत्र एवकारेण रूपान्तरं हि प्रतिषिध्यते ॥ ६ ॥

सिद्धान्तमाह—

## एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ४ । ४ । ७ ॥

एवमपि–'विज्ञानघन एवे' त्यवधारणश्रुतावपि सत्यकामत्वादीनां पूर्वोक्तानां गुणानामविरोधं बादरायणो मन्यते। कस्मात्? उपन्यासात्–श्रुतौ सत्यकामत्वादीनां गुणानामुपन्यासात्। अत एव पूर्वोक्तानां गुणानां सद्भावात्। न हि श्रूयमाणार्थस्य बाधो युक्तः। अविरोधेन हि श्रुतयो नेयाः। 'विज्ञानघन एवे'ति तु अयोगव्यवच्छेदः। अंशतोऽप्यस्य जडत्वं नेत्युच्यते। 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव एवं वाऽरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवे'ति निदर्शनश्रुत्या चायमेवार्थो व्यक्तं गम्यते। न तु सर्वज्ञत्वादिकं व्यावर्त्यते। अन्ययोगव्यवच्छेदाश्रयणे तु उक्तश्रुत्युपमर्दः स्यात्। उपमृद्यते एवेति चेत्। अनया गुणश्रुत्या सैव किं नोपमृद्येत ॥ ७ ॥

( अ. स. ) स्वरूपेणाभिनिष्पत्तिः कीदृशीत्यत्र चिन्त्यते।
किंवा ब्राह्मेण रूपेण किंवा चैतन्यमात्रतः ॥ १ ॥
अथवा त्वविरोधेन निष्पत्तिरुभयात्मना।
गुणाष्टकेन ब्राह्मेण रूपेणेत्याह जैमिनिः ॥ २ ॥

---

एवं परमतमनूद्य स्वमतमाह—

**एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥४।४।७॥**

एवमपि–विज्ञानमात्रत्वावबोधके 'प्रज्ञानघन एव' 'विज्ञानघन एवे'ति वाक्ये सत्यपि अपहतपाप्मत्वादिगुणाष्टकसद्भावे अविरोधं बादरायणो मन्यते, कस्मात्? प्रजापतिवाक्ये अपहतपाप्मत्वादीनामात्मधर्मतयोपन्यासात्, अतस्तेषां पूर्वोक्तानां विज्ञानैकघनेऽपि भावात्–संभवात्। एवकारेण तु अंशतोऽपि जडत्वं नेत्येतावदुच्यते, न तु गुणाष्टकप्रतिषेधः। उभयश्रुत्या बादरायण एवं मन्यते ॥ ७ ॥

इति प्रदीपे ब्राह्माधिकरणम् ॥ ३ ॥

आह विज्ञानमात्रेण रूपेणेत्यपरः पुनः ।
अत्रोच्यते द्वयोः श्रुत्योरविरोधेन सङ्गतेः ॥ ३ ॥
आविर्भावः स्वरूपेण युज्यते ह्युभयात्मना ।
गुणाष्टकं च स्वं रूपं विज्ञानघनतापि च ॥ ४ ॥

इति भाष्ये ब्राह्माधिकरणम् ॥ ३ ॥

---

## सङ्कल्पादेव तच्छ्रुतेः ॥ ४ । ४ । ८ ॥

परंब्रह्मोपसंपद्य नैसर्गिकेण रूपेण अपहतपाप्मत्वादिगुणाष्टकविशिष्टेनाविर्भवतीति समर्थितम् । अथास्य 'स यदि पितृलोककामो भवती'त्यादिना श्रूयमाणा ज्ञात्यादिप्राप्तिः किं प्रयत्नान्तरसापेक्षा, उत सङ्कल्पमात्रादेवेत्येतद्विचार्यते । आह—प्रयत्नान्तरसापेक्षैव । लोके यथेच्छं सर्वं संपादयितुं शक्ता अपि तत्तत्संपादने प्रयत्नान्तरसापेक्षा एव दृष्टाः, एवमेवायमपि काङ्क्षितावाप्तौ प्रयत्नान्तरसापेक्ष एवेति । अत्रोच्यते—परमात्मेवायमपि सङ्कल्पमात्रेणैव तत्तल्लोकं प्राप्तुं शक्नोति । नास्य प्रयत्नान्तरसापेक्षता । श्रूयते, च स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति' इति सङ्कल्पमात्रेण पित्रादीनां समुत्थानम् । अवधारणश्रुतिरत्रान्ययोगं व्यवच्छिनत्ति । न चायोगव्यवच्छेदकता । अन्ययोगव्यवच्छेदकत्वे विरोधाभावात् । न हि प्रयत्नसापेक्षताऽन्यत्र श्रूयते ॥ ८ ॥

---

## सङ्कल्पादेव तच्छ्रुतेः ॥ ४ । ४ । ८ ॥

मुक्तस्य यदैश्वर्यं श्रूयते 'स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वे'ति, तदिदं प्रयत्नान्तरसापेक्षमुत सङ्कल्पमात्रायत्तम् । तत्रोच्यते—तदिदं सङ्कल्पादेवास्य सिध्यति, न तत्र प्रयत्नान्तरापेक्षा, तच्छ्रुतेः—प्रयत्नान्तरनैरपेक्ष्यस्य श्रुतेः । तथा च श्रुतिः—'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ती'त्यादिः ॥ ८ ॥

## अत एव चानन्याधिपतिः ॥ ४ । ४ । ९ ॥

यतोऽस्य सङ्कल्पमात्रेणैव पित्रादिसर्वकामसमुत्थानम्, अत एवायमनन्याधिपतिः—अनितरवश्यः । इतरवशगस्य हि सङ्कल्पोपहतिः ।

इदमत्र बोध्यम्—अन्यः—परमात्मनोऽन्यः अधिपतिरस्य नेत्यनन्याधिपतिः । अन्यथा त्वनधिपतिरित्येव सूत्र्येत ।

ननु मुक्तस्यास्य ब्रह्मणोऽन्यत्र कामः कः ? । नास्य ब्रह्मणोऽन्यत्र कामः । ब्रह्मविभूतिदृष्ट्यैवास्य भवति तत्र तत्र कामना । तत्प्रकारकब्रह्मण एवानुबुभूषेत्येतत् । 'स्त्रीभिर्वा यानैर्वा जक्षत् क्रीडन् रममाण' इत्यपि तत्तदानन्दस्य ब्रह्मानन्देऽन्तर्भावमभिप्रेत्य सर्वप्रकारानन्दसम्पत्तिर्ब्रह्मानुभवेनैवेति ज्ञापनपरम् ॥ ९ ॥

( अ. स. ) यथाकामं सर्वलोकसिद्धिर्मुक्तस्य या श्रुता ।
व्यापारान्तरसापेक्षा किंवा सङ्कल्पमात्रतः ॥ १ ॥
आह व्यापारसापेक्षा तथा लोकेषु दर्शनात् ।
नैवं सङ्कल्पमात्रेण सर्वं तस्य प्रसिध्यति ॥ २ ॥
श्रूयते तस्य सङ्कल्पमात्रात्तत्तत्समुत्थितिः ।
अनन्याधिपतित्वं चाप्यत एवास्य सिध्यति ॥ ३ ॥
अनन्याधिपतित्वं चाकर्मवश्यत्वमस्य तु ।
परमात्माधीनता तु युज्यतेऽस्यैकरस्यतः ॥ ४ ॥

इति भाष्ये सङ्कल्पाधिकरणम् ॥ ४ ॥

---

### अत एव चानन्याधिपतिः ॥ ४ । ४ । ९ ॥

सत्यसङ्कल्पत्वादेव मुक्तः अनन्याधिपतिः—नेतरविधिनिषेधवश्यः । 'स स्वराड् भवती'ति हि श्रूयते । इदं चानन्याधिपतित्वं उपासनप्रसन्नपरमपुरुषानुग्रहप्रादुर्भूतमिति परमात्मासाधारणपारमैश्वर्यस्य नैतेनोपरोधः ॥ ९ ॥

इति प्रदीपे सङ्कल्पाधिकरणम् ॥ ४ ॥

## अभावं बादरिराह ह्येवम् ॥ ४ । ४ । १० ॥

किं मुक्तस्य शरीरयोगो नास्त्येव उतास्त्येव, किंवाऽनियमः इत्येतद्विचार्यते । अत्राह–बादरिराचार्यः शरीरस्याभावं मन्यते । आह ह्येवं श्रुतिः–'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति । सति शरीरे प्रियाप्रियभोगो ह्यवर्जनीय आपतेत् । मुक्तश्चायं ततः ॥ १० ॥

## भावं जैमिनिर्विकल्पामननात् ॥ ४ । ४ । ११ ॥

जैमिनिराचार्यस्तु मन्यते शरीरयोगमेव । कस्मात्? अन्यथा श्रूयमाणस्य विकल्पस्य–विविधः कल्पो विकल्पः वैविध्यं 'स एकधा भवति त्रिधा भवति' इति श्रूयमाणं तस्यानुपपत्तेः । न हि आत्मनः स्वरूपे तत्संभवः । अच्छेद्यो ह्येषः । शरीरयोगेनैव तु तत्संभवः । स च मुक्तस्यास्य दिव्यः । प्रियाप्रियोपनिपातस्तु कर्माधीनशरीरयोगायत्तः ।

अत्रेदं बोध्यम् । दिव्यदेहसमर्थनमिदं मुक्तानां दिव्येन्द्रिया-

---

अथ मुक्तस्य देहयोगोऽस्ति न वेत्येतद्विचार्यते—

### अभावं बादरिराह ह्येवम् ॥ ४ । ४ । १० ॥

मुक्तस्य देहयोगाभावं बादरिर्मन्यते । श्रुतिराह ह्येवम्–'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति, अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत' इति । पुण्यपापनियतस्तु प्रियाप्रिययोगः, देहयोगे सति च तयोरवश्यंभावः । अतो मुक्तस्य देहयोगाभावः श्रुत्याऽवगम्यते ॥ १० ॥

### भावं जैमिनिर्विकल्पामननात् ॥ ४ । ४ । ११ ॥

जैमिनिस्तु मन्यते मुक्तस्य शरीरसद्भावम्, कस्मात्? विकल्पामननात्–विविधः कल्पो विकल्पः वैविध्यं, तस्याऽऽमननात् । 'स एकधा भवति त्रिधा भवती'ति विविधं हि भवनं श्रूयते । तच्च देहयोगसापेक्षम् । यदयमात्मा छेदनाद्यनर्हः । कर्माधीनो देहयोगस्तु प्रियाप्रियहेतुः । न तु सङ्कल्पमात्रायत्तोऽस्य दिव्यः ॥ ११ ॥

---

**टिप्पणी**—१ बुद्धिसौकर्यार्थमुक्तवक्ष्यमाणार्थान् सङ्कलय्य दर्शयति ।

दिसमर्थनस्योपलक्षणम् । देहेन्द्रियनिषेधस्तु मायिकविषय एषु । 'देहे-न्द्रियासुहीनानां वैकुण्ठपुरवासिना'मित्यत्र प्रथमतः प्राकृता निषिद्धाः । 'वैकुण्ठपुरवासिना'मित्यप्राकृताश्च संसूचिता देहादयः । दिव्यलोकादि-रूपेण विचित्रदिव्याभरणाम्बरस्रग्गन्धादिरूपेण च भगवदिच्छया विपरिवर्तमाना येयमक्षरब्रह्माभिधाऽनाद्यनन्ताऽक्षरा चैतन्यरूपाऽन-न्तानन्दसंवर्धिनी परा प्रकृतिः, तत एव च दिव्यतनुः सेन्द्रियगणा मुक्तस्य प्रादुर्भवति भगवदिच्छया सेवारसोपकरणीभूता । भगवदिच्छया भगवदिच्छानुविधायिस्वेच्छया च कदाचिन्मुक्तानां बहुधा दिव्यतनुः प्रादुर्भवति च तथा भगवल्लीलारसानुभवाय । नानातनुषु धारणानुगुणः प्रवेशश्चैषामणुस्वरूपाणामपि धर्मभूतज्ञानव्याप्त्येति 'प्रदीपवदावेश' इत्यत्र सूत्रकृद्वक्ष्यति । निरस्तनिखिलकर्मबन्धनस्य मुक्तस्यासङ्कुचितज्ञान-प्रभस्य स्वरूपत एव भगवद्गुणानुभवः सेत्स्यति, सेवाद्यर्थश्च दिव्यरूप-परिग्रह इत्यभिप्रायेण चोभयविधत्वमनन्तरसूत्रे वक्ष्यति । तदेवं सेवा-द्यर्थतया मुक्तानां दिव्यरूपादियोगोऽस्तीति बादरायणस्य हार्दम् ।

एतेनाऽरूपत्वश्रुत्या भगवत एव दिव्यरूपात्मकत्वमिव मुक्ताना-मेव सेवार्थं नानादिव्यरूपात्मना भवनमिति केषाञ्चिन्मतं प्रतिक्षिप्तम् । सूत्रकाराभिप्रायविरुद्धत्वात् । सूत्रकारो हि भगवतो विभुत्वं जीवात्मनां चाणुत्वं 'नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारा'दित्यादिना समर्थयति स्म । परां प्रकृतिं दिव्यामक्षरविभूतिं दिव्यविग्रहयोगं च परमात्मनः ज्योतिरन्तरधिकरणयोः समसूचयत् । मुक्तानां चानन्त्यं श्रुतं ज्ञान-द्वारकमिति 'प्रदीपवदावेश' इत्यत्र । न च विभुस्वरूपस्य परमात्मनो-ऽणुस्वरूपाणां वा मुक्तात्मनां नित्याविकाराखण्डस्वरूपाणां स्थूलनाना-देहस्वरूपपरिणामित्वं सम्भवति । तथा सति सखण्डत्वच्छेद्यत्वविका-रित्वादिप्रसङ्गात् । तद्ब्रह्ममयदिव्यदेहयोग एव परमात्मनो मुक्ता-त्मनामपीति ॥ ११ ॥

---

टिप्पणी—१ केषाञ्चित् वाल्लभानुयायिनाम् ।

भगवान् बादरायणः स्वमतेनात्र सिद्धान्तमाह—

**द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥**

बादरायणस्तु मुक्तमुभयविधं मन्यते । कस्मादेवम्? अतः—सङ्कल्पादेव । यतोऽयं सत्यसङ्कल्पः, तस्मात् सत्यामिच्छायां सङ्कल्पमात्रसिद्धदिव्यशरीराद्युपकरणो भूत्वा भगवतो लीलारसभूतमिदमनुभवति । असत्यामिच्छायां स्वयं स्वेनैव रूपेण परंब्रह्मानुभवति । तस्मान्मुक्तस्य सशरीरत्वमशरीरत्वं चेत्येतदुभयमपि कालभेदेन युज्यते । तत्र निदर्शनम्—द्वादशाहवत्—'द्वादशाहमृद्धिकामा उपेयुः' 'द्वादशाहेन प्रजाकामं याजये'दिति श्रुतिभ्यां विधीयमानस्य द्वादशाहाख्यस्यैकस्यैव यागस्य सत्रत्वमहीनत्वं च गम्यते । अनेकयजमानसङ्कल्पतः सत्रत्वम् । एकयजमानसङ्कल्पतः अहीनत्वम् । 'ऋद्धिकामा उपेयु'रिति बहुवचनश्रुत्या बहुयजमानकता, 'प्रजाकाम'मिति एकवचनश्रुत्या एकयजमानकता च गम्यते । तत् सङ्कल्पभेदतो द्वादशाहस्यैकस्य सत्रत्वाहीनत्ववदस्य मुक्तस्य सङ्कल्पभेदतः सशरीरत्वमशरीरत्वं चेत्युभयमपि संभवति ॥ १२ ॥

---

स्वमतेनात्र सिद्धान्तमाह—

**द्वादशाहवदुभयविधं बादरायणोऽतः ॥ ४ । ४ । १२ ॥**

अतः 'स एकधा भवति त्रिधा भवती'त्यादि श्रुतेः अशरीरत्वश्रुतेश्च उभयविधं सशरीरत्वमशरीरत्वं चेत्युभयविधं मुक्तस्याह—सङ्कल्पमात्रायत्तमप्राकृतशरीरयोगम्, कर्मायत्तप्राकृतशरीरराहित्यं चाह । एकस्मिन् सशरीरत्वमशरीरत्वं चेत्युभयं कथं युज्यते इत्यत्र निदर्शनमाह—द्वादशाहवदिति । 'द्वादशाहमृद्धिकामा उपेयुः' 'द्वादशाहेन प्रजाकामं याजये'दित्याभ्यां श्रुतिभ्यां एकस्यैव द्वादशाहस्य यथा सत्रत्वमहीनत्वं च संभवति तथेति । नैकयजमानकं सत्रम्, एकयजमानकमहीनम् ॥ १२ ॥

## तन्वभावे सन्ध्यवदुपपत्तेः ॥ ४ । ४ । १३ ॥

किमयं शरीरादियोगः स्वसङ्कल्पादेवेति नियमः ? तत्राह—तन्वभावे स्वसङ्कल्पसृष्टतन्वभावे सन्ध्यवत्—स्वप्नवत् स्वप्न इव । अयमाशयः—यथा स्वप्ने परमात्मना सृष्टैः तन्वादिभिर्भुङ्क्ते । तथा स्वसङ्कल्पेन तनुप्रभृतीनामभावे परमात्मना सृष्टैस्तनुप्रभृतिभिः परमात्मनो लीलाविभूतिरसं भुङ्क्ते ॥ १३ ॥

## भावे जाग्रद्वत् ॥ ४ । ४ । १४ ॥

स्वसङ्कल्पसंसिद्धतन्वादिभावे तु जाग्रद्वत्—जाग्रत्पुरुष इव स्वसङ्कल्पायत्तैस्तन्वाद्युपकरणैः परब्रह्मणो लीलाविभूतिरसमुपभुङ्क्ते । ननु मुक्तस्य परब्रह्मानुभवैकनिष्ठता व्याहन्येत । नैवम् । परंब्रह्म सकलकल्याणगुणपरिपूर्णमुभयविभूतिनाथं स्वामिनं नारायणमनुभवन् जातु स्वरूपं जातु दिव्यरूपं जातु दिव्यगुणं जातु तदैश्वर्यं जातु तत्प्रतिसंबन्धिलीलाविभूतिं च रस्यतयाऽनुभवतीति ब्रह्मानुभवैकनिष्ठता न व्यपैति । इदमिह निष्पन्नम्—परब्रह्मणा निसृष्टैस्तन्वादिभिरेवैष लीलारसमनुभवति जातु, जातु स्वसङ्कल्पनिष्पन्नैरेव तैरिति ॥ १४ ॥

---

### तन्वभावे सन्ध्यवदुपपत्तेः ॥ ४ । ४ । १३ ॥

मुक्तः सत्यसङ्कल्पतया स्वसङ्कल्पमात्रसृष्टेन शरीराद्युपकरणेनैव संपन्नो भवतीति नायं नियमः, कदाचित् स्वसङ्कल्पसृष्टेन, कदाचित्परमात्मसङ्कल्पप्राप्तेनेत्याह—तन्वभाव इति । स्वसङ्कल्पसृष्टतन्वभावे—यदा स्वयं सङ्कल्प्य भगवल्लीलारसानुभवाय देहाद्युपकरणं न सृजति, तदा सन्ध्यवत्—सन्ध्ये इव स्वप्न इव परमात्मसृष्टेन देहाद्युपकरणेनाप्राकृतेन तदीयदिव्यलीलारसादिकमनुभवति । स्वप्ने सतां देहादीनां परमात्मसृज्यत्वं श्रुत्यन्तरसिद्धम् ॥ १३ ॥

### भावे जाग्रद्वत् ॥ ४ । ४ । १४ ॥

स्वसङ्कल्पसृष्टतनुसद्भावे—यदा स्वयं सङ्कल्प्य देहाद्युपकरणं सृजति तदा जाग्रद्वत्, जाग्रद्दशायामिव । स्वेच्छाधीनोपकरणवत्त्वेन जाग्रद्दशानिदर्शनम् ॥ १४ ॥

ननु 'स एकधा भवति त्रिधा भवती'त्येतत् कथम् । न चाणोरनेकशरीरपरिग्रहो घटते । शरीरान्तरे प्रवेशासंभवात् । तत्राह—

## प्रदीपवदावेशस्तथाहि दर्शयति ॥ ४ । ४ । १५ ॥

अणुरप्येष स्वरूपतः, स्वप्रभया परितो विस्तृतया यथासङ्कल्पमनेकेषु शरीरेषु प्रविश्यात्मतयाऽवस्थाय भवति त्रेधा पञ्चधा सप्तधा च। सोऽयमावेशः प्रदीपस्येव प्रभया । एकस्मिन्नपि देहे सर्वावयवेष्वणोरस्य दीपस्येव प्रभया ज्ञानप्रभयैवावेशो वाच्यः । आमुक्तेः कर्मणा सङ्कुचिता ज्ञानप्रभा न सर्वत्र प्रवेष्टुमर्हति । कर्मणः प्रतिरोधकस्यापगमात् मुक्तस्य तु सर्वत्र सा प्रसरति । 'स चानन्त्याय कल्प्यते' इति च ज्ञानत आनन्त्यं मुक्तावस्य श्रूयते ॥ १५ ॥

ननु 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तर'मिति परंब्रह्मोपसंपन्नस्य बाह्याभ्यन्तरसकलज्ञानविलोपः श्रूयते । अथ किमुच्यते ज्ञानप्रभा प्रसरतीति । तत्राह—

---

ननु मुक्तस्य 'स एकधा भवति त्रिधा भवती'ति श्रुत्यनुरोधाद्युगपद्योऽयमनेकशरीरपरिग्रहः, कथमणोरस्य तत्र तत्रानुप्रवेश इत्यत्राह—

## प्रदीपवदावेशस्तथाहि दर्शयति ॥ ४ । ४ । १५ ॥

यद्यप्यात्माऽणुरेव, अथाप्यस्य या ज्ञानप्रभा सा प्रतिरोधककर्मापगमेन सर्वतः प्रसरणक्षमा । प्रदीपो यथा परितः प्रभयाऽऽविश्य प्रकाशयति तथाऽयमपि स्वज्ञानप्रभयाविश्य सर्वं चेतयते ॥ १५ ॥

ननु—'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तर'मिति प्राज्ञेन परिष्वक्तस्य बाह्यादिवेदनाभावः श्रूयते। मुक्तश्च प्राज्ञेन परिष्वक्त एव। तस्यास्य कथं बाह्याभ्यन्तरज्ञानोदयप्रसङ्गः? येन देहादियोगोपपादनं घटेत तत्राह—

## स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ ४ । ४ । १६ ॥

॥ 'प्राज्ञेनात्मने'ति श्रुतिर्न मुक्तमधिकृत्य प्रवृत्ता । किन्तु स्वाप्ययसम्पत्त्योरन्यतरापेक्षया । स्वाप्ययः सुषुप्तिः, संपत्तिर्मरणम् । एतदन्यतरविषयेयं श्रुतिः । सुषुप्तौ मरणे च प्राज्ञेनात्मना परिष्वक्तोऽयं जाग्रद्दशायामिव बाह्यमाभ्यन्तरं वा किमपि न वेद । अप्रक्षीणकर्मबन्धनो ह्येषः । संसारदशायां ज्ञानप्रसरणे इन्द्रियसंप्रयोगादिसापेक्षश्च । सुषुप्तौ मरणे च निःसंबोधत्वं मुक्तौ सर्वज्ञत्वं च श्रुत्यैवाविष्कृतं हि । तथा च श्रुतिः—'नाह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति । नाहमत्र भोग्यं पश्यामि' इति । इयं सुषुप्तमधिकृत्य । मरणमधिकृत्य च 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यती'ति । विनाशश्च निःसम्बोधता । मुक्तमधिकृत्य तु—'स वा एष दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके ।' इति । तथा 'सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः' इति च ॥ १६ ॥

( अ. स. ) देहेन्द्रियाणि मुक्तस्य किं नु सन्ति न सन्ति वा ।
अथ तद्योगनियमो न वेत्येतद्विचार्यते ॥ १ ॥
आह देहो न मुक्तस्य सुखदुःखप्रसङ्गतः ।
प्रियाप्रियानपगमः श्रूयते ननु देहिनः ॥ २ ॥

---

**स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ ४ । ४ । १६ ॥**

'प्राज्ञेनात्मना संपरिष्वक्त' इतीयं श्रुतिः स्वाप्ययसंपत्त्योः—सुषुप्तिमरणयोरन्यतरदपेक्ष्य ज्ञानाभावमाविष्करोति । न तु मुक्तिदशामपेक्ष्यापि । एवमत्राधिकरणे भगवत इव मुक्तानामपि दिव्यदेहेन्द्रियोपकरणयोगः समर्थितः ॥ १६ ॥

इति प्रदीपे अभावाधिकरणम् ॥ ५ ॥

नन्वप्राकृतदेहो हि नियमेनास्य वर्तते ।
त्रिधा च सप्तधा चास्य भवनं श्रूयते यतः ॥ ३ ॥
कर्माधीनं तु देहित्वं सुखदुःखप्रसञ्जकम् ।
इदं तावन्मन्यतेऽत्र भगवान् बादरायणः ॥ ४ ॥
सत्यं कर्मानधीनेन देहयोगेन न क्षतिः ।
एकस्य द्वादशाहस्य सत्रताऽहीनते यथा ॥ ५ ॥
तथाऽतद्योगतद्योगौ स्यातां सङ्कल्पभेदतः ।
सङ्कल्प्य सत्यामिच्छायां सृष्ट्वा तन्वादिकं स्वतः ॥ ६ ॥
भुङ्क्ते भगवतो लीलारसं तं तं यथेप्सितम् ।
कदाचित् भगवत्सृष्टैर्भुङ्क्ते तन्वादिभिस्तु तम् ॥ ७ ॥
दीपस्येवाप्यणोरस्य प्रभया. व्याप्तिसम्भवात् ।
नानादेहेषु भवनं बहुधाऽस्योपपद्यते ॥ ८ ॥
बाह्यमाभ्यन्तरं नैव किञ्चिद्वेदेति या श्रुतिः ।
सा तु सुप्तिं मृतिं चैव ह्यधिकृत्य प्रवर्तते ॥ ९ ॥

इति भाष्ये अभावाधिकरणम् ॥ ५ ॥

---

## जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ ४ । ४ । १७ ॥

जगत्सृष्टिस्थितिनियमनाद्यैश्वर्यं किं मुक्तस्यापि संभवति उत नेति विचार्यते । आह–संभवति । अन्यथा 'निरञ्जनः परमं साम्यमुपैती'ति

---

ननु–मुक्तस्य 'निरञ्जनः परमं साम्यमुपैती'ति श्रुतेः, सत्यसङ्कल्पत्वश्रुतेश्च जगत्स्रष्टृत्वाद्यैश्वर्यमपि स्यादेवेत्यत्राह––

**जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ ४ । ४ । १७ ॥**

मुक्तस्य यदैश्वर्यं तत् जगद्व्यापारवर्जम्–जगत्सर्गस्थितिसंहारादिवर्जम् । सविभूतिकस्य सर्वेश्वरस्य परस्य ब्रह्मणोऽनुभवसेवाशेषभूतमेव मुक्तस्य सत्यसङ्कल्प-

श्रूयमाणस्य परमसाम्यस्यानुपपत्तेः । तथा सत्यसङ्कल्पत्वस्याप्युपरोधात् । न हि सर्गादिनियमनानन्तैश्वर्येऽसति परमं साम्यं सिध्येत्, न च सत्यसङ्कल्पत्वमव्याहतं स्यात् । अत्रोच्यते—मुक्तस्य परेण ब्रह्मणा साम्यं जगद्व्यापारवर्जम्—जगतो यो व्यापारः सर्गादिस्तद्वर्जम् । कस्मात्? प्रकरणात्—जगत्सर्गादिर्हि परंब्रह्म प्रकृत्यैव श्रूयते । तथा हि—'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म' 'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्, तदैक्षत बहु स्यां प्रजायेयेति, तत्तेजोऽसृजत' 'ब्रह्म वा इदमग्र आसीत् तदेकं सन्नव्यभवत् तच्छ्रेयोरूपमत्यसृजत' 'आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किञ्चन मिषत् स ईक्षत लोकान्नु सृजा इति' 'एको ह वै नारायण आसीत्' इति । अनेन जगद्व्यापारः सर्गादिः परस्य ब्रह्मणो लक्षणमिति गम्यते । तदेतदैश्वर्यं मुक्तस्यापि चेत् अतिप्रसङ्गाल्लक्षणं दुष्टं स्यात् । नियमनमपि परं ब्रह्माधिकृत्यैव श्रूयते—'य आत्मनि तिष्ठ'न्नित्यादिना । असन्निहितत्वाच्च—न चात्र मुक्तः सन्निहितः । तस्मात् मुक्तस्य परमसाम्यं श्रूयमाणं परब्रह्मानुभवजनितानन्दादिना अपहतपाप्मत्वसत्यसङ्कल्पत्वादिना च बोध्यम् ॥ १७ ॥

## प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ ४ । ४ । १८ ॥

ननु जगद्व्यापारो मुक्तस्य नेत्येतन्न । प्रत्यक्षेणोपदेशात्—श्रुत्यैवो-

---

स्त्वाचैश्वर्यम् । जगज्जन्मादिकर्तृत्वरूपपारमैश्वर्यनिरूपणस्य परब्रह्मनिरूपणप्रकरण एव श्रूयमाणत्वात् । तत्र प्रकरणे आत्मनामसन्निहितत्वाच्च । परंब्रह्माधिकृत्यैव हि जगद्व्यापारः श्रूयते नेतरमधिकृत्येति भावः ॥ १७ ॥

**प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः॥४।४।१८॥**

ननु मुक्तस्याप्यस्त्यैश्वर्यं जगद्व्यापारलक्षणम् । प्रत्यक्षोपदेशात्—प्रत्यक्षेण—श्रुत्या 'स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति' 'स इमान्

पदेशात् । श्रूयते हि 'इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्नि'ति । अनेन लोकानां तदधीनत्वं गम्यते । न हि अनधीनेषु कामसञ्चरणादिकमुपपद्यते । तादधीन्याच्च तत्कर्तृकत्वादिकमपि सिध्यतीति चेन्न । आधिकारिकमण्डलस्थोक्तेः । ये आधिकारिकाः ब्रह्मादयः, तेषां यानि मण्डलानि लोकाः, तत्स्थभोगस्यैव तत्रोक्तेः । 'इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्नि'ति श्रुतिः मुक्तस्य ब्रह्मादिसकलाधिकारिकलोकेषु यथाकामं सञ्चरणं भगवद्विभूतिभूततत्तदैश्वर्यानुभवजनितानन्दयोगमात्रं च हि श्रावयति । तस्मान्न मुक्तस्य जगत्सर्गादिव्यापारः ॥ १८ ॥

ननु—मुक्तश्चेत् विकारान्तर्वर्तिनो लोकान् भुङ्क्ते, तर्हि अस्य भोगोऽन्तवानल्पश्च स्यात्, तत्राह—

## विकारावर्ति च तथाहि स्थितिमाह ॥ ४ । ४ । १९ ॥

नायं विकारे जन्मादिचक्रके यद्वर्तते तद्भुङ्क्ते, किन्तु विकारावर्ति नित्यसिद्धं परं ब्रह्मैवायमनवरतमनुभवति । तद्गुणानुभववत् तद्विभूत्य-

---

लोकान् कामान्नी कामरूप्यनुसञ्चरन्' इत्यादिकया तदुपदेशादिति चेन्न । आधिकारिकमण्डलस्थोक्तेः—ये आधिकारिकाः लोकाधिकारे नियुक्ता ब्रह्मादयस्तेषां यन्मण्डलं तत्स्थान् भोगान् प्रत्येवोक्तेः । 'स स्वराड् भवती'त्यादिश्रुत्या ब्रह्मादिलोकेषु कामचारित्वादितत्तल्लोकभोग्यभोक्तृत्वमेवोच्यते । न तु सर्गादिव्यापारः । तेषां मण्डलस्थानपि मुक्तो नेतरवत् स्वतो रस्यतयाऽनुभवति, किन्तु भगवद्विभूतितयैवेति, तदनुभवोऽपि सविभूतिकब्रह्मानुभवान्तर्गत एवेत्येतदव्यवहितसूत्रे वक्ष्यति ॥ १८ ॥

ननु मुक्तश्चेत् आधिकारिकमण्डस्थान् भुङ्क्ते, इतरवदस्य भोग्यमपि विकारान्तर्गतमिति मुक्तभोगस्यापि विकारित्वमापतेदत्राह—

**विकारावर्ति च तथाहि स्थितिमाह ॥ ४ । ४ । १९ ॥**

अनेनानुभूयमानं विकारावर्त्येव । यद्यप्याधिकारिकमण्डलस्थमैश्वर्यमयमनुभवति, अथापि अस्य भोग्यं विकारावर्त्येव, यदयं सर्वं तत् परब्रह्मणो विभूतितयाऽनुभवति । सविभूतिकं ब्रह्मानुभवन् अनुभूयमानस्य ब्रह्मणः

नुभवोऽस्य, न चायमनुभवस्तद्व्यतिरेकेण, येन परिमितता आपद्येत। बद्धो हि तांस्तान् लोकान् आत्मीयतया स्वतन्त्रतयाऽनुभवति। तत् तस्य स भोगः परिमितो भवति। मुक्तस्तु परंब्रह्मानुभवन् तदेकाश्रयं तदीयतया तदात्मकतया च रस्यत्वेनापृथगनुभवति। श्रुता च तदेकाश्रितता लोकानाम्—'तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन' इति। तत् अयं ब्रह्मानुभवैकनिष्ठ एवेति नास्य परिमितफलता। तथा ह्यस्य परब्रह्मण्येव स्थितिमाह श्रुतिः 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति' 'रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति ॥ १९ ॥

## दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ ४ । ४ । २० ॥

जगन्नियमनादिकमैश्वर्यं परस्यैव ब्रह्मण इत्येवं प्रत्यक्षानुमाने—श्रुतिस्मृती दर्शयतः—'भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः, भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः' 'एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपालः एष सेतुर्विधरण एषां लोकानामसंभेदाय' 'मयाऽध्यक्षेण प्रकृतिः

---

प्रकारतयैवानुभवति न स्वातन्त्र्येण। तथा हि स्थितिमाह—अस्य मुक्तस्य परब्रह्मण्येव स्थितिं परब्रह्मानुभवैकनिष्ठतां हि श्रुतिराह। तथा च श्रुतिः—'रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिका ॥ १९ ॥

**दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ ४ । ४ । २० ॥**

प्रत्यक्षानुमाने—श्रुतिस्मृती, एवमेव दर्शयतः—जगत्स्रष्टृत्वजगन्नियमनाद्यैश्वर्यं परमात्मन एवेति दर्शयतः। तथा च श्रुतिस्मृती—'तत्तेजोऽसृजत' 'तस्माद्वा एतस्मादात्मन आकाशः संभूत आकाशाद्वायुः' 'यतो वा इमानि भूतानि जायन्ते' 'एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय' 'मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्। हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते' 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति ॥ २० ॥

सूयते सचराचरम् । हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते' 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति । तथा मुक्तस्यापि परब्रह्मायत्तस्थितित्वं तदीयसत्यसङ्कल्पत्वानन्दादीनामपि तदायत्ततां श्रुतिस्मृती दर्शयतः—'एष ह्येवानन्दयाति' 'मां च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते । ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च' । इति । अपहतपाप्मत्वादिकं प्रत्यगात्मनो नैसर्गिकमपि परमात्मनो नित्येच्छायत्तमिति तदायत्तत्वे न व्याहतिः ॥ २० ॥

## भोगमात्रसाम्यलिङ्गाच्च ॥ ४ । ४ । २१ ॥

मुक्तस्य जगद्व्यापारो नेत्येतल्लिङ्गाच्चावगम्यते । किं तल्लिङ्गम् ? भोगमात्रसाम्यं श्रूयमाणम् । तथा हि श्रूयते—'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति । परंब्रह्म तदीयान् गुणांश्च तेन सहानुभवतीति आनन्दमयपरब्रह्मानुभवजनितानन्दमात्रेण साम्यमभिधीयते इति न मुक्तस्य जगद्व्यापारः ॥ २१ ॥

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ ४ । ४ । २२ ॥

सम्पद्य स्वेन रूपेणाभिनिष्पत्तिः समर्थिता । परंब्रह्माभिसम्पन्नस्य अभिनिष्पन्नस्वरूपस्य मुक्तस्य जगद्व्यापारवर्जमैश्वर्यमुक्तम् । तच्च परमात्मायत्तमिति च । यदि तदायत्तं तर्ह्यस्य पुनरावृत्तिस्तदिच्छया जातु स्यात् । स हि स्वतन्त्र इत्यत्राह—प्रक्षीणसकलकर्मणः प्रादुर्भूतस्वस्वरूपस्य

---

**भोगमात्रसाम्यलिङ्गाच्च ॥ ४ । ४ । २१ ॥**

'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'ति श्रूयमाणाद्भोगमात्रतः साम्याल्लिङ्गान्न जगद्व्यापारो मुक्तस्येत्यवगम्यते ॥ २१ ॥

**अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ ४ । ४ । २२ ॥**

मुक्तस्य परंब्रह्म प्राप्तस्य नेतरेषामिव पुनरावृत्तिः । अनावृत्त्यवबोधकात शब्दादेतदवगम्यते । तथा च शब्दः श्रौतः स्मार्तश्च—'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' 'यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ।' 'मामुपेत्य

परंब्रह्मोपसम्पन्नस्य मुक्तस्य अनावृत्तिः पुनरावृत्तिर्नेति शब्दात् श्रौतात् स्मार्ताच्चावगम्यते । तथा च श्रुतिस्मृती 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते' 'मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः । आब्रह्मभुवनात् लोकाः पुनरावर्तिनोऽर्जुन । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ।' इति । प्रक्षीणसकलकर्मणो बन्धनाद्विमुक्तस्य दुःखनिलयभूते देशे पुनरावृत्तौ न किमपि कारणम्, येनायं पुनरावर्तेत । न च फलं स्वर्गादिवदनित्यम् । आनन्दमयं हि परंब्रह्म नित्यम् । तदनुभवानन्दोऽनवधिरनतिशयश्च । न चायं परमात्मा पुरुषोत्तमः फलस्य प्रापयिता जात्वेनं स्वातन्त्र्यात् प्रत्यावर्तयेत् । प्रियतमो ह्येष तस्य । योऽयमनेन परमात्मना पूर्वमेव—साधनानुष्ठानसमय एव वृतः । आह च स्वयं 'स महात्मा सुदुर्लभः' 'स च मम प्रियः' इति । प्रणयातिरेकात् प्रकाश्यात्मनः स्वरूपं प्रापय्य स्वं लोकं पुनः कस्मात् प्रच्यावयेत् ततः । तस्मात् नास्य पुनरावृत्तेः सम्भावना । सूत्राभ्यासः शास्त्रसमाप्तौ वर्तते । इति सर्वं समञ्जसम् ॥ २२ ॥

( अ. स. ) मुक्ते सर्गादिहेतुत्वमस्ति नेति विचिन्त्यते ।

आह सर्गादिहेतुत्वमैश्वर्यं तस्य वर्तते ॥ १ ॥
मुक्तौ हि परमं साम्यमुपैति ब्रह्मणा सह ।
न चेत्तस्य तदैश्वर्यं साम्यं तत्परमं कुतः ॥ २ ॥

सिद्धान्तः—

उच्यते तस्य चैश्वर्यं जगद्व्यापारवर्जितम् ।
व्यापारः स तु सर्गादिर्ब्रह्मणो ननु लक्षणम् ॥ ३ ॥
श्रूयते तत्प्रकरणे मुक्तप्रकरणे न हि ।
श्रूयते सर्वलोकेषु कामचारश्च तस्य सः ॥ ४ ॥
स परब्रह्मणो लीलाविभूत्यनुबुभूषया ।
गतिमात्रं तत्र तत्र नियामकतया न तु ॥ ५ ॥

---

पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानः' 'मामुपेत्य तु कौन्तेय

न चास्य कामचारित्वं ब्रह्मानुभवभञ्जकम् ।
गुणैर्विभूतिभिश्चायं ब्रह्मैवानुभवत्युत ॥ ६ ॥
विभूत्यनुभवः सोऽयं भूतिमन्तमृते न हि ।
तद्विकारबहिर्भूतब्रह्मानुभव एव सः ॥ ७ ॥
श्रूयते सकलान् कामानश्नुते ब्रह्मणा सह ।
इत्यतो भोगमात्रेण साम्यमस्येति सुस्थितम् ॥ ८ ॥
न चास्य पुनरावृत्तिः परंब्रह्म समेयुषः ।
यतो न पुनरावृत्तौ हेतुः कर्मपरिक्षयात् ॥ ९ ॥
फलं ब्रह्मानन्दमयं यत प्राप्तं तत्तु सुस्थिरम् ।
स च नारायणः स्वामी प्रापकः पुरुषोत्तमः ॥ १० ॥
उपासकं प्रियतमं प्राप्यात्मानमच्युतम् ।
कुतो निवर्तयेत्तस्मान्मुक्तो नावर्तते पुनः ॥ ११ ॥
'सम्पद्यते न च पुनरावर्तत' इति श्रुता ।
उपपन्ना च मुक्तस्याऽनावृत्तिरिति भाव्यताम् ॥ १२ ॥

इति भाष्ये जगद्व्यापारवर्जाधिकरणम् ॥ ६ ॥

इति ब्रह्ममीमांसाभाष्ये चतुर्थस्याध्यायस्य चतुर्थः पादः ।

शास्त्रं च परिसमाप्तम् ।

---

भगवत्सहजानन्दपादपद्मप्रभावतः ।
रचिता ब्रह्मसूत्राणां व्याख्येयं नातिविस्तृता ॥ १ ॥

---

पुनर्जन्म न विद्यते' इति । द्विरुक्तिरध्यायसमाप्तिं शास्त्रपरिसमाप्तिं च द्योतयतीति सर्वमनवद्यम् ॥ २२ ॥

इति प्रदीपे जगद्व्यापारवर्जाधिकरणम् ॥ ६ ॥

इति ब्रह्मसूत्रार्थप्रदीपे चतुर्थस्याध्यायस्य चतुर्थः पादः ।

सूत्रहार्दमृषेरन्यो वेत्तुमर्हति को भुवि ।
पूर्वपूर्वोपदृष्टेन वर्त्मना तु प्रकाशितम् ॥ २ ॥
एषा तोषाय विदुषां कल्पतां काऽपि नः कृतिः ।
भावार्थो ब्रह्मसूत्राणां यया व्यक्तं प्रकाश्यते ॥ ३ ॥
भगवान् सहजानन्दः प्रशास्ता जगतस्तु यः ।
तस्य श्रीमच्चरणयोः कृतिरेषा समर्प्यते ॥ ४ ॥
यावज्जीवं त्वया कार्या ग्रन्थस्य रचना मुने ।
इत्याज्ञप्तं भगवता स्वामिनारायणेन यत् ॥ ५ ॥
तदाज्ञामनुसृत्यैव सूत्रभाष्यं मया कृतम् ।
श्रीहरेस्तत्सतां प्रीत्यै स्वीकरोतु सतां पतिः ॥ ६ ॥

इति श्रीभगवत्सहजानन्दस्वामिचरणकमलसेवापरायण-
परमसद्गुरुश्रीमुक्तानन्दमहामुनिविरचितं
ब्रह्ममीमांसाभाष्यं विजयतातमाम् ॥

---

भगवत्सहजानन्दपादपद्मोपसेविना ।
गोपालानन्दमुनिना सूत्रवृत्तिर्व्यरच्यत ॥

जगदुदयलयाद्यैः क्रीडतो धर्मसूनोः पदकमलसपर्याव्यापृतेनोपक्लृप्तः ।
प्रकटितसुनिगूढब्रह्मसूत्रार्थतत्त्वः ज्वलतु सततमेष ब्रह्मसूत्रप्रदीपः ॥

विक्रमार्कशकस्याब्दे रसाभ्राङ्केन्दु ( १९०६ ) संमिते ।
वृत्तालये समाप्तोऽयं मध्वाद्यनवमीतिथौ ॥

इति श्रीभगवत्सहजानन्दस्वामिचरणकमलपरायणयोगिराज-
सद्गुरुवर्यश्रीगोपालानन्दस्वामिप्रणीतः ब्रह्मसूत्रार्थ-
प्रदीपः परिपूर्णः प्रद्योततांतराम् ॥

समाप्तोऽयं ग्रन्थः ।

# ब्रह्ममीमांसायाः अधिकरणानां सूची ।

**आहत्य अधिकरणसङ्ख्या १५६**

# ब्रह्ममीमांसासूत्राणां अकाराद्यनुक्रमेण सूची।

अपि स्मर्यते १ ३ २२ १३८ इदमेकं सूत्रं विगलितं ५६५ पृष्ठे ९ पङ्क्तौ अनुसन्धेयम् ।

**आहत्य सूत्रसङ्ख्या ५४५**

# शुद्धिपत्रिका।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५ | ६ | स्यारम्भस्या | स्याऽधिकारस्या |
| ७ | १६ | प्रतिज्ञायां | प्रतिज्ञाया |
| २१ | २५ | वेदान्तः | वेदान्ताः |
| २७ | २३ | सम्बधेन | सम्बन्धेन |
| २९ | १९ | शास्त्रणार | शास्त्रमार |
| ३४ | ३ | प्रवृत्या निवृत्या | प्रवृत्त्या निवृत्त्या |
| ३७ | ३ | वाक्वाना | वाक्याना |
| ५० | ८ | ईक्षतेः | ईक्षितेः |
| ५८ | २५ | गीयत | गीयते |
| ७० | २१ | तद्यदिम | तद्यदिदम |
| ७५ | १ | इन्द्रप्राणाधिकरणम् | ज्योतिरधिकरणम् |
| ७६ | ७ | वाच्यो कि | वाच्यः कि |
| ७७ | १६ | कर्मनिर्दि | कर्म निर्दि |
| ८२ | २३ | खल्विति । खलु | खल्विति खलु |
| ८५ | ८ | यनूद्य | त्यनूद्य |
| ९३ | १८ | थावत् | यावत् |
| ९६ | १२ | माचर्यस्ते | माचार्यस्ते |
| १०४ | १९ | च परतः | चाऽक्षरात्परतः |
| १०४ | २० | ततोऽपि | ततो |
| १०६ | ५ | शौनको | 'शौनको |
| १०६ | ६ | पप्रच्छ | पप्रच्छ' |
| ११० | १७ | पृथिव्यन्त | पृथिव्यन्तं |
| ११० | १७ | पादान्तत्वेन | पादान्त |
| १११-११२ | १९-४ | स्वाहे' ति | स्वाहेति, |
| ११४ | १५ | वयविशे | वयवविशे |
| ११४ | १७ | राचार्या | राचार्यो |
| ११६ | २७ | कमेवं | कमेनं |
| १२० | २ | ताऽस्या | ताऽस्य |
| १२२ | १६ | भूंय | भूय |
| १२५ | २ | अभदेव | अभेदव |
| १३१ | १६ | स लोक | तल्लोक |
| १३३ | ९ | समासा | एकशेषा |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १४४ | ७ | नेति वे दे | नेति वेदे |
| १४८ | ९ | उपासक | उपास्य |
| १४९ | २ | प्राप्नोती | प्राप्नुवन्ती |
| १५० | १६ | अनादरादरोक्ति | अनादरोक्ति |
| १६५ | १ | मानिमौप | मानिकमौप |
| १६५ | २५ | प्यव्यक्ततत्वात् | प्यव्यक्ततत्त्वत्वात् |
| १७० | १९ | शाखिनं: | शाखिनः। |
| १७२ | १७ | श्रूयते | श्रूयते। |
| १७३ | १४ | कपिलमततन्त्र | कापिलतन्त्र |
| १७७ | १ | इति | इति। |
| १८० | १२ | प्राणस्य | प्राणस्य। |
| १८१ | २० | ऽस्मिन्' | ऽस्मिन् |
| १८१ | २१ | भवति एत | भवति×××एत |
| १८६ | ८ | यस्यायं | यस्येदं |
| १८६ | ११ | इति अयं | इति। अयं |
| १८८ | ३ | श्रोतव्यत्वतो | श्रोतव्यत्वो |
| १९० | ९ | धिकरणम् ॥ ९ ॥ | धिकरणम् ॥ ६ ॥ |
| १९१ | १४ | र्थकतया; यः | र्थकतया यः |
| १९९ | १४ | पासृजत् | वासृजत् |
| २०१ | १९ | स्मृतिः | स्मृतिः। |
| २०६ | ९ | स्मर्यन्ते | स्मर्यन्ते। |
| २०७ | २४ | चते् | चेत् |
| २१० | २४ | संबन्धन | सम्बन्धेन |
| २१३ | २ | राननुगुण्यम् | रानानुगुण्यम् |
| २१९ | १७ | विशिष्ट एव | विशिष्टमेव |
| २१९ | २० | चारेण | चारेण। |
| २२५ | १ | शक्यन्ते | शक्यन्ते। |
| २२५ | २० | यन | येन |
| २२५ | २२ | गोचाराः | गोचराः |
| २२६ | ६ | नावशिष्येत | नावशिष्येरन् |
| २३३ | ९ | स्वकार्येन | स्वकार्ये न |
| २३७ | २ | सता | सतां |
| २४१ | १९ | पारिमाण्डल्य | पारिमाण्डल्यं |
| २४४ | १७ | साधयता | साधयतां |
| २४७ | ५ | निरस्यन्त | निरस्यन्ते |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २४८ | १३ | पगमने | पगम्यमाने |
| २४९ | ३ | मोहादय | मोहादयः |
| २५५ | २५ | दायधिक | दायाधिक |
| २५६ | ३ | असंहितानां | असंहतानां |
| २६२ | २४ | मभिन्न चे | मभिन्नं चे |
| २६४ | २० | माणः, सच | माणं तन्नित्यं |
| २७४ | ४ | प्रतिज्ञा चो | प्रतिज्ञो |
| ,, | १० | स्वस्वव्यव | स्वस्वाव्यव |
| २७७ | २२ | श्रवणात् | श्रवणात् । |
| २८२ | २४ | प्रद्योतेवैष | प्रद्योतेनैष |
| ३०० | २५ | स्याऽने | स्याऽग्ने |
| ३०२ | १९ | मुत्पाद्य | मुपपाद्य |
| ३०९ | १६ | अणवश्च ॥ २ ॥ | अणवश्च ॥ २ ।४ । ६ ॥ |
| ३१० | ३ | श्रवणा प्राणात् | श्रवणात्प्राणा |
| ३१२ | १ | पानादयो पूर्वं | पानादयः पूर्वं |
| ३१५ | ५ | धिष्ठानम् | धिष्ठानाधिकरणम् |
| ,, | ९ | निर्दिष्टाः । अ | निर्दिष्टा अ |
| ३१६ | २२ | मूतिः | मूर्तिः |
| ३१७ | १ | इन्द्रियाधिकरणम् | संज्ञामूर्तिक्लृप्त्यधिकरणम् |
| ३१८ | ९ | निरूप्यमाणम् | निरूप्यमाणम् । |
| ,, | २१ | विपाकः हि | विपाको हि |
| ३१९ | ११ | यश्चाणीया | यश्चाणीयान् |
| ३२६ | २५ | श्रयते | श्रूयते |
| ३३५ | २ | योर्पथो | योः पथो |
| ३३८ | ४ | राजादिभाव | राजभाव |
| ३३९ | ८ | चिरणेवेति | चिरेणैवेति |
| ३४० | २० | अन्याधिष्ठेते | अन्याधिष्ठिते |
| ३४१ | २५ | सज्ञामा | सङ्क्रामा |
| ३४५ | १० | इत्याहुः | इत्याह सः |
| ३४७ | १ | रसत्त्वं | सत्त्वं |
| ,, | ७ | भक्तिव | भक्ति एव |
| ३४८ | ८ | ३।१।५॥ | ३।२।५ ॥ |
| ३४९ | ६ | रव गम्यते | रवगम्यते |
| ३५१ | १३ | सन्ध्याधिकरणम् ॥ ३ ॥ | सन्ध्याधिकरणम् ॥ १ ॥ |
| ३९१ | २ | असच्छ- | अस्माच्छ |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३९१ | ४ | विति फल | विति । फल |
| ३९३ | ५ | दिव्ययोगं | दिव्यरूपयोगं |
| ४०० | १५ | श्रूयते | श्रूयते । |
| ४०५ | ७ | सवनानीत्या' | सवनानी'ति |
| ४०७ | ८–१६ | च्छन्दस्तु | च्छन्दस्स्तु |
| ४०८ | ३ | कस्यांचित | कस्यांचित् |
| ,, | १७ | ओदुंबर्यः | औदुम्बर्यः |
| ४१९ | ३ | अ ण्व | अनण्व |
| ४२२ | ८ | संबन्ध्यते | संबध्यते |
| ४२८ | १९ | विंद्या फलम् | विंद्याफलम् |
| ४२९ | ११ | कर्मा | कामा |
| ४३० | ९ | सिद्धेः । पृथक् | सिद्धेः पृथक् |
| ४६१ | ११ | गच्छत इति | गच्छतीति |
| ४६३ | ५ | श्छिन्द्यन्ते | श्छिद्यन्ते |
| ४७४ | ६ | प्रवृत्या | प्रवृत्त्या |
| ४८२ | १८ | अशनवत् । | अशनवत् |
| ,, | ,, | पकुर्वाणस्यापि | पकुर्वाणस्य, |
| ४८३ | ११ | फलभाजो | तत् फलभाजो |
| ४८६ | ७ | उपास्याल | उपास्त्याल |
| ४८७ | ३ | चरन्ती' | चरती' |
| ५०० | ६ | दिनान्तरं | दिनानन्तरं |
| ५०१ | १३ | विनाशनम् | विनशनम् |
| ५०२ | २० | एवमेवेव | एवमेव |
| ५०६ | ७ | भुक्तमेव तु | भुक्तमेव तत् |
| ५१० | ९ | दभिप्रायकम् | दभिप्राया |
| ५११ | १६ | इति तत्र | इति तत्र तत्र |
| ५१३ | ९ | नुभवरूपः | नुभवः |
| ५१३ | २४ | तदेव | तदेव– |
| ५१५ | २४ | गत्यनुपपत्तेः | गत्यनुपपत्तेः । |
| ५२९ | १६ | मागच्छन्तीति | मागच्छतीति |
| ५३२ | १३ | परामृताः | परामृतात् |
| ५४३ | २२ | तन्मात्रेणेत्यौ | तन्मात्रेण तदात्मकत्वादित्यौ |
| ५६० | १३ | विजयतातंमाम् | विजयतांतमाम् |